न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।



माणिकचन्द-दिगम्बर-जैन-

ग्रन्थमाला ।




# अनगारधर्मामृतम् ।

माणिकचंददिगम्बरजैनग्रन्थमाला १४ वां पुष्प

पंडितप्रवर—आशाधरविरचितं

# अनगारधर्मामृतम्



स्वोपज्ञभव्यकुमुदचंद्रिकाटीकासहितम् ।



न्यायतीर्थ पं० बंशीधरशास्त्रिणा संपादितं

पं० मनोहरलालशास्त्रिणा च संशोधितम्।



प्रकाशिका—

श्री माणिकचंददिगम्बरजैनग्रंथमालासमितिः ।

प्रथमावृत्ति

वीरनिर्वाण सं० २४४५

विक्रमाब्द १९७६ सन् १९१९



# निवेदन.

इस ग्रंथके रचयिता श्रीमान् पंडितप्रवर आशाधरजी हैं। जिनका विस्तृत परिचय इस ग्रंथमालाके दूसरे ग्रंथ (सागारधर्मामृत) में दिया है। पाठकगण वहांसे देखलें। इसका संशोधन प्राचीन दो प्रतियोंसे किया गया है जो कि प्रायः शुद्ध थीं। उसमें भी यदि प्रमादवश अशुद्धियां रहगई हों तो पाठक महाशय मुझ अल्पज्ञपर क्षमा करेंगे ऐसी आशा करता हूं। जिन महाशयोंने प्रतियां भेजकर सहायता की है उनको कोटिशः धन्यवाद है।

मिति ज्येष्ठ शुक्ला २
वीरनिर्वाण सं. २४४५

संशोधक—
पं० मनोहरलालशास्त्री जैन
ठि० खत्तरगली हौदावाडी
पो० गिरगांव, बंबई.

# अनगारधर्मामृतस्य अध्यायसूची।







स्वस्त्यर्हते ।

पंडितप्रवर—आशाधरविरचितं

# अनगारधर्मामृतम्

स्वोपज्ञभव्यकुमुदचंद्रिकाटीकासहितम् ।

## प्रथमोऽध्यायः ।

अथातः पंडितः श्रीमदाशाधरः शिष्यानुजिघृक्षापारतन्त्र्यात् परापरगुरुनमस्कारपुरस्सरं कृत्यं प्रतिजानीते—

प्रणम्य वीरं परमावबोधमाशाधरस्तद्गुणधारिणश्च ।
स्वोपज्ञधर्मामृतसंज्ञशास्त्रटीकां जनानुग्रहणाय कुर्वे ॥

तत्र,

"नास्तिकत्वपरीहारः शिष्टाचारप्रपालनम् ।
पुण्यावाप्तिश्च निर्विघ्नं शास्त्रादावाप्तसंस्तवात् ॥"

इति मनसि कृत्वा ग्रन्थकारः परमाराध्यसिद्धार्हत्परमागमकर्तृव्याख्यातृदेशनाः स्वेष्टसिद्ध्यर्थं क्रमशः सप्रश्रयमाश्रयते । तत्रादौ तावदात्मनि परमात्मनां परिस्फूर्तिमाशंसयति—

हेतुद्वैतबलादुदीर्णसुदृशः सर्वंसहाः सर्वश,—
स्त्यक्त्वा सङ्गमजस्रसुश्रुतपराः संयम्य साक्षं मनः ।
ध्यात्वा स्वे शमिनः स्वयं स्वममलं निर्मूल्य कर्माखिलं,
ये शर्मप्रगुणैश्चकासति गुणैस्ते भान्तु सिद्धा मयि ॥ १ ॥

"अवयवार्थप्रतिपत्तिपूर्विका समुदायार्थप्रतिपत्तिः" इति प्रथमतस्तावत्क्रमेण पदानामर्थः कथ्यते। हेत्वोः कारणयोर्द्वैतं द्वयं हेतुद्वैतम्। हेतुद्वैतस्य बलं सामर्थ्यं हेतुद्वैतबलम् । तस्माद्धेतुद्वैतबलात् । अन्तरङ्गबहिरङ्गकारणद्वयावष्टम्भादित्यर्थः। यद्यपि च हिनोति गच्छति व्याप्नोति जन्यं जनकत्वेन ज्ञाप्यं च ज्ञापकत्वेनेति हेतुः कारको ज्ञापकश्चेति द्विधा संभवति तथाप्यत्र कारक एव गृह्यते, सम्यग्दर्शनादीनामुदीर्णादिपदसन्निधानाद् जन्यत्वेन विवक्षितत्वोपलक्षणात् । द्वाभ्यामितं द्वीतमिति समासात् प्रज्ञादित्वादणि सति द्वैतमिति द्वित्वाभिधायि साधु स्यात् । हेतुद्वैतबलादित्येतत् सम्यग्दर्शनसामग्रीत्वेन निर्दिष्टमप्यादिदीपकत्वात् सर्वसङ्गत्यागाजस्रसुश्रुतपरत्वसेन्द्रियमनःसंयमनशुद्धात्मध्याननिखिलकर्मनिर्मूलनैरपि सह संबन्धनीयं, सकलकार्याणामन्तरङ्गबहिरङ्गकारणद्वयाधीनजन्यत्वात् । तत्र सम्यक्त्वस्यान्तरो हेतुरासन्नभव्यतादिर्बाह्यश्चोपदेशकादिः । तथा चोक्तम्—

**आसन्नभव्यताकर्महानिसंज्ञित्वशुद्धपरिणामाः ।**
**सम्यक्त्वहेतुरान्तर्बाह्योप्युपदेशकादिश्च ॥**

इति । एवं सङ्गत्यागादीनामपि यथायोग्यं हेतुद्वयमवसेयम् । उद्दणाति स्मोदीर्णा । उद्गता अप्रतिहतवृत्त्या प्रवृत्ताधस्तनभूमिकापेक्षया शङ्कादिदोषनिर्मुक्तत्वेन प्रशस्ता उपरितनभूमिकापेक्षया चाचलक्षायिकत्वेन संपूर्णा दृग् यथावस्थितपरापरवस्तुविषयत्वेन विपरीताभिनिवेशविविक्तात्मरूपलक्षणं श्रद्धानं येषां ते उदीर्णसुदृशः । दृशिरत्र श्रद्धानार्थो गृह्यते, धातूनामनेकार्थत्वात् । तथा चोक्तम्—

**निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रयः ।**
**अनेकार्थाः स्मृताः सद्भिः पाठस्तेषां निदर्शनम् ॥**

इति । तथैव सुशब्दो हि प्रशंसाद्यर्थो वेद्यः । अत एव सूत्रकारो हि सम्यग्दर्शनलक्षणं तथैवाध्यगीष्ट, "तत्त्वार्थश्रद्धानं सम्यग्दर्शनम्" इति । दर्शनं दृग् दर्शनमोहोपशमादिसन्निधाने सत्याविर्भूततच्छक्तिविशेषस्यात्मनो ज्ञानसम्यग्व्यपदेशहेतुस्तत्त्वार्थश्रद्धानपरिणतिरित्यर्थः । सर्वं सूत्रे मुमुक्षूणां सहनीयत्वेनोपदिष्टं परीषहोपसर्गजातं सहंते धृत्यादिभावनाविशेषावष्टम्भान्मृष्यन्ते इति सर्वंसहाः । महासात्त्विकत्ववज्रकायित्वयोगान्निजनिजनिमि-

त्तसन्निधानादुपनिपतितैः परीषहोपसर्गैरभिभवितुमशक्या इत्यर्थः । सर्वशः सर्वं बाह्यमाभ्यन्तरं च सङ्गं परिग्रहं वक्ष्यमाणलक्षणं त्यक्त्वा व्युत्सृज्य सजति सक्तो भवति चेष्टोपयोगरूपवृत्तिद्वारेण ममकाराहंकाराभ्यामनुरज्यति जीवोस्मिन्निति सङ्गः "पुंसां घः प्रायेण" इत्यधिकरणसाधनो घप्रत्ययः । सर्वश इत्यत्र "बह्वल्पार्थाच्छस्कारकाद्" इति प्रशंसार्थेन शसप्रत्ययेन त्यागस्य प्राशस्त्यं द्योत्यते, सर्वसङ्गपरित्यागस्य सर्वैरपि मोक्षवादिभिर्मुक्त्यङ्गत्वेनावश्याभ्युपगमनीयत्वात् । अन्यथा तदनुपपत्तेः । एतेन सम्यक्त्वचारित्राराधनाद्वयं संक्षेपरुचिशिष्यापेक्षयात्र सूत्रितं प्रतिपत्तव्यं, ज्ञानेन दर्शनस्य तपसा च चारित्रस्याविनाभावात् तत्र तयोरन्तर्भावविभावनात् । अजस्रमनवरतं सुश्रुतं स्वात्मोन्मुखसंवित्तिलक्षणत्वेन प्रशस्तं श्रुतमविस्पष्टतर्कणलक्षणो ज्ञानविशेषः परं प्रधानं येषां तेऽजस्रसुश्रुतपराः । संततस्वात्मोन्मुखसंवित्तिलक्षणश्रुतज्ञानविशिष्टा इत्यर्थः । पूर्वोक्तनीत्या शृणोतिरत्र ज्ञानविशेषार्थः श्रवणं श्रुतं श्रुतज्ञानावरणवीर्यान्तरायक्षयोपशमसन्निधाने सत्याविर्भूततच्छक्तिविशेषस्य साक्षादसाक्षाच्च मतिज्ञानविशेषणाहितातिशयस्यात्मनोऽस्पष्टनानार्थप्ररूपणप्रवणज्ञानविशेषपरिणतिरित्यर्थः । उक्तं च—

"मतिपूर्वं शब्दयोजनसहितमूहनं श्रुतमिति तच्छ्रुतम् ।"

यथा—

**एक्को मे सासदो आदा णाणदंसणलक्खणो ।**
**सेसा मे बाहिरा भावा सव्वे संजोगलक्खणा ॥**
**संजोगमूलं जीवेण पत्ता दुःखपरंपरा ।**
**तम्हा संजोगसंबंधं सव्वं तिविहेण वोस्सरे ॥**

इत्यादि प्रधानार्थपरशब्दप्रयोगात्पुनरेवं लक्षयति—

सर्वदा स्वार्थश्रुतज्ञानभावनाकृतावधाना अपि कदाचिदनादिवासनावशात्परार्थशब्दात्मकश्रुतसमुद्यता अपि भवन्ति । तत्र श्रूयते श्रुतं शब्दः शोभनं शुद्धचिदानन्दात्मकात्मप्रतिपादनप्रच्छनादिरूपतया मुमुक्षूणामभिमतं श्रुतं सुश्रुतमिति ग्राह्यम् । तथाचोक्तम्—

**तद्ब्रूयात्तत्परान् पृच्छेत्तदिच्छेत्तत्परो भवेत् ।**
**येनाविद्यामयं रूपं त्यक्त्वा विद्यामयं व्रजेत् ॥ इति ।**

अविद्याभिदुरं ज्योतिः परं ज्ञानमयं महत् ।
तत्प्रष्टव्यं तदेष्टव्यं तद् द्रष्टव्यं मुमुक्षुभिः ॥ इति च ।

सैषा ज्ञानाराधना ।

संयमनं पूर्वं पश्चात्किंचिदिति संयम्य, तत्तत्स्वस्वविषयादक्षैः स्पर्शनादीन्द्रियैः[1] सह वर्तमानं मनोऽन्तःकरणं निवर्त्येत्यर्थः । यथास्वावरणवीर्यान्तरायक्षयोपशमसन्निधाने सत्यक्ष्णोति व्याप्नोति जानाति यथास्वं स्पर्शादिविषयानेभिरात्मेत्यक्षाणि लब्ध्युपयोगरूपाणि स्पर्शनादिभावेन्द्रियाणि । नो इन्द्रियावरणवीर्यान्तरायक्षयोपशमसन्निधाने सति द्रव्यमनसा कृतानुग्रह आत्मा मनुते जानाति मूर्तममूर्तं च वस्तु गुणदोषविचारस्मरणादिप्रणिधानरूपेण विकल्पयत्यनेनेति मनो गुणदोषविचारस्मरणादिप्रणिधानलक्षणं भावमन इत्यर्थः । भवति चात्र पद्यम्—

गुणदोषविचारस्मरणादिप्रणिधानमात्मनो भावमनः ।
तदभिमुखस्यास्यैवानुग्राही पुद्गलोच्चयो द्रव्यमनः ॥

सैषा तपआराधना, इन्द्रियमनसोर्नियमानुष्ठानं तप इत्यभिधानात् । सोयं व्यवहारमोक्षमार्गः । ध्यात्वा एकाग्रचिन्तानिरोधलक्षणध्यानगोचरीकृत्य[2] । "अर्थवशाद्विभक्तिविपरिणाम" इति अमले आत्मन्यमुह्यत्यऽरज्यत्यद्विषति चेत्यर्थः । शं वैतृष्ण्यं सान्द्रानन्दशुद्धस्वात्मानुभूतियोगादत्यन्ततृप्तत्वादतिशयेनैषामस्तीति शमिनो ध्येयेपि वितृष्णाः सन्त इत्यर्थः । तथा चोक्तम्—

किमत्र बहुनोक्तेन ज्ञात्वा श्रद्धाय तत्त्वतः ।
ध्येयं समस्तमप्येतन्माध्यस्थ्यं तत्र बिभ्रता ॥ इति ।

स्वयं स्वसंवेदनरूपेणात्मना । अमलमित्यत्रापि पूर्ववद्व्याख्येयम् । स्वममलं द्रव्यभावकर्मनिर्मुक्तं स्वपरज्ञप्तिरूपमात्मानं विपरीताभिनिवेशसंशयविपर्ययानध्यवसायविविक्तं परमौदासीन्यरूपं वा । निरवधिशुद्धज्ञानानन्दात्मकमिति यावत् । सोयं ध्यात्वेत्यादिना निश्चयमोक्षमार्गः । उक्तं च—

रयणत्तयं ण वट्टइ अप्पाण मुइंतु अण्णदवियम्हि ।

१ साक्षमिति मूलोक्तं पदं विग्रहेणात्र दर्शितम् । २ इतः परं मूलोक्तं स्वे इति पदमावश्यकम् । कुतः ? तद्विशेषणस्य 'अमले' इति पदस्याग्रे विद्यमानत्वात् ।

**तम्हा तत्तियमइओ होदि हु मोक्खस्स कारणं आदा ॥ इति ।**

**निर्मूल्य** समूलचूलं क्षपयित्वा । मिथ्यादर्शनादिपरतन्त्रेणात्मना क्रियते बध्यते इति कर्म आत्मनः पारतन्त्र्यनिमित्तं ज्ञानावरणादिकमात्मप्रदेशपरिस्पन्दरूपं वा । अखिलं समस्तं द्रव्यभावरूपं घात्यघाति च तथान्यद्वादरं सूक्ष्मं च । येऽनादिमिथ्यादृष्टयः सादिमिथ्यादृष्टयो वा भव्यजीवाः शर्मप्रगुणैः । शर्म सुखं तदेव प्रकृष्टं, सर्वेषामभीष्टतमत्वाद्, गुणो धर्मो येषां ते शर्मप्रगुणास्तैः शर्मप्रगुणैः । परमानन्दामृतखचितैरित्यर्थः । चकासति नित्यं दीप्यन्ते नित्यप्रवृत्तस्य वर्तमानस्य विवक्षितत्वात् । एवमुत्तरत्रापि । गुणैरनन्तज्ञानादिभिरष्टभिः । तत्र मोहक्षयात्परमं सम्यक्त्वं सुखं वा । ज्ञानदर्शनावरणक्षयादनन्तज्ञानदर्शने । अन्तरायक्षयादनन्तवीर्यम् । वेदनीयक्षयादव्याबाधत्वमिन्द्रियजनितसुखाभावो वा । आयुःक्षयात् परमसौक्ष्म्यमुत्पत्तिमरणहतिर्वा । नामक्षयात्परमावगाहनममूर्तत्वं वा । गोत्रक्षयादगुरुलघुत्वमुभयकुलाभावो वा । ते यथोक्तगुणैर्दीप्यमाना भान्तु परिस्फुरन्तु स्वसंवेदनसुव्यक्ताः सन्त्वित्यर्थः । आशिषि लोट् । सिद्धाः । सिद्धिः स्वात्मोपलब्धिरेषामतिशयेनास्तीति सिद्धाः । "अर्शआदेर्" इत्यनेन मत्वर्थीयोऽप्रत्ययः । **मयि** प्रथमं ग्रन्थकर्तर्यात्मनि पश्चात्तदध्येत्रादिष्वपि । एवं समासादुक्तः पदार्थः ।

संप्रति वाक्यार्थः कथ्यते । तत्रेयं पदघटना ।—**भान्तु** । के ? कर्तारस्ते **सिद्धाः** । क ? **मयि** । ये किम् ? ये **चकासति** । कैः ? **गुणैः** । किंविशिष्टैः ? **शर्मप्रगुणैः** । किं कृत्वा ? **निर्मूल्य** । किं तत् ? **कर्म** । किंविशिष्टम् ? **अखिलम्** । किं कृत्वा ? **ध्यात्वा** । कम् ? **स्वम्** । किंविशिष्टम् ? **अमलम्** । केन ? **स्वयम्** । क ? **स्वे** । किंविशिष्टाः सन्तः ? **शमिनः** । किं कृत्वा ? **संयम्य** । किं तत् ? मनः । किंविशिष्टम् ? **साक्षम्** । किंविशिष्टाः सन्तः ? **अजस्रसुश्रुतपराः** । किं कृत्वा ? **त्यक्त्वा** । कम् ? **संगम्** । किंविशिष्टम् ? **सर्वेशः** । किंविशिष्टाः सन्तः ? **सर्वसहाः** । सर्वसहत्वात्सर्वसङ्गत्यागं कृत्वेत्यर्थः । कथंभूता भूत्वा ? **उदीर्णसुदृशः** । कस्मात् ? **हेतुद्वैतबलात्** ।

इदमत्र तात्पर्यम् । हेतुद्वैतबलेन सम्यग्दर्शनमारुह्य सर्वसहत्वे सति सर्वसङ्गत्यागं कृत्वा शश्वत् सम्यक्श्रुतभावनाप्रधानाः सन्तः सर्वेन्द्रियाणि मनश्च

स्वस्वविषयेभ्यः प्रच्याव्यैवं कृतपरिकर्माणः शुद्धं स्वात्मानमात्मना शुद्धे स्वात्मनि समादधानास्तत्रापि वितृष्णाः सन्तो निरस्तघातिकर्माणो नैसर्गिकनिश्चलचैतन्यमधिष्ठिता विघटिताऽघातिकर्माणो लोकाग्रमधिष्ठाय केवलसम्यक्त्वज्ञानदर्शनसिद्धत्वैर्थै शश्वत्प्रतपन्ति ते मयि नोआगमभावरूपतया भगवन्तः सिद्धपरमेष्ठिनः स्वात्मानं दर्शयन्त्विति ।

अत्र च सर्वे एवार्हदादिगुणानुरागाः शुभपरिणामत्वादशुभकर्मप्रकृतीनां रसप्रकर्षमुन्मूल्य वाञ्छितार्थप्रसाधनाय भवन्ति इति प्रेक्षापूर्वकारिणः पूर्वाचार्याः स्वस्य ज्ञानदानान्तरायं श्रोतॄणां च ज्ञानलाभान्तरायं निराकर्तुकामा निजनिजशास्त्रारम्भेर्हदादीनां समस्तानां व्यस्तानां वा तद्गुणमात्रस्य वा संस्तवं कामचारेण मङ्गलमुपात्तवन्तः प्रतीयन्ते । इत्यस्य शास्त्रस्यादौ स्वपरविघ्नविघाताय प्राक् सिद्धानां पश्चाच्चार्हदादीनां विनयकर्म नान्दीमङ्गलत्वेन ग्रन्थकारश्चकार । किंच—

यो यद्गुणार्थी स तद्वन्तमुपाश्रयति । इति सिद्धगुणार्थी ग्रन्थकृत् प्रथमं सिद्धानुपाश्रयति स्म, तत्प्राप्त्युपायोपदेशकज्येष्ठतया पश्चादर्हदादीनामपि । तथा चोक्तम्—

अभिमतफलसिद्धेरभ्युपायः सुबोधात्,
प्रभवति स च शास्त्रात्तस्य चोत्पत्तिराप्तात् ।
इति भवति स पूज्यस्तत्प्रसादप्रबुद्धै,—
र्न हि कृतमुपकारं साधवो विस्मरन्ति ॥ इति ।

तथा क्षिप्रं मोक्षार्थिना मुक्तात्मान एव परमार्थतो भक्तव्या इत्युपदेष्टुं प्राक् सिद्धाराधना ग्रन्थकृता कृता । तथा चोक्तम्—

सपयत्थं तित्थयरं अधिगतबुद्धिस्स सुत्तरोयस्स ।
दूरतरं णिव्वाणं संजमतवसंपदं तस्स ॥
तम्हा[१] णिव्वुदिकामो णिस्संगो णिम्ममो य भविय पुणो ।
सिद्धेसु कुणदि भंती णिव्वाणो तेण पप्पोदी ॥ इति ।

---

१ तस्मान्निर्वृतिकामो निःसङ्गो निर्ममश्च भूत्वा पुनः । सिद्धेषु करोति भक्तिं निर्वाणं तेन प्राप्नोति ॥

एवं तद्गुणग्रामस्य सहसा प्राप्त्यर्थितया प्रथमं सिद्धानाराध्येदानीं तदुपायोपदेशकज्येष्ठतया त्रिजगज्ज्येष्ठमर्हद्भट्टारकमखिलजगदेकशरण्यं शरणं प्रपत्तुमना इदमाह—

**श्रेयोमार्गानभिज्ञानिह भवगहने जाज्वलद्दुःखदाव-**
**स्कन्धे चङ्क्रम्यमाणानतिचकितमिमानुद्धरेयं वराकान् ।**
**इत्यारोहत्परानुग्रहरसविलसद्भावनोपात्तपुण्य, प्रक्रान्तैरेव**
**वाक्यैः शिवपथमुचितान् शास्ति योऽर्हन् स नोऽव्यात् ॥२॥**

श्रेयसो मोक्षस्य संसाराभावे पुंसः स्वात्मलाभस्य मार्गः प्राप्त्युपायो व्यवहारेण सम्यग्दर्शनज्ञानचारित्रत्रयं निश्चयेन च तन्मयः स्वात्मैवेति श्रेयोमार्गः । तस्यानऽभिज्ञानाभिमुख्येन संशयादिव्यवच्छेदलक्षणेन सामस्त्येन वा व्यवहारेतररूपेणानवगन्तॄन् श्रेयोमार्गानभिज्ञान् । सम्यग्मुक्त्युपायमुग्धानित्यर्थः । तथा श्रेयसोऽभ्युदयस्य मार्गानभिज्ञानऽप्रवीणान् । इहास्मिन्प्रतीयमाने । भवन्ति चतुर्गतिपरिवर्तनरूपेण वर्तन्ते उत्पादव्ययध्रौव्यैकत्वलक्षणां वृत्तिमालम्बन्ते जीवा अस्मिन्निति भवः संसारः । भवो गहनमरण्यमिव नानादुःखनिमित्तत्वाद्, भवगहनं तस्मिन् । दुःखानि सहजशारीरमानसागन्तुकपरितापरूपाणि । दुःखानि दावा दवाग्नय इव देहमनसोर्विनाशान्तव्यापत्तिनिमित्तत्वाद् दुःखदावाः । दुःखदावानां स्कन्धः प्राग्भारो दुःखदावस्कन्धः । जाज्वलद्भृशं पुनः पुनर्वा ज्वलन् देदीप्यमानो निरङ्कुशं स्वकार्याय प्रभवन् दुःखदावस्कन्धो यस्मिन् तज्जाज्वलद्दुःखदावस्कन्धं, तस्मिन् । चङ्क्रम्यमाणान् कुटिलं क्रामत इतस्ततो भ्राम्यतो दुःखदावाभिमुखं गच्छत इति भावः । अतिचकितं संत्रासातिरेकं कृत्वा इमानिदंतया प्रतीयमानान् अन्तश्चेतसि चकासतो विचित्रदुःखार्तजगत्त्रयजन्तूनुद्धरेयं तत्तादृग्भवगहननिःसरणोपायोपदेशेनोपकुर्यामहम् । अर्हे प्रार्थने वा सप्तमी[1] । सैषा तीर्थकरत्वभावना मुख्यवृत्त्याऽपायविचयाख्या धर्मध्यानविशेषलक्षणा । तथा चोक्तमार्षे गर्भान्वयक्रियावर्णनप्रक्रमे—

**मौनाध्ययनवृत्तत्वं तीर्थकृत्त्वस्य भावना ।**

---

१ विधिलिङ्लकारस्य कातन्त्रकलापव्याकरणे सप्तमीति संज्ञा ।

गुरुस्थानाभ्युपगमो गणोपग्रहणं तथा ॥ इति ।

वराकान् अनुकम्प्यान् । दुःसहदुःखदावानलज्वालाजालविजृम्भणोपलम्भान्नयनजलादिनाभिव्यज्यमानान्तःक्लेदमभ्युद्धरणबुद्ध्या मुहुर्मुहुरध्यात्ममध्यारोप्यमाणानित्यर्थः । इतीत्यादि । इति एवं युगपत्रिजगदनुग्रहणसमर्थो भवेयमहमिति परमकरुणानुरक्तान्तश्चैतन्यपरिमाणामलक्षणेनात्मरूपेणारोहन् क्षणे क्षणे वर्धमानः परेषामनुग्राह्यदेहिनामनुग्रह उपकार इत्यारोहत्परानुग्रहः तस्य रसः प्रकर्षस्तज्जन्यहर्षो वा तेन विलसन्त्यो विशेषेणानगारकेवलित्वयोग्यभावकानामसंभवित्वादनन्यसामान्यतया द्योतमानाः प्रतीतिविषयीभवन्त्यो भावनाः परमपुण्यतीर्थकरत्वाख्यनामकर्मकारणभूताः षोडश दर्शनविशुद्ध्यादिमनस्कारसंस्काराः, ताभिरुपात्तमुपार्जितं पुण्यं तीर्थकरत्वाख्यः सुकृतविशेषः, तेन केवलज्ञानसंनिधानलब्धोदयेन प्रक्रान्तैः प्रारब्धैः । तत्प्रक्रान्तैरेव न विवक्षादिजनितैर्वीतरागे भगवति तद्विरोधात् । तथा चोक्तम्—

यत्सर्वात्महितं न वर्णसहितं न स्पन्दितौष्ठद्वयं,
नो वाञ्छाकलितं न दोषमलिनं न श्वासरुद्धक्रमम् ।
शान्तामर्षविषैः समं पशुगणैराकर्णितं कर्णिभि,—
स्तन्नः सर्वविदः प्रणष्टविपदः पायादपूर्वं वचः ॥ इति ।

वाक्यैर्दिव्यध्वनिभिः । उच्यते विनेयान् प्रतिपाद्यते इति वाक्यम् अत्र दिव्यो ध्वनिः । उक्तं च—

[2]पुव्वण्हे मज्झण्हे अवरण्हे यज्झिमाये रत्तीये ।
छच्छग्घडियाणिग्गयदिव्वझुणी कहइ सुत्तत्थे ॥ इति ।

शिवपथं प्रागुक्तलक्षणं मोक्षमार्गम् । उचितान् योग्यान् । शिवपथजिज्ञासया सभासमायातभव्यानित्यर्थः । शास्ति शिक्षयति यः । भवति चात्र श्लोकः—

दृग्विशुध्याद्युत्थतीर्थकृत्त्वपुण्योदयात् स हि ।
शास्त्यायुष्मान् सतोऽर्तिघ्नं जिज्ञासूंस्तीर्थमिष्टदम् ॥

१ नैतत्पूर्णं समस्तपदमुक्तमेकत्र । २ पूर्वाण्हे मध्यान्हे अपराण्हे मध्यमायां रात्रौ षट्षडघटिका निर्गतदिव्यध्वनिः कथते सूत्रार्थम् ॥

अर्हन् अरिहननाद्रजोरहस्यहरणाच्च परिप्राप्तानन्तचतुष्टयस्वरूपः सन् इन्द्रादिनिर्मितामतिशयवर्ती पूजामर्हतीति निरुक्तिविषयः सः । यच्छब्देन श्रेय इत्यादिविशेषणविशिष्टत्वेन निर्दिष्टस्तच्छब्देन परामृश्यमानो नोऽस्मान् त्राणार्थिनोऽव्याद् रक्ष्यात् । अभ्युदयनिःश्रेयसभ्रंशनोपायलक्षणादपायाद् दूरीक्रियादित्यर्थः । "आशिषि लिङ्लोटौ" इति लिङ् ।

अथ समुदायार्थप्रतिपत्त्यर्थं पदानि संबध्यन्ते । **अव्यात्** । कोसौ ? **सोऽर्हन्** । कान् ? **नः** । यः किं करोति? **यः शास्ति** । कान् ? **उच्चितान्** । कम् ? **शिवपथम्** । कैः ? **वाक्यैः** । किंविशिष्टैः ? **इत्यारोहत्परानुग्रहरसविलसद्भावनोपात्तपुण्यप्रक्रान्तैरेव** । इतिशब्देन स्वरूपार्थेन विवक्षितमर्थविशेषं दर्शयितुं श्रेय इत्याद्याह । **उद्धरेयमुद्धर्तुं** समर्थो भवेयमहमिति मनोरथो मे वर्तते इत्यर्थः । कान् ? **इमान् वराकान्** । किं कुर्वाणान् ? **चङ्क्रम्यमाणान्** । कथम् ? यथा **भवत्यतिचकितम्** । क ? **इह भवगहने** । किंविशिष्टे ? जाज्वलद्दुःखदावस्कन्धे । किंविशिष्टान् सतः ? **श्रेयोमार्गानभिज्ञान्** । अयमर्थः । यतोमी श्रेयोमार्गं यथावन्न जानन्त्यतो दुःखादत्यन्तं बिभ्यतोपि कुटिलं क्रमन्ति । दुःखविमोक्षबुद्ध्या दुःखोपायानेव सेवन्ते । अतश्च मेऽनुकम्पाविषया भवन्ति । इत्यहमेषां दुःखविमोक्षमार्गप्रदर्शनसमर्थो भवेयमिति प्रार्थये । दृश्यते च लोकेपि, परोपकारपरः पथिकान् दुर्दैववशाद्दुस्तरघोरारण्ये ज्वलज्ज्वलनज्वालाकलापदह्यमानवृक्षस्वापदादिसंघाते पतितान् श्रेयोमार्गाऽकुशलान् तन्निस्सरणपथमजानतस्तन्निस्सरणबुद्ध्या दवानलाभिमुखमेव सातंकं गच्छतो दृष्ट्वा दयार्द्रहृदयतया सम्यग्निःसरणमार्गमुपदेष्टुकाम इत्युक्तिलेशोत्र सहृदयैरवधार्यः ।

इदानीमर्हद्भट्टारकोपदिष्टार्थसमयग्रन्थकत्वेन सकलजगदुपकारकान् गणधरदेवादीन् मनसि निधत्ते—

**सूत्रग्रथो गणधरानभिन्नदशपूर्विणः ।**
**प्रत्येकबुद्धानध्येमि श्रुतकेवलिनस्तथा ॥ २ ॥**

सूत्रग्रथ इति चतुर्भिस्तथेति चोत्तरैस्त्रिभिरभिसंबध्यते । **अध्येमि** ध्यायामि । प्रमोदमाने हृदयारविन्दे ऐकाग्र्येण चिन्तयाम्यहमित्यर्थः । कान् ? **गणधरान्** गणान् द्वादश यत्यादीन् जिनेन्द्रसभ्यान् धारयन्ति मिथ्यादर्श-

नादेर्विनिवर्त्य सम्यग्दर्शनादौ स्थापयन्तीत्येतान् धर्माचार्यान्। किंविशिष्टान्? **सूत्रग्रथः**। सूत्रमर्हद्भाषितमर्थसमयं ग्रथन्ति अङ्गपूर्वगतरूपेण रचयन्तीत्येतान्। **तथाऽध्येम्यहम्**। कान्? **अभिन्नदशपूर्विणः**। अभिन्ना विद्यानुवादपाठे स्वयमायातद्वादशशतविद्याभिरप्रच्यावितचारित्राः, ते च ते दशपूर्वाण्युत्पादपूर्वादिविद्यानुवादान्तान्येषां सन्तीति दशपूर्विणश्च, तान्। किंविशिष्टान्? सूत्रग्रथः। तथाध्येम्यहम्। कान्? **प्रत्येकबुद्धान्**। एकं केवलं परोपदेशनिरपेक्षं श्रुतज्ञानावरणक्षयोपशमविशेषं प्रतीत्य बुद्धान् संप्राप्तज्ञानातिशयान्। किंविशिष्टान्? **सूत्रग्रथः**। तथाध्येम्यहम्। कान्? **श्रुतकेवलिनः**। समस्तश्रुतधारिणः। श्रुतेन प्रागुक्तलक्षणेन ज्ञानविशेषेण केवलिन इव सर्वज्ञकल्पाः श्रुतकेवलिनः। किंविशिष्टान्? सूत्रग्रथः। अत्र सूत्रग्रथकर्तृत्वं गणधरादित्वं चेत्युभयं विधेयं, तद्गुणार्थितया ध्यातुस्तेषां ध्येयत्वनिश्चयेन ध्याने प्रवृत्त्युपपत्तेः।

अधुना जिनागमव्याख्यातॄनारातीयसूरीनभिष्टौति—

> **ग्रन्थार्थतो गुरुपरम्परया यथाव-**
> **च्छ्रुत्वावधार्य भवभीरुतया विनेयान्।**
> **ये ग्राहयन्त्युभयनीतिबलेन सूत्रं,**
> **रत्नत्रयप्रणयिनो गणिनः स्तुमस्तान्॥ ४॥**

**स्तुमो** वन्दामहे वयम्। कान्? **तान् गणिनः** श्रीकुन्दकुन्दाचार्यप्रभृतीन् धर्माचार्यान्। किंविशिष्टान्? **रत्नत्रयप्रणयिनः** "जातौ जातौ यदुत्कृष्टं तत्तद्रत्नमिहोच्यते" इति वचनादभ्युदयनिःश्रेयससंपादकत्वेन जीवपरिणामेषु मध्ये प्रकृष्टत्वाद्रत्नानि सम्यग्दर्शनज्ञानचारित्राणि त्रयोवयवा यस्य तत् त्रयम्। रत्नानां त्रयं रत्नत्रयम्। रत्नत्रयेण सह प्रणयः परिचयः कथंचित्तादात्म्यलक्षणः संबन्ध एषामस्तीति रत्नत्रयप्रणयिनः। सम्यग्दर्शनादित्रयपरिणतानित्यर्थः। ये किम्? **ये ग्राहयन्ति** निश्चाययन्ति प्रतीतिमानयन्ति। कान्? **विनेयान्**। विनीयन्ते व्युत्पाद्यन्ते संशयादिव्यवच्छेदेन शास्त्रं ग्राहयन्त इति विनेयाः शिष्यास्तान्। किं ग्राहयन्ति? **सूत्रम्**। सूते सूचयति सूत्रयति वार्थानिति सूत्रं

सत्यं संयुक्तिकं च प्रवचनम् । तच्चात्रेदानीं गणधरादिरचितमंशतोऽङ्गप्रविष्टमारातीयाचार्यैरचितं च कालिकोत्कालिकादिकमङ्गबाह्यं गृह्यते । केन ? **उभयनीतिबलेन** उभावागमभाषया द्रव्यार्थिकपर्यायार्थिकौ अध्यात्मभाषया च व्यवहारनिश्चयाववयवौ यस्याः सा उभयी श्रुताख्यप्रमाणपरिच्छिन्नार्थैकदेशो नीयते परिच्छिद्यतेऽनयेति नीतिर्नयः । श्रुतज्ञानिनः स्वार्थैकदेशव्यवसाय इत्यर्थः । उभयी चासौ नीतिश्चोभयनीतिः । तस्या बलं सामर्थ्यं सर्वथैकान्तवादिभिरबाध्यमानत्वमुभयनीतिबलं, तेन । किंविशिष्टान् विनेयान् ? **भवभीरुतया** विशिष्टान् । भवाद्बिभ्यति तच्छीला भवभीरवः तेषां भावस्तत्ता, तया । "येनाङ्गविकारेत्थभावौ" इत्यनेन विशेषणे तृतीया । संसारभीरून् संविग्नानित्यर्थः । किं कृत्वा ? **श्रुत्वा** आकर्ण्यावधार्य च अशेषविशेषनिष्ठतया स्वयं धारयित्वा कालान्तराविस्मरणयोग्यतां नीत्वेत्यर्थः । किं तत् ? **सूत्रम्** । किंवत् ? **यथावत्** सम्यक् । कया हेतुभूतया ? **गुरुपरम्परया** । गुरूणां तीर्थकरगणधरादीनां परम्परा शिष्यप्रतिशिष्यप्रबन्धो गुरुपरम्परा, तया । गुरुपर्वक्रमेणेत्यर्थः । कुतस्तया यथावच्छ्रुतमवधारितं च तैः सूत्रमित्यत्राह । **ग्रन्थार्थत** इति । ग्रथ्यते सूत्रप्रकरणाह्निकादिरूपेण रच्यते इति ग्रन्थो विवक्षितार्थप्रतिपादनसमर्थो वचनसंदर्भः । अर्थ्यते निश्चीयते इत्यर्थोऽभिधेयः । ग्रन्थश्चार्थश्च ग्रन्थार्थौ च ग्रन्थार्थास्तेभ्यः । तानाश्रित्येत्यर्थः । कदाचिद्ग्रन्थमाश्रित्य कदाचिदर्थं कदाचिद्ग्रन्थार्थावित्यर्थः । कया ? भवभीरुतया श्रवणावधारणक्रिययोः करणत्वेऽपि संदंशकन्यायेन संबध्यते ।

एवं भगवत्सिद्धस्वरूपतत्प्राप्त्युपायप्ररूपणप्रवणपरमागमोपदेशकप्रथकव्याख्यायकभावेनाधिगतगरिष्ठगरीयोगुरुव्यपदेशानर्हद्भट्टारकगणधरादिचतुष्टयैदंयुगीनधर्माचार्यवर्यानुपचर्य सांप्रतं वक्तृश्रोतॄणामनुग्राहकं तदनुशिष्टधर्मोपदेशसाशासितुमिदमादिशति—

**धर्मं केऽपि विदन्ति तत्र धुनते संदेहमन्येऽपरे,**
**तद्भ्रान्तेरपयन्ति सुष्ठु तमुशन्त्यन्येऽनुतिष्ठन्ति वा ।**
**श्रोतारो यदनुग्रहादहरहर्वक्ता तु रुन्धन्नघं,**
**विष्वग्निर्जरयंश्च नन्दति शुभैः सा नन्दताद्देशना ॥ ५ ॥**

अत्र नानाश्रोतॄणां मुख्यवृत्त्या धर्मस्वरूपाधिगमसंशयव्यपगमविपर्यासनिरासश्रद्धानातिशयाचरणतद्विशेषलक्षणानि व्याख्यातुश्चाशुभकर्मसंवरणनिर्जरणपुण्यपुञ्जार्जनकल्याणपरम्पराप्राप्तिरूपाणि फलानि देशनायाः क्रमेण प्रकाशितानि प्रतिपत्तव्यानि । नन्दतात् । समृद्धिं गच्छतु सर्वाङ्गसमग्रा भूयादित्यर्थः । "तुह्योस्तातङ्ङाशिषि" इति रूपम् । कासौ ? सा देशना । दिश्यते परस्मै प्रतिपाद्यते इति देशना उपदेश्यमानो धर्मो धर्मोपदेशनं वा देशना । रूढ्या धर्मोपदेशः । यदनुग्रहात्किं भवतीत्याह । विदन्ति स्वरूपतोयमेवेत्याकारविशेषरूपतश्चेदृश एवेति निश्चिन्वन्ति । के ते ? केपि । केचित्तीव्रज्ञानावरणोदयविवर्त्तवर्तिनो भव्याः । कम् ? धर्मम् । ध्रियन्ते तिष्ठन्ति नरकादिभ्यो गतिभ्यो निवृत्ता जीवास्तेन सुगताविति धरत्यात्मानं सुगताविति वा धर्मस्तं, रत्नत्रयलक्षणं मोहक्षोभविवर्जितात्मपरिणामरूपं वा वस्तुयाथात्म्यस्वभावं वा उत्तमक्षमादिदशलाक्षणिकं वा । कस्मात् ? यदनुग्रहात् । यस्या देशनाया अनुग्रहो यथाक्षयोपशममतिशयाधानलक्षण उपकारो यदनुग्रहस्तस्माद्धेतोः तमाश्रित्य । किंविशिष्टाः सन्तः ? श्रोतारः श्रवणेन्द्रियद्वारेण देशनामुपलभमानाः । कथम् ? अहरहो दिने दिने । अव्ययमिदम् । तथा धुनते निराकुर्वन्ति । के ते ? अन्ये मन्दज्ञानावरणोदयविवर्तवर्तिनो भव्याः । कम् ? संदेहम् । अयं भवत्यन्यो वेत्थंभूतो भवत्यन्यथाभूतो वेति चलितप्रतीतिरूपं संशयम् । क्व ? तत्र तस्मिन्यथोक्तलक्षणे धर्मे । कस्मात्, यदनुग्रहात् । किंविशिष्टाः सन्तः ? अहरहः श्रोतारः । तथा अपयन्ति अपगच्छन्ति प्रच्यवन्ते । के ते ? अपरे मध्यमज्ञानावरणोदयविवर्तवर्तिनो भव्याः । कुतः सकाशात् ? तद्भ्रान्तेः । तस्य धर्मस्य भ्रान्तिर्यथोक्तस्वरूपादन्यथात्वेन प्रतिपत्तिस्तद्भ्रान्तिस्तस्याः । यथावद्धर्मस्य ज्ञातारो भवन्तीत्यर्थः । कस्मात् ? यदनुग्रहात् । किंविशिष्टाः सन्तः ? अहरहः श्रोतारः । एते त्रयोप्यव्युत्पन्नसम्यक्त्वा भद्रमिथ्यादृष्टयो वा, क्रूरमिथ्यादृष्टीनां देशनायामनधिकारात् ।

तथा उशन्ति कामयन्ते श्रद्दधते इदमित्थमेव भवतीति प्रतीयन्तीत्यर्थः । के ते ? अन्ये सद्दृष्टयो भव्याः । कम् ? तं प्रागुक्तलक्षणं धर्मम् । कथम् ? सुष्ठु सुतराम् । अन्तश्चेतस्यनुबोधरूपेण प्रतिपद्यन्ते इत्यर्थः । कस्मात् ? यदनुग्रहात् । किंविशिष्टाः सन्तः ? अहरहः श्रोतारः । तथानुतिष्ठन्ति

आचरन्ति । के ते ? अन्ये सद्दृष्टयः सुष्ठु सद्दृष्टयो वा । वाशब्दः पक्षान्तरसूचने नान्ये इत्यत्रापि संबध्यते । कम् ? तं धर्मम् । कस्मात् ? यदनुग्रहात्। किंविशिष्टाः सन्तः ? अहरहः श्रोतारः । तथा वाशब्दात्प्रागेव धर्ममनुतिष्ठन्तो यदनुग्रहादहरहः श्रोतारः सन्तः सुष्ठु तमनुतिष्ठन्तीति व्याख्येयम् ।

एवं श्रोतॄणां देशनाकृतमनुग्रहं प्ररूप्य वक्तुस्तं[1] प्ररूपयन्नाह— वक्तेत्यादि । तुर्विशेषे । नन्दति समृद्धो भवति । कोसौ ? वक्ता व्याख्याता । कैः ? शुभैः सद्वेद्यशुभायुर्नामगोत्रलक्षणैरपूर्वपुण्यैः पूर्वार्जितपुण्यपवित्रमकल्याणैश्च शुभपरिणामजन्यत्वात्। शुभं पुण्यं कल्याणम्। शुभमिति रूढमेव। कथं शुभैर्नन्दति ? अहरहः । किं कुर्वन् ? रुन्धन् प्रतिबन्धन् । निवारयन्नित्यर्थः । किं तत् ? अघं ज्ञानावरणादिकर्मरूपमागामि पापम् । कथम् ? विष्वक् समन्तात् । मनोवाक्कायव्यापारद्वारैरागामिपातकयोग्यपुद्गलांस्तद्रूपेण परिणन्तुकामान्निराकुर्वन्नित्यर्थः । न केवलं तत्तथा रुन्धन्, निर्जरयंश्चैकदेशेन क्षपयन् । किं तत् ? अघम् । अर्थात्पुरार्जितं पातकम् । अयमर्थो—देशनाया धर्मोपदेशरूपस्वाध्यायाख्यतपोविशेषत्वादशुभकर्मणां संवरसहभाविन्यां निर्जरायां वर्तमानस्यापि वक्तुस्तद्गतप्रशस्तरागयोगात्प्रचुरपुण्यानामास्रवणं प्राक्तनपुण्यविपाकस्फारीभावान्नवनवकल्याणमालासमावेशश्च भवति ।

एवं भगवत्सिद्धादिगुणगणानुस्मरणलक्षणं मुख्यमङ्गलमभिधायेदानीं प्रमाणगर्भमभिधेयव्यपदेशमुखप्रकाशितव्यपदेशं शास्त्रविशेषं कर्तव्यतया प्रतिजानीते—

**अथ धर्मामृतं पद्यद्विसहस्र्या दिशाम्यहम् ।**
**निर्दुःखं सुखमिच्छन्तो भव्याः शृणुत धीधनाः ॥ ६ ॥**

अथशब्दोत्र तावन्मङ्गलार्थः । उक्तं च—

**सिद्धिर्बुद्धिर्जयो वृद्धी राज्यपुष्टिस्तथैव च ।**
**ओंकारश्चाथशब्दश्च नान्दीमङ्गलवाचिनः ॥ इति ।**

---

१ 'व्याख्यातुरनुग्रहं प्ररूप'–एतावान्पाठो नास्ति मूलपुस्तके ।

अधिकारे वा। इतः शास्त्रं वाधिक्रियत इत्यर्थः। आनन्तर्ये वा। निबद्धमुख्यमङ्गलकरणानन्तरमित्यर्थः। धर्मो व्याख्यातलक्षणः। धर्मोऽमृतमिवोपयोक्तृणामजरामरहेतुत्वात्। तदभिधेयमनेनेतीदं शास्त्रं धर्मामृतमिति व्यपदिश्यते। श्रूयन्ते चाभिधेयव्यपदेशेन शास्त्रं व्यपदिशन्तः पूर्वकवयो यथा, तत्त्वार्थवृत्तिर्यशोधरचरितं चेति। भट्टरुद्रटोपि तथैवाह—"काव्यालङ्कारोयं ग्रन्थः क्रियते यथायुक्ति" इति। परिमिताक्षरमात्रापिण्डः पादः। तन्निबद्धं वाङ्मयं वृत्तश्लोकार्यारूपं पद्यम्। द्वे सहस्रे समाहृते द्विसहस्री विंशतिशतानि। पद्यानां द्विसहस्री पद्यद्विसहस्री तया पद्यद्विसहस्र्या करणभूतया। दिशाम्यहमित्यनेन देशनक्रियायां व्यापृतमात्मानं लक्षयति। दिशामि प्रतिपादयामि। कः? कर्ता **अहम्**। किं तत्। **धर्मामृतम्**। कया। **पद्यद्विसहस्र्या**। कथम्? **अथ** अनन्तरम्। अथ श्रोतॄनभिमुखीकर्तुमाह—निर्दुःखमित्यादि। हे **भव्या** अनन्तज्ञानाद्याविर्भावयोग्या जीवाः **शृणुत** आकर्णयत। के ते? **यूयम्**। किं तत्? प्रकृतत्वादुपदिश्यमानं धर्मामृतं नाम शास्त्रम्। किंविशिष्टाः सन्तः? **धीधनाः**। धीः शुश्रूषा श्रवणाद्यष्टगुणसंपन्ना बुद्धिः। धीरेव धनं येषामत्यन्तस्पृहणीयत्वात्ते धीधनाः। इदमपि वा संबोधनत्वेन भव्या इत्यस्य विशेषणं कृत्वा हे भव्या, हे धीधना इति योज्यम्। किं कुर्वन्त इदं शास्त्रं यूयं श्रृणुतेत्याह—**इच्छन्तो**ऽभिलषन्तः। किं तत्? **सुखं** शर्म। किंविशिष्टम्? **निःदुःखं** दुःखान्निष्क्रान्तमनाकुलत्वलक्षणं नैःश्रेयसं, न सांसारिकम्। संसारे हि दुःखानुषक्तमेव सुखम्। तथा चोक्तम्—

**सपरं बाधासहियं विच्छिण्णं बंधकारणं विसमं।**
**जं इंदिएहि लद्धं तं सोक्खं दुक्खमेव तहा॥ इति।**

अथवा दुःखानामभावो निर्दुःखं सुखं चेच्छन्त इति ग्राह्यं, दुःखाभावस्य सुखस्य च पुरुषैरर्थ्यमानत्वात्। सुखमित्यत्र चशब्दो लुप्तनिर्दिष्टो द्रष्टव्यः। यथा, पृथिव्यापस्तेजो वायुरिति तत्त्वानीत्यत्र। एतेन धीधनत्वे निर्दुःखसुखाभिलाषित्वे च सति भव्या एवैतच्छास्त्रश्रवणाधिकारिण इत्युक्तं प्रतिपत्तव्यम्। किंच—

**"मङ्गलनिमित्तहेतुप्रमाणनामानि शास्त्रकर्तॄंश्च।**
**व्याकृत्य षडपि पश्चाद्व्याचष्टां शास्त्रमाचार्यः॥"**

इति प्रसिद्ध्या मङ्गलादिषट्कमिह प्रदर्श्यते। तत्र (?)मं मलं पापं गालयति मङ्गं वा पुण्यं लात्यादत्ते इति मङ्गलमऽविघ्नेन प्रारिप्सितक्रियासंसिद्ध्यर्थमिष्यते । तच्चेह मुख्यमर्थतो भगवत्सिद्धादिगुणगणप्रणिधानप्रणयनं पूर्वमकारि । तेनाधर्मविशेषध्वंसस्य धर्मविशेषस्वीकारस्य च प्रारिप्सितशास्त्रसिद्धिनिमित्तस्योपपत्तेः । शब्दतश्चाथशब्दोच्चारणमनन्तरमेव कृतं, तस्यापि तदर्थत्वप्रसिद्धेः । तथा चोक्तम्—

त्रै[2]लोक्येशनमस्कारलक्षणं मङ्गलं मतम् ।
विशिष्टभूतशब्दानां शास्त्रादावथवा स्मृतिः ॥ इति ।

संपूर्णकलशदध्यक्षतसितकुसुमोपहारादिकं तु मुख्यमङ्गलप्राप्त्युपायत्वादमुख्यमङ्गलमित्युच्यते । तदपि चास्य शास्त्रस्यारम्भे शास्त्रकृता कृतं लक्ष्यते शास्त्रसिद्ध्यन्यथानुपपत्तेः । (२) यमुद्दिश्य शास्त्रमुच्यते तन्निमित्तम् । तच्चेह भव्या इत्येवं निर्दिष्टमेव । हेतुः प्रयोजनम् । तच्चेह सम्यग्धर्मस्वरूपादिज्ञानलक्षणं दिशामीति शृणुतेति च पदद्वयेन सूचितं लक्ष्यते । येन हि क्रियायां प्रयुज्यते तत्प्रयोजनम् । शास्त्रश्रवणादिक्रियायां च ज्ञानेन प्रयुज्यते इति तदेव शास्त्रस्य मुख्यं प्रयोजनम् । शास्त्रश्रवणादेर्ज्ञानं मे जनिष्यत इति हेतुरत्र प्रवर्तते । तदस्य शास्त्रस्य सम्यग्धर्मस्वरूपज्ञानमेव मुख्यं प्रयोजनम् । आनुषङ्गिकं तु धर्मसामर्थ्यादिज्ञानमपि तत्परिज्ञानात्पुनः सम्यग्धर्मानुष्ठाने प्रवर्तमानोनन्तज्ञानदृग्वीर्यवैतृष्ण्यमयमव्ययमतीन्द्रियं च सुखं परमाव्याबाधत्वं च प्राप्नोति। इति परम्परया तदुभयमप्यस्य शास्त्रस्य प्रयोजनं वस्तुतः सुखस्य दुःखनिवृत्तेर्वा पुरुषेणार्थ्यमानत्वात् ततश्च निर्दुःखं सुखमिति पदद्वयेनोक्तमेव। सम्यग्धर्मस्वरूपादेः शास्त्रस्य चाभिधानाभिधेयभावलक्षणः संबन्धो नाम्नैवाभिहितः । सम्यग्धर्मानुष्ठानस्यानन्तसुखादेश्च साधनभावस्वभावोसौ निश्चेयः ।

एतेनास्य शास्त्रस्य संबन्धाभिधेयप्रयोजनशून्यत्वशङ्कादुर्जनापवादशङ्कापनोदार्थमाह—

**परानुग्रहबुद्धीनां महिमा कोप्यहो महान् ।**

---

१ 'मं' इति शब्दस्यैव मङ्गलमर्थ इति मं-शब्देन भवितव्यम् । २ त्रैलोकेश—इत्यादिपाठः 'ख' पुस्तके ।

येन दुर्जनवाग्वज्रः पतन्नेव विहन्यते ॥ ७ ॥

**अहो** आश्चर्यं वर्तते । कोसौ ? **कोपि** कश्चिदनिर्वचनीयो **महिमा** माहात्म्यं प्रभावः । केषाम् ? **परानुग्रहबुद्धीनाम्** । परेषामनुग्राह्यदेहिनामनुग्रहे व्यापत्तिनिवारणे बुद्धिरन्तःकरणप्रवृत्तिर्येषां त एवम् । किंविशिष्टः ? **महान्** विपुलः, सर्वत्र सर्वदा प्रत्युपकारनिरपेक्षतया सर्वेषां समीहितार्थप्रसूतिहेतुत्वात् । येन किं क्रियते इत्याह—**येन** कर्त्रा करणेन वा **विहन्यते** प्रतिबध्यते । कोसौ ? **दुर्जनवाग्वज्रः** दुर्जनानां परापकरणशीलानां वाग्वचो वज्र इव सहसा दारुणविनिपातहेतुत्वादुर्निवारत्वाच्च । किं कुर्वन् ? **पतन्नेव** पतनक्रियायाः प्रथमक्षणे एव वर्तमानः ।

सम्यग्धर्मोपदेशकानां समासोक्त्या कलिकाले दुर्लभत्वं भावयितुमाह—

सुप्रापाः स्तनयित्नवः शरदि ते साटोपमुत्थाय ये,
प्रत्याशं प्रसृताश्चलप्रकृतयो गर्जन्त्यमन्दं मुधा ।
ये प्रागब्दचितान् फलर्द्धिमुदकैर्व्रीहीन्नयन्तो नवान्,
सत्क्षेत्राणि पणन्त्यलं जनयितुं ते दुर्लभास्तद्घनाः ॥ ८ ॥

स्तनयित्नवो मेघाः समासोक्त्या देशकाश्चोपमेयाः । एवमुत्तरत्रापि । शरदि घनान्ते दुष्षमायां च साटोपं ससंरम्भमुत्थाय उत्पद्य उद्धतीभूय प्रत्याशं प्रतिदिशं प्रतिस्पृहं च प्रसृता दूरदेशव्यापिनः चलप्रकृतयोल्पकालस्थायिनोऽनवस्थितस्वभावाश्च **गर्जन्ति** गलगर्जितं कुर्वन्ति **अमन्दमुच्चैः** **मुधा** विफलमनुरूपवृष्ट्यकरणादभ्युदयनिःश्रेयसमार्गानुपदर्शनाच्च । इति पदार्थः प्रत्येयः । भवन्ति । के ? अमी **ते** **स्तनयित्नवः** । किंविशिष्टाः ? **सुप्रापाः** सुलभाः । क्व ? **शरदि** । ये किम् ? **ये** **गर्जन्ति** । कथं कृत्वा ? **अमन्दं** तथा **मुधा** । किं कृत्वा ? **उत्थाय** । कथम् ? **साटोपम्** । किंविशिष्टाः सन्तस्तथा गर्जन्ति ? **प्रसृताः** । कथम् ? **प्रत्याशम्** । पुनः किंविशिष्टाः ? **चलप्रकृतयः** । अत्र स्तनयित्नवः इत्यनेन सकलविशेषणसाधर्म्यान्मिथ्योपदेशका एव प्रतीयन्ते समासोक्त्यलंकारबलात् । तल्लक्षणं भट्टरुद्रटोक्तं यथा—

सकलसमानविशेषणमेकं यत्राभिधीयमानं सत् ।
उपमानमेव गमयेदुपमेयं सा समासोक्तिः ॥

उदाहरणम्—

फलमविकलमलघीयो लघु परिणति जायतेस्य सुस्वादु ।
प्रीणितसकलप्रणयिप्रणतस्य समुन्नतेः सुतरोः ॥

एवमुत्तरार्धेपि व्याख्येयम् । प्रागब्दचितान् प्राग्‌भ्रेघपुष्टान् पूर्वाचार्यव्युत्पादितांश्च । प्राञ्चः पूर्वेब्दाः प्रागब्दाः तैश्चिताः फलर्धिं कणसंपत्तिं सदाचरणप्रकर्षं च । उदकैर्जलैः सम्यगुपदेशैश्च । व्रीहीन् धान्यानि । प्रागब्दचितानिति विशेषणाच्छाल्यादिस्तम्बरूपाणि पक्षे शास्त्रार्थरहस्यविशेषांश्च नवान् गोधूमादिस्तम्बानऽपूर्वव्युत्पत्तिविशेषांश्च । सत्क्षेत्राणि शोभनसस्याधिकरणानि विनीतविनेयांश्च पृणन्ति पूरयन्ति अलं पर्याप्तं फलर्द्धिं समृद्धं कृत्वा जनयितुं प्रादुर्भावयितुं तद्घनाः शरन्मेघाः समासोक्त्या ऐदंयुगीनगणिनश्च भवन्ति । केमी ? ते तद्घनाः । तस्याः शरदो घनास्तद्घनाः । किंविशिष्टाः ? दुर्लभाः दुष्प्रापाः । कथमपि लभ्या इत्यर्थः । ये किम् ? ये पृणन्ति । कानि ? सत्क्षेत्राणि । कैः ? उदकैः । किं कर्तुम् ? जनयितुम् । कथम् ?अलम् । कान् ? व्रीहीन् । किंविशिष्टान् ? नवान् । किं कुर्वन्तः ? नयन्तः प्रापयन्तः । कान् ? व्रीहीन् । किंविशिष्टान् ? प्रागब्दचितान् । काम् ? फलर्द्धिम् । कैः ? उदकैः । अत्रापि तद्घना इत्यनेन सकलविशेषणसाधर्म्यात्सम्यगुपदेशका एव प्रतीयन्ते समासोक्त्यलंकारबलात् ॥

व्याचष्टां शास्त्रमाचार्य इत्यनेनोद्दिष्टमाचार्यं लक्षयितुं व्यवहारप्रधानदेशनायाः कर्तारमाशंसति—

प्रोद्यन्निर्वेदपुष्यद्व्रतचरणरसः सम्यगाम्नायधर्ता,
धीरो लोकस्थितिज्ञः स्वपरमतविदां वाग्मिनां चोपजीव्यः ।
सन्मूर्तिस्तीर्थतत्त्वप्रणयननिपुणः प्राणदाज्ञोभिगम्यो,
निर्ग्रन्थाचार्यवर्यः परहितनिरतः सत्पथं शास्तु भव्यान् ॥९॥

व्रतानां वक्ष्यमाणलक्षणानां चरणं गुप्तिसमितियुक्तत्वेनानुष्ठानं व्रतचर-

णम् । तस्य तस्मिन्वा रसो हर्षो व्रतचरणरसः । प्रकर्षेण शान्तरसप्राह्यभिमुखत्वेनोद्यन्नात्मदेहान्तरज्ञानभावनावष्टम्भादारोहन् प्रोद्यन् । स चासौ निर्वेदश्च भवाङ्गभोगवैराग्यं प्रोद्यन्निर्वेदः । तेन पुष्यन् प्रतिक्षणं प्रकृष्यमाणो व्रतचरणरसो यस्य स प्रोद्यन्निर्वेदपुष्यद्व्रतचरणरसः । धर्मवीररसाविष्ट इत्यर्थः । सम्यक् संपूर्णः प्रथमाद्यनुयोगचतुष्टयविशिष्ट आम्नाय आगमः सम्यगाम्नायः । तथा सम्यक् प्रशस्त आम्नायः पितृगुरुसंतानः सम्यगाम्नायः । तयोर्धर्ताऽनुपघातवृत्त्या स्वस्मिन्नवस्थापकः **सम्यगाम्नायधर्ता** । पारम्पर्योपदेशसंतानक्रमायाततत्त्वज्ञानसदाचरणपरायण इत्यर्थः । **धीरः** परिषहोपसर्गैरविकार्यः । लोकस्य चराचरस्य जगतः स्थितिरित्थंभावनियमो लोकानां वा वर्णाश्रमाणां स्थितिर्व्यवहारो लोकस्थितिः । तां जानातीति **लोकस्थितिज्ञः** । स्वस्यात्मनः परेषां च बौद्धादीनां मते शासने स्वपरमते स्याद्वादसर्वथैकान्तवादौ । स्वपरमते विदन्ति जानन्ति स्वपरमतविदस्तेषां **स्वपरमतविदाम्** । स्वसमयपरसमयज्ञानिनामुपजीव्यो नोपजीवकः । तेषामुपरि स्फुरन्नित्यर्थः । तथा वाग्वाणी प्रशस्तातिशायिनी वा एषामस्तीति **वाग्मिनः**।"वाचो ग्मिन्" इत्यनेन मत्वर्थीयो ग्मिन् । तेषामप्युपजीव्यः। वादिनां **वाग्मिनां** च धुरि रेखां प्राप्त इत्यर्थः । सती सामुद्रिकोक्तलक्षणलक्षितत्वेन सेतरलोमशासितस्थूलदीर्घत्रिदोषरहितत्वेन च प्रशस्ता मूर्तिः शरीरं यस्यासौ **सन्मूर्तिः** । उक्तं चार्षे—

> रूपाम्नायगुणैराढ्यो यतीनां मान्य एव च ।
> तपोज्येष्ठो गुरुश्रेष्ठो विज्ञेयो गणनायकः ॥ इति ।

तरन्ति संसारार्णवमनेनेति तीर्थं सर्वमनेकान्तात्मकमिति मतम् । तस्य प्रणयनं सकलप्रवादतिरस्कारप्रतपद्व्यवहारनिश्चयनयप्रयोगप्रकाशितविचित्राकारचक्रात्मकवस्तुप्रतिपादनम् । तत्त्वमध्यात्मरहस्यम् । तस्य प्रणयनं भूतार्थेतरनयद्वयव्यवस्थापितदयादमत्यागसमाधिप्रवर्तनसन्निकृष्यमाणपरमानन्दपदप्रदेशनम् । तीर्थं च तत्त्वं च तीर्थतत्त्वे । तयोः प्रणयने मुख्योपचारविवरणे तीर्थतत्त्वप्रणयने । तयोर्निपुणः प्रवीणः स्वपरप्रत्ययकारीति **तीर्थतत्त्वप्रणयननिपुणः** । तदन्यतरनैपुण्यं हीतरविलोपः स्यात् । तथा चोक्तम्—

> जइ जिणमयं पवंजह ता मा ववहारणिच्छए मुअह ।
> एकेण विणा छिज्जइ तित्थं अण्णेण पुण तच्चं ॥

चरणकरणप्पहाणा ससमयपरमत्थमुक्कवावारा ।
चरणकरणं ससारं णिच्छयसुद्धं ण जाणन्ति ॥
णिच्छयमालंबंता णिच्छयदो णिच्छयं अजाणंता ।
णासिंति चरणकरणं बाहिरकरणालसा केई ॥ इति ।

प्राणन्ती जीवन्ती स्वैः परैश्चाधृक्ष्यमाणा आज्ञा शासनं नियोगो यस्यासौ प्राणदाऽऽज्ञः षड्जीवनिकायपालनपर्यवसानशासन इत्यर्थः । आभिमुख्येन गम्यते आश्रीयते इत्यभिगम्यः सर्वेषां सुखोपचर्यः । प्रियहितवादित्वप्रायःप्रश्नसहत्वादिगुणालंकृत इत्यर्थः । ग्रश्नन्ति दीर्घीकुर्वन्ति संसारमिति ग्रन्था मिथ्यात्वादयः । तेभ्यो निष्क्रान्ता निर्ग्रन्था यतयः । पञ्चप्रकारमाचारं स्वयमाचरत्याचारयति च शिष्यानित्याचार्यः । "कृत्ययुटोन्यत्रापि च" इति कर्तरि प्रथमपक्षे तु "वर्णव्यञ्जनान्ताद् घ्यण्" इति घ्यण् । द्वितीयपक्षे च "स्वराद्य" इति यः । तथा चोक्तम्—

पञ्चधाचरन्त्याचारं शिष्यानाचारयन्ति च ।
सर्वशास्त्रविदो धीरास्तेत्राचार्याः प्रकीर्तिताः ॥ इति ।

निर्ग्रन्थानामाचार्या निर्ग्रन्थाचार्याः । तेषु वर्यो मुख्यो निर्ग्रन्थाचार्यवर्यः । परेभ्यो हितमुपकारकं परहितम् । तत्र निरतो नियतमासक्तः । शश्वत्परोपकारपर इत्यर्थः । सन् प्रशस्तोऽबाध्यमानत्वात् सद्भिः सेव्यमानत्वाच्च पन्था व्यवहारनिश्चयमोक्षमार्गः सत्पथस्तम् ।

अथ समन्वयः—शास्तु प्रतिपादयतु । कोसौ ? निर्ग्रन्थाचार्यवर्यः । कान् ? भव्यान् । कम् ? सत्पथम् । किंविशिष्टः सन् ? परहितनिरतः । पुनः किंविशिष्टः ? प्रोद्यदित्यादिग्रन्थोक्तदशविशेषणविशिष्टः । अत्र शास्त्वित्याशिषि पञ्चमी । यथोक्तगुणविशिष्टो देशनाचार्यो भूयादित्याशास्महे इत्यर्थः। अध्येषणायां वात्र पञ्चमी । यथोक्तगुणो गणी सत्कारपूर्वकं देशनायां व्यापरणीय इत्यर्थः ॥

अथाध्यात्मरहस्यगुरोः सेवायां मुमुक्षून्नियोक्तुमाह—

विधिवद्धर्मसर्वस्वं यो बुद्धा शक्तितश्चरन् ।
प्रवक्ति कृपयान्येषां श्रेयः श्रेयोर्थिनां हि सः ॥ १० ॥

श्रेयः सेव्यः। कोसौ ? स हि स एव। अत्रावधारणार्थो हि शब्दो भिन्नक्रमो[1] योज्यः। केषाम् ? श्रेयोर्थिनाम्। श्रेयो निःश्रेयसमर्थयन्ते वाञ्छन्ति तच्छीलास्तेषाम्। "व्यस्यता वा कर्तरि" इति कर्तरि षष्ठी। मुमुक्षुभिरित्यर्थः। यः किम् ? यः प्रवक्ति आशुश्रूषतमःक्षयात्कथयति। किं तत् ? धर्मसर्वस्वम्। धर्मस्य व्यवहारेतररत्नत्रयात्मनः सर्वं संपूर्णं स्वमसाधारणं रूपं धर्मसर्वस्वम्। धर्मो वा सर्वस्वं यस्य सोयं धर्मसर्वस्वस्तम्। रत्नत्रयसमाहितमात्मानमित्यर्थः। कथम् ? विधिवत्। विधिमर्हतीति "तदर्हं वत्" इति वत्। विधेयतयेत्यर्थः। केषामग्रे ? अन्वेषां विनेयानाम्। कया ? कृपया अनुकम्पया, न लाभपूजाख्यात्यपेक्षया। किं कुर्वन् ? चरन् स्वयमासेवमानः। किं तत् ? धर्मसर्वस्वम्। कुतः ? शक्तितो बलवीर्यानिगूहनेनेत्यर्थः। किं कृत्वा ? बुद्ध्वा परमागमात्सद्गुरुसंप्रदायात् स्वसंवेदनाद्वाधिगम्य। किं तत् ? धर्मसर्वस्वम्॥

देशनाचार्याध्यात्मरहस्यदेशकयोर्लोके प्रभावप्राकट्यमाशास्ते—

स्वार्थैकमतयो भान्तु मा भान्तु घटदीपवत्।
परार्थे स्वार्थमतयो ब्रह्मवद्भान्त्वहर्दिवम्॥ ११॥

इह हि मुमुक्षवस्त्रिधा संभवन्ति। तत्र केचित्परोपकारप्रधानस्वोपकाराः। तथा चोक्तमार्षे—

स्वदुःखनिर्घृणारम्भाः परदुःखेषु दुःखिताः।
निर्व्यपेक्षं परार्थेषु बद्धकक्षा मुमुक्षवः॥ इति।

अन्ये स्वोपकारप्रधानपरोपकाराः। तथा चोक्तम्—

आदहिदं कादव्वं जइ सक्कइ परहिदं च कादव्वं।
आदहिदपरहिदादो आदहिदं सुट्ठु कादव्वं॥ इति।

इतरे स्वोपकारैकपराः। तथा चोक्तम्—

परोपकृतिमुत्सृज्य स्वोपकारपरो भव।
उपकुर्वन् परस्याज्ञो दृश्यमानस्य लोकवत्॥ इति।

---

१ 'सहि' इति मूले एव पाठश्चेत्तार्थो भिन्नक्रमेण।

तत्रान्त्येषु ताटस्थ्यं भावयितुमाह—स्वार्थैकेत्यादि । भान्तु लोके आत्मानं प्रकाशयन्तु । के ते ? स्वार्थे एकस्मिन् परार्थरहिते मतिः कर्तव्यतया प्रतिपत्तिर्येषां ते एते **स्वार्थैकमतयः** । अथवा **मा भान्तु** । उभयत्र पक्षे साम्यमस्माकमित्यर्थः । किंवत् ? **घटदीपवत्** । अयमर्थो—घटमध्यस्थो दीपो भातु दीप्यतां मा वा भातु । कस्तत्र हर्षामर्षयोरवसरो लोके, तस्य हेयोपादेयार्थप्रकाशकत्वेनोपेक्षविषयत्वात् । **परार्थे स्वार्थमतयः पुनर्भान्तु** । किंवत् ? **ब्रह्मवत्** सर्वज्ञतुल्यम् । कथम् ? **अहर्दिवं** दिने दिने अहोरात्रं चेत्यर्थः । परार्थे परेणार्थ्यमाने वस्तुनि स्वार्थे इव मतिर्येषां ते तथोक्ताः । अहश्च दिवा चेत्यहर्दिवम् । नित्यमित्यर्थः । "नक्तंरात्रिमहोभ्यो दिवम्" इत्यनेन साधुत्वमस्य । भान्त्वित्याशिषि लोट् । अत्रेयं भावना—प्रकटप्रभावे देशके लोकः परं विश्वासमुपेत्य तद्वचनान्निरारेकमामुत्रिकार्थाय यतते ॥

इदानीमासन्नभव्यानामतिदुर्लभत्वेपि न देशना निष्फला । इति तां प्रतिवक्तुमुत्साहयति—

**पश्यन् संसृतिनाटकं स्फुटरसप्राग्भारकिर्मीरितं,**
**स्वस्थश्चर्वति निर्वृतः सुखसुधामात्यन्तिकीमित्यरम् ।**
**ये सन्तः प्रतियन्ति तेऽद्य विरला देश्यं तथापि क्वचित्,**
**काले कोपि हितं श्रयेदिति सदोत्पाद्यापि शुश्रूषुताम् ॥ १२ ॥**

पश्यन् निर्विकल्पमनुभवन् संसृतिः संसारो नाटकमभिनेयकाव्यविशेष इव प्रेक्षकजनानामिव मुक्तात्मनां सान्द्रानन्दनिदानत्वात् । इति संसृतिनाटकं । स्फुटन्ति विकसन्ति विभावानुभावव्यभिचारिभिरभिव्यज्यमानाः प्रतीतिमायान्ति इति । स्फुटा व्यक्ता स्थायिभावाः विभावानुभावव्यभिचारिसंयोगात् परिपोषमागता रत्यादिस्थायिभावाः । रस्यन्ते आस्वाद्यन्ते मनसेति रसाः शृङ्गारादयः । तत्सामान्यलक्षणं यथा—

**कारणान्यथ कार्याणि सहकारीणि यानि च ।**
**रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ॥**

विभावा अनुभावास्तत्कथ्यन्ते व्यभिचारिणः ।
व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः ॥

अपिच—

विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः ।
आनीयमानः साध्यत्वं स्थायिभावो रसः स्मृतः ॥

तत्र विभावा ललनोद्यानादीन्यालम्बनोद्दीपनकारणानि । अनुभावाः कटाक्षभुजाक्षेपादयो मानसविकारलक्षणस्य भावस्य बोधकाः । व्यभिचारिणो निर्वेदादयः । तद्यथा—

निर्वेदोथ तथा ग्लानिः शङ्कासूयामदश्रमाः ।
आलस्यं चैव दैन्यं च चिन्तामोहो धृतिः स्मृतिः ॥
वेगश्चपलता हर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च ॥
सुप्तिर्विबोधोऽमर्षश्चाप्यवहित्थस्तथोग्रता ।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदिमे भावाः समाख्यातास्तु नामतः ॥

सात्त्विका यथा—

स्तम्भः स्वेदोथ रोमाञ्चः स्वरभेदोथ वेपथुः ।
वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विकाः स्मृताः ॥

स्थायिभावा यथा—

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्साविस्मयशमाः स्थायिभावा रसाश्रयाः ॥
शृङ्गारहास्यकरुणारौद्रवीरभयानकाः ।
बीभत्साद्भुतशान्ताश्च नव नाट्यरसाः स्मृताः ॥

निर्वेदादयोपि च ये नासकृच्चेतसोपभुज्यन्ते तस्य ते परिपोषमागता रसा एव रत्यादिवत् । यस्य तु परिपोषं नागतास्तस्य भावा एव तद्वदेव । स्फुटाश्च ते रसाश्च स्फुटरसाः । तेषां प्राग्भारो व्यूहः । तेन किर्मीरितं नानारूपतां नीतम् । स्वस्थः स्वस्मिन्कर्मविविक्ते आत्मनि तिष्ठन् निरातङ्कश्च सन् चर्वयु-

पर्युपर्यास्वादयति निर्वृतो मुक्तात्मा व्यापारान्तरनिवृत्तश्च सुखसुधां शर्मामृतम् आत्यान्तिकीमनन्तकालभाविनीम् अरं झटिति सदुपदेशश्रवणानन्तरमेव सन्त आसन्नभव्याः प्रतियन्ति तथेति प्रतिपत्तिगोचरं कुर्वन्ति । तथा चोक्तम्—

**जेण वियाणदि सव्वं पिच्छदि सो तेण सोक्खमणुहवदि ।**
**इदि तं जाणदि भविओ अभवियसंतो ण सद्दहदि ॥ इति ॥**

अथ समन्वयः—

यद्यपि वर्तन्ते । के ? **ते सन्तः** । किंविशिष्टाः ? **विरलाः** कतिपये क्वचित्कदाचिल्लभ्याः । क ? **अद्य** अस्मिन् पञ्चमकाले तथापि देश्यमिति गत्वा संबन्धः कर्तव्यः । ते के ? **ये** सन्तः **प्रतियन्ति** । कथम् ? **अरम्** । किम् ? **इति** एवंरूपं वस्तु । तदेव दर्श्यते । **चर्वीति** । कोसौ ? **निर्वृतः** । काम् ? **सुखसुधाम्** । किंविशिष्टाम् ? **आत्यन्तिकीम्** । किंविशिष्टः सन् ? **स्वस्थः** । किं कुर्वन् ? **पश्यन्** । किं तत् ? **संसृतिनाटकम्** । किंविशिष्टम् ? **स्फुटरसप्राग्भारकिर्मीरितम्** । अयमर्थो—यथा प्रेक्षकजनः स्फुटरसप्राग्भारकिर्मीरितं नाटकं पश्यन्नविच्छिन्नसान्द्रानन्दनिरातङ्कः सन्ननुभवति तथा मुक्तात्मा तथाभूतं संसारं पश्यन् । इति ये भव्यात्मानः श्रद्धते तेत्रेदानीं दुर्लभा एव । यद्यप्येवं वर्तते **तथापि देश्यं** प्रतिपाद्यं तत्त्वं परहितप्रतिपादनैककार्यैराचार्यैः । किं कदाचित् ? नेत्याह—**सदा** सर्वदा । **कुतो** हेतोः ? **इति** अस्मात् । यतः **श्रयेत्** प्रतिपद्येत । कोसौ ? **कोपि** कश्चिद्भव्यः । किं तत् ? **हितम्** । क ? **काले** । किंविशिष्टे ? **क्वचिदऽनियते** । किं स्वतः शुश्रूषायां सत्यां देश्यमुतान्यथापीत्याह—किं कृत्वा ? **उत्पाद्यापि** । काम् ? **शुश्रूषुताम्** । शुश्रूषोर्हितं श्रोतुमिच्छोर्भावः शुश्रूषुता, ताम् । न केवलं सहजहितश्रवणेच्छायां सत्यां तद्देश्यं यावत्तामुत्पाद्यापीत्यपिशब्दार्थः ॥

अभव्यस्याप्रतिपाद्यत्वे हेतुमुपन्यस्यति—

**बहुशोप्युपदेशः स्यान्न मन्दस्यार्थसंविदे ।**
**भवति ह्यन्धपाषाणः केनोपायेन काञ्चनम् ॥ १२ ॥**

**न स्यान्न** भवेत् । कोसौ ? **उपदेश** आप्तशिक्षावचनम् । कस्मै ? **अर्थ-**

**संविदे** अर्थे हेय उपादेये च विषये सङ्गता अन्तर्बोधनीयता विद् ज्ञानं, तस्मै। कस्य? **मन्दस्य** अशक्यसम्यग्दर्शनादिपाटवस्य सदा मिथ्यात्वरोगितस्य। अभव्यस्येत्यर्थः। कथं कृत उपदेशः? **बहुशो** बहून्वारान्। किं पुनः सकृद्द्विर्वेत्यपि शब्दार्थः। युक्तं चैतत्, हि यस्मात् **केनोपायेन** कया सामग्र्या भवति। न केनापीत्यर्थः। कोसौ? **अन्धपाषाणो** विभक्तुमशक्यकाञ्चनोऽश्मा। किं तत्? **काञ्चनं** सुवर्णम्॥

भव्योपीदृश एव प्रतिपाद्यः स्यादित्याह—

**श्रोतुं वाञ्छति यः सदा प्रवचनं प्रोक्तं शृणोत्यादराद्,**
**गृह्णाति प्रयतस्तदर्थमचलं तं धारयत्यात्मवत्।**
**तद्विद्यैः सह संविदत्यपि ततोन्यांश्चोहतेऽपोहते,**
**तत्त्वाभिनिवेशमावहति च ज्ञाप्यः स धर्मं सुधीः ॥१४॥**

अत्र शुश्रूषाश्रवणग्रहणधारणविज्ञानोहापोहतत्त्वाभिनिवेशा अष्टौ बुद्धिगुणाः क्रमेणोक्ताः प्रतिपत्तव्याः। **ज्ञाप्यः** प्रतिपाद्यः। कोसौ? **स सुधीः** शोभना समीचीना सम्यक्त्वसनाथा धीर्ज्ञानं यस्यासौ सुधीर्धीधन इत्यर्थः। कं ज्ञाप्यः? **धर्मम्**। यः किं किं करोतीत्याह—**यो वाञ्छति** इच्छति। किं कर्तुम्? **श्रोतुमाकर्णयितुम्**। किं तत्? **प्रवचनं** प्रकृष्टं दृष्टेष्टप्रमाणाभ्यामविरुद्धं वचनं सर्वमनेकान्तात्मकमित्यादिवाक्यम्। जिनागममित्यर्थः। कथम्? **सदा** नित्यम्। तथा यः **शृणोत्याकर्णयति**। किं तत्? प्रवचनम्। किंविशिष्टम्? **प्रोक्तं** गुरुनिह्नवाकारिश्रेयोर्थिभिः प्रवक्तुमारब्धम्। कस्मात्? **आदरात्**। तथा **यो गृह्णाति** निश्चिनोति। कम्? **तदर्थं** तस्य प्रवचनस्याभिधेयम्। किंविशिष्टः सन्? **प्रयतः** प्रयत्नपरः। तथा यो **धारयति** स्मृत्यावष्टभ्नाति। कम्? **तं** प्रयत्नाद्गृहीतं तदर्थम्। कथं कृत्वा? **अचलं** स्थिरं जन्मान्तरेपि वर्तमानसंस्कारं कृत्वा। किंवत्? **आत्मवद्** आत्मना तुल्यं, शश्वदसह्यवियोगत्वात्। तथा यः **संविदति** मोहसंदेहविपर्यासव्युदासेनाध्यवस्यति। कम्? तं तथा गृहीतं धारितं तदर्थं तैः **सह** मिलित्वा। कैः? **तद्विद्यैः** सा तत्प्रवचनलक्षणा विद्या येषां त एवं, तद्विद्यसंवादस्य बुद्धिसंवर्द्धनानां प्रधानत्वात्। अपिः समुच्चये। न केवलं तं तथा

धारयति संविदति चेत्यर्थः । तथा य **ऊहते** व्याहया तथाविधान् वितर्कयति । यदित्थं स्थिरकार्यकृत् तदित्थं सर्वत्र सर्वदेत्यादिरूपतया क्रोडीकरोतीत्यर्थः । कान् ? **अन्यान्** अविज्ञातानर्थान् । कस्मात् ? **ततस्तं** विज्ञातमर्थमाश्रित्य । तथा **योऽपोहते च** उक्तियुक्तिभ्यां विरुद्धानर्थान् प्रत्यवायसंभावनया व्यावर्तयति । कान् ? अन्यान् प्रमाणबाधितानर्थान् अश्रद्धेयतया प्रतिक्षिपतीत्यर्थः । तथा य **आवहति** करोति च । कम् ? **तत्त्वाभिनिवेशम्** । तस्य प्रवचनार्थस्य तत्त्वं हेयत्वेनोपादेयत्वेनोपेक्षणीयत्वेन च व्यवस्थितं रूपं तत्तत्त्वम् । तस्याभिनिवेशो निर्बन्धस्तत्तत्त्वाभिनिवेशस्तम् ॥

एवंविधप्रज्ञस्यापि सदुपदेशं विना धर्मे प्रज्ञा न क्रमते इत्याचष्टे—

**महामोहतमश्छन्नं श्रेयोमार्गं न पश्यति ।**
**विपुलापि दृगालोकादिव श्रुत्या विना मतिः ॥ १५ ॥**

**न पश्यति** नावलोकयति । कासौ ? **मतिर्बुद्धिः** । कम् ? **श्रेयोमार्गम्** । किंविशिष्टम् ? **महामोहतमश्छन्नं** महामोहस्तमोन्धकारमिव पदार्थप्रच्छादकत्वात् । तेन छन्नं छादितम् । कथम् ? **विना** । कस्याः ? **श्रुत्याः** धर्मश्रवणात् । श्रुत्वा धर्मं विजानातीति विधानात् । किंविशिष्टापि ? **विपुलापि** महत्यपि । केव ? **दृगेव** यथा दृक् चक्षुर्न पश्यति । कम् ? श्रेयोमार्गं प्रशस्तपथम् । किंविशिष्टापि ? विपुलापि विस्फारितापि । कथम् ? विना । कस्मात् ? **आलोकात्** प्रदीपादिप्रकाशात् ॥

शास्त्रसंस्कारान्मतेः परिच्छेदातिशयं शंसति—

**दृष्टमात्रपरिच्छेत्त्री मतिः शास्त्रेण संस्कृता ।**
**व्यनक्त्यदृष्टमप्यर्थं दर्पणेनेव दृङ्मुखम् ॥ १६ ॥**

**व्यनक्ति** प्रकाशयति । कासौ ? **मति**रिन्द्रियानिन्द्रियनिमित्तमवग्रहादिज्ञानम् । कम**र्थं** । किंविशिष्टम् ? **अदृष्टमपि** इन्द्रियानिन्द्रियैर्गृहीतुमशक्यमपि । किंविशिष्टा सती ? **संस्कृता** आहितातिशया । केन ? **शास्त्रेण** आप्तवचनादिजन्मना दृष्टादृष्टार्थज्ञानेन । किंविशिष्टा सती मतिः ? **दृष्टमात्रपरिच्छेत्त्री** दृष्टमिन्द्रियानिन्द्रियपरिच्छेदनयोग्यं वस्तु । दृष्टमेव दृष्टमात्रम् । तत्परिच्छेत्त्री परिच्छेदनशीला । दृष्टमात्रमवगन्तुं शक्तेत्यर्थः ।

अत्र दृष्टान्तमाह—इव यथा व्यनक्ति। कासौ ? दृक्। किं तत् ? **मुखं** वदनम्। अर्थाद् दृष्टिरेव। किंविशिष्टा सती ? संस्कृता। केन ? **दर्पणेना**-दर्शेन। किंविशिष्टमपि ? अदृष्टमपि स्वयं द्रष्टुमशक्यमपि॥

श्रोतॄणां चातुर्विध्याद् द्वयोरेव प्रतिपाद्यत्वं द्रढयति—

**अव्युत्पन्नमनुप्रविश्य तदभिप्रायं प्रलोभ्याप्यलं,**
**कारुण्यात्प्रतिपादयन्ति सुधियो धर्मं सदा शर्मदम्।**
**संदिग्धं पुनरन्तमेत्य विनयात्पृच्छन्तमिच्छावशा-,**
**न्न व्युत्पन्नविपर्ययाकुलमती व्युत्पत्त्यनर्थित्वतः॥ १७॥**

**प्रतिपादयन्ति** शासति। के ते ? **सुधियः** सूरयः। कम् ? **अव्युत्पन्नम**ज्ञातधर्मस्वरूपं पुरुषम्। कम् ? **धर्मम्**। किंविशिष्टम् ? **शर्मदं** सुखदम्। कथम् ? **सदा**। कस्मात् ? **कारुण्यात्** कृपातः। कथम् ? **अलं** पर्याप्तम्। किं कृत्वा ? **प्रलोभ्यापि** लाभ-पूजादिना धर्मश्रवणे प्रलोभनामप्युत्पाद्य। किं कृत्वा ? **अनुप्रविश्य** अनु-वर्त्य। कम् ? **तदभिप्रायं** तस्याऽव्युत्पन्नस्य श्रोतुराशयम्। पुनर्विशेषेण धर्मं प्रतिपादयन्ति सुधियः। कम् ? **संदिग्धं** धर्मे संशयमापन्नं पुरुषम्। किं कुर्वन्तम् ? **पृच्छन्तम्**। किमयमित्थं भवत्यन्यथा वेत्यनुयुञ्जानम्। कस्मात् ? **इच्छावशात्** तद्व्युत्पत्तिवाञ्छानुरोधात्। किं कृत्वा ? **एत्य** आगत्य। कम् ? **अन्तं** समीपम्। कस्मात् ? **विनयात्**। औद्धत्यं परिहृत्येत्यर्थः। न पुनः सुधियो धर्मं प्रतिपादयन्ति। कौ ? **व्युत्पन्नविपर्ययाकुलमती**। विपर्ययेण विपरीतज्ञानेनाकुला दुष्टा मतिर्यस्यासौ विपर्ययाकुल-मतिः। उक्तार्थान्यथासमर्थनकृतनिर्बन्धो विपर्यस्त इत्यर्थः। व्युत्पन्नश्च विप-र्ययाकुलमतिश्चेति द्वन्द्वः। कस्मात् ? **व्युत्पत्त्यनर्थित्वतो** धर्मव्युत्पत्त्या मा-त्सर्यात्। एतेऽव्युत्पन्नः संदिग्धो व्युत्पन्नो विपर्यस्तश्चेति चत्वारः श्रोतारः॥

ननु दृष्टफलाभिलाषदूषितमतिः कथं प्रतिपाद्य इत्याशङ्कां दृष्टान्तावष्ट-म्भेन निराचष्टे—

**यः शृणोति यथा धर्ममनुवृत्त्यस्तथैव सः।**
**भजन् पथ्यमपथ्येन बालः किं नानुमोद्यते॥ १८॥**

**योऽज्ञातधर्ममाहात्म्यो यथा** लाभपूजादिप्रलोभनप्रकारेण **शृणोति धर्मं स तथैव** तेनैव प्रकारेणानुवृत्त्योऽनुगम्यो, न दूष्यः । अत्र निदर्शनमाह—**किं नानुमोद्यते** साधु करोतीति किं नानुमन्यतेऽपि त्वनुमोद्यत एव । कोसौ ? **बालः** शिशुः । कैः ? मात्रादिभिरिति शेषः । किं कुर्वन् ? **भजन्** सेवमानः । किं तत् ? **पथ्यं** व्याधिहरं कटुतिक्तादिद्रव्यम् । कथम् ? **अपथ्येन** द्राक्षाशर्करादिना सह ॥

विनयफलं दर्शयति—

**वृद्धेष्वनुद्धताचारो ना महिम्नानुबध्यते ।**
**कुलशैलाननुत्क्रामन् सरिद्भिः पूर्यतेर्णवः ॥ १९ ॥**

**अनुबध्यते** नित्यमधिष्ठीयते । कोसौ ? **ना** पुरुषः । केन ? **महिम्ना** लोकोत्तरानुभावेन । किंविशिष्टः सन् ? **अनुद्धताचारो** नीचैराचरणपरः । विनीत इत्यर्थः । केषु ? **वृद्धेषु** तपःश्रुतादिज्येष्ठेषु । अथवा न अमहिम्नानुबध्यते । किं तर्हि ? माहात्म्येनैव । अत्र समर्थनमाह–कुलेत्यादि । **पूर्यते** भ्रियते । कोसौ ? **अर्णवः** समुद्रः । काभिः ? **सरिद्भि**र्गङ्गादिनदीभिः । किं कुर्वन् ? **अनुत्क्रामन्** अनुल्लङ्घ्य वर्तमानः । कान् ? **कुलशैलान्** एकद्विचतुर्योजनशतोच्छ्रितान् हिमवदादीन् ॥

व्युत्पन्नस्याप्रतिपाद्यत्वं दृष्टान्तेन समर्थयते—

**यो यद्विजानाति स तन्न शिष्यो यो वा न यद्वष्टि स तन्न लम्भ्यः ।**
**को दीपयेद्धामनिधिं हि दीपैः कः पूरयेद्वाम्बुनिधिं पयोभिः ॥**

**यः** पुरुषो **यद्** व्युत्पाद्यं वस्तु **विजानाति** विशेषेण वेत्ति **स न शिष्यो** न व्युत्पादनीयः । किं तत् ? **तत्** । **यो वा यद्** वस्तु **न वष्टि** न कामयते **स न लम्भ्यो** न प्राप्यः । किं तत् ? **तत्** । तेनानभिलष्यमाणेन वस्तुना न योज्य इत्यर्थः । अत्र क्रमेण दृष्टान्तावाचष्टे—**हि** यस्मात् **को दीपयेत्** । न कश्चित् प्रकाशयेदित्यर्थः । कम् ? **धामनिधिं** सूर्यम् । कैः ? **दीपैः** । **को वा पूरयेत्** । न कश्चिद्विभृयादित्यर्थः । कम् ? **अम्बुनिधिं** समुद्रम् । कैः ? **पयोभि**र्जलैः ॥

विपर्यस्तस्य प्रतिपाद्यत्वे दोषं दर्शयति—

**यत्र मुष्णाति वा शुद्धिच्छायां पुष्णाति वा तमः ।**
**गुरूक्तिज्योतिरुन्मीलत् कस्तत्रोन्मीलयेद्गिरम् ॥ २१ ॥**

कः समीक्ष्यकारी उन्मीलयेदुन्मुद्रयेत् । ब्रूयादित्यर्थः । काम् ? **गिरं** वाचम् । क ? **तत्र** तस्मिन् विपर्यस्ते पुंसि । न कश्चित्तं प्रत्युपदेशं कुर्यादिदित्यर्थः । यत्र किम् ? **यत्र** यस्मिन्नुन्मीलदुद्घाटं गच्छद् **गुरूक्तिज्योतिर्**गुरुवचनज्ञानं कर्तृ । **मुष्णाति वा** हरति । काम् ? **शुद्धिच्छायाम्** अल्पामभ्रान्तं वा चित्तप्रसत्तिम् । **पुष्णाति वा** वर्धयति । किं तत् ? **तमो** विपरीताभिनिवेशम् । वाशब्दौ परस्परसमुच्चये ॥

एवं प्रतिपादकप्रतिपाद्यौ प्रतिपाद्य तत्प्रवृत्त्यङ्गतया सिद्धं धर्मफलं निर्दिशति—

**सुखं दुःखनिवृत्तिश्च पुरुषार्थावुभौ स्मृतौ ।**
**धर्मस्तत्कारणं सम्यक् सर्वेषामविगानतः ॥ २२ ॥**

**स्मृतौ** पूर्वाचार्यैराम्नातौ । कौ ? **पुरुषार्थौ** । किंसंख्यौ ? **उभौ** । कौ तौ ? सुखं दुःखनिवृत्तिश्चेति द्वावेव सुखाद् दुःखनिवृत्तेश्चातिरिक्तस्य सर्वपुरुषाणामभिलाषाऽविषयत्वात् । तथा स्मृतम् । किं तत् ? **तत्कारणं** तयोः सुखदुःखनिवृत्त्योः पुरुषार्थयोर्जनकं **धर्मः** । किंविशिष्टः ? **सम्यग**विपरीतः । कस्मात् ? **अविगानतः** अविप्रतिपत्तेः । केषाम् ? **सर्वेषां** लौकिकपरीक्षकाणाम् ॥

तमेवार्थं प्रपञ्चयितुं मुख्यफलसंपादनपरस्य धर्मस्यानुषङ्गिकफलसर्वस्वमभिनन्दति—

**येन मुक्तिश्रिये पुंसि वास्यमाने जगच्छ्रियः ।**
**स्वयं रज्यन्त्ययं धर्मः केन वर्ण्योऽनुभावतः ॥ २३ ॥**

**केन** न केनापि ब्रह्मणा वा **वर्ण्यो** व्याख्यातुं शक्यः । कोसौ ? **अयमसौ धर्मः** । कस्मात् ? **अनुभावतः** प्रभावं कार्यं वाश्रित्य । येन किम् ? **येन मुक्तिश्रिये**ऽनन्तज्ञानादिसंपदर्थं **वास्यमाने**ऽनुरज्यमाने आश्रीयमाणे

वा पुंसि जीवे स्वयं रज्यन्ति स्वयमेवानुरक्ता भवन्ति। काः? जगच्छ्रिय ऊर्ध्वाधोमध्यलोकलक्ष्म्यः॥

ननु कथमेतन्मोक्षबन्धफलयोरेककारणत्वं न विरुध्यत इत्याह—

**निरुन्धति नवं पापमुपात्तं क्षपयत्यपि।**
**धर्मेनुरागाद्यत्कर्म स धर्मोभ्युदयप्रदः॥ २४॥**

भवति। कोसौ? **स धर्मः**। किंविशिष्टः? **अभ्युदयप्रदः** स्वर्गादिसंपदः प्रकर्षेण संपादकः। यत्किम्? **यत्कर्म** सद्वेद्यशुभायुर्नामगोत्रलक्षणं पुण्यं पुंसः संपद्यते। कस्मात्? **अनुरागात्** प्रीतिविशेषाद्धेतोः। क्व विषये? **धर्मे** सम्यग्दर्शनादियौगपद्यप्रवृत्तैकाग्रत्वलक्षणे शुद्धात्मपरिणामे। किं कुर्वति सति? **निरुन्धति** निवारयति सति। किं तत्? **पापमसद्वेद्यादिकम्**। किंविशिष्टम्? **नवमपूर्वम्**। न केवलं तन्निरुन्धति। **क्षपयत्यपि** एकदेशेन नाशयति च सति। किं तत् पापम्। किंविशिष्टम्? **उपात्तं** पुराबद्धम्। अयमत्राभिप्रायः—यथोक्तधर्मानुरागहेतुकोपि पुण्यबन्धो धर्म इत्युपचर्यते। निमित्तं चात्रोपचारस्यैकार्थसंबन्धित्वम्। प्रयोजनं पुनर्लोकशास्त्रव्यवहारः। लोके यथा—

"स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृष" इति।

शास्त्रे यथा—

"धर्मादवाप्तविभवो धर्मं प्रतिपाल्य भोगमनुभवतु" इति।
अपिच—यतोभ्युदयनिःश्रेयससिद्धिः स धर्मः॥

धर्मस्यानुषङ्गिकफलदानपुरस्सरं मुख्यफलसर्वस्वसंपादनमुपदिशति—

**धर्माद् दृक्फलमभ्युदेति करणैरुद्गीर्यमाणोनिशं,**
**यत्प्रीणाति मनो वहन् भवरसो यत्पुंस्यवस्थान्तरम्।**
**स्याज्जन्मज्वरसंज्वरव्युपरमोपक्रम्यनिस्सीम तत्,**
**तादृक् शर्म सुधाम्बुधिप्लवमयं सेवाफलं त्वस्य तत्॥२५॥**

दृक्फलं दृष्टिफलं, धर्मविषयश्रद्धानजनितपुण्यसाध्यमित्यर्थः। यथा राजादेः सकाशादागन्तोः सेवकस्य दृष्टिफलं सेवाफलं च द्वे स्यातामित्युक्तिलेशः।

करणैश्चक्षुरादिभिः श्रीकरणादिनियुक्तैश्च भवरसः संसारसारमिन्द्रादिपदं ग्रामसुवर्णवस्त्रवाहनादि च पुंसि जीवे सेवकपुरुषे च अवस्थान्तरमशरीरत्वं सामन्तादिपदं च संज्वरः संतापः अस्य धर्मस्य । एवं पदार्थमधिगम्य लोकव्यवहारानुसारेण गम्यमानोपमानार्थः कल्पनीयः । इयं तु पदघटना अभ्युदेति । समन्तादुद्गच्छति । किं तत्? तद्दृक्फलम् । कस्मात्? धर्मात् । यत्किम्? यत्प्रीणाति । तर्पयति । कोसौ? भवरसः । किं तत्? मनश्चित्तम् । किं कुर्वन्? वहन् प्रवर्तमानः । कथम्? अनिशं नित्यम् किं क्रियमाणः? उद्दीर्यमाण उद्भाव्यमानः । कैः । करणैः । भवति । किं तत्? तत् । किम्? सेवाफलम् । कस्य? अस्य । कथम्? तु पुनः । यत्किम्? यत्स्यात् । किं तत्? अवस्थान्तरम् पुंसि । किं विशिष्टम्? जन्मेत्यादि । जन्म संसारो ज्वरो मोहसंतापात्मको व्याधिवज्जन्मज्वरः । तस्य संज्वरः । तस्य विशेषेणानर्थवत्त्वेनोपरमो विनाशः । तेनो पक्रम्यं संपाद्यम् । तच्च तन्निस्सीम निरवधि । तच्च तदाप्तोपदेशप्रसिद्धम् । तादृक् चानिर्वचनीयं शर्म सुखम् । तदेव सुधाम्बुधिरमृतसमुद्रः । तस्मिन्प्लवोवगाहनम् । स प्रकृतोस्मिन्निति तन्मयम् ॥

अथ त्रयोविंशत्या वृत्तैरभ्युदयलक्षणं धर्मफलं वर्णयति । तत्रादौ तावत्सामान्यतो वंशे विश्वेत्यादिना चतुर्दशश्लोकमयेन प्रबन्धेन तत्स्फुटयति—

**वंशे विश्वमहिम्नि जन्म महिमा काम्यः समेषां शमो,**
**मन्दाक्षं सुतपोजुषां श्रुतमृषिब्रह्मर्द्धिसंघर्षकृत् ।**
**त्यागः श्रीददुराधिदाननिरनुक्रोशः प्रतापो रिपु,—**
**स्त्रीशृङ्गारगरस्तरङ्गितजगद्धर्माद्यशश्चाङ्गिनाम् ॥ २६ ॥**

धर्मादित्यङ्गिनामिति च प्रतिवाक्यं परिसमाप्येते । तथाहि । भवति । किं तत्? जन्म उत्पत्तिः । क्व? वंशे संताने । किंविशिष्टे? विश्वमहिम्नि विश्वे सर्वे जगद्व्यापिनो महिमानस्तीर्थकरत्वादिपदप्रापणप्रवणा माहात्म्यविशेषा यस्य स एवम् । केषाम्? अङ्गिनाम् । कस्मात्? धर्मात् । एवमुत्तरत्रापि । तथा भवति । कोसौ? महिमा तीर्थकरत्वादिपदाद्याप्तिः ।

१ मूलोक्तं पदं वृत्तौ गतार्थं कृतम् ।

किंविशिष्टः? काम्यः स्पृहणीयः । केषाम्? समेषां सर्वेषां लोकानाम् । तथा भवति । कोसौ? शमोऽपराधकारिणां दण्डप्रणयनसामर्थ्ये सत्यपराधसहनम् । किंविशिष्टः? मन्दाक्षं लज्जा तद्धेतुत्वात् । केषाम्? सुतपोजुषां सम्यक्तपोभाजां यतीनाम् । तथा भवति । किं तत्? श्रुतमाप्तवचनादिनिबन्धनमर्थज्ञानम् । किंविशिष्टम्? ऋषिब्रह्मर्द्धिसंघर्षकृत् । ऋषीणां तपोबलाद्बुद्ध्याद्यृद्धिभाजाम् । ब्रह्मर्द्धिर्ज्ञानातिशयप्राप्तिः । तया सह संघर्षं स्पर्द्धां करोति यत्तदेवम् । तथा भवति । कोसौ? त्यागो दानम् । किंविशिष्टः? श्रीदस्य धनदस्य दुराधिरनौचित्यप्रवृत्तं मनोदुःखम् । तस्य दाने संपादने निरनुक्रोशो निर्दयोऽवार्यवीर्यो यः सोयं श्रीददुराधिदाननिरनुक्रोशः । तथा भवति । कोऽसौ? प्रतापः कोशदण्डजं तेजः । किंविशिष्टः? रिपुस्त्रीशृङ्गारगरः । जायापत्योर्मिथो रत्यावृत्तिः शृङ्गारः । रिपुस्त्रीणां शत्रुनारीणां शृङ्गारस्य गरः कृत्रिमविषम् । तन्नाशक इत्यर्थः । तथा भवति । किं तत्? यशः कीर्तिः । किंविशिष्टम्? तरङ्गितजगत् । तरङ्गितं तरङ्ग इवाचरितं स्वल्पीभूतं जगल्लोको यस्मिंस्तदेवम् त्रैलोक्यं व्याप्यालोकमपि व्याप्तुमुद्यतमित्यर्थः । उपमागर्भातिशयालंकारोत्र ॥

बुद्ध्यादिसामग्र्यपि फलदाने पुण्यमुखं प्रेक्षते एवेति वक्तुमाह—

**धीस्तीक्ष्णानुगुणः कालो व्यवसायः सुसाहसः ।**
**धैर्यमुद्यत्तथोत्साहः सर्वं पुण्यादृते वृथा ॥ २७ ॥**

भवति । किं तत्? सर्वं धीस्तीक्ष्णेत्यादिपञ्चकम् । कथम्? वृथा व्यर्थम् । कथं? ऋते विना । कस्मात्? पुण्यात् । एतत्सर्वं पुराकृतसुकृतविपाके सत्येव स्वसाध्यं साधयतीत्यर्थः । किं किमित्याह—भवति । कासौ? धीर्बुद्धिः । किंविशिष्टा? तीक्ष्णा कुशाग्रीया । स्तोकस्पर्शेपि कार्यान्तप्रवेशिनीत्यर्थः । कथं भवति? वृथा एवमुत्तरत्रापि योज्यम् । तथा कालः समयोनुगुणः कार्यं प्रत्युपकारी । व्यवसायः क्रियां प्रत्युद्यमः । सुष्ठु यत्र नाहमित्यध्यवसायस्तत्साहसम् । यत्रास्ति सोयं सुसाहसः । धैर्यमुद्यदारोहत्प्रकर्षम् । तथोद्यन्नुत्साहश्च कार्यकारिका शक्तिः । इत्येतत्सर्वम् ॥

ननु यदीष्टसिद्धौ पुण्यस्य स्वातन्त्र्यं तत्किमेतत्स्वकर्तुस्तत्र क्रियामपेक्षते इति प्रश्ने सोत्प्रेक्षमुत्तरयति—

**मनस्विनामीप्सितवस्तुलाभाद्रम्योभिमानः सुतरामितीव ।**
**पुण्यं सुहृत्पौरुषदुर्मदानां क्रियाः करोतीष्टफलाप्तिदृप्ताः॥२८**

करोति । किं तत्? पुण्यम् । किंविशिष्टम्? सुहृत् निर्व्याजमुपकारकम् । काः? क्रिया व्यापारान् । केषाम्? पौरुषेण पुरुषाकारेण दुष्टोऽवस्थानाभिनिवेशी मदोऽहं करोमीत्यहंकारो येषां ते पौरुषदुर्मदास्तेषाम् । किंविशिष्टाः करोति? इष्टफलाप्तिदृप्ताः अभिमतार्थसंपादनेन गर्विताः । अभिमानरसानुरक्ता इत्यर्थः । कथम्? इतीव एवमहं मन्ये इत्यर्थः । तथाहि । भवति । कोसौ? अभिमान आत्मोत्कर्षसंभावनम् । किंविशिष्टः? रम्यो हृदयावर्जकः । कथम्? सुतरामतिशयेन । कस्मात्? ईप्सितवस्तुलाभात् वाञ्छितार्थप्रतिलम्भात् । केषाम्? मनस्विनां मानिनाम् ॥

विशिष्टा आयुराद्योपि पुण्योदयनिमित्ता एवेत्यावेदयति—

**आयुः श्रेयोनुबन्धि प्रचुरमुरुगुणं वज्रसारः शरीरं,**
**श्रीस्त्यागप्रायभोगा सततमुदयनी धीः परार्ध्या श्रुताढ्या ।**
**गीरादेया सदस्या व्यवहृतिरपथोन्माथिनी सद्भिरर्थ्या,**
**स्वाम्यं प्रत्यर्थिकाम्यं प्रणयिपरवशं प्राणिनां पुण्यपाकात् २९**

प्राणिनां पुण्यपाकादिति पूर्ववत् प्रत्येकं योज्यम् । भवति । किं तत्? आयुर्जीवितम् । किंविशिष्टम्? प्रचुरमुत्कृष्टस्थितिकम् । पुनः किंविशिष्टम्? श्रेयोनुबन्धि श्रेयोनुबध्नातीत्येवंशीलम् । अविच्छिन्नकल्याणमित्यर्थः । केषाम्? प्राणिनाम् । कस्मात्? पुण्यपाकात् । एवमुत्तरत्रापि योज्यम् । तथा भवति । किं तत्? शरीरम् । किंविशिष्टम्? उरुगुणम् । उरवो महान्तः श्रेष्ठा गुणा यस्य तत् । सौरूप्यादिगुणविशिष्टमित्यर्थः । पुनः किंविशिष्टम्? वज्रसारः । वज्रस्य सार इवाभेद्यतमत्वात् । तथा भवति । कासौ? श्रीर्लक्ष्मीः । किंविशिष्टा? सततं यावज्जीवमुदयनी दिने दिने व-

र्धमाना । पुनः किंविशिष्टा? **त्यागप्रायभोगा** । त्यागोर्थिषु संविभागः प्रायेण बाहुल्येन भोगोनुभवो यस्याः सैवम् । तथा भवति । कासौ ? **धीर्बुद्धिः** । किंविशिष्टा ? **परार्ध्या** उत्कृष्टा शुश्रूषादिगुणसंपन्नत्वात् । पुनः किंविशिष्टा? **श्रुताढ्या** शास्त्रसमृद्धा । तथा भवति । कासौ ? **गीर्वाणी** । किंविशिष्टा? **आदेया** अनुलङ्घ्या । पुनः किंविशिष्टा, **सदस्या** सभायां पट्वी । तथा भवति । कासौ? **व्यवहृतिर्व्यवहारो** हिते प्रवृत्तिर्निवृत्तिश्चाहितात् । किंविशिष्टा ? **अपथोन्माथिनी** अन्येषाममार्गप्रवृत्तिच्छेदिनी । पुनः किंविशिष्टा? **अर्थ्या** अभिलषणीया । कैः ? **सद्भिः** साधुभिः । तथा भवति । किं तत् ? **स्वाम्यं** प्रभुत्वम् । किंविशिष्टम् ? **प्रणयिपरवशं** प्रणयिषु परवशमायत्तम् । बन्धुमित्रादीनामेव परतन्त्रं, न शत्रूणामित्यर्थः । पुनः किंविशिष्टम् ? **प्रत्यर्थिकाम्यं** प्रत्यर्थिभिः शत्रुभिरभिलष्यम् । एवंविधा वयं भूयासुरित्याशास्यमित्यर्थः[१] ॥

पुण्यस्य बहुफलयौगपद्यं दर्शयति—

**चिद्भूम्युत्थः प्रकृतिशिखरिश्रेणिरापूरिताशा,—**
**चक्रः सज्जीकृतरसभरः स्वच्छभावाम्बुपूरैः ।**
**नानाशक्तिप्रसवविसरः साधुपान्थौघसेव्यः,**
**पुण्यारामः फलति सुकृतां प्रार्थितांल्लुम्बिशोर्थान् ॥ ३० ॥**

चिच्चेतना पुण्यस्य जीवेनोपश्लिष्टत्वाद्भूमीवारामस्य । प्रकृतयः सद्वेद्यादयः । शिखरिणो वृक्षाः । आशा भविष्यदर्थवाञ्छा दिशश्च । रसो विपाको मधुरादिश्च । भावः परिणामः । विसरः समूहः । सुकृतां सुष्ठु शोभनं तपोदानादि कृतवताम् । लुम्बिशश्चिचतुरादिफलस्तोमम् । प्रशस्तं कृत्वा **फलति** संपादयति । कोसौ ? **पुण्यारामः** पुण्यमाराम उपवनमिव । कान् ? **अर्थान्** । किंविशिष्टान्? **प्रार्थितान्** वांछितान् । कथं कृत्वा ? **लुम्बिशः** । केषाम् ? **सुकृताम्** । किंविशिष्टोसौ ? **चिद्भूम्युत्थः** । चिद्भूमौ उत्था उत्थानं यस्य स एवम् । पुनः किंविशिष्टः ? **प्रकृतिशिखरिश्रेणिः** । प्रकृतयः शिखरिण इव प्रकृतिशिखरिणः । तेषां श्रेणयः पङ्क्तयो यस्मिन् स एवम् । पुनरपि

१ भूयास इति शुद्धं पदं उत्तमपुरुषस्य बहुवचनं तथैव संभवात् ।

किंविशिष्टः ? **आपूरिताशाचक्रः** । आ समन्तात्पूरितं पूर्णं फलनिर्भरीकृतमाशानां चक्रं संघातो येन स एवम् । पुनः किंविशिष्टः ? **सज्जीकृतरसभरः** सज्जीकृत उपभोगाय प्रगुणितो रसानां भरोतिशयो येन स एवम् । कैः ? **स्वच्छभावाम्बुपूरैः** ।भावा अम्बूनि जलानीव रसभरनिमित्तत्वात् । स्वच्छानां सुप्रसन्नानां भावाम्बूनां पूराः प्रवाहाः स्वच्छभावाम्बुपूरास्तैः । पुनरपि किंविशिष्टः ? नानाशक्तिप्रसवविसरः । शक्तयः प्रसवाः पुष्पाणीव फलजनकत्वात् शक्तिप्रसवाः । तेषां विसराः शक्तिप्रसवविसराः । नानाप्रकाराः शक्तिप्रसवविसरा यस्य स एवम् । पुनः किंविशिष्टः ? **साधुपान्थौघसेव्यः** । साधवस्त्रैवर्गिकाः पान्था इव नित्यं मार्गचारित्वात् साधुपान्थाः । तेषामोघाः संघाताः तैः सेव्य उपास्यः ॥

सहभाविवाञ्छितार्थफलस्तोमं पुण्यस्य लक्षयति—

**पित्र्यैर्वैनयिकैश्च विक्रमकलासौन्दर्यचर्यादिभि,—**
**गोष्ठीनिष्ठरसैर्नृणां पृथगपि प्रार्थ्यैः प्रतीतो गुणैः ।**
**सम्यक्स्निग्धविदग्धमित्रसरसालापोल्लसन्मानसो,**
**धन्यः सौधतलेऽखिलर्तुमधुरे कान्तेक्षणैः पीयते ॥३१॥**

**पीयते**ऽत्यन्तमालोक्यते । कोसौ ? **धन्यः** पुण्यवान् ? कैः ? **कान्तेक्षणैः** । कान्ताः शुचिपौराचाररताश्चरित्रशरणार्जवक्षमोपेता इत्येवंलक्षणाः स्वकीयनायिका मुग्धमध्यप्रगल्भावस्थाः कान्तानामीक्षणानि लोचनानि कान्तेक्षणानि तैः । क्व स्थितः ? **सौधतले** राजगृहशिखरे । किंविशिष्टे ? **अखिलर्तुमधुरे** अखिलेषु सर्वेषु ऋतुषु वसन्तादिषु मधुरे करणान्तःकरणप्रीणनप्रवणे । किंविशिष्टः सन् ? **सम्यगित्यादि** । सम्यञ्चि निर्व्याजमनोवृत्तीनि स्निग्धानि प्रेमाविष्टानि विदग्धानि रसिकानि मित्राणि च सम्यक्स्निग्धविदग्धमित्राणि । तेषां सरसाः सनर्मसद्भावपेशला आलापा आभाषणानि । तैरुल्लसच्छ्रवणानन्दोन्मुखं भवन्मानसं मनो यस्य स एवम् । पुनः किंविशिष्टः ? **प्रतीतः** प्रतीयमानः । "मतिबुद्धिपूजार्थेभ्यः क्तः" इति संप्रति क्तः । केषाम् ? **नृणाम्** । कैः ? **गुणै**रुपकारकधर्मैः । किंविशिष्टैः ? **विक्रमेत्यादि** । विक्रमः शक्त्यतिशयः । कला लिखितपठितपत्रच्छेदगीता-

दयः । सौन्दर्यं चारुता । चर्या ब्राह्ममुहूर्तोत्थानादिराचारः । आदिशब्दात्प्रियंवदत्वमित्यादयः । विक्रमश्च कलाश्च सौन्दर्यं च चर्या चेति द्वन्द्वे ता आदयो येषां त एवम् । किंविशिष्टैः? **पित्र्यैर्मातापितृभ्यामागतैः** । आभिजनैरित्यर्थः । न केवलं पित्र्यैर्वैनयिकैश्च शिक्षाप्रभवैः । आहार्यैरित्यर्थः । तत्र विक्रमसौन्दर्यप्रियंवदत्वादयः सहजाः कलाचर्यामैत्र्यादय आहार्या इति विभागः । पुनः किंविशिष्टैः? **गोष्ठीनिष्ठरसैः** । गोष्ठ्यां प्रीत्या मिथो भाषणे नियतं तिष्ठतीति गोष्ठीनिष्ठो रसो हर्षो येषां तैः । लक्षणया, सदा समुदितैरित्यर्थः । पुनः किंविशिष्टैः? **प्रार्थ्यैः** स्पृहणीयैः । केषाम्? **नृणां** पुंसाम् । कथम्? **पृथगपि** एकैकशः । किं पुनः सामस्त्येनेत्यपिशब्दार्थः ॥

एवं पुण्यवतः स्वगतां गुणसंपत्तिं प्रदर्श्य कान्तागतां श्लोकद्वयेन प्रकाशयति—

**साध्वीस्त्रिवर्गविधिसाधनसावधानाः,**
**कोपोपदंशमधुरप्रणयानुभावाः ।**
**लावण्यवारितरगात्रलताः समान,-**
**सौख्यासुखाः सुकृतिनः सुदृशो लभन्ते ॥ ३२ ॥**

**लभन्ते** प्राप्नुवन्ति । के? **सुकृतिनो** धन्याः । काः? **सुदृशो** युवतीः । किंविशिष्टाः? **साध्वीः** पतिव्रताः सुलोचनासुतारासीताद्रौपदीप्रायाः । पुनः किंविशिष्टाः? त्रीत्यादि । त्रिवर्गस्य धर्मार्थकामानां विधिना शास्त्रोक्तविधानेन साधने संपादने सावधाना अप्रमत्तवृत्तयस्त्रि**वर्गविधिसाधनसावधानाः** । पुनरपि किंविशिष्टाः? कोपो बाह्यरोष उपदंशो व्यञ्जनविशेष इव प्ररोचनाहेतुत्वात् कोपोपदंशः तेन मधुराः स्वादवः प्रणयस्य प्रेम्णोनुभावाः कार्यभूताः कटाक्षस्मितसनर्मवक्रवचनादयो भावा यासां ताः **कोपोपदंशमधुरप्रणयानुभावाः** । पुनरपि किंविशिष्टाः? लावण्यं कान्त्यतिशयो वारि जलमिव व्यापकत्वाल्लावण्यवारि । तत्र तरन्ति प्लवन्ते इव लावण्यवारितरा गात्रलताः प्रशस्तानि कृशानि वा शरीराणि यासां ता **लावण्यवारितरगात्रलताः** । पुनरपि किंविशिष्टाः? **समानसौख्यासुखाः** । समाने मत्या तुल्ये सौख्यासुखे यासां ता एवम् । पतिसुखे सुखिन्यस्तद्दुःखे दुःखिन्य इत्यर्थः । दुःखं चात्र प्रणयभङ्गादिकृतमेव, न व्याध्यादिकृतं, तस्य

कृतपुण्येष्वसंभवात् । यदि वा संसारे सुखदुःखे प्रकृत्या सान्तरे एव । तथा च लोकाः पठन्ति—

सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
सुखं दुःखं च मर्त्यानां चक्रवत्परिवर्तते ॥ इति ।

एवं युवतिगतां धन्यस्य गुणसंपदं प्रतिपाद्य पुरन्ध्रीगतां तां प्रदर्शयति—

**व्यालोलनेत्रमधुपाः सुमनोभिरामाः,**
**पाणिप्रवालरुचिराः सरसाः कुलीनाः ।**
**आनृण्यकारणसुपुत्रफलाः पुरन्ध्र्यो,**
**धन्यं व्रतत्य इव शाखिनमास्वजन्ते ॥ ३३ ॥**

सुमनसः सुचित्ताः पुष्पाणि च । सरसाः सानुरागाः सार्द्राश्च । कुलीनाः कुलजा भूमिस्पृष्टाश्च आनृण्यमपुत्रः पुमान् पितृणामृणभाजनमिति अत्रो-पजीव्यं शाखिनं वृक्षं बहुगोत्रविस्तरं च । **आस्वजन्ते** अभिलाषेणालिङ्ग-न्ति । काः? **पुरन्ध्र्यः** कुटुम्बिन्यः । कम्? **धन्यम्**? किंविशिष्टम्? **शा-खिनम्** । किंविशिष्टास्ताः? **व्यालोलनेत्रमधुपाः** । विविधमीषल्लोलानि चञ्चलानि नेत्राणि मधुपा इव यासां ता एवम् । पक्षे व्यालोलनेत्राणीव मधुपा यासाम् । तथा शोभनानि प्रसन्नानि मनांसि यासां ताः सुमनसः । ताश्च ता अभिरामाश्च रम्याः **सुमनोभिरामाः** । पक्षे सुमनोभिः पुष्पै-रभिरामाः । तथा **पाणिप्रवालरुचिराः** । पाणयः कराः प्रवालानि पल्लवा इवाताम्रकोमलत्वात् । पक्षे पाणय इव प्रवालानि पाणिप्रवालानि । तै रुचिरा मनोहराः तथा **तथा सरसाः कुलीनाश्च** । एतौ उपरि व्या-ख्यातौ । तथा **आनृण्यकारणसुपुत्रफलाः** । य उत्पन्नः पुनीते वंशं स पुत्रः । पुत्राः फलानीव जनन्या गौरवहेतुत्वात्पुत्रफलानि । शोभनानि यथावस्थं गुणसंपन्नानि पुत्रफलानि सुपुत्रफलानि । आनृण्यकारणानि स्वा-मिनामृणच्छेदकानि सुपुत्रफलानि यासां ता एवम् । का इव? **व्रतत्य इव** यथा । आस्वजन्ते । काः? व्रतत्यो वल्ल्यः । कम्? शाखिनम्? किं-विशिष्टम्? धन्यं कृतपुण्यम् । शेषं पूर्ववद्योज्यम् ।

अधुना बालात्मजलीलावलोकनसुखं कृतपुण्यस्य प्रकाश्यते—

**क्रीत्वा वक्षोरजोभिः कृतरभसमुरश्चन्दनं चाटुकारैः,**
**किंचित्संतर्प्य कर्णौ द्रुतचरणरणद्घुर्घुरं दूरमित्वा ।**
**क्रीडन् डिम्भैः प्रसादप्रतिघघनरसं सस्मयस्मेरकान्ता,—**
**दृक्संबाधं जिहीते नयनसरसिजान्यौरसः पुण्यभाजाम् ॥३४॥**

**जिहीते** संचरति । दृष्टिगोचरो भवतीत्यर्थः । कोसौ ? **औरस** आत्मजः। कानि ? **नयनसरसिजानि** । नयनानि सरसिजानि कमलानीव लोहितादिगुणयोगात् । केषाम् ? **पुण्यभाजां** सुकृतभोक्तॄणाम् । कथं कृत्वा ? **सस्मयस्मेरकान्तादृक्संबाधम्** । सस्मयास्तादृक्पुत्रयोगात् सगर्वा आत्मोत्कर्षसंभाविन्यः स्मेरा ईषद्धसनशीलवदनाः कान्ताः प्रियाः । तासां दृशो दृष्टयो नेत्रव्यापाराः । ताभिः संबाधं संकटं यथा भवति । कान्तादृशोप्यौरसोपि युगपन्नयनयोः संचरंतीत्यर्थः । किं कुर्वन्नौरसस्तथा पितृनेत्रपद्मानि संचरतीत्याह—**क्रीडन्** यथेष्टं चेष्टमानः । कैः सह ? **डिम्भैः** शिशुसवयोभिः । कथं कृत्वा ? **प्रसादप्रतिघघनरसम्** । कदाचित्प्रसादेन परितोषेण कदाचिच्च प्रतिघेन कोपेन घनः सान्द्रो रसो यत्र क्रीडनकर्मणि तदेवम् । किं कृत्वा ? **इत्वा** गत्वा । किं तत् ? **दूरं** विप्रकृष्टम् । कथं कृत्वा ? **द्रुतचरणरणद्घुर्घुरम्** । द्रुतयोः शीघ्रगमनयोश्चरणयोः पादयो रणन्तः सिञ्जाना घुर्घुरा घर्घरिका यत्रायनकर्मणि तदेवम् । किं कृत्वा **संतर्प्य** सम्यक् प्रीणयित्वा । कौ ? **कर्णौ** श्रवसी । प्रकृतत्वात्पुण्यभाजामेव । कैः ? **चाटुकारैः** प्रियवाक्यैः । कियत् ? **किंचित्** । किं कृत्वा ? **क्रीत्वा** पणयित्वा स्वीकृत्य । किं तत् ? **उरश्चन्दनं** वक्षश्चर्चाश्रीखण्डम् । कैः ? **वक्षोरजोभिः** पांशुक्रीडासंक्रान्तनिजोरःपांशुभिः । कथं कृत्वा ? **कृतरभसं** विहितौत्सुक्यम् । आम्रफलादिकमपि क्रीडानः शिशुरौत्सुक्यं भजत इति जातिच्छायोक्तिरत्र प्रकाश्या ।

पुनस्य कौमारयौवनोचितां गुणसंपदं पुण्यवतः शंसति—

**सद्विद्याविभवैः स्फुरन्धुरि गुरूपास्त्यार्जितैस्तज्जुषां,**
**दोष्पाशेन बलात्सितोपि रमया बध्नन् रणे वैरिणः ।**

**आज्ञैश्वर्यमुपागतस्त्रिजगतीजाग्रद्यशश्चन्द्रमा,**
**देहेनैव पृथक् सुतः पृथुवृषस्यैकोपि लक्षायते ॥ ३५ ॥**

**लक्षायते** लक्षमिवाचरति । शतसहस्रपुत्रसाध्यं करोतीत्यर्थः । कोसौ ? **सुतः** पुत्रः । कस्य ? **पृथुवृषस्य** विपुलपुण्यस्य पुंसः । किंविशिष्टोपि ? **एकोपि** । किंविशिष्टः सन् ? **पृथग्** भिन्नः । केन ? **देहेनैव** न कौलीन्यनयविनयादिना । पित्रा समानगुण इत्यर्थः । किंविशिष्टः सन् ? **त्रिजगती**त्यादि । तिसृषु जगतीषु त्रिषु लोकेषु जाग्रद् विजृम्भमाणो यशश्चन्द्रमा इव शुक्लत्वाह्लादकत्वगुणयोगाद् यशश्चन्द्रमा यस्य स **त्रिजगतीजाग्रद्यशश्चन्द्रमाः** । कथंभूतो भूत्वा ? **उपागतः** । प्राप्तः । किं तत् ? **आज्ञैश्वर्यम्** अनुल्लङ्घ्यशासनत्वम् । किं कुर्वन् ? **बध्नन्** यन्त्रयन् । कान् ? **वैरिणः** शत्रून् । क्व ? **रणे** संग्रामे । किंविशिष्टोपि ? **सितोपि** बद्धोपि । कया ? **रमया** लक्ष्म्या । प्रक्रमाद्वैरिणामेव । केन ? **दोष्पाशेन** भुजरज्ज्वा । कस्मात् ? **बलाद्** हठात् । यः स्वयं बद्धः स कथं परान् बध्नातीति विस्मयार्थेनापिशब्देन द्योत्यते । पुनः किं कुर्वन् ? **स्फुरन्** विचारकचेतसि चमत्कुर्वन् । क्व ? **धुरि** अग्रे । केषाम् ? **तज्जुषां** सद्विद्याविभवभाजाम् । कैः ? **सद्विद्याविभवैः** । सत्यः समीचीना विद्या आन्वीक्षिक्यादयः । तासां विभवाः क्षोदक्षमत्वयथास्वकार्यकारित्वादिगुणसंपदः सद्विद्याविभवास्तैः । किंविशिष्टैः ? **गुरूपास्त्यर्जितैः** सदुपाध्यायसेवया स्वसात्कृतैः ।

गुणसुन्दरा दुहितरोपि पुण्यादेव भवन्तीति दृष्टान्तेन स्पष्टयते—

**कन्यारत्नसृजां पुरोऽभवदिह द्रोणस्य धात्रीपतेः,**
**पुण्यं येन जगत्प्रतीतमहिमा सृष्टा विशल्यात्मजा ।**
**क्रूरं राक्षसचक्रिणा प्रणिहितां द्राग्लक्ष्मणस्योरसः,**
**शक्तिं प्रास्य यया स विश्वशरणं रामो विशल्यीकृतः ॥३६॥**

**अभवत्**संजातम् । किं तत् ? **पुण्यम्** । कस्य ? **धात्रीपते** राज्ञः । किंनाम्नः, **द्रोणस्य** द्रोणघनसंज्ञस्य । कथम् ? **पुरः** प्रधानं मुख्यम् । केषाम् ? **कन्यारत्नसृजां** स्फुरत्प्रभावकुमारीजनकानां पुण्यानाम् । क्व ? **इह** लोके । येन किम् ? **येन सृष्टा** । कासौ ? **आत्मजा** पुत्री । कस्य ? द्रोणधात्री-

पतेः । किंनाम्नी ? **विशल्या** । किंविशिष्टा ? जगति लोके प्रतीतः ख्यातो महिमा माहात्म्यं यस्याः सा **जगत्प्रतीतमहिमा** । यया किम् ? **यया** कर्तृभूतया **विशल्यीकृतो**ऽत्यन्तप्रियस्वानुजलक्ष्मणमरणातङ्काद्विमोचितः । कोसौ ? **स रामो विश्वशरणं** विश्वशरणत्वेन प्रसिद्धो दाशरथिरित्यर्थः । किं कृत्वा ? **प्रास्य** निरस्य । काम् ? **शक्तिं** शस्त्रविशेषम् । कस्मात् ? **उरसो** वक्षस्थलात् । कस्य ? **लक्ष्मणस्य** सौमित्रेः। कथम्? **द्राग्** झटिति स्वदर्शनानन्तरमेव । किंविशिष्टाम् ? **प्रणिहितां** प्रयुक्ताम् । केन ? **राक्षसचक्रिणा** रावणेन । कथं कृत्वा ? **क्रूरं** निर्दयम् । एषा कथा रामायणे द्रष्टव्या । एवमन्या अपि कथा यथास्वं निरूप्याः ।

पुण्योदयवर्तिनां कर्मायासं प्रत्यस्यति—

**विश्राम्यत स्फुरत्पुण्या गुडखण्डसितामृतैः ।**
**स्पर्द्धमानाः फलिष्यन्ते भावाः स्वयमितस्ततः ॥३७॥**

हे **स्फुरत्पुण्याः** स्फुरन्ति निष्प्रतिबन्धं स्वसाध्यानि साधयन्ति । पुण्यानि येषां त एवम् । **विश्राम्यत** विगतस्वार्थसाधनक्लेशायासा भवत । के ते ? **यूयम्** । कुत इत्याह—यतः **फलिष्यन्ते** स्वयं युष्मद्व्यापारमन्तरेणैव निष्पत्स्यन्ते । के ते ? **भावाः** पदार्थाः । कथम् ? **इतस्ततः** समन्तात् । यत्र तत्रेत्यर्थः । किं कुर्वाणाः ? **स्पर्द्धमाना** आत्मानमुत्कृष्टत्वेन संभावयन्तः । सदृशा भवन्त इत्यर्थः । कैः सह ? **गुडखण्डसितामृतैः** । सिता शर्करा । गुडश्च खण्डश्च सिता चामृतं चेति द्वन्द्वः । कानिचिद्धि पुण्यानि गुडसमानरसानि परिणामविशेषाज्जीवो बध्नाति; कानिचिच्च खण्डादितुल्यविपाकानि । तानि च यथाकालं यथोपक्रमं च विपक्ष्यमाणानि तादृक्स्वादुरम्याणि स्वफलानि संपादयन्ति ।

कल्पवृक्षादयोपि धर्माधीनवृत्तयः इत्युपदिशति—

**धर्मः क नालंकर्मीणो यस्य भृत्याः सुरद्रुमाः ।**
**चिन्तामणिः कर्मकरः कामधेनुश्च किङ्करा ॥ ३८ ॥**

क ? कस्मिन्नभ्युदयनिःश्रेयसलक्षणे स्वकार्ये साध्ये न भवति । कोसौ ? **धर्मः** । किंविशिष्टः ? कर्मणेऽलमलंकर्मीणः कर्मक्षमः । सर्वं स्वसाध्यं

साधयितुं स्वयं शक्नोतीत्यर्थः । ननु च पुण्यवन्तोपि कल्पवृक्षादिद्वारेणाभ्युदयमनुभवन्तः श्रूयन्ते । तत्कथमेतद् घटते इत्याह—यस्येत्यादि । भवन्ति । के? **सुरद्रुमाः** कल्पवृक्षा वचनेन याचितं मद्यतूर्यादिभोगोपभोगाङ्गदातारः पृथवीसारमया वृक्षविशेषाः । उक्तं चार्षे—

> न वनस्पतयोप्येते नैव दिव्यैरधिष्ठिताः ।
> केवलं पृथिवीसारास्तन्मयत्वमुपागताः ॥

किंविशिष्टाः? **भृत्याः** । कस्य? **यस्य** धर्मस्य । तथा भवति । कोसौ? **चिन्तामणि**श्चिन्तितार्थप्रदो रोहणाद्रिप्रभवो रत्नविशेषः । किंविशिष्टः । **कर्मकरः** क्रयक्रीतो दासः । कस्य? यस्य । तथा भवति । कासौ? **कामधेनु**र्वाञ्छितार्थप्रदा देवगवी । किंविशिष्टा? **किंकरा** किंकरणशीला दासी । कस्य? यस्य ।

यथाकथंचित्पूर्वपुण्यमुदीर्णं स्वप्रयोक्तारमनुगृह्णातीत्याह—

> प्रियान् दूरेप्यर्थाञ्जनयति पुरो वा जनिजुषः,
> करोति स्वाधीनान् सखिवदथ तत्रैव दयते ।
> ततस्तान्वानीय स्वयमपि तदुद्देशमथवा,
> नरं नीत्वा कामं रमयति पुरापुण्यमुदितम् ॥ ३९ ॥

**जनयति** उत्पादयति । किं तत्कर्तृ? **पुरापुण्यं** प्राकृतं सुकृतम् । किंविशिष्टम्? **उदितं** स्वफलदानायोद्यतम् । कान्? **अर्थान्** स्पर्शनादीन्द्रियभोग्यान् भावान् । किंविशिष्टान्? **प्रियान्** प्रीणनक्षमान् । क्व? **दूरे** द्वीपान्तरादौ **अपि**शब्दादासन्ने च । **वा** अथवा **करोति** । किं तत्? पुरापुण्यमुदितम् । कान्? प्रियानर्थान् । किं विशिष्टान्? **स्वाधीनान्** स्वभर्तुरायत्तान् । किंविशिष्टान् सतः? जनिमुत्पत्तिं जुषन्ते सेवन्ते **जनिजुष** उत्पन्नान् । कथम्? **पुरः** स्वभोक्तुरुत्पत्तेः प्रागेव । **अथ** अथवा । **दयते** रक्षति । किं तत्? पुरा पुण्यमुदितम् । कान्? प्रियानर्थान् पुरोजनिजुषः । क्व? **तत्रैव** दूरासन्नदेशे । किंवत्? **सखिवद्** मित्रमिव । एतत्पूर्वेणापि योज्यम् । **वा** अथवा **रमयति** रतिं नयति । किं तत्? पुरापुण्यमुदितम् । कम्? **नरं** पुरुषम् । कथम्? **कामं** यथेष्टम् । किं कृत्वा? **आनीय** प्रत्यासन्नी-

कृत्य । कान् ? **तान्** तथाविधानर्थान् । कस्मात् ? **ततो** दूरासन्नदेशात् । **अथवा रमयति** तन्नरम् । किं कृत्वा ? **नीत्वा** प्रापय्य । कम् ? **तदुद्देशं** तथाविधार्थप्रदेशम् । कथम् ? **स्वयमात्मना** । **अपिर्विस्मये** ।

एवं शुभपरिणामवैचित्र्यवशादुपात्तस्य पुण्यविशेषस्य सामान्येनात्र फलातिशयवैचित्रीं निरूप्येदानीं विशेषेणामुत्रिकीं तां स्तोतुमुत्तरप्रबन्धमाह, तत्रादौ तावत्तां स्वार्लौकीं विकत्थते—

**यद्दिव्यं वपुराप्य मङ्क्षु हृषितः पश्यन् पुरा सत्कृतं,**
**द्राग्बुद्ध्वावधिना यथास्वममरानादृत्य सेवादृतान् ।**
**सुप्रीतो जिनयज्वनां धुरि परिस्फूर्जन्नुदारश्रियां,**
**स्वाराज्यं भजते चिराय विलसन् धर्मस्य सोनुग्रहः ॥ ४० ॥**

भवति ? कोसौ ? **स** आगमप्रसिद्धोऽ**नुग्रह** उपकारः । कस्य ? **धर्मस्य** सम्यक्तपश्चरणानुरागजस्य पुण्यस्य । यत्किम् ? **यद्भजते**ऽनुभवति । किं तत् ? **राज्यमाधिपत्यम्** । क्व ? **स्वः** स्वर्गे सौधर्मकल्पे । कथम् । **चिराय** दीर्घकालम् । किं कुर्वन् ? **विलसन्** शच्यादिदेवीविलाससक्तः सन् । पुनः किं कुर्वन् ? **परिस्फूर्जन्** परितः स्फुरत्प्रभावो भवन् । क्व ? **धुरि** । केषाम् ? **जिनयज्वनाम**र्हत्पूजकानामीशानादिशक्राणाम् । किंविशिष्टानाम् ? **उदारश्रियाम्** । उदारा महर्द्धिकसुरचक्रचेतश्चमत्कारित्वादतिशयवती श्रीरणिमाद्यष्टगुणैश्वर्यसंपद् येषां त एवम् । किंविशिष्टः सन् ? **सुप्रीतः** सुष्ठु मुदितः । किं कृत्वा ? **आदृत्य** । कान् । **अमरान्** प्रतीन्द्रसामानिकादिदेवान् । किंविशिष्टान् ? **सेवादृतान्** सेवितुं प्रवृत्तान् । कथम् ? **यथास्वम्** । यो यस्य नियोगस्तं तत्रैव प्रत्यवस्थाप्येत्यर्थः । किं कृत्वा ? **बुद्ध्वा** ज्ञात्वा । किं तत् ? **पुरा सत्कृतं** पुरा पूर्वभवे सता शुभपरिणामेन कृतमुपार्जितं स्वर्ग्यं सुकृतम् । केन ? **अवधिना** तत्कालोत्पन्नातीन्द्रियज्ञानविशेषेण । कथम् ? **द्राक्** सविस्मयवितर्कावलोकनानन्तरमेव । किं कुर्वन् ? **पश्यन्** । समन्ताद्देवीदेवाप्सरोनिकरानालोकयन् । कथंभूतो भूत्वा ? **हृषितो** विस्मितः । किं कृत्वा ? **आप्य**

लब्ध्वा । किं तत्? वपुः शरीरम् । किंविशिष्टम्? दिव्यं दिवि उपपादशिलायां भवम् । कथम्? मङ्क्षु अन्तर्मुहूर्ततः ।

इन्द्रपदानन्तरभावि चक्रिपदमपि पुण्यविशेषादेवासाद्यते इत्याह—

उच्चैर्गोत्रमभिप्रकाश्य शुभकृद्दिक्चक्रवालं करै,—<br>राक्रामन् कमलाभिनन्दिभिरनुग्रथ्नन् रथाङ्गोत्सवम् ।<br>दूरोत्सारितराजमण्डलरुचिः सेव्यो मरुत्खेचरै,—<br>रासिन्धोस्तनुते प्रतापमतुलं पुण्यानुगुण्यादिनः ॥ ४१ ॥

उच्चैर्गोत्रमिक्ष्वाकादिवंशं निषधकुलाद्रिं च । अभि निर्भयं समन्ताद्वा प्रकाश्य उद्द्योत्य । शुभेत्यादि । शुभं कृन्तन्ति छिन्दन्ति शुभकृतः प्रतिपक्षभूपाः । तदुपलक्षितं दिक्चक्रवालं ककुम्मण्डलं । पक्षे शुभकृत् प्रजानां क्षेमंकरो दिक्चक्रवालमाक्रामन्निति योज्यम् । करैः सिद्धायैः किरणैश्च । आक्रामन्नऽभिभवन् व्याप्नुवंश्च । कमलाभिनन्दिभिः कमलां लक्ष्मीं कमलानि च पद्मान्यभिनन्दयद्भिरभिवर्धयद्भिः । अनुग्रथ्नन् दीर्घीकुर्वन् । रथाङ्गोत्सवं चक्ररत्नस्योद्धर्षं चक्रवाकप्रीतिं च । राजमण्डलं नृपगणंचन्द्रबिम्बं च । मरुत्खेचरैर्देवविद्याधरैर्ज्योतिष्कदेवग्रहैश्च । आसिन्धोः समुद्रावधि । पुण्यानुगुण्यात् पुराकृतसुकृतविपाकात् । इनः स्वामी सूर्यश्च । एवं स्फुटीकृतार्थानां पदानामियं घटना । तनुते विस्तारयति । कोसौ? इनः । कम्? प्रतापम् । किंविशिष्टम्? अतुलम् । कस्मात् । पुण्यानुगुण्यात् । कथम्? आ अभिव्याप्य । कस्मात्? सिन्धोः समुद्रात् । हिमवत्कुलाद्रेश्च सिन्धुनदिप्रभवहृदयोगात् सिन्धुशब्देनात्र हिमवान् व्याख्येयः । किं कुर्वन्? आक्रामन् । किं तत्? शुभकृद्दिक्चक्रवालम् । कैः? करैः । किंविशिष्टैः? कमलाभिनन्दिभिः । किं कृत्वा? प्रकाश्य । किं तत्? उच्चैर्गोत्रम् । कथम्? अभि । पुनः किं कुर्वन्? अनुग्रथ्नन् । कम्? रथाङ्गोत्सवम् । पुनः किंविशिष्टः? दूरोत्सारितराजमण्डलरुचिः । दूरमत्यर्थमुत्सारिता राजमण्डलस्य रुचिर्दीप्तिरिच्छा च येन स एवम् । पुनरपि किंविशिष्टः? सेव्यः । कैः? मरुत्खेचरैः । मरुतश्च खेचराश्चेति द्वन्द्वः । श्लेषपक्षे यथास्वं वितर्क्य स्वबुद्ध्या योज्यम् ।

अर्धचक्रिपदमपि सनिदानधर्मानुभावादेव भवतीत्याह—

**छित्त्वा रणे शत्रुशिरस्तदस्तचक्रेण दृप्यन् धरणीं त्रिखण्डाम् ।**
**बलानुगो भोगवशो भुनक्ति कृष्णो वृषस्यैव विजृम्भितेन ४२**

शत्रुः प्रतिवासुदेवः । दृप्यन् दर्पमाविशन् । त्रिखण्डां विजयार्धपर्यन्ताम् । बलानुगो बलभद्रं पराक्रमं वानुगच्छन् । भोगवशः स्रग्वनितादिविषयतन्त्रो भोगो वा नागशरीरं वष्टि कामयते नागशय्याशयनात् । विजृम्भितेन दुःखावसानसुखदायिनानुभावेन, तत्पुण्यस्य मिथ्यात्वानुभावेन नरकान्तफलत्वात् । भुनक्ति रक्षति । कोसौ ? कृष्णो वासुदेवः । काम् ? धरणीं पृथ्वीम् । किंविशिष्टाम् ? त्रिखण्डाम् । त्रीणि विजयार्धादर्वाग्भाञ्जि खण्डानि विभागा यस्यास्ताम् । केन ? विजृम्भितेन विरुद्धं जृम्भितं स्वफलदानविलसितं विजृम्भितं तेन । कस्य ? वृषस्यैव पुरा सनिदानतपसा बद्धपुण्यस्य । किंविशिष्टः सन् ? बलानुगः । पुनः किंविशिष्टः ? भोगवशः । किं कुर्वन् ? दृप्यन् । किं कृत्वा ? छित्त्वा कर्तित्वा । किं तत् ? शत्रुशिरः[1] प्रतिवासुदेवमस्तकम् । क ? रणे संग्रामे । केन ? तदस्तचक्रेण तेन शत्रुणा हन्तुं क्षिप्तेन रथाङ्गेन[2] ।

कामदेवत्वमपि धर्मविशेषफलमेवेत्याह—

**यासां भ्रूभङ्गमात्रप्रदरदरभरप्रक्षरत्सत्त्वसारा,**
**वीराः कुर्वन्ति तेपि त्रिभुवनजयिनश्चाटुकारान् प्रसत्त्यै ।**
**तासामप्यङ्गनानां हृदि नयनपथेनैव संक्रम्य तन्वन्,**
**याञ्चाभङ्गेन दैन्यं जयति सुचरितः कोपि धर्मेण विश्वम् ॥ ४३**

जयति वशीकरोति । कोसौ ? कोपि कश्चित्प्रविरलः । कामो वात्र कः । अस्मिन्पक्षे अपीति विश्वमित्यनेन योज्यम् । विश्वमपीत्यर्थः । किं तत् ? विश्वं जगत् । केन ? धर्मेण । किंविशिष्टः सन् ? सुचरितोऽखण्डित-

१ प्रतिवासुदेवो जरासिन्धुरत्र । २ पूर्वमेतच्चक्रं प्रतिवासुदेवाधीनमासीत् । तत्तेन कृष्णं हन्तुं क्षिप्तं सत् कृष्णमहत्वा तत्स्वाधीनं प्रत्युत जातम् ।

शीलः । किं कुर्वन् ? तन्वन् दीर्घीकुर्वन् । किं तत् ? दैन्यं वैवर्ण्यादिनाभिव्यज्यमानं मनस्तापम् । केन ? याञ्चाभङ्गेन प्रार्थनाव्यामर्दनेन । कासाम् ? तासामप्यङ्गनानां सुन्दरीणाम् । किं कृत्वा ? संक्रम्य प्रविश्य । क्व ? हृदि अन्तःकरणे । केन ? नयनपथेनैव दृष्टिमार्गेण न सँल्लापादिना । तासां कासाम् ? यासामित्यादि । कुर्वन्ति उच्चारयन्ति । के ? वीरा विक्रान्ताः । कान् ? चाटुकारान् अनुकूलनार्थानि सरागदैन्यवचनानि । कस्यै ? प्रसत्त्यै प्रसादार्थम् । स्वस्मिन् काममुत्पादयितुमित्यर्थः । कासाम् ? यासाम् । किंविशिष्टा वीराः ? तेपि जगत्प्रतीताः । पुनः किंविशिष्टाः ? त्रिभुवनजयिनस्त्रिजगत्परिभाविनः । किंविशिष्टाः सन्तः ? भ्रूभङ्गेत्यादि । यासामङ्गनानां भ्रूभङ्गो भ्रुवस्तिर्यक्पातः । स एव तन्मात्रं, न वचनादिकम् । तदेव प्रदरो बाणः । तस्माद्दरभरस्त्रासोद्रेकः । तेन प्रक्षरन्तौ समूलं गलन्तौ सत्त्वसारौ येषां ते तथोक्ताः । सत्त्वं मतेर्गुणविशेषः । सारो बलम् ।

विद्याधरत्वमपि धर्मविशेषेण संपद्यते इत्याह—

विद्येशीभूय धर्माद्वरविभवभरभ्राजमानैर्विमानै,—<br>
र्व्योम्नि स्वैरं चरन्तः प्रियुवतिपरिस्पन्दसान्द्रप्रमोदाः ।<br>
दीव्यन्तो दिव्यदेशेष्वविहतमणिमाद्यद्भुतोत्सृष्टिदृप्ता,<br>
निष्क्रान्ताविभ्रमं धिग्भ्रमणमिति सुरान् गत्यहंयून् क्षिपन्ति

क्षिपन्ति निन्दन्ति । के ते ? पुरुषाः । कान् ? सुरान् । किंविशिष्टान् ? गत्यहंयून् मानुषोत्तरपर्वताद्बहिरपि गमनेन गर्वितान् । कथम् ? इति । किमिति ? धिग् निन्दामो वयम् । किं तत् ? भ्रमणं विचरणम् । किंविशिष्टम् ? निष्क्रान्ताविभ्रमं देवीनामनिमेषलोचनतया भ्रूविकारानवतारादेवमुच्यते । किं कुर्वन्तः ? चरन्तो विहरन्तः । क्व ? व्योम्नि आकाशे । कथम् ? स्वैरं यथेष्टम् । कैः ? विमानैर्व्योमयानैः । किंविशिष्टैः ? वरविभवभरभ्राजमानैः । वराः श्रेष्ठा विभवा ध्वजमालाकिङ्किणीघण्टाजालनिक्काणगवाक्षप्रेक्षणिकादिव्यपरिमलादयो वरविभवाः । तेषां भरः प्रकर्षः । तेन भ्राजमानैः शोभमानैः । किं कृत्वा ? विद्येशीभूय विद्याधरत्वं प्राप्य । कस्मात् ? धर्मात् । किंविशिष्टाः सन्तः ? प्रियाणां वल्लभानां युवतीनां त-

रुणीनां परिस्पन्दः शृङ्गाररचना । तेन सान्द्रो घनः प्रमोद आनन्दो येषां ते प्रिययुवतिपरिस्पन्दसान्द्रप्रमोदाः । पुनः किं कुर्वन्तः? दीव्यन्तः क्रीडन्तः । केषु? दिव्यदेशेषु नन्दनकुलपर्वतनदीसमुद्रादिषु । कथम्? अविहतमस्खलितम् । पुनः किंविशिष्टाः? अणिमाद्यद्भुतोत्सृप्तिदृप्ताः अणिमादयोऽणिमा महिमा लघिमा गरिमा ईशित्वं वशित्वं प्राकाम्यं कामरूपित्वं चेत्यष्टौ गुणाः । तेषामद्भुता विस्मयनीया उत्सृप्तिरुद्गतिः । तया दृप्ता दर्पिताः ।

आहारकशरीरसंपदपि पुण्यपवित्रमेत्याह—

**प्राप्याहारकदेहेन सर्वज्ञं निश्चितश्रुताः ।**
**योगिनो धर्ममाहात्म्यान्नन्दन्त्यानन्दमेदुराः ॥ ४५ ॥**

नन्दन्ति ज्ञानसंयमसमृद्धा भवन्ति । के? योगिनो यतयः । किंविशिष्टाः सन्तः? आनन्दमेदुराः प्रमोदपरिपुष्टाः । कथंभूता भूत्वा? निश्चितश्रुता निर्णीतपरमागमार्थाः । किं कृत्वा? प्राप्य सविनयमुपसद्य । कम्? सर्वज्ञं केवलिनम् । केन? आहारकदेहेन । कस्मात्? धर्ममाहात्म्यात् । धर्मस्य प्राक्चारित्रविशेषबद्धस्याहारकशरीरनामकर्माख्यस्य पुण्यविशेषस्य माहात्म्यं प्रभावस्तस्मात् । यदा भरतैरावतस्थितस्य संयतस्य केवल्यभावे क्वचिच्छ्रुतविषये संशयः स्यात् तदा तत्त्वनिर्णयार्थं महाविदेहेषु केवलिसकाशं गच्छत औदारिकशरीरेणासंयमो भवतीत्याहारकशरीरं निर्वर्तयत्यसौ । तच्च हस्तमात्रं शुद्धस्फटिकसंकाशमुत्तमाङ्गेन निर्गच्छति । तच्च केनचिद्व्याहन्यते, न किमपि व्याहन्ति । केवलमन्तर्मुहूर्तेन संशयमपनीय पुनस्तत्रैव प्रविशति ।

धर्मानुभावजनितस्वपरान्तरज्ञानानां मुनीन्द्राणामतीन्द्रियसुखसंवित्त्या अहमिन्द्रपदव्यावृत्तिं दर्शयति—

**कथयतु महिमानं को नु धर्मस्य येन,**
**स्फुटघटितविवेकज्योतिषः शान्तमोहाः ।**
**समरससुखसंविल्लक्षितात्यक्षसौख्या-**
**स्तदपि पदमपोहन्त्याहमिन्द्रं मुनीन्द्राः ॥ ४६ ॥**

नु अहो को? न कोपि, कः सर्वज्ञो वा कथयतु ब्रूताम्। कम्? महिमानम्। कस्य? धर्मस्य। येन किम्? येन धर्ममहिम्ना अपोहन्ति व्यावर्तयन्ति। के? मुनीन्द्राश्चरमाङ्गा महामुनयः। किं तत्? तदपि लोकोत्तरं पदं स्थानम्। किंविशिष्टम्? आहमिन्द्रं कल्पातीतदेवसंबन्धि ग्रैवेयकादिसर्वार्थसिद्धिपर्यन्तम्? किंविशिष्टाः सन्तो येन धर्ममहिम्ना? स्फुटघटितविवेकज्योतिषः। स्फुटं विस्पष्टं कृत्वा घटितं योजितं विवेकज्योतिरात्मदेहान्तरज्ञानं यैस्त एवम्। पुनः किंविशिष्टाः? शान्तमोहाः। शान्तः शमितो मोहो यैस्ते। उपशान्तकषायगुणस्थानवर्तिन इत्यर्थः। पुनरपि किंविशिष्टाः? समेत्यादि। समरसो यथाख्यातचारित्रम्। स एव तेन वा सुखम्। तस्य संविदनुभूतिः। तया लक्षितं स्वयमुपलब्धमत्यक्षसौख्यमऽतीन्द्रियसुखं यैस्ते तथोक्ताः। अयमत्राभिप्रायः—शुद्धोपयोगस्खलितयोगविशेषादहमिन्द्रपदप्राप्तियोग्यसुकृतविशेषबन्धोन्मुखा भूत्वा शुद्धोपयोगावष्टम्भात् तमबद्ध्वैवोपशमकश्रेणेरवरुह्य क्षपकश्रेणीमारुह्य जीवन्मुक्ता भूत्वा परमां मुक्तिं गच्छन्ति। अपोहन्तीत्यत्र "उपसर्गादस्यत्यूहो वा" इति परस्मैपदम्। अहमिन्द्रलक्षणमप्युक्तं यथा—

> नासूया परनिन्दा वा नात्मश्लाघा न मत्सरः।
> केवलं सुखसाद्भूता दीव्यन्त्येते दिवौकसः॥

अपि च,

> अहमिन्द्रोस्मि नेन्द्रोन्यो मत्तोस्तीत्यात्तकत्थनाः।
> अहमिन्द्राख्यया ख्यातिं गतास्ते हि सुरोत्तमाः॥

अहमिन्द्रस्येदमित्य(न्)ण्।

गर्भावतरणादिकल्याणाश्चर्यविभूतिरपि सम्यक्त्वसहचारिपुण्यविशेषादेव संपद्यते इत्याह—

**धोरेष्यन्विश्वपूज्यौ जनयति जनकौ गर्भगोतीव जीवो,**
**जातो भोगान् प्रभुङ्क्ते हरिभिरुपहृतान्मन्दिरान्निष्क्रमिष्यन्।**
**ईर्ते देवर्षिकीर्तिं सुरखचरनृपैः प्रव्रजत्याहितेज्यः,**
**प्राप्यार्हन्त्यं प्रशास्ति त्रिजगदपिनुतो याति मुक्तिं च धर्मात्॥**

अत्र जीव इति धर्मादिति च प्रतिवाक्यं योजनीयम् । **जनयति** करोति । कोसौ ? **जीवः**। कौ ? **जनकौ** मातापितरौ । किंविशिष्टौ ? **विश्वपूज्यौ** जगतामर्चितौ । किं करिष्यन् ? **एष्यन्** आगमिष्यन् । कस्याः ? **द्योः** स्वर्गात् । कस्मात्? **धर्मात्** पुण्यविशेषविपाकाद्धेतोः । तीर्थकरे हि जनिष्यमाणे प्रागेव मासषट्कं तन्माहात्म्येन तत्पितरौ जगत्पूज्यौ भवतः । तथा धर्माज्जीवो **गर्भगो** गर्भेऽवतीर्णः सन् पितरावतीवातिशयेन जगत्पूज्यौ करोति । तथा **प्रभुङ्क्ते** प्रकर्षेणानुभवति । कोसौ ? जीवः । कान् ? **भोगान्** इष्टविषयान् । किंविशिष्टान् ? **उपहृतान्** उपनीतान् । कैः ? **हरिभिः** सौधर्मादिशक्रैः । कस्मात् ? धर्मात् । किंविशिष्टः सन् ? **जातः** उत्पन्नः । तथा **ईते** गच्छति प्राप्नोति । कोसौ ? जीवः । काम् ? **देवर्षिकीर्तिं** लौकान्तिकदेवैः क्रियमाणां स्तुतिम् । कस्मात्? धर्मात् । किं करिष्यन् ? **निष्क्रमिष्यन्** निष्क्रमितुमिच्छन् । कस्मात्? **मन्दिरात्** द्रव्यभावगृहात् । तथा **प्रव्रजति** दीक्षां गृह्णाति । कोसौ ? जीवः । किंविशिष्टः ? **आहितेज्यः** । आहिता कृता इज्या पूजा यस्य स एवम् । कैः ? **सुरखचरनृपैर्**देवविद्याधरभूपैः । कस्मात्? धर्मात् । तथा **प्रशास्ति** अव्याहतं शिक्षयति । कोसौ? जीवः । किं तत्? **त्रिजगत्** त्रैलोक्यम् । किं कृत्वा ? **प्राप्य** । किं तत् ? **आर्हन्त्यं** जीवन्मुक्तत्वम् । किंविशिष्टः सन् ? **ऋषिनुतो** गणधरदेवादिभिः स्तुतः । तथा **याति** गच्छति । कोसौ ? जीवः । काम् ? **मुक्तिं** परमपदम् । कस्मात्? धर्मात् । धर्मोऽत्र यो मुख्यतया प्राग्व्याख्यातस्तस्यैव कृत्स्नकर्मविप्रतिमोक्षे सामर्थ्योपपत्तेः ।

धर्मोदयानुदयाभ्यां संपदामिवाधर्मोदयानुदयाभ्यां विपदामुपभोगानुभोगौ भवत इत्याह—

**धर्म एव सतां पोष्यो यत्र जाग्रति जाग्रति ।**
**भक्तुं मीलति मीलन्ति संपदो विपदोन्यथा ॥ ४८ ॥**

**पोष्यः** पुष्टिं नेतव्यः । कोसौ ? **धर्म एव**, नाधर्मः । केषाम् ? **सतां** समीक्ष्यकारिभिरित्यर्थः । यत्र किम्? **यत्र** यस्मिन्धर्मे **जाग्रति** स्वव्यापारं कुर्वति सति **जाग्रति** स्वव्यापारं कुर्वन्ति । काः ? **संपदो** विभूतयः । किं

कर्तुम् ? भक्तुं स्वस्वामिनं सेवितुम् । तथा **मीलन्ति** स्वव्यापारादुपरमन्ति । काः ? संपदः । क्व सति ? यत्र धर्मे **मीलति** स्वव्यापारादुपरमति सति । तथा भवन्ति । काः । **विपद्** आपदः कथम् ? **अन्यथा** वैपरीत्येन वर्तन्ते इत्यर्थः । तत्राधर्मे जाग्रति विपदो जाग्रति पुरुषं भक्तुं, मीलति च मीलन्ति । इति यथास्वं व्याख्येयम् । पोष्य इत्यनेन चोपमानं लक्षयति । तेनायमर्थो, यथा परिकरे सावधाने राज्ञां सेवनाय वाराङ्गनाः सावधाना भवन्ति, निरवधाने च निरवधानाः । तथा प्रकृतेपीति योज्यम् ।

एवं धर्मस्य सुखसंपादकत्वमभिधायेदानीं दुःखनिवर्तकत्वं तस्यैव पद्यैश्चतुर्दशभिः प्रपञ्चयति । तत्र तावद्दुर्गदेशेषु धर्मस्योपकारं दर्शयति—

**कान्तारे पुरुपाकसत्त्वविगलत्सत्त्वेम्बुधौ बम्भ्रमत्,—**
**ताम्यन्नक्रपयस्युदर्चिषि मरुच्चक्रोच्चरच्छोचिषि ।**
**संग्रामे निरवग्रहद्विषदुपस्कारे गिरौ दुर्गम,—**
**ग्रावग्रन्थिलदिङ्मुखेप्यशरणं धर्मो नरं रक्षति ॥ ४९ ॥**

**रक्षति** । कोसौ ? **धर्मः** । कम् ? **नरम्** । किंविशिष्टम् ? **अशरण**मत्राणम् । क्व ? **कान्तारे**ऽरण्ये दुर्गमार्गे वा । किंविशिष्टे ? **पुरुपाकसत्त्वविगलत्सत्त्वे** । पाकसत्त्वाः क्रूरजीवाः सिंहव्याघ्रादयः । सत्त्वं मनोगुणः । सत्त्वा वा प्राणिनः । पुरवः प्रचुराः पाकसत्त्वाः पुरुपाकसत्त्वाः । तेभ्यो विगलद्विनश्यत्सत्त्वं विगलन्तो वा सत्त्वा यस्मिन् तदेवम् । तथा धर्मोऽशरणं नरं रक्षति । क्व ? **अम्बुधौ** समुद्रे । किंविशिष्टे ? **बम्भ्रमत्ताम्यन्नक्रपयसि** । बम्भ्रमन्तः कुटिलं भृशं वा चरन्तः ताम्यन्तः खिद्यन्तः । ते च ते नक्रा जलचरा बम्भ्रमत्ताम्यन्नक्राः । तैरुपलक्षितं पयो जलं यत्र तदेवं तस्मिन् । तथाऽशरणं धर्मो नरं रक्षति । क्व ? **उदर्चिषि** ज्वलने । किंविशिष्टे ? **मरुच्चक्रोच्चरच्छोचिषि** । मरुच्चक्रेण वात्यया उच्चरन्त्युच्छलन्ति शोचींषि ज्वाला यस्य तस्मिन् । तथाऽशरणं धर्मो नरं रक्षति । क्व ? **संग्रामे** युद्धे । किंविशिष्टे ? **निरवग्रहद्विषदुपस्कारे** । निरवग्रहो निरङ्कुशो द्विषतां शत्रूणामुपस्कारः प्रतियत्नो वैकृतं वा यस्मिन् । तथाऽशरणं धर्मो नरं रक्षति । क्व ? **गिरौ** पर्वते । किंविशिष्टे ? **दुर्गमग्रावग्रन्थिलदि-**

क्षुखे । दुर्गमा दुःखेन लङ्घ्या अलङ्घ्या वा ग्रावाणः पाषाणाः पर्वता वा दुर्गमग्रावाणः । तैर्ग्रन्थिलानि निम्नोन्नतत्वं नीतानि दिङ्मुखानि ककुभारम्भा यस्मिन् । अपिः समुच्चये विस्मये वा ।

धर्मो नानादुरवस्थाप्राप्तं नरमुद्धरतीत्याह—

**क्षुत्क्षामं तर्षतप्तं पवनपरिधुतं वर्षशीतातपार्तं,**
**रोगाघ्रातं विषार्तं ग्रहरुगुपहतं मर्मशल्योपतप्तम् ।**
**दूराध्वानप्रभग्नं प्रियविरहबृहद्भानुदूनं सपत्न,—**
**व्यापन्नं वा पुमांसं नयति सुविहितः प्रीतिमुद्धृत्य धर्मः॥५०॥**

नयति प्रापयति । कोसौ ? धर्मः । कम् ? पुमांसं पुरुषम् । काम् ? प्रीतिं प्रमोदम् । किं कृत्वा ? उद्धृत्य क्षुधादिदुःखेभ्यो निष्कास्य । किंविशिष्टः सन् ? सुविहितः सम्यगाचरितः । तान्येव विशेषणद्वारेण दर्शयति । तथाहि—क्षुधा बुभुक्षया क्षामं ग्लानम् । तर्षेण तृष्णया तप्तं कशालितम् । पवनेन वायुना परि समन्ताद् धुतं कम्पितम् । वर्षशीतातपैर्वृष्टितुषारघर्मैरार्तमातुरम् । रोगैर्जरादिभिराघ्रातम् । विषेण गरलेन ऋतं पीडितम् । ग्रहाणां शनैश्चरादीनां ब्रह्मराक्षसादीनां वा रुजा पीडयोपहतमुपप्लुतम् 'विषमं स्पन्दनं यत्र पीडिते रुक् च मर्म तत्'' मर्मणि प्रविष्टेन शल्येन काण्डादिनोपतप्तं भृशं व्यथितम् । दूराध्वानेन विप्रकृष्टमार्गगमनेन प्रभग्नमतिश्रान्तम् । अध्वानशब्दोपि मार्गार्थोस्ति । यल्लक्ष्यम्—

"करितुरगमनुष्यं यत्र वाध्वानदीनम्" ।

प्रियाणां कलत्रपुत्रबन्धुमित्रादीनां विरहेण वियोगेन बृहद्भानुना वह्निनेव दूनं परितप्तम् । सपत्नैः शत्रुभिर्व्यापन्नं विविधापत्सु पातितम् । वाशब्दः समुच्चये ।

उक्तार्थसमर्थनार्थं त्रिभिः श्लोकैः क्रमेण सगर तोयदवाहन-रामभद्रान् दृष्टान्तत्वेनाचष्टे—

**सगरस्तुरगेणैकः किल दूरं हृतोऽटवीम् ।**
**खेटैः पुण्यात्प्रभूकृत्य तिलकेशीं व्यवाह्यत ॥ ५१ ॥**

किल एवं ह्यागमे श्रूयते । व्यवाह्यत परि(र्य)णीयत । कोसौ ? सगरो द्वितीयचक्रवर्ती । काम् ? तिलकेशीं तत्संज्ञां विद्याधरकन्यां स्त्रीरत्नम् । कैः कर्तृभिः ? खेटैः सहस्रनयनादिविद्याधरैः । किं कृत्वा ? प्रभूकृत्य स्वामित्वं नीत्वा तत्सेवकीभूय । कस्मात् ? पुण्यात् सुकृतेन हेतुना । किं विशिष्टः सन् ? एकोऽसहायः । एषा कथा द्वे उत्तरे च पद्मचरिताज्ज्ञातव्याः ।

कीर्णे पूर्णघने सहस्रनयनेनान्वीर्यमाणोऽजितं,
सर्वज्ञं शरणं गतः सह महाविद्यां श्रिया राक्षसीम् ।
दत्त्वा प्राग्भवपुत्रवत्सलतया भीमेन रक्षोन्वय,—
प्राज्योऽरच्यत मेघवाहनखगः पुण्यं क्व जागर्ति न ५२

अरच्यत कृतः । कोसौ ? मेघवाहनखगः तोयदवाहनो नाम विद्याधरः । किंविशिष्टः ? रक्षोन्वयप्राज्यो राक्षसवंशस्यादिपुरुषः । केन ? भीमेन पूर्णघनचरेण भीमनाम्ना राक्षसेन्द्रेण । कया ? प्राग्भवपुत्रवत्सलतया पूर्वजन्मात्मजस्नेहलत्वेन । किं कृत्वा ? दत्त्वा वितीर्य । काम् ? महाविद्याम् । किंनाम्नीम् ? राक्षसीम् । कथम् ? सह । कया ? श्रिया नवग्रहाख्यहारलङ्कालङ्कोदराख्यपुरद्वयकामगाख्यविमानप्रभृतिसंपदा सह । किंविशिष्टः सन् ? गतः प्रपन्नः । कम् ? सर्वज्ञम् । किम् ? शरणम् । किंनामानम् ? अजितं समवसरणस्थं द्वितीयतीर्थकरम् । किं क्रियमाणः ? अन्वीर्यमाणस्तद्बलैरनुद्रूयमाणः । क्व सति ? पूर्णघने सुलोचनघातिनि स्वजनके । किंविशिष्टे ? कीर्णे हते । केन ? सहस्रनयनेन तन्नाम्ना सुलोचनपुत्रेण । युक्तं चैतत् । क्व स्वकार्ये सुखसंपादने दुःखोच्छेदने वा न जागर्ति न व्याप्रियते । किं तत् ? पुण्यं पुराकृतं सुकृतम् । सर्वत्र जागर्तीत्यर्थः ।

राज्यश्रीविमुखीकृतोऽनुजहृतैः कालं हरंस्त्वक्फलैः,
संयोगं प्रियया दशास्यहृतया स्वप्नेप्यसंभावयन् ।
क्लिष्टः शोकविषार्चिषा हनुमता तद्वार्तयोज्जीवितो,
रामः कीशबलेन यत्तमवधीत् तत्पुण्यविस्फूर्जितम् ॥५३॥

भवति । किं तत्? **तत्पुण्यविस्फूर्जितं** पुराकृतसुकृतानुभावः । यत् किम्? **यदवधीद्** हन्ति स्म । कोसौ ? **रामः** सीतापतिः । कम्? **तं दशास्यं** रावणम् । केन ? **कीशबलेन** वानरसैन्येन । किंविशिष्टः सन्? **क्लिष्टः** संतप्तः । केन ? **शोकविषार्चिषा** शोकगरलज्वालया । किं कुर्वन्? **हरन्** अतिक्रामन् । कम् ? **कालम्** । कैः ? **त्वक्फलैर्वल्कलैरारण्यैः** सस्यैश्च । किंविशिष्टैः **अनुजहृतैर्लक्ष्मणेनानीतैः** । किंविशिष्टः सन् ? **राज्यश्रीविमुखीकृतः** स्वपित्रा दशरथराजेन राज्यलक्ष्मीतो निवर्तितः । पुनः किं कुर्वन्? **असंभावयन्** अमन्यमानः । कम्? **संयोगम्** । कया सह? **प्रियया** सीतया किंविशिष्टया? **दशास्यहृतया** रावणेनापहृत्य नीतया । क्व ? **स्वप्नेपि** स्वप्नावस्थायाम् । किं पुनर्जाग्रदवस्थायामित्यपिशब्दार्थः । पुनरपि किंविशिष्टः? **उज्जीवित** उच्छ्वसितः । केन ? **हनुमता** आञ्जनेयेन । कया ? **तद्वार्तया** तस्याः प्रियायाः कथाप्रसङ्गेन ।

धर्मस्य नरकेपि घोरोपसर्गनिवर्तकत्वं प्रकाशयति—

**श्लाघे कियद्वा धर्माय येन जन्तुरुपस्कृतः ।**
**तत्तादृगुपसर्गेभ्यः सुरैः श्वभ्रेपि मोच्यते ॥ ५४ ॥**

**वा** अथवा **कियत्** किंपरिमाणं **श्लाघे** स्तौम्यहम् । कस्मै ? **धर्माय** मया धर्मस्य माहात्म्यं वर्णयितुमशक्यमित्यर्थः । येन किम्? **येन** धर्मेण **उपस्कृत** आहितातिशयो **जन्तुर्जीवो** **मोच्यते** विश्लेष्यते । कैः ? **सुरैः** कल्पवासिदेवैः । केभ्यः ? **तत्तादृगुपसर्गेभ्यः** । तेभ्यः प्रसिद्धेभ्यस्तादृग्भ्यो नारकैः संक्लिष्टसुरैश्च स्वैरमुदीरितेभ्योतिघोरदुःखहेतुभ्यः । क्व ? **श्वभ्रेपि** नरकेपि । ते हि षण्मासायुःशेषे नरकादेष्यतां तीर्थकराणामुपसर्गं निवारयन्ति । स्वर्गादेष्यतां च तेषामम्लाना मन्दारमालाः स्युरित्यपिशब्देन गृह्यते । तथा चोक्तम्—

**तित्थयरसत्तकम्मे उवसग्गणिवारणं कुणंति सुरा ।**
**छम्माससेस णरये सग्गे अमिलाणमालाओ ॥**

---

१ तीर्थकरसत्त्वकर्मणि उपसर्गनिवारणं कुर्वन्ति सुराः ।

धर्ममाचरतो विपदुपतापे सति तन्निवृत्त्यर्थं धर्मस्यैव बलाधानं कर्तव्यमित्यनुशास्ति—

व्यभिचरति विपक्षक्षेपदक्षः कदाचि-
द्बलपतिरिव धर्मो निर्मलो न स्वमीशम् ।
तदभिचरति काचित्तत्प्रयोगे विपच्चे-
त्स तु पुनरभियुक्तैस्तर्ह्युपाजे क्रियेत ॥ ५५ ॥

**न व्यभिचरति** । न विरुद्धाभिमुखं व्यवहरति । न विरुद्धं करोतीत्यर्थः । कोसौ ? **धर्मः** । कम् ? **स्वमा**त्मीय**मीशं** प्रयोक्तारम् । किंविशिष्टः ? **निर्मलो** निरतिचारः । पुनः किंविशिष्टः ? **विपक्षक्षेपदक्षो**ऽधर्माभिभवनसमर्थो यतः । कथम् ? **कदाचित्** क्वचिदपि काले । क इव ? **बलपतिरिव** यथा शत्रुनिराकरणक्षमः सर्वोपधाविशुद्धश्च बलपतिः सेनापतिरलं जातुचित्स्वमीशं चक्रिणं न व्यभिचरति **तत्** तस्मात्**तत्प्रयोगे** तस्मिन्धर्मे बलपतौ च व्यापारिते सति **काचिद्** दैवी मानुषी तैरश्चीन्यचेतनी वा **विपदापच्चेद्यदि अभिचरति** अभितस्तुं प्रवर्तते **तर्हि स तु** स एव धर्मो बलपतिश्च **पुनर्भूयोऽभियुक्तै**रुद्युक्तैः सद्भिः पुंभि**रुपाजे क्रियेत** आहितबलः कर्तव्यः ।

दुर्निवारेपि दुष्कृते विलसति धर्मः पुमांसमुपकरोत्येवेत्युपदिशति—

यज्जीवेन कषायकर्मठतया कर्मार्जितं तद् ध्रुवं,
नाभुक्तं क्षयमृच्छतीति घटयत्युच्चैः कटूनुद्भटम् ।
भावान् कर्मणि दारुणेपि न तदेवान्वेति नोपेक्षते,
धर्मः किंतु ततस्त्रसन्निव सुधां स्तौति स्वधाम्न्यस्फुटम्॥

**नान्वेति** नानुवर्तते । कोसौ ? **धर्मः** । किं तत् ? **तदेव** दारुणं कर्म । तत्सहकारी न भवतीत्यर्थः । **नोपेक्षते** नाप्यवधीरयति धर्मस्तथाविधकर्मणा बाध्यमानं स्वस्वामिनम् । क्व सति ? **कर्मणि,** प्रक्रमाद् दुष्कृते । किंविशिष्टे ? **दारुणे** अशक्यप्रतीकारे । न केवलं दुःशकप्रतीकारे सुशक-

प्रतीकारे चेत्यपिशब्दार्थः । किं कुर्वति ? **घटयति** संयोजयति सति । कान् ? **भावान्** स्वफलभूतानऽहिविषकण्टकादीनर्थान् । किंविशिष्टान् ? **उच्चैः कटून्** हालाहलप्रख्यान् । चतुर्धा हि पापरसो निम्बकांजीरविषहालाहलतुल्यत्वात् ।

श्लोकः—

**लतादार्वस्थिपाषाणशक्तिभेदाच्चतुर्विधः ।**
**स्याद् घातिकर्मणां पाकोन्येषां निम्बगुडादिवत् ॥**

कथं कृत्वा घटयति ? **उद्भटं** प्रकटदर्पाटोपं कृत्वा । ननु धर्मे निर्व्याजबन्धौ सत्यपि किमित्यधर्मशत्रुरेवं विलसतीत्यत्राह—यदित्यादि । इतिर्हेतौ । यतो **यत्कर्मार्जितं बद्धम्** । केन ? **जीवेन**। कया ? **कषायकर्मठतया** । कर्मणि घटते कर्मठः कर्मशूरः । कषायैः कर्मठः कषायकर्मठः क्रोधादिभिर्मनोवाक्कायव्यापारेषु घटमानो जीवः । तस्य भावस्तत्ता, तया । तत्कर्म ध्रुवमवश्यं **न ऋच्छति** न गच्छति । कम् ? **क्षयं** विश्लेषम्। किंविशिष्टं सत् ? **अभुक्तम**ननुभूतम् । ततश्च निर्जरेति वचनात् । यद्येवं सति धर्मः कर्मानुवृत्तिस्वस्वाम्युपेक्षापरो न स्यात्तर्हि किं कुर्यादित्याह—**किंतु** अपि तु **स्नौति** क्षरति । कोसौ ? **धर्मः** । काम् ? **सुधाम**मृतम्.। लक्षणया सर्वाङ्गीणमानन्दम् । क ? **स्वधाम्नि** स्वाश्रयभूते पुंसि । कथं कृत्वा ? **अस्फुटं** गूढं बाह्यलोकानामविदितम् । प्रकटं कस्मात्सुधां न स्नौतीत्यत्रोत्प्रेक्षामाह—**ततो** दारुणकर्मणस्त्रसन्निव बिभ्यदिव । अत्रेयं भावना—बाह्या दुर्वारदुष्कृतपाकोत्थमुपर्युपर्युपसर्गमेव पश्यन्ति न पुनः पुंसो धर्मेणानुगृह्यमाणसत्त्वोत्साहस्य तदनभिभवम् ।

पापपुण्ययोरपकारोपकारौ दृष्टान्तद्वारेण द्रढयितुं वृत्तद्वयमाह—

**तत्तादृक्कमठोपसर्गलहरीसर्गप्रगल्भोष्मणः,**
**किं पार्श्वे तमुदग्रमुग्रमुदयं निर्वच्मि दुष्कर्मणः ।**
**किंवा तादृशदुर्दशाविलसितप्रध्वंसदीप्रौजसो,**
**धर्मस्योरु विसारि सख्यमिह वा सीमा न साधीयसाम्५७**

अत्र किंशब्दौ परस्परापेक्षौ प्रश्नवितर्कार्थौ व्याख्येयौ । **किं निर्वच्मि**

निश्चितं कथयाम्यहम् । कम् ? **तमागमप्रसिद्धमुदग्रमुच्छ्रितमुग्रं दुःसह-मुदयं विपाकम्** । कस्य ? **दुष्कर्मणो** दुष्कृतस्य । क्व ? **पार्श्वे** भगवति त्रयोविंशतीर्थंकरे । किंविशिष्टस्य ? **तदित्यादि** । ते प्रसिद्धास्तादृशः प्रतिकूलानुकूला वज्रपाताद्भुतपञ्चवर्णजलदात्युग्रवात्यायुधव्रातघाताप्सरोवर्गोपचारज्वलज्वलनजलधिव्यालोपनिपातभूतनृत्यादयो विसृष्टचण्डाशनिवृष्टितरुपातघोरमेघपटलादयश्च तत्तादृशश्च ते कमठोपसर्गाः कमठेन पूर्ववैरिणा नानाभवान् भ्रान्त्वा महासुरत्वं प्राप्तेन क्रियमाणा उपसर्गा उत्पातास्तत्तादृक्कमठोपसर्गाः । तेषां लहरी परम्परा । तस्याः सर्गो निर्माणम् । तत्र प्रगल्भः समर्थ ऊष्मा दुःसहवीर्यानुभावो यस्य तत्तादृक्कमठोपसर्गलहरीसर्गप्रगल्भोष्म तस्य । **किंवा निर्वच्म्यहम्** । किं तत् ? **सख्यं** मैत्रीकम् । किंविशिष्टम्' ? **उरु** महत् । पुनः किंविशिष्टम् ? **विसारि** सर्वत्र सर्वदा स्वकार्यकारि । कस्य ? **धर्मस्य** । किंविशिष्टस्य ? **तादृशेत्यादि** । तादृशी शक्रनियुक्तयक्षधरणेन्द्रपद्मावति(ती)भिरनिवार्या दुर्दशा पार्श्वप्रभोर्दुरवस्था । तस्या विलसितं स्वैरदुःखकरणसामर्थ्यम् । तस्य प्रध्वंसे प्रतिबन्धे दीप्रं दीपनशीलमुपर्युपरि ज्वलदोजस्तेजो यस्य स तादृशदुर्दशाविलसितप्रध्वंसदीप्रौजास्तस्य । **वा** अथवा युक्तमेतत् । **न** अस्ति । कासौ ? **सीमा** अवधिः । केषाम् ? **साधीयसामतिशयशालिनाम्** । क्व ? **इह** लोके ।

अपि च—

**प्रद्युम्नः षडहोद्भवोऽसुरभिदः सौभागिनेयः क्रुधा,**
**हृत्वा प्राग्विगुणोऽसुरेण शिलयाऽऽक्रान्तो वने रुन्द्रया ।**
**तत्कालीनविपाकपेशलतमैः पुण्यैः खगेन्द्रात्मजी,—**
**कृत्याऽलम्भ्यत तेन तेन जयिना विद्याविभूत्यादिना ५८**

**अलम्भ्यत** योज्यते स्म । कोसौ ? **प्रद्युम्नः** । कैः ? **पुण्यैः** पुराकृतसुकृतैः । किंविशिष्टैः ? तस्मिन्काले भवस्तत्कालीनस्तादात्विकः । स चासौ विपाक उदयश्च तत्कालीनविपाकः । तेन पेशलतमैरत्यन्तमधुरैस्तत्कालीनविपाकपेशलतमैः । केनालम्भ्यत ? **तेन तेन** तच्चरितप्रबन्धप्रसिद्धेन **विद्याविभूत्यादिना** विद्याभिः खेचरत्वादिकर्मक्षमाभिर्विभूतिभिः षोडशाद्भुतलाभैः, आदिशब्दात् तत्तदापत्प्रशमनैश्च । किंविशिष्टेन ? **जयिना**

कालशम्बरपुत्रवर्गपराजययुक्तेन । किं कृत्वा ? **खगेन्द्रात्मजीकृत्य** कालशम्बरनाम्नो विद्याधरेन्द्रस्यात्मजं सन्तमात्मजं कृत्वा । किंविशिष्टः सन् ? **आक्रान्त** उपरि पीडितः । केन ? **असुरेण** हेमरथराजचरेण ज्वलितधूमशिखिनाम्ना दैत्येन । कया ? **शिलया** दृषदा । किंविशिष्टया ? **रुन्द्रया** महत्या । क्व ? **वने** महाखदिराटव्याम् । किं कृत्वा ? **हृत्वा** प्रच्छन्नं गृहीत्वा । कया ? **क्रुधा** क्रोधेन । अत्र हेतुमाह—**प्राग्विगुणो** यतः प्राग्मधुराजभवे विगुणो वल्लभाहठहरणादपकर्ता । कियदवस्थोसौ ? **षडहोद्भवः** षड्दिनजन्मा । किमतिशयोसौ ? **सौभागिनेयः** सुभगाया इतरकान्तापेक्षयाऽतिवल्लभाया रुक्मिण्या अपत्यम् । कस्य ? **असुरभिदो** दैत्यमथनस्य वासुदेवस्य ।

ननु मन्त्रादिप्रयोगोपि विपन्निवारणाय शिष्टैर्व्यवह्रियते । तत्कथं भवता तत्प्रतीकारे पुण्यस्यैव सामर्थ्यप्रकाशनं न विरुध्यते इत्यत्राह—

**यश्चानुश्रूयते हर्तुमापदः पापपक्त्रिमाः ।**
**उपायः पुण्यसद्बन्धुं सोप्युत्थापयितुं परम् ॥ ५९ ॥**

**यश्च** यः पुनर**नुश्रूयते** आप्तोपदेशपारम्पर्येणाकर्ण्यते व्यवहर्तृजनैः । कोसौ ? **उपायः** सिद्धमन्त्रादिप्रयोगः । किं कर्तुम् ? **हर्तुं** निराकर्तुम् । काः ? **आपदः** । किंविशिष्टाः ? **पापपक्त्रिमाः** पापपाकेन निर्वृत्ताः । **सोपि** किं पुनराप्ताभासोपदिष्टः शिष्टैर्व्यवह्रियते । किं कर्तुम् ? **उत्थापयितु**मुद्यमयितुम् । स्वव्यापारे प्रवर्तयितुमित्यर्थः । कम् ? **पुण्यसद्बन्धुं** सुकृतनिर्व्याजबान्धवम् । कथम् ? **परं** केवलम् ।

पुण्यस्योदयाभिमुखत्वे तद्विमुखत्वे च द्वयेपि सति सुखसाधनानां वैफल्यं दर्शयति—

**पुण्यं हि संमुखीनं चेत्सुखोपायशतेन किम् ।**
**न पुण्यं संमुखीनं चेत्सुखोपायशतेन किम् ॥ ६० ॥**

**हि** यस्माच्चेद् यद्यस्ति । किं तत् ? **पुण्यम्** । किंविशिष्टम् ? **संमुखीन**मुदयाभिमुखम् । स्वफलदानोद्यतमित्यर्थः । तदा किं कार्यम् । केन ?

**सुखोपायशतेन** सुखोपायानामभ्यासाभिमानसंप्रत्ययविषयलक्षणानां शर्मकारणानां समुदायेन । **न चेदस्ति** । किं तत् ? **पुण्यम्** । किंविशिष्टम् ? **संमुखीनम्** उदेतुम् अनुद्यतमित्यर्थः । तदा किं कार्यम् । केन ? **सुखोपायशतेन** बहुभिरपि सुखोपायैस्तादृक्पुण्यस्य फलयितुमशक्यत्वात् ।

पुण्यपापयोर्बलाबलं चिन्तयति—

**शीतोष्णवत्परस्परविरुद्धयोरिह हि सुकृतदुष्कृतयोः ।**
**सुखदुःखफलोद्भवयोर्दुर्बलमभिभूयते बलिना ॥ ६१ ॥**

हि यस्मादऽ**भिभूयते** स्वफलदानासमर्थं क्रियते । किं तत् ? **दुर्बलं** सुकृतं दुष्कृतं वा । केन ? **बलिना** दुष्कृतेन सुकृतेन वा । कयोर्मध्ये ? **सुकृतदुष्कृतयोः** पुण्यपापयोः । किंविशिष्टयोः ? **सुखदुःखफलोद्भवयोः** सुखदुःखफलौ उद्भवौ उदयौ ययोः । पुनः किंविशिष्टयोः ? **परस्परविरुद्धयोर**न्योन्यशक्तिप्रतिघातिनोः । किंवत् ? **शीतोष्णवत्** शीतोष्णस्पर्शयोर्यथा ।

क्रियमाणोपि धर्मः पापपाकमपकर्षतीत्युपदिशति—

**धर्मोनुष्ठीयमानोपि शुभभावप्रकर्षतः ।**
**भङ्क्त्वा पापरसोत्कर्षं नरमुच्छ्वासयत्यरम् ॥ ६२ ॥**

**उच्छ्वासयत्यरं** शीघ्रं किंचिदापदो मोचयति । कोसौ ? **धर्मः** । किंक्रियमाणः ? **अनुष्ठीयमान**स्तत्क्षणे आचर्यमाणः । न परमनुष्ठित इत्यपिशब्दार्थः । कम् ? **नरं** पुरुषम् । किं कृत्वा ? **भङ्क्त्वा** निहत्य । कम् ? **पापरसोत्कर्षम्** । पापस्य रसः स्वफलदानशक्तिः । तस्योत्कर्षं औत्कट्यम् । केन ? **शुभभावप्रकर्षतः** शुभपरिणामोत्कर्षेण ।

प्रकृतार्थमुपसंहरन् धर्माराधनायां प्रोत्साहयति—

**तत्सेव्यतामभ्युदयानुषङ्गफलोऽखिलक्लेशविनाशनिष्ठः ।**
**अनन्तशर्मामृतदः सदार्यैर्विचार्य सारो नृभवस्य धर्मः ६३**

यत उक्तनित्याचिन्त्यप्रभावस्तत् तस्मा**त्सेव्यताम्**आराध्यताम् । कोसौ ?

**धर्मः** । कैः ? **आर्यैः** प्रेक्षापूर्वकारिभिः । किंविशिष्टः ? **सारः** उपादेयतमत्वादन्तर्भागः । कस्य ? **नृभवस्य** मनुष्यजन्मनः । किं कृत्वा ? **विचार्य** प्रत्यक्षानुमानागमैर्यथावद्व्यवस्थाप्य । कथम् ? **सदा** नित्यं । किंविशिष्टोसौ यतः ? **अभ्युदये**त्यादि । अनुषज्यते धर्मेण संपद्यते इत्यनुषङ्गोत्र पुण्यम् । अभ्युदयोनुषङ्गफलं गुणसाध्यं यस्य स एवं । अखिलानां सर्वेषां क्लेशानामुपतापानां विनाशे निष्ठा तत्परता यस्य स एवम् । अनन्तं निरवधि शर्म सुखं यत्र तदनन्तशर्म । तच्च तदमृतं मोक्षश्चानन्तशर्मामृतम् तद्ददातीति तथा । अनन्तं दीर्घकालानुबन्धि शर्म सुखममृतं च पीयूषं ददातीत्यपि व्याख्येयं, धर्मस्य सर्वार्थसिद्धिपर्यन्तसुदेवत्वानुषक्ततीर्थकरत्वपर्यन्तसुमानुषत्वफलदायकत्वेन समर्थितत्वात् ।

अथातो द्वाविंशत्या पद्यैर्मनुष्यत्वस्य निस्सारत्वं चिन्तयति । तत्र तावच्छरीरस्वीकारदुःखमाह—

**प्राङ्मृत्युक्लेशितात्मा द्रुतगतिरुदरावस्करेऽह्नाय नार्याः,**
**संचार्याहार्य शुक्रार्तवमशुचितरं तन्निगीर्णान्नपानम् ।**
**गृध्याऽश्नन् क्षुत्तृषार्तः प्रतिभयभवनाद्वित्रसन्पिण्डितोना,**
**दोषाद्यात्माऽनिशार्तं चिरमिह विधिना ग्राह्यतेऽङ्गं वराकः ६४**

**ग्राह्यते** स्वीकार्यते । कोसौ ? **ना** मनुष्यगतिनामकर्मोदयवर्तिजीवः । केन ? **विधिना** प्राक्तनकर्मणा । किं तत् ? **अङ्गं** शरीरम् । कियत्कालम् ? **चिरं** नव दश वा मासान् यावत् । क्व ? **इह** नृभवे । किंविशिष्टः । **वराको** नानादुःखपारतन्त्र्यादनुकंप्यः । किंविशिष्टमङ्गम् ? **दोषाद्यात्म** । दोषा वातपित्तकफाः । धातवो रसासृङ्मांसमेदोस्थिमज्जशुक्राणि । मला विण्मूत्रप्रस्वेददूषिकादयः । दोषा आदयो येषां धात्वादीनां ते दोषादय आत्मा स्वभावो यस्य तदेवम् । दोषधातुमलस्वभावमित्यर्थः । पुनः किंविशिष्टम् ? **अनिशार्तं**ऽनिशं नित्यमार्तमातुरम् । नित्यदुःखितमित्यर्थः । तस्यैव पूर्वभवमरणात् प्रभृति देहग्रहणं यावदवस्थां वक्तुमाह—प्रागित्यादि । किंविशिष्टः सन् ग्राह्यतेङ्गं ना ? **पिण्डितः** संकुचितप्रदेशः । किं कुर्वन् ? **वित्रसन्** विविधमुद्विज्यमानः । कस्मात् ? **प्रतिभयभवनाद्**

निम्नोन्नतादिप्रदेशे क्षोभकारणान्मातुः संचरणात् । किं कुर्वन् ? अश्नन् आहरन् । किं तत् ? तन्निगीर्णान्नपानं तया नार्या निगीर्णमाहृतमन्नं पानं च । कया ? गृद्ध्या अभिकाङ्क्षया । किंविशिष्टः सन् ? क्षुत्तृषार्तः क्षुधातृष्णाभ्यां पीडितः । किं कृत्वा विधिना अंगं ग्राह्यते ? आहार्यं ग्राहयित्वा । किं तत् ? शुक्रार्तवं रेतःश्रोणितम् । किंविशिष्टम् ? अशुचितरं, पृथगवस्थाशुचिनो मिलितावस्थस्य भृशमशुचित्वात् । किं कृत्वा ? संचार्य प्रवेश्य । क ? उदरावस्करे जठरवर्चोगृहे । कस्याः ? नार्याः स्त्रियाः । कथम् ? अह्नाय झटिति । किमवस्थोसौ तत्तदवस्थः क्रियत इत्याह—प्राङ्मृत्युक्लेशितात्मा द्रुतगतिश्चेति । प्रागमृत्युना पूर्वभवमरणेन क्लेशितः क्लेशं प्रापित आत्मा स्वरूपं यस्य । तथा द्रुता एकद्वित्रिसमयभावित्वाच्छीघ्रा गतिः शरीरान्तरग्रहणाय गमनं यस्य एकद्वित्रिसमयं प्राप्य गन्तव्यस्थान इत्यर्थः । तथा द्रुता नष्टा गतिरर्थग्रहणव्यापारलक्षण उपयोगो यस्यासौ द्रुतगतिः । विग्रहगतेरुपयोगः प्रसिद्धः । भवतश्चात्र पद्यौ—

> कललकलुषस्थिरत्वं पृथग्दशाहेन बुद्बुदोथ घनः ।
> तदनु ततः पलपेश्यथ क्रमेण मासेन पञ्चपुलकमतः ॥
> चर्मनखरोमसिद्धिः स्यादङ्गोपाङ्गसिद्धिरथ गर्भे ।
> स्पन्दनमष्टममासे नवमे दशमेथ निःसरणम् ॥

गर्भप्रसवक्लेशमाह—

**गर्भक्लेशानुद्रुतेर्विद्रुतो वा निन्द्यद्वारेणैव कृच्छ्राद्विवृत्त्य ।**
**निर्यंस्तत्तद्दुःखदत्त्याऽकृतार्थो नूनं दत्ते मातुरुग्रामनस्यम् ६५**

दत्ते संपादयति । किं तत् ? उग्रामनस्यं रौद्रं प्रसूतिजं दुःखम् । कस्याः ? मातुर्जनन्याः । अत्रोत्प्रेक्षामाह—तदित्यादि । नूनमहमेवं मन्ये अकृतार्थोसावऽसंपूर्णमनोरथः । कया ? तत्तद्दुःखदत्त्या गर्भावतरणक्षणात्प्रभृति बाधासंपादनेन । किं कुर्वन् ? निर्यन् निर्गच्छन् । केन ? निन्द्यद्वारेणैव शुक्रार्तववाहिनैव मार्गेण । कस्मात् ? कृच्छ्रात् कष्टेन । किं कृत्वा ? विवृत्त्य अधोमुखो भूत्वा । अत्रोत्प्रेक्षामाह—विद्रुतो वा वित्रस्त इव । कुतः ? गर्भक्लेशानुद्रुतेर्गर्भदुःखानामनुधावनात् ।

जन्मानन्तरभाविक्लेशं भावयति—

जातः कथंचन वपुर्वहनश्रमोत्थ,—
दुःखप्रदोच्छ्वसनदर्शनसुस्थितस्य ।
जन्मोत्सवं सृजति बन्धुजनस्य यावद्,
यास्तास्तमाशु विपदोनुपतन्ति तावत् ॥ ६६ ॥

**अनुपतन्ति** व्याप्नुवन्ति । काः ? **विपद** आपदः । किंविशिष्टाः ? **यास्ताः** प्रसिद्धाः फुल्लिकान्तगोपिकाप्रभृतयः । कम् ? **तं** जातमात्रमनुष्यम् । कथम् ? **आशु** शीघ्रम् । कथम् ? **तावत्**। यावत्किम् ? **यावत्सृजति** करोति जातमात्रो मर्त्यः । कम् ? **जन्मोत्सवं** जननानन्दम् । कस्य ? **बन्धुजनस्य** । किंविशिष्टस्य ? **वपुरित्यादि** । वपुषः शरीरस्य वहनेन श्रमः खेदो वपुर्वहनश्रमः । तस्मादुत्था उत्थानं यस्य तत्तदुत्थम् । तच्च तद्दुःखप्रदं च वपुर्वहनश्रमोत्थदुःखप्रदम् । तच्च तदुच्छ्वसनमुच्छ्वासः । तस्य दर्शनमुपलम्भः । तेन सुस्थितस्य समाश्वसितस्य । किंविशिष्टः सन् ? **जातः** प्रसूतः । कथम् ? **कथंचन** महता कष्टेन ।

बाल्यं जुगुप्सते—

यत्र क्वापि धिगत्रपो मलमरुन्मूत्राणि मुञ्चन्मुहु,—
र्यत्किंचिद्वदनेर्पयन् प्रतिभयं यस्मात्कुतश्चित्पतन् ।
लिम्पन्स्वाङ्गमपि स्वयं स्वशकृता लालाविलास्योऽहिते,
व्यापिद्धो हतवद्रुदन् कथमपि-च्छिद्येत बाल्यग्रहात् ॥६७॥

**छिद्येत** वियुज्येत मुक्तो भवेत् । कोसौ ? मर्त्यः । कस्मात् ? **बाल्यग्रहात्** शैशवग्रहावेशात् । कथम् ? **कथमपि** महता कष्टेन । किं कुर्वन् ? **मुञ्चन्** विसृजन् । कानि ? **मलमरुन्मूत्राणि** पुरीषाधोवातप्रश्रावान् । क्व? **यत्र क्वापि** अनियतस्थानशयनासनादौ । किंविशिष्टः ? **अत्रपो** निर्लज्जो यतः । कथम् ? **मुहुर्वारंवारम्** । कथम् ? **धिग्** निन्द्यम् । तथाऽर्पयन् प्रवेशयन् । किं तत् ? **यत्किञ्चिद्** भक्ष्यमभक्ष्यं वा । क्व ? **वदने** मुखे । तथा **पतन्** गच्छन् । किं तत् ? **प्रतिभयमतार्कितोपस्थितत्रासम्** । क-

स्यात्? **यस्मात्कुतश्चित्** पतद्भाजनशब्दादेः। तथा **लिम्पन्** उपदिहानः। किं तत्? **स्वाङ्गं** निजदेहम्। किं पुनरासनादिकमित्य**पि**शब्दार्थः। केन? **स्वशकृता** निजपुरीषेण। कथम्? **स्वयम**ात्मना। तथा **रुदन्** रोदनं कुर्वन्। किंवत्? **हतवत्** ताडित इव। किंविशिष्टः सन्? **व्याषिद्धो** निषिद्धः। क? **अहिते** मृद्भक्षणादौ। कथंभूतो भूत्वा? **लालाविलास्यो** लालाभिस्थूत्कस्तवैराविलं कलुषमास्यं मुखं यस्य।

कौमारं तिरस्करोति—

**धूलीधूसरगात्रो धावन्नवटाश्मकण्टकादिरुजः।**
**प्राप्तो हसत्सहेलकवर्गममर्षन् कुमारः स्यात् ॥ ६८ ॥**

**स्यात्**। कोसौ? **कुमारो** बाल्ययौवनान्तर्वयोवर्तिमर्त्यः। किं कुर्वन्? **अमर्षन्** ईर्ष्यन्। कम्? **हसत्सहेलकवर्गम्**। हसन्तश्च ते सहेलकाश्च सहक्रीडितारो डिम्भाः। तेषां वर्गं समूहम्। किंविशिष्टः सन्? **प्राप्तः**। काः? **अवटाश्मकण्टकादिरुजः**। अवटो गर्तः। अश्मानः पाषाणाः। कण्टकस्तीक्ष्णशल्यम्। आदिशब्दात्काष्ठशर्करादयः। तेषां रुजस्तत्कृताः पीडाः। किं कुर्वन्? **धावन्** वेगेन गच्छन्। कथंभूतो भूत्वा? **धूलीधूसरगात्रो** रथ्यारजःपाण्डुरितशरीरः।

यौवनमपवदति—

**पित्रोः प्राप्य मृषामनोरथशतैस्तारुण्यमुन्मार्गगो,**
**दुर्वारव्यसनाप्तिशङ्किमनसोर्दुःखार्चिषः स्फारयन्।**
**तत्किंचित्प्रखरस्मरः प्रकुरुते येनोद्धधाम्नः पितॄन्,**
**क्लिश्नन् भूरिविडम्बनाकलुषितो धिग्दुर्गतौ मज्जति ६९**

**प्रकुरुते** आचरति। कोसौ? युवा। किं तत्? **तत्किंचिद**ऽवाच्यं कर्म। किंविशिष्टः सन्? **प्रखरस्मर**स्तीव्रकामवेगार्तः। किं कुर्वन्? **स्फारयन्** विस्तारयन्। काः? **दुःखार्चिषो** दुःखज्वालाः। कयोः? **पित्रो**र्जननीजनकयोः। किंविशिष्टयोः? **दुर्वारव्यसनाप्तिशङ्किमनसोः**। दुर्वारं वारयितुमशक्यं व्यसनं विनिपातः। तस्याप्तिः प्रतिलम्भः। तां शङ्कते त-

च्छीलं मनो ययोः। किं कृत्वा? प्राप्य आसाद्य। किं तत्? तारुण्यं यौवनम्। कैः? पित्रोरेव मृषामनोरथशतैः। मनोरथा इदमिदमस्याऽस्माद्वा संपत्स्यते इति चेतसासकृदावर्तमाना असंभाव्यप्राप्तयोर्थाः। मृषा मिथ्यारूपा मनोरथाः तेषां शतैः समूहैः। किंविशिष्टो यतः? उन्मार्गगस्त्रिवर्गप्रतीपाचरणनिष्ठः। येन किम्? येन दुराचारेण मज्जति ब्रुडति निरुच्छ्वासं पतति। क्व? दुर्गतौ दारिद्र्ये नरके वा। कथम्? धिक्। किंविशिष्टः सन्? भूरिभिबह्वीभिर्विडम्बनाभिः खरारोपणादिविगोपकैः कलुषितः संक्लिष्टचित्तो यः स भूरिविडम्बनाकलुषितः। किं कुर्वन्? क्लिश्नन् विबाधमानः। कान्? पितॄन् पितामहादीन्। किंविशिष्टान्? उद्धधाम्नो विपुलतेजस्कान् प्रशस्तस्थानान्वा।

तारुण्येप्यविकारिणः प्रणौति—

धन्यास्ते स्मरवाडवानलशिखादीप्रः प्रवल्गद्बल,—
क्षाराम्बुर्निरवग्रहेन्द्रियमहाग्राहोभिमानोर्मिकः।
यैर्दोषाकरसंप्रयोगनियतस्फीतिः स्वसाच्चक्रिभि,—
स्तीर्णो धर्मयशःसुखानि वसुवत्तारुण्यघोरार्णवः ॥७०॥

ते नरा धन्याः। तेभ्यः श्लाघामहे इत्यर्थः। यैः किम्? यैस्तीर्णो। लङ्घितः पश्चात्कृतः। कोसौ? तारुण्यघोरार्णवः। तारुण्यं घोरो भयङ्करोऽर्णवः समुद्र इव। किं कुर्वाणैः? स्वसाच्चक्रिभिरात्मायत्तानि कुर्वाणैः। कानि? धर्मयशःसुखानि। किंवत्? वसुवद् धनानि यथा। किंविशिष्टोसौ? स्मरेत्यादि। स्मरः कामो वाडवानल इव, जलस्येव शरीरस्य शोषकत्वात्। तस्य शिखा ज्वालाः। ताभिर्दीप्रो दीपनशीलः। तथा प्रवलाद्बलक्षाराम्बुः। बलं वीर्यं क्षाराम्बु लवणजलमिवाहृद्यत्वाद् बलक्षाराम्बु। प्रवल्गात् प्रकर्षेण सदर्पमुद्यद् बलक्षाराम्बु यस्य। तथा नीत्यादि। निरवग्रहा निरङ्कुशचारिण इन्द्रियमहाग्रहा अक्षबृहज्जलचरा यस्मिन्। तथाऽभिमाना ऊर्मय इवानियतोत्थानत्वाद् यस्मिन् सोभिमानोर्मिकः। तथा दोषाकरसंप्रयोगनियतस्फीतिः। दोषाकरो दुर्जनश्चन्द्रश्च। स्फीतिः प्रतिपत्तिर्वृद्धिश्च। दोषाकरस्य संप्रयोगः संगतिः। तेन नियताऽव-

श्यंभाविनी स्फीतिर्यस्य । स्फीतिशब्दोऽप्युत्पन्नः । तथा च लक्ष्यः स्वस्फीतिव्याप्तवसुमतीसीमः ।

इदानीं मध्यावस्थामेकादशभिः पद्यैर्धिक्कुर्वाणः प्रथमं तावदपत्यपोषणाकुलमतेर्धनार्थितया कृष्यादिपरिक्लेशमालक्षयति—

यत्कन्दर्पवशंगतो विलसति स्वैरं स्वदारेष्वपि,
प्रायोऽहंयुरितस्ततः कटु ततस्तुग्धाटको धावति ।
अप्यन्यायशतं विधाय नियमाद्भर्तुं यमिद्धाग्रहो,
वार्धिष्णवा द्रविणाशया गतवयाः कृष्यादिभिः प्लुष्यते॥७१॥

**धावति** त्वरया प्रवर्तते । कोसौ ? **तुग्धाटक**स्तुजामपत्यानां धाटकोऽवस्कन्दः । धाटीति यावत् । कथम् ? **इतस्ततो** यत्र तत्र स्वार्थे । कथंकृत्वा ? **कटु** अनिष्टम् । कथम् ? **प्रायो** बाहुल्येन । किंविशिष्टोसौ यतः ? **अहंयुर**हंकाराविष्टः । कस्मात् ? **ततस्**तस्मात् । यत्किम् ? **यद्विलसति** क्रीडति । कोसौ ? युवा । केषु ? **स्वदारेषु** धर्मपत्न्याम् । किं पुनर्भोगपत्न्यामित्यपिशब्दार्थः । कथम् ? **स्वैरं** स्वच्छन्दम् । किंविशिष्टः सन् ? **गतः** प्राप्तः । कम् ? **कन्दर्पवशं** कामाधीनत्वम् । कामलक्षणं यथा—

संकल्परमणीयस्य प्रीतिसंभोगशोभिनः ।
रुचिरस्याभिलाषस्य नाम काम इति स्मृतम् ॥

यं तुग्धाटकं भर्तुकामः कीदृशः क्रियते इत्याह—**प्लुष्यते** दह्यते । कोसौ ? **गतवया**स्तारुण्यमतीतः पुमान् । कैः ? **कृष्यादिभिः** कृषिपशुपाल्यादिकर्मभिः । कया ? **द्रविणाशया** धनलिप्सया । किंविशिष्टया ? **वार्धिष्णवा** वर्धनशीलया । किंविशिष्टः सन् ? **इद्धाग्रहो** दीप्ताभिनिवेशः । किं कर्तुम् ? **भर्तुं** पोषयितुम् । कम् ? **यं** तुग्धाटकम् । कस्मात् ? **नियमाद**वश्यंभावात् । किं कृत्वा ? **विधाय** कृत्वा । किं तत् ? **अन्यायशतम्** । अन्यायः स्वामिद्रोहमित्रद्रोहविश्वसितवञ्चनचौर्यादिभिरर्थार्जनम् । अन्यायानां शतं बहुत्वमन्यायशतम् । तदपि कृत्वा, न परं न्यायमित्यपिशब्दार्थः ।

कृषिपशुपाल्यवणिज्याभिरुभयलोकभ्रंशं दर्शयति—

**यत्संभूय कृषीवलैः सह पशुप्रायैः खरं खिद्यते,**
**यद्व्यापत्तिमयान् पशूनवति तद्देहं विशन् योगिवत् ।**
**यन्मुष्णाति वसून्यसूनिव ठकक्रूरो गुरूणामपि,**
**भ्रान्तस्तेन पशूयते विधुरितो लोकद्वयश्रेयसः ॥ ७२ ॥**

**पशूयते** पशुमिवात्मानमाचरति । कोसौ ? **भ्रान्तो** विपर्यस्तमतिर्गतवयाः। किंविशिष्टो यतः ? **विधुरितो** वियोजितः। कस्मात् ? **लोकद्वयश्रेयस** ऐहिकामुत्रिककल्याणात् । केन ? **तेन** कर्षणादिकर्मत्रयेण । यत्किम् ? **यत्खिद्यते** श्राम्यति । कोसौ ? **गतवयाः** । कथम् ? **खरं** तीव्रम् । किं कृत्वा ? **संभूय** मिलित्वा । कथम् ? **सह** । कैः ? **कृषीवलैः** कर्षकैः । किं विशिष्टैः ? **पशुप्रायै**राहारादिसंज्ञापन्नत्वाद्गवादितुल्यैः । **यच्चावति** रक्षति गतवयाः । कान् ? **पशू**नजाश्वोष्ट्रादीन् । किंविशिष्टान् ? **व्यापत्तिमयान्**। व्यापत्तयः प्रचुरा येषु । विविधविपत्प्रचुरानित्यर्थः । किं कुर्वन् ? **विशन्** प्रविशन् । किम् ? **तद् देहं** तेषां पशूनां शरीरम् । किंवत् ? **योगिवत्** । यथारब्धयोगः परपुरप्रवेशं करोति तथायमपीत्यर्थः । **यच्च मुष्णा**त्यसौ । कानि ? **वसूनि** धनानि । केषाम् ? **गुरूणां** दीक्षकाचार्यमातापित्रादीनाम् । न परमितरेषामित्य**पि**शब्दार्थः । कानिव ? **असूनिव** प्राणतुल्यान् । किंविशिष्टो यतः ? **ठकक्रूरः** । ठकः खारपटः । तद्वत्क्रूरो नृशंसः ।

धनलुब्धस्य देशान्तरवाणिज्यमपवदति—

**यत्र तत्र गृहिण्यादीन्मुक्त्वापि स्वान्यनिर्दयः ।**
**न लङ्घयति दुर्गाणि कानि कानि धनाशया ॥ ७३ ॥**

**कानि कानि दुर्गा**ण्यटवीगिरिसरिदादीनि **न लङ्घयति** नातिक्रामति ? सर्वाण्यपि लङ्घयतीत्यर्थः । कः ? गतवयाः । कया ? **धनाशया**। किंकृत्वा ? **मुक्त्वा** त्यक्त्वा । कान् ? **गृहिण्यादीन्** भार्यापत्यमात्रादीन् । क्व ? **यत्र तत्र** अपरीक्षितेपि स्थाने । **अपि**शब्दात्सह गृहीत्वापि । कथंभूतो भूत्वा ? **स्वान्यनिर्दय** आत्मनि सहायपरिजनपश्वादिषु च कृपामकृत्वा । क्षुत्पिपासाशीतोष्णादिभिः पीडयित्वेत्यर्थः ।

वृद्ध्याजीवं विचिकित्सति—

वृद्धिलुब्ध्याधमर्णेषु प्रयुज्यार्थान् सहासुभिः ।
तदापच्छङ्कितो नित्यं चित्रं वार्धुषिकश्चरेत् ॥ ७४ ॥

चित्रमाश्चर्यमिदं यच्चरेद् व्याप्रियेत् । कोसौ ? वार्द्धुषिको वृद्ध्याजीवः । किंविशिष्टः सन् ? नित्यं तदापच्छङ्कितो नित्यं शश्वत् तस्याधमर्णस्यापत्सु शङ्कितः संजातशङ्कः । किं कृत्वा ? प्रयुज्य न्यस्य । कान् ? अर्थान् धनानि । केषु ? अधमर्णेषु धारणिकेषु । कया ? वृद्धिलुब्ध्या कलान्तरलोभेन । कथम् ? सह । कैः ? असुभिः प्राणैः । यः किल परत्र प्राणान् प्रयुङ्क्ते स कथं स्वयं चरतीति चित्रमित्यनुद्योत्यते ।

सेवां गर्हते—

स्वे सद्वृत्तकुलश्रुते च निरनुक्रोशीकृतस्तृष्णया,
स्वं विक्रीय धनेश्वरे रहितवीचारस्तदाज्ञावशात् ।
वर्षादिष्वपि दारुणेषु निबिडध्वान्तासु रात्रिष्वपि,
व्यालोग्रास्वटवीष्वपि प्रचरति प्रत्यन्तकं यात्यपि ॥ ७५ ॥

प्रचरति प्रसर्पति । कोसौ ? सेवकः । केषु ? वर्षादिषु प्रावृट्शीतोष्णकालेषु । किंविशिष्टेषु ? दारुणेष्वपि भीष्मेष्वपि । तथा रात्रिषु प्रचरति । किंविशिष्टासु ? निबिडध्वान्तास्वपि शूचीमुखाग्रनिर्भेद्यान्धकारास्वपि । तथाऽटवीष्वरण्येषु प्रचरति । किंविशिष्टासु ? व्यालोग्रास्वपि श्वापदभुजगरौद्रास्वपि । न केवलं तत्र तत्र प्रचरति, यात्यपि गच्छति च सेवकः । कम् ? प्रत्यन्तकं यमाभिमुखम् । कस्मात् ? तदाज्ञावशाद् धनेश्वरादेशपारवश्यात् । किंविशिष्टः सन् ? रहितवीचारस्त्यक्तयुक्तायुक्तविवेकः । किं कृत्वा ? विक्रीय आयत्तं कृत्वा । कम् ? स्वमात्मानम् । कस्मिन् ? धनेश्वरे वित्तपतौ नृपत्यादौ । किंविशिष्टो यतः ? निरनुक्रोशीकृतो निर्दयीकृतः । कया ? तृष्णया लोभेन । क्व ? स्वे आत्मनि । न केवलं स्वे, सद्वृत्तकुलश्रुते च सदाचारेऽभिजने शास्त्रे च ।

कारुकर्मादीन् प्रतिक्षिपति—

**चित्रैः कर्मकलाधर्मैः परासूयापरो मनः ।**
**हर्तुं तदर्थिनां श्राम्यत्यार्तपोष्येक्षितायनः ॥ ७६ ॥**

**श्राम्यति** खिद्यते । कोसौ ? शिल्पाद्याजीवनः पुमान् । कैः ? **कर्मकलाधर्मैः** कर्माणि काष्ठघटनादीनि । कला गीतनृत्यादयः । धर्मो मूल्येन पुस्तकवाचनादिः । कर्माणि च कलाश्च धर्मश्चेति द्वन्द्वः । किंविशिष्टैः ? **चित्रैर्**नानाप्रकारैराश्चर्यकरैर्वा । किं कर्तुम् ? **हर्तुं** रञ्जयितुम् । किं तत् ? **मन**श्चित्तम् । केषाम् ? **तदर्थिनां** कर्माद्याकाङ्क्षिणाम् । किंविशिष्टः सन् ? **परासूयापरः** परेषु कर्माद्याजीवेष्वसूया गुणेष्वपि दोषारोपणं, सा परा प्रधानं यस्य । पुनः किंविशिष्टः ? **आर्तपोष्येक्षितायनः** आर्तैः क्षुधापीडितैः पोष्यैः कलत्रपुत्रादिभिरीक्षितं गवेषितमयनं मार्गो यस्य स तथोक्तः ।

कारुकदुरवस्थाः कथयति—

**आशावान् गृहजनमुत्तमर्णमन्या-**
**नप्याप्तैरिव सरसो धनैर्धिनोति ।**
**छिन्नाशो विलपति भालमाहते स्वं**
**द्वेष्टीष्टानपि परदेशमप्युपैति ॥ ७७ ॥**

**धिनोति** प्रीणयति । कोसौ ? कारुकः । कम् ? **गृहजनं** भार्यादिलोकं तथो**त्तमर्णं** धनिकं तथा**न्यानपि** संबन्धिसुहृदादीन् । कैः ? **धनैर्**द्रव्यैः । किंविशिष्टैः ? **आप्तैरिव** हस्तगतैर्यथा । किंविशिष्टः सन् ? **आशावान्** भविष्यदर्थवाञ्छावान् । अद्य श्वो वा लप्स्येहं कर्मादिमूल्यमिति प्रत्याशायुक्तः । पुनः किंविशिष्टः ? **सरसः** सहर्षः । **छिन्नाशः** खण्डितप्रत्याशः पुनरसौ **विलपति** परिदेवनं करोति, तथाऽऽ**हते** ताडयति । किं तत् ? **भालं** निलाटम् । किंविशिष्टम् ? **स्वं** निजम् । "आङो यमहनः स्वाङ्गकर्मकौ च" इत्यात्मनेपदम् । तथा **द्वेष्टि** द्वेषविषयान् करोति । कान् ? **इष्टानपि** प्रेयान् कलत्रादीन् । तथा **परदेशमप्युपैति** देशान्तरमपि गच्छति ।

असौ देशान्तरेपि धनाशया पुनः खिद्यते इत्याह—

**आशया जीवति नरो न ग्रन्थावपि बद्धया ।**
**पञ्चाशतेत्युपायज्ञस्ताम्यत्यर्थाशया पुनः ॥ ७८ ॥**

**ताम्यति** खिद्यते । कोसौ ? **उपायज्ञः** कर्मादिजीवनोपायवित् कारुकः । कया ? **अर्थाशया** । कथम् ? **पुनर्भूयः** । कथम् ? **इति** एवं लोकोक्त्या **जीवति** । कोसौ ? **नरः** । कया ? **आशया** । **न** जीवति । कोसौ ? नरः । कया ? **पञ्चाशता** द्रम्माणाम् । किंविशिष्टया ? **बद्धया** । क्व ? **ग्रन्थावपि** वस्त्राञ्चलबन्धनेपि ।

इष्टलाभेपि तृष्णानुपरतिं दर्शयति—

**कथं कथमपि प्राप्य किंचिदिष्टं विधेर्वशात् ।**
**पश्यन् दीनं जगद्विश्वमप्यधीशितुमिच्छति ॥ ७९ ॥**

**इच्छति** वाञ्छति । कोसौ ? पुरुषः । किं कर्तुम् ? **अधीशितुं** स्वाधीनं कर्तुम् । किं तत् ? **जगत्** । किंविशिष्टम् ? **विश्वमपि** समस्तमपि । किं कुर्वन् ? **पश्यन्नी**क्षमाणः । किं तत् ? विश्वमपि जगत् । किंविशिष्टम् ? **दीनं** स्वस्माद्धीनम् । किं कृत्वा ? **प्राप्य** । किं तत् ? **किंचित्** किमपीष्टं वाञ्छितम् । कथं ? **कथं कथमपि** अतिमहता कष्टेन । कस्मात् ? **वशात्** सामर्थ्यात् । कस्य ? **विधेः** पुराकृतशुभकर्मणः ।

साधितधनस्यापरापरा विपदो दर्शयति—

**दायादाद्यैः क्रूरमावर्त्यमानः**
**पुत्राद्यैर्वा मृत्युना छिद्यमानः ।**
**रोगाद्यैर्वा बाध्यमानो हताशो**
**दुर्दैवस्य स्कन्धकं धिग्बिभर्ति ॥ ८० ॥**

**धिक्** खेदे । **बिभर्ति** धरति ? कोसौ ? मध्यावस्थो मर्त्यः । किं तत् ? **स्कन्धकं** कालनियमेन देयमृणम् । कस्य ? **दुर्दैवस्य** दुर्विधेः । किंविशिष्टः

सन् ? **हताशश्छिन्नप्रत्याशः** । किं क्रियमाणः ? **आवर्त्यमानः** । लङ्घनादिना पुनः पुनः कदर्थ्यमानः । कैः ? **दायादाद्यैर्भ्रातृभागिनेयादिभिः** । कथम् ? **क्रूरं** कर्कशम् । **वा** अथवा **छिद्यमानो** वियोज्यमानः । कैः सह ? **पुत्राद्यैः** । केन ? **मृत्युना** अन्तकेन । **वा** अथवा **बाध्यमानः** पीड्यमानः । कैः ? **रोगाद्यैर्व्याधिवन्दिकारादिभिः** ।

मध्यवयसो विपद्भिररतिं जीवितोपरतिं च निरूपयति—

**पिपीलिकाभिः कृष्णाहिरिवापद्भिर्दुराशयः ।**
**दंदश्यमानः क्व रतिं यातु जीवतु वा कियत् ॥ ८१ ॥**

**क्व** स्थानासनादौ ? न क्वापि । **यातु** प्राप्नोतु । कोसौ ? मध्यावस्थः पुमान् । काम् ? **रतिम्** । किं क्रियमाणः ? **दंदश्यमानो** गर्हितं खाद्यमानः । काभिः ? **आपद्भिर्विपद्भिः** । क इव काभिः ? **पिपीलिकाभिः** कीटिकाभिः **कृष्णाहिरिव** कृष्णसर्पो यथा । अत एव **दुराशयः** संक्लिष्टचित्तो **जीवतु वा कियत्** कियच्चिरं प्राणितु ।

पलितोद्भवदुःखमालक्षयति—

**जराभुजङ्गीनिर्मोकं पलितं वीक्ष्य वल्लभाः ।**
**यान्तीरुद्वेगमुत्पश्यन्नप्यपैत्योजसोन्वहम् ॥ ८२ ॥**

**अपैति** प्रच्यवति । कोसौ ? वार्द्धिक्याभिमुखः पुमान् । कस्मात् ? **ओजसः** शुक्रान्तधातुपरमतेजसः । कथम् ? **अन्वहं** दिने दिने । किं कुर्वन् ? **उत्पश्यन्नु**त्प्रेक्षमाणः । किं पुनर्निश्चिन्वन्नित्य**पि**शब्दार्थः । काः ? **वल्लभाः** प्रियाः । किं कुर्वन्तीः ? **यान्तीर्ग**च्छन्तीः । कथम् ? **उद्वेगं** विरागम् । किं कृत्वा ? **वीक्ष्य** । किं तत् ? **पलितं** शुक्लकेशम् । किंविशिष्टम् ? **जराभुजङ्गीनिर्मोकम्** । जरा विस्रसा भुजङ्गी सर्पीव नित्यातङ्कहेतुत्वात् । तस्या निर्मोकं कञ्चुकम् । वीक्ष्योत्पश्यन्निति वा योज्यम् । अत्रौजसः प्रच्यवः प्रियाविरागसंभावनान्निश्चेयः । तथा चोक्तम्—

**"ओजः क्षीयेत कोपक्षुद्ध्यानशोकश्रमादिभिः ।" इति ।**

जरानुभावं भावयति—

विस्रसोद्देहिका देहवनं नृणां यथा यथा ।
चरन्ति कामदा भावा विशीर्यन्ते तथा तथा ॥ ८३ ॥

यथा यथा चरन्ति भक्षयन्ति । काः ? विस्रसोद्देहिका विस्रसा जरा उद्देहिकाः क्षुद्रजन्तव इव । किं तत् ? देहवनम् । देहो वनमाराम इव यत्नपोष्यपाल्यत्वात् । केषाम् ? नृणां मनुष्याणाम् । तथा तथा विशीर्यन्ते स्वयमेव विनश्यन्ति । के ते ? भावाः सौन्दर्यबलोपचयादयः पल्लवपुष्पफलादयश्च । किंविशिष्टाः ? कामदाः कन्दर्पोद्दीपका मनोरथपूरकाश्च ।

जरातिव्याप्तिं चिन्तयति—

प्रक्षीणान्तःकरणकरणो व्याधिभिः सुष्ठ्वाधि,—
स्पर्द्धाद्दग्धः परिभवपदं याप्यकम्प्राऽक्रियाङ्गः ।
तृष्णेर्ष्याद्यैर्विलगितगृहः प्रस्खलद्द्वित्रदन्तो,
ग्रस्येताद्धा विरस इव न श्राद्धदेवेन वृद्धः ॥ ८४ ॥

न ग्रस्येत न भक्ष्येत । कोसौ ? वृद्धो जरातिव्याप्तिमान् । केन ? श्राद्धदेवेन यमेन । कथम् ? अद्धा झटिति । किंविशिष्ट इव ? विरस इव विरूपस्वाद्य इव । यः किल विरसाहारः स्यात् स श्राद्धदेवेन क्षयाहभोज्यब्राह्मणेन झगिति न भुज्यते इत्युक्तिलेशः । किंविशिष्टो वृद्धः ? प्रक्षीणानि प्रक्षेतुमारब्धानि विनाशोन्मुखानि अन्तःकरणं मनः करणानि चेन्द्रियाणि यस्यासौ प्रक्षीणान्तःकरणकरणः । तथा दग्धो निःसारीकृतः । कैः ? व्याधिभिः कासश्वासादिभिः । कथम् ? सुष्ठु अत्यर्थम् । कस्मादिव ? आधिस्पर्द्धादिव मनोदुःखैः सह स्पर्द्धया यथा । तथा परिभवपदं तिरस्कारस्थानम् । तथा याप्यकम्प्राक्रियाङ्गः । याप्यानि कुत्सितानि कम्प्राणि कम्पनशीलानि अक्रियाणि अकर्माणि अङ्गानि हस्तपाद्यवयवा यस्य । तथा विलगितगृह उपतप्तकलत्रादिलोकः । कैः ? तृष्णेर्ष्याद्यैरतिलोभाऽक्षमादुर्वचनादिभिः । तथा प्रस्खलद्द्वित्रदन्तः प्रस्खलन्तः प्रचलन्तो द्वौ वा त्रयो वा दन्ता यस्य ।

तादृग्दुष्टमपि मानुषत्वं परमसुखफलधर्माङ्गत्वेन सर्वोत्कृष्टं विदध्यादिति शिक्षयति—

बीजक्षेत्राहरणजननद्वाररूपाशुचीदृग्,—
दुःखाकीर्णं दुरसविविधप्रत्ययातर्क्यमृत्यु ।
अल्पाग्रायुः कथमपि चिराल्लब्धमीदृग् नरत्वं,
सर्वोत्कृष्टं विमलसुखकृद्धर्मसिद्ध्यैव कुर्यात् ॥ ८५ ॥

कुर्याद् विदध्यात् सुधीः । किं तत् ? **नरत्वं** मनुष्यत्वम् । किंविशिष्टम् ? **सर्वोत्कृष्टं** सर्वेभ्यो देवत्वादिपर्यायेभ्य उत्तमम् । कथा ? **विमलसुखकृद्धर्मसिद्ध्या** । विमलं दुःखावहपापानुषङ्गरहितं सुखं शर्म करोतीति विमलसुखकृत् । स चासौ धर्मश्च । तस्य सिद्ध्या साधनेन । तयैव नान्यथाभूतधर्मार्थकामसाधनेन । किंविशिष्टं सत् ? **कथमपि चिराल्लब्धं** महता कष्टेन बहुतरकालात्प्राप्तम् । कथं कृत्वा ? **ईदृक्** सद्धर्माङ्गजातिकुलाद्युपेतम् । स्वरूपतस्तर्हि कीदृग्नरत्वमित्याह—बीजेत्यादि । बीजं शुक्रार्तवम् । क्षेत्रं मातृगर्भः । आहरणं मातृनिगीर्णान्नपानम् । जननद्वारं शुक्रार्तवपथः । रूपं दोषाद्यात्मकत्वसद्धातुरत्वम् । बीजं च क्षेत्रं चाहरणं च जननद्वारं च रूपं चेति द्वन्द्वे, तैरशुचि अमेध्यम् । तथेदृग्**दुःखाकीर्णम्** । ईदृशं गर्भादिवार्द्धक्यान्तानि दुःखानि ईदृग्दुःखानि । तैराकीर्णं व्याप्तम् । तथा **दुरसविविधप्रत्ययातर्क्यमृत्यु** । दुरसो दुर्णिवारो विविधप्रत्ययो व्याधिशस्त्राशनिपातादिहेतुकोऽतर्क्यो देशकालादिभिरनिरूप्यागमनो मृत्युर्मरणं यस्मिन् । तथा**ऽल्पाग्रायुः** अल्पं स्तोकमग्रं परमायुर्यत्र । इह हीदानीं मनुष्याणामुत्कर्षेणापि विंशं वर्षशतं जीवितमाहुः ।

जीवस्य त्रसादीनां यथोत्तरदुर्लभत्वं चिन्तयति—

जगत्यनन्तैकहृषीकसंकुले त्रसत्वसंज्ञित्वमनुष्यतार्यताः ।
सुगोत्रसद्गात्रविभूतिवार्तितासुधीसुधर्माश्च यथाग्रदुर्लभाः ८६

भवन्ति । के ? त्रसत्वादयः सुगोत्रादयश्च दश भावाः । किंविशिष्टाः ? **यथाग्रदुर्लभाः** । यद्यदग्रं पाठापेक्षयोत्तरं, यथाग्रं यथोत्तरम् । यथाग्रं

दुर्लभं दुष्प्रापं येषु । क्व ? **जगति** सर्वस्मिँल्लोके । किंविशिष्टे ? **अनन्तैकहृषीकसंकुले** एकं स्पर्शनाख्यं हृषीकमिन्द्रियं येषां ते एकहृषीका एकेन्द्रियाः पृथिव्यप्तेजोवायुवनस्पतिकायिका जीवा अनन्ता अनन्तपरिमाणाः । ते च ते एकहृषीकाश्च । तैः संकुले निरन्तरपूरिते । त्रसत्वं च द्वीन्द्रियादित्वं संज्ञित्वं च मनस्कत्वं मनुष्यता च मानुष्यमाऽऽर्यता चार्यत्वमिति द्वन्द्वः । तथा सुगोत्रं च सत्कुलं सद्गात्रं च सुशरीरं विभूतिश्च संपद् वार्तता चारोग्यं सुधीश्च सद्बुद्धिः सुधर्मश्च सद्धर्मश्चेति द्वन्द्वः । लोके हि जीवः स्वोपात्तकर्मोदयवशादेकेन्द्रियो भूयो भवन् कथंचिद् द्वीन्द्रियो भवति । द्वीन्द्रियत्वात्पुनरेकेन्द्रिय एव स्यात्, कथंचित् त्रीन्द्रियत्वं प्राप्नोति । एवं चतुरिन्द्रियत्वादावपि योज्यम् । त्रीन्द्रियत्वाच्चतुरिन्द्रियत्वं दुःखेन लभते; ततोऽसंज्ञिपञ्चेन्द्रियत्वं, ततः संज्ञिपञ्चेन्द्रियत्वं, तत्रापि नारकादित्वं ततोपि मनुष्यत्वं, तत्रापि म्लेच्छत्वं ततोप्यार्यत्वं, तत्रापि सुगोत्रं, तत्रापि सद्गात्रं, तत्रापि विभूतिं तत्राप्यारोग्यं, तत्रापि सद्बुद्धिं तत्रापि सम्यग्धर्मम् । इति यथोत्तरदुर्लभत्वं चिन्त्यम् ।

धर्माचरणे नित्योद्योगमुद्बोधयति—

**स ना स कुल्यः स प्राज्ञः स बलश्रीसहायवान् ।**
**स सुखी चेह चामुत्र यो नित्यं धर्ममाचरेत् ॥ ८७ ॥**

**यो** जीवो **नित्यं** सदा **धर्ममाचरेद**ऽनुतिष्ठेत् **स ना** पुमान् अन्यस्तु स्त्री नपुंसकं वा भवति । **स कुल्यः** कुलीनोऽन्यो दुष्कुलीनः । **स प्राज्ञः** प्रज्ञातिशयवानन्योऽप्राज्ञः । **स बलवान् श्रीमान् सहायवां**श्चान्योऽन्यथा । **स चेहामुत्र च सुखी** अन्यो लोकद्वयेपि दुःखी ।

धर्मार्जनविमुखस्य गुणान् प्रतिक्षिपति—

**धर्मं श्रुतिस्मृतिस्तुतिसमर्थनाचरणचारणानुमतैः ।**
**यो नार्जयति कथंचन किं तस्य गुणेन केनापि ॥ ८८ ॥**

किं कार्यम् ? केन ? **गुणेन** । किंविशिष्टेन ? **केनापि** पुंस्त्वकुलीनत्वादीनामन्यतमेन । कस्य ? **तस्य** । यः किम् ? **यो नार्जयति** नात्मसात्करोति । कम् ? **धर्मम्** । कैः ? **श्रुत्यादिभिः** । कथम् ? **कथंचन** केनापि

प्रकारेण श्रवणादीनां धर्मसाधनानां मध्ये एकेन द्व्यादिना वा । तत्र श्रुतिर्गुर्वादिभ्यो धर्मस्य श्रवणम् । स्मृतिरात्मना स्मरणम् । स्तुतिर्गुणसंकीर्तनम् । समर्थना युक्त्यनुगृहीतागमबलाद्व्यवस्थापनम् । चरणमनुष्ठानम् । चारणमनुष्ठापनम् । अनुमतमनुमोदनम् ।

ननु लोकादेवावगम्य धर्मशब्दार्थोनुष्ठाप्यते, तत्किं तदर्थप्रतिपादनाय शास्त्रकरणप्रयासेन ? इति वदन्तं प्रत्याह—

**लोके विषामृतप्रख्यभावार्थः क्षीरशब्दवत् ।**
**वर्तते धर्मशब्दोपि तत्तदर्थोनुशिष्यते ॥ ८९ ॥**

**वर्तते** व्यवहरति । कोसौ ? **धर्मशब्दोपि** । क ? **लोके** जगति । किंविशिष्टः ? **विषामृतप्रख्यभावार्थः** । भवतीति भावः पूर्वाकारपरित्यागाऽजहद्वृत्तोत्तराकारग्रहणलक्षणं वस्तु । विषं चामृतं च विषामृते । ताभ्यां प्रख्यस्तुल्यो भावोर्थोभिधेयं यस्य स तथोक्तः । किंवत् ? **क्षीरशब्दवत्** । अयमर्थो—यथा लोके क्षीरमिति शब्देन विषतुल्योऽर्कादिरसोऽमृततुल्यो गवादिरसश्चोच्यते तथा धर्म इति शब्देन दुर्गतिदुःखप्रदो हिंसादिलक्षणो विषतुल्योऽहिंसादिलक्षणश्चामृततुल्योर्थोभिधीयते । **तत्** तस्मात्तद्विवेकार्थमनुशिष्यते पारम्पर्योपदेशानुगतं व्युत्पाद्यतेस्माभिः । कोसौ ? **तदर्थो** धर्मशब्दार्थः ।

धर्मशब्दार्थं प्रव्यक्तीकरणार्थमाह—

**धर्मः पुंसो विशुद्धिः सुदृगवगमचारित्ररूपा स च स्वां,**
**सामग्रीं प्राप्य मिथ्यारुचिमतिचरणाकारसंक्लेशरूपम् ।**
**मूलं बन्धस्य दुःखप्रभवभवफलस्यावधुन्वन्नधर्मं,**
**संजातो जन्मदुःखाद्धरति शिवसुखे जीवमित्युच्यतेऽर्थात् ९०**

भवति । कोसौ ? **धर्मः** । किम् ? **विशुद्धिर्नैर्मल्यम्** । कस्य ? **पुंसो** जीवस्य । किंविशिष्टा ? **सुदृगवगमचारित्ररूपा** । दृक् च दर्शनमवगमश्च ज्ञानं चारित्रं च साम्यं दृगवगमचारित्राणि । शोभनानि मौढ्यसंशयमायादिविपर्यासपरित्यक्तत्वात्प्रशस्तानि संपूर्णानि वा **सुदृगवगमचारित्राणि** ।

तान्येव रूपं लक्षणं यस्याः सा तथोक्ता । **स च धर्म उच्यते** अभिधीयते **आप्तैरर्थात्** अर्थमभिधेयं परमार्थं वाश्रित्य । कथम् ? **इति** । किमिति ? **धरति** अवस्थापयति । कोसौ ? धर्मः । कम् ? **जीवम्** । क्व ? **शिवसुखे** । कस्मात् ? **जन्मदुःखात्** संसारदुःखदूरमुत्सार्य । किंविशिष्टः सन् ? **संजातोऽ**योगिचरमसमये संपूर्णीभूतः । किं कुर्वन् ? **अवधुन्वन्न**वशेषं व्यावर्तयन् । कम् ? **अधर्मम्** । किंविशिष्टम् ? **मिथ्ये**त्यादि । मिथ्या विपरीतान्यऽसद्रूपाणि वा रुचिमतिचरणानि दर्शनज्ञानाविरतिप्रमादकषाययोगलक्षणानि । तान्येवाकारो रूपं यस्य स मिथ्यारुचिमतिचरणाकारः । स चासौ संक्लेशोऽविशुद्धिपरिणामः । आर्तरौद्रपरिणतिरिति यावत् । स एव रूपं यस्य । पुनः किंविशिष्टम् ? **मूलं** कारणम् । कस्य ? **बन्धस्य** पुण्यपापस्य । किंविशिष्टस्य ? **दुःखप्रभवभवफलस्य** । दुःखं प्रभवत्यस्मादस्मिन्वेति दुःखप्रभवो भवः संसारः फलं कार्यं यस्य स एवम् । किं कृत्वा धर्मस्तथा भवतीत्याह—**प्राप्य** लब्ध्वा । काम् ? **स्वां** निजां **सामग्रीं** बाह्याभ्यन्तरकारणकलापं सद्ध्यानं वा तथा चोक्तम्—

स च मुक्तिहेतुरिद्धो ध्याने यस्मादवाप्यते द्विविधोपि ।
तस्मादभ्यस्यन्तु ध्यानं सुधियः सदाप्यपास्यालस्यम् ॥ इति ।

निश्चयरत्नत्रयलक्षणनिर्देशपुरःसरं मोक्षस्य संवरनिर्जरयोर्बन्धस्य च कारणं प्रणिगदति—

**मिथ्यार्थाभिनिवेशशून्यमभवत्संदेहमोहभ्रमं,**
**वान्ताशेषकषायकर्मभिदुदासीनं च रूपं चितः ।**
**तत्त्वं सद्दृगवायवृत्तमयनं पूर्णं शिवस्यैव तद्,**
**रुन्द्धे निर्जरयत्यपीतरदऽघं बन्धस्तु तद्व्यत्ययात् ॥ ९१ ॥**

भवति । किं तत् ? **सद्दृगवायवृत्तम्** । दृक् दर्शनमवायश्च ज्ञानं वृत्तं च चारित्रं दृगवायवृत्तम् । सत् समीचीनम् । सच्च तद् दृगवायवृत्तं च सद्दृगवायवृत्तं सम्यग्दर्शनज्ञानचारित्रम् । किंविशिष्टम् ? **तत्त्वं** परमार्थभूतम् । निश्चयरूपमित्यर्थः । किं तत् त्रयं तत्त्वं स्यादित्याह—**रूप**माकारः । कस्य ? **चित**श्चेतनस्यात्मनः । किंविशिष्टम् ? **मिथ्यार्थाभिनिवेशशू-**

न्यम् । अर्थ्यते निश्चीयते इत्यर्थः परमऽपरं च वस्तु । मिथ्या विपरीतः प्रमाणबाधितोऽर्थो मिथ्यार्थः । सर्वथैकान्तमिथ्यार्थस्याभिनिवेश आग्रहो मिथ्यार्थाभिनिवेशः । तेन शून्यं रहितम् । अथवा मिथ्या अर्थाभिनिवेशो यस्मात्तन्मिथ्यार्थाभिनिवेशं दर्शनमोहनीयं कर्म । तेन शून्यमात्मनो रूपं निश्चयसम्यग्दर्शनं स्यात् । तथाऽभवत्संदेहमोहभ्रमम् । स्थाणुर्वा पुरुषो वेति चलिता प्रतीतिः संदेहः । मोहो गच्छत्तृणस्पर्शज्ञानवत्तदर्थानध्यवसायः । भ्रमोऽतस्मिंस्तदिति ग्रहणम् स्थाणौ पुरुषज्ञानवत् । संदेहश्च मोहश्च भ्रमश्च संदेहमोहभ्रमाः । अभवन्तोऽविद्यमानाः संदेहमोहभ्रमा यस्य तदात्मनो रूपं निश्चयसम्यग्ज्ञानं स्यात् । तथा वान्ताशेषकषायकर्मभिदुदासीनम् । वान्ताश्छर्दिताः स्वतो विश्लेषिता अशेषाः सर्वे कषायाः क्रोधादयो हास्यादयश्च यस्य तद्वान्ताशेषकषायम् । कर्म ज्ञानावरणादि मनोवाक्कायव्यापारांश्च भिनत्ति नाशयतीति कर्मभित् । उदास्यते इत्युदासीनमुपेक्षाशीलम् । वान्ताशेषकषायं च तत्कर्मभिच्च तद् वान्ताशेषकषायकर्मभित् । तच्च तदुदासीनं च तत् । तथाभूतमात्मनो रूपं निश्चयसम्यक्चारित्रं स्यात् । तथा चोक्तं तत्त्वार्थश्लोकवार्तिके—

"मिथ्याभिमाननिर्मुक्तिर्ज्ञानस्येष्टं हि दर्शनम् ।
ज्ञानत्वं चार्थविज्ञप्तिश्चर्यात्वं कर्महन्तृता ॥" इति ॥

सद्दृगवायवृत्तमिति संहतिप्रधाननिर्देशाच्च तत्त्रयमय आत्मैव निश्चयमोक्षमार्ग इति लक्षयति । तदुक्तम्—

**णिच्छयणएण भणिओ तिहिं तेहिं समाहिदो हु जो अप्पा ।**
**ण गहदि किंचि वि अण्णं ण मुयदि सो मोक्खमग्गोत्ति ॥**

तत्पुनस्त्रयं पूर्णं समग्रं सद् भवति । किम् ? अयनं मार्गः । कस्य ? शिवस्यैव मोक्षस्यैव, न संवरनिर्जरयोर्नाप्यभ्युदयस्य । इतरत् । पुनर्व्यवहाररूपमपूर्णं च तद् रुन्द्धे निवारयति निर्जरयत्यपि एकदेशेन क्षपयति च । किं तत् ? अघमशुभकर्म पुण्यपापद्वयं वा । सर्वस्य कर्मणो जीवापकारकत्वेनाशुभत्वात् । बन्धस्तु भवति । कस्मात् ? तद्व्यत्ययाद् मिथ्यादर्शनादित्रयात् । उक्तं च—

"स्युर्मिथ्यादर्शनज्ञानचारित्राणि समासतः ।
बन्धस्य हेतवोन्यस्तु त्रयाणामेव विस्तरः ॥" इति ।

अपि च—

रत्नत्रयमिह हेतुर्निर्वाणस्यैव भवति नान्यस्य ।
आस्रवति यत्तु पुण्यं शुभोपयोगस्य सोयमपराधः ॥
असमग्रं भावयतो रत्नत्रयमस्ति कर्मबन्धो यः ।
स विपक्षकृतोवश्यं मोक्षोपायो न बन्धनोपायः ॥

निश्चयरत्नत्रयं केन साध्यत इत्याह—

उद्द्योतोद्द्यवनिर्वाहसिद्धिनिस्तरणैर्भजन् ।
भव्यो मुक्तिपथं भाक्तं साधयत्येव वास्तवम् ॥ ९२ ॥

साधयत्येव नियमेन जनयति । कोसौ ? भव्यः । कम् ? मुक्तिपथं मोक्षमार्गम् । किंविशिष्टम् ? वास्तवं पारमार्थिकम् । वस्त्वेव वस्तुनि भवो वा वास्तवः । किं कुर्वन् ? भजन्नाराधयन् । कम् ? मुक्तिपथम् । किंविशिष्टम् ? भाक्तं व्यावहारिकम् । भजनं भजनं वा भक्तिः । भक्तिरेव भक्तौ भवो वा भाक्तो भेदरूपः । कैः ? उद्द्योतोद्द्यवनिर्वाहसिद्धिनिस्तरणैः । उद्द्योतादीनि वक्ष्यन्ते । उद्द्यवनमुद्द्यव उत्कृष्टं मिश्रणम् ।

व्यवहाररत्नत्रयं लक्षयति—

श्रद्धानं पुरुषादितत्त्वविषयं सद्दर्शनं बोधनं,
सज्ज्ञानं कृतकारितानुमतिभिर्योगैरवद्योज्झनम् ।
तत्पूर्वं व्यवहारतः सुचरितं तान्येव रत्नत्रयं,
तस्याविर्भवनार्थमेव च भवेदिच्छानिरोधस्तपः ॥९३॥

भवेदित्यन्तदीपकत्वात् प्रतिवाक्यं योज्यम् । भवेत् । किं तत् ? सद्दर्शनं सम्यक्त्वम् । किम् ? श्रद्धानं रुचिः । किंविशिष्टम् ? पुरुषादितत्त्वविषयम् । पुरुषो जीव आदिर्येषामजीवास्रवबन्धपुण्यपापसंवरनिर्जरामोक्षाणां ते पुरुषादयो नव पदार्थाः । तेषां तत्त्वं याथात्म्यं त एव वा तत्त्वं

परमार्थसत् पुरुषादितत्त्वं विषयो गोचरो यस्य तं तथोक्तम् । कस्मात्? **व्यवहारतः**। विधिपूर्वकमवहरणं संभजनं यस्मादसौ व्यवहारोऽशुद्धद्रव्यार्थिकं यत् तमाश्रित्य । तथा भवेत् । किं तत् ? **सज्ज्ञानं व्यवहारतः** । किम् ? **बोधनं** संवेदनम् । किंविशिष्टम् ? पुरुषादितत्त्वविषयम् । तथा भवेद्व्यवहारतः **सुचरितम्** । किम् ? **अवद्योज्झनं** हिंसादिपापपञ्चकवर्जनम् । कैः ? **कृतकारितानुमतिभिः** करणकारणानुमोदनैः । किंक्रियमाणैः ? **योगैर्मनोवाक्कायैः** । मनसा करणं कारणमऽनुमोदनं च । हिंसादीनां वर्जयतो व्यावहारिकं सम्यक्चारित्रं भवेत् । तथा वाचा कायेन च । किंविशिष्टम् ? **तत्पूर्वं** सद्ज्ञानहेतुकं । भवेयुश्च । कानि ? **तान्येव त्रीणि** । किम् ? **रत्नत्रयं** रत्नत्रयमिति संज्ञितानि । चारित्रेन्तर्भूतमप्याराधनायां पृथक्पतितत्वात् किंलक्षणं तपः स्यादित्यत्राह—**तपश्च भवेत्** । किम् ? **इच्छानिरोध** इच्छाया इन्द्रियानिन्द्रियद्वारप्रवृत्ताया विषयवाञ्छाया निरोधो नियमानुष्ठानम् । किमर्थम् ? **तस्य रत्नत्रयस्याविर्भावनार्थं** व्यक्तीकरणार्थमेव, न लाभाद्यर्थम् । रत्नत्रयाविर्भावार्थमिच्छानिरोधस्तप इति ह्यागमः ।

श्रद्धानादित्रयसमुदायेनैव भावितं हेयमुपादेयं च तत्त्वं रसायनौषधमिव समीहितसिद्धये स्यान्नान्यथेति प्रथयति—

**श्रद्धानबोधानुष्ठानैस्तत्त्वमिष्टार्थसिद्धिकृत् ।**
**समस्तैरेव न व्यस्तै रसायनमिवौषधम् ॥ ९४ ॥**

भवति । किम् ? **तत्त्वं** वस्तुयाथात्म्यम् । किंविशिष्टम् ? **इष्टार्थसिद्धिकृद्**ऽभ्युदयनिःश्रेयससंपादकम् । कैर्विषयीकृतम् ? **श्रद्धानबोधानुष्ठानै** रुचिज्ञानाचरणैः । किंविशिष्टैः ? **समस्तैरेव** त्रिभिरेव समुदितैर्न **व्यस्तै**रेकैकेन द्वाभ्यां वा । किमिव ? **रसायनं औषधमिव** स्वास्थ्यानुवृत्तिकृद्रोगोच्छेदकरं द्रव्यं यथा । किंविशिष्टं भवति ? इष्टार्थसिद्धिकृद् दीर्घायुष्यादिसाधनम् । कैः ? श्रद्धानबोधानुष्ठानैः समस्तैरेव न व्यस्तैः ।

उक्तं च—

दीर्घमायुः स्मृतिर्मेधा व्यारोग्यं तरुणं वयः ।
प्रभावर्णस्वरौदार्यं देहेन्द्रियबलोदयम् ॥

वाक्सिद्धिं वृषतां कान्तिमवाप्नोति रसायनात् ।
लाभोपायो हि शस्तानां रसादीनां रसायनम् ॥ इति ।

व्यवहारमार्गमारूढः समाधिलक्षणेन निश्चयमार्गेण कर्मशत्रून्निराकुर्यादित्याह—

**श्रद्धानगन्धसिन्धुरमदुष्टमुद्यदवगममहामात्रम् ।**
**धीरो व्रतबलपरिवृतमारूढोरीन् जयेत्प्रणिधिहेत्या ॥९५॥**

**जयेद्** निगृह्णीयात् । कोसौ ? **धीरो**ऽकातरो मुमुक्षुर्जिगीषुश्च । कान् ? **अरीन्** कर्मशत्रून् प्रतिपक्षांश्च । कया ? **प्रणिधिहेत्या** समाधिशस्त्रेण । किंविशिष्टः सन् ? **आरूढो**धिष्ठितः । कम् ? **श्रद्धानगन्धसिन्धुरम्** । श्रद्धानं गन्धसिन्धुरो गन्धहस्तीव, स्वपक्षबलाधायकत्वात् परपक्षोपमर्दकत्वाच्च । किंविशिष्टम् ? **अदुष्टं** निर्दोषं विधेयं च । पुनः किंविशिष्टम् ? **उद्यद्वगममहामात्रम्** । अवगमो ज्ञानं महामात्रो नियन्तेव अभिमतसिद्ध्युपायप्रदर्शकत्वात् । उद्यन्नुल्लसन्नऽवगममहामात्रो यस्य । पुनरपि किंविशिष्टम् ? **व्रतबलपरिवृतम्** । व्रतानि बलानि सैन्यानीव प्रतिबलनिरोधकत्वात् । व्रतबलैः परिवृतः परिवारितः ।

उद्द्योतादीनि लक्षयति—

**दृष्ट्यादीनां मलनिरसनं द्योतनं तेषु शश्वद्,—**
**वृत्तिः स्वस्योद्द्यवनमुदितं धारणं निस्पृहस्य ।**
**निर्वाहः स्याद्भवभयभृतः पूर्णता सिद्धिरेषां,**
**निस्तीर्णिस्तु स्थिरमपि तटप्रापणं कृच्छ्रपाते ॥ ९६ ॥**

**उदितमुक्त**माचार्यैः । किं तत् ? **द्योतन**मुद्द्योतः । केषाम् ? **दृष्ट्यादीनां** सम्यग्दर्शनज्ञानचारित्रतपसाम् । किम् ? **मलनिरसनं** निर्मलीकरणम् । तथोदितम् । किं तत् ? **उद्द्यवनम्** । केषाम् ? एषां दृष्ट्यादीनाम् । किम् ? **वृत्ति**र्वर्तनमेकलोलीभावः । कस्य ? **स्वस्या**राधकात्मनः । एतत्पूर्वत्रोत्तरत्र च योज्यम् । केषु ? **तेषु** दृष्ट्यादिषु । कथम् ? **शश्व**न्नित्यम् । तथा **स्यात्** । कोसौ ? **निर्वाहो** निराकुलं वहनमेषाम् । किम् ?

**धारणं** धृतिः । कस्य ? स्वस्य । किंविशिष्टस्य ? **निस्पृहस्य** लाभपूजाख्यात्यपेक्षारहितस्य । तथा स्यात् । कासौ ? **सिद्धिः** । केषाम् ? एषाम् । किम् ? **पूर्णता** संपूर्णीकरणम् । कस्य ? स्वस्य । किंविशिष्टस्य ? **भवभयभृतः** संसाराद्बिभ्यतः । तथा स्यात् । कासौ ? **निस्तीर्णिर्निस्तरणमेषाम्** । तुर्विशेषे । किं तत् ? **तत्प्रापणं** मरणान्तनयनम् । कस्य ? स्वस्याराधकात्मनः । कथं कृत्वा ? **स्थिरं** निःक्षोभम् । क्व सति ? **कृच्छ्रपातेपि** परीषहोपसर्गसंसर्गेपि ।

सम्यक्त्वादीनां मलान् लक्षयति—

**शङ्कादयो मला दृष्टेर्व्यत्यासानिश्चयौ मतेः ।**
**वृत्तस्य भावनात्यागस्तपसः स्यादसंयमः ॥ ९७ ॥**

भवन्ति । के ? **मला** अतीचाराः । कस्याः ? **दृष्टेः** । के ते ? **शङ्कादयः** । तथा भवन्ति । के ? मलाः । कस्याः ? **मतेर्ज्ञानस्य** । कौ ? **व्यत्यासाऽनिश्चयौ** । व्यत्यासो विपर्ययः । अनिश्चयः संशयोऽनध्यवसायश्च । ईषत् सामान्याकारेण निश्चयोऽनिश्चयः संशयः । तथाऽविद्यमानो निश्चयोऽनिश्चयो मोहः । तथा भवति । कोसौ ? मलः । कस्य ? **वृत्तस्य** । किम् ? **भावनात्यागः** भावनानां निगृह्णतो वाग्मनसी इत्यादिना प्रतिव्रतं पञ्चानां वक्ष्यमाणानां वर्जनम् । तथा स्यान्मलः । कस्य ? **तपसः** । किम् ? **असंयमः** प्राणिष्विन्द्रियेषु च विरत्यभावः ।

उद्द्योतादिभिर्भजन्नित्युक्तम् । भक्तिश्चाराधना । अतस्तल्लक्षणमाह—

**वृत्तिर्जातसुदृष्ट्यादेस्तद्गतातिशयेषु या ।**
**उद्द्योतादिषु सा तेषां भक्तिराराधनोच्यते ॥ ९८ ॥**

उच्यते कथ्यतेस्माभिः । **तेषां** दृष्ट्यादीनां **भक्तिः सा**ऽऽराधना । या किम् ? **या** स्यात् । कासौ ? **वृत्तिः** । केषु ? **तद्गतातिशयेषु** सुदृष्ट्याद्याश्रितविशेषेषु । किंविशिष्टेषु ? **उद्द्योतादिषु** । कस्य ? **जातसुदृष्ट्यादे**रुत्पन्नसम्यग्दर्शनादिपरिणामस्य पुंसः ।

निश्चयनिरपेक्षस्य व्यवहारस्यासद्विषयत्वात्तदुपयोगे स्वार्थभ्रंशं दृष्टान्तेन व्याचष्टे—

**व्यवहारमभूतार्थं प्रायो भूतार्थविमुखजनमोहात् ।**
**केवलमुपयुञ्जानो व्यञ्जनवद्भ्रश्यति स्वार्थात् ॥ ९९ ॥**

**भ्रश्यति** प्रच्यवते साधुर्लोकश्च । कस्मात् ? **स्वार्थान्**मोक्षसुखात् पक्षे विवक्षिताभिधेयात् स्वास्थ्यानुवृत्त्यादेर्वा । किं कुर्वाणः ? **उपयुञ्जानो** भावयन् पक्षे उच्चारयन् भुञ्जानो वा । कम् ? **व्यवहारं** प्रवृत्तिनिवृत्तिलक्षणम् । किंविशिष्टम् ? **अभूतार्थ**मविद्यमानेष्टविषयम् । कथं कृत्वा ? **केवलं** निश्चयनिरपेक्षं कादिव्यञ्जनं पक्षे स्वररहितं सूपादिव्यञ्जनं पक्षे घृतौदनवर्जितं वा । कस्मात् ? **भूतार्थविमुखजनमोहात्** । भूतार्थे निश्चयनये विमुखो जनो बहिरात्मलोकः । तज्जनितान्मोहादज्ञानात् । कथम् ? **प्रायो** बाहुल्येन । किंवत् ? **व्यञ्जनवत्** ककाराद्यक्षरं सूपादिशालनं वा यथा । इयमत्र भावना—

**वेज्जावच्चणिमित्तं[1] गिलाणगुरुबालवुड्ढसमणाणं ।**
**लोगिगजणसंभासा ण णिंदिदा वा सुहोवजुया ॥**

इति वचनाद्यदा ग्लानादिश्रमणवैयावृत्त्यपरतन्त्रो भूत्वा लौकिकजनसंभाषणे नितान्तं प्रसज्यते तदा ध्यानादेः प्रमत्तो भूत्वा साधुः स्वार्थात् प्रच्यवते ।

व्यवहारं विना निश्चयो न सिध्यतीति व्यतिरेकमुखेनाह—

**व्यवहारपराचीनो निश्चयं यश्चिकीर्षति ।**
**बीजादिना विना मूढः स सस्यानि सिसृक्षति ॥ १०० ॥**

**सिसृक्षति** उत्पादयितुमिच्छति । कोसौ ? **स मूढो**ऽज्ञः । कानि ? **सस्यानि** वृक्षादिफलानि । कथम् ? **विना** केन ? **बीजादिना** आदिशब्दात्क्षेत्रोदककालादिग्रहः । यः किम् ? **यश्चिकीर्षति** कर्तुमिच्छति । कम् ?

---

१ वैयावृत्यनिमित्तं ग्लानगुरुबालवृद्धश्रमणानाम् ।
लौकिकजनसंभाषा न निन्दिता वा शुभोपयुता ॥

**निश्चयम्** । किंविशिष्टः सन् ? **व्यवहारपराचीनो** व्यवहारपराङ्मुखः । तद्रहित इत्यर्थः ।

व्यवहारालम्बनत्यजनावधिमभिधत्ते—

**भूतार्थं रज्जुवत्स्वैरं विहर्तुं वंशवन्मुहुः ।**
**श्रेयो धीरैरभूतार्थो हेयस्तद्विहृतीश्वरैः ॥ १०१ ॥**

**श्रेय** आलम्बनीयः । कोसौ ? **अभूतार्थो** व्यवहारनयः । कैः ? **धीरै**-रकातरैर्मुमुक्षुभिः । कथम् ? **मुहुः** पुनः पुनः । किंवत् ? **वंशवत्** चारणैर्हस्तावष्टम्भनवेणुर्यथा । किं कर्तुम् ? **विहर्तुं** संचरितुम् । कम् ? **भूतार्थं** निश्चयनयम् । कथम् ? **स्वैरं** स्वच्छन्दम् । निरालम्बनमित्यर्थः । किंवत् ? **रज्जुवद्र**श्मिं यथा । तथा **हेयस्त्याज्यो** वंश इवाभूतार्थो मुमुक्षुभिश्चारणैरिव । किंविशिष्टैः ? **तद्विहृतीश्वरैः** तत्र रज्जाविव भूतार्थे विहृतिः संचरणम् । तत्रेश्वरैः समर्थैः ।

व्यवहारनिश्चयं लक्षयति—

**कर्त्राद्या वस्तुनो भिन्ना येन निश्चयसिद्धये ।**
**साध्यन्ते व्यवहारोसौ निश्चयस्तदभेददृक् ॥ १०२ ॥**

स्यात् । कोसौ ? **असौ व्यवहारः** । येन किम् ? **येन साध्यन्ते** ज्ञाप्यन्ते । के ? **कर्त्राद्याः** कर्तृकर्मकरणादयः कारकविशेषाः । किंविशिष्टाः ? **भिन्नाः** पृथग्भूताः । कस्मात् ? **वस्तुनो** जीवादेः । कस्मै ? **निश्चयसिद्धये** भूतार्थनयप्राप्त्यर्थम् । तथा **निश्चयः** स्यात् । किम् ? **तदभेददृक्** तेषां कर्त्रादीनामभेदेन वस्तुनोनर्थान्तरत्वेन दृक् प्रतिपत्तिः ।

शुद्धाशुद्धभेदाद्द्विविधस्यापि निश्चयस्योल्लेखं दर्शयति—

**सर्वेपि शुद्धबुद्धैकस्वभावाश्चेतना इति ।**
**शुद्धोऽशुद्धश्च रागाद्या एवात्मेत्यस्ति निश्चयः ॥१०३॥**

**अस्ति** भवति । कोसौ ? **निश्चयः** । किंविशिष्टः ? **शुद्धः** । कथम् ? **इति** एवंस्वरूपः । भवन्ति । के ? **चेतना** जीवाः । किंविशिष्टाः ? **शुद्धबुद्धैकस्वभावाः** शुद्धो रागादिरहितो बुद्धो ज्ञानपरिणत एकः केवलः स्व-

भावो येषां त एवम् । किं कियन्त एव तथाविधाः सर्वेपीत्याह—**सर्वेपि संसारिणो मुक्ताश्च** । तथाऽशुद्धनिश्चयोस्ति । कथम् ? इति । किमिति ? भवति । कोसौ ? **आत्मा** । के ? **रागाद्या एव** । रागद्वेषादिपरिणामात्मक इत्यर्थः ।

व्यवहारस्य सद्भूतासद्भूतभेदयोरुद्देशपूर्वं लक्षणमाह—

**सद्भूतेतरभेदाद्व्यवहारः स्याद् द्विधा भिदुपचारः ।**
**गुणगुणिनोरभिदायामपि सद्भूतो विपर्ययादितरः॥१०४॥**

**स्यात्** । कोसौ ? **व्यवहारः** । कतिधा ? **द्विधा** । कस्मात् ? **सद्भूतेतरभेदात्** । सद्भूतोऽसद्भूतश्चेत्यर्थः । तत्र **सद्भूतः** स्यात् । किंरूपः ? **भिदुपचारो** भेदकल्पना । कस्यां सत्याम् ? **अभिदायामपि** अभेदेपि । कयोः ? **गुणगुणिनोः** । तथा स्यात् । कोसौ ? **इतरोऽसद्भूतः** । कस्मात् ? **विपर्ययाद्** भेदेप्यभेदोपचारात् ।

सद्भूतव्यवहारस्य शुद्धाशुद्धभेदोद्देशपूर्वं शुद्धस्योल्लेखं संज्ञान्तरं चाह—

**सद्भूतः शुद्धेतरभेदाद् द्वेधा तु चेतनस्य गुणाः ।**
**केवलबोधादय इति शुद्धोऽनुपचरितसंज्ञोसौ ॥१०५॥**

**सद्भूतस्तु** व्यवहारः स्यात् । कतिधा ? **द्वेधा** । कस्मात् ? **शुद्धेतरभेदात्** । शुद्धोऽशुद्धश्चेत्यर्थः । तत्र **शुद्धः** स्यात् । कथम् ? **इति** एवम् । भवन्ति । के ? **गुणाः** । कस्य ? **चेतनस्य** जीवस्य । किंविशिष्टाः ? **केवलबोधादयो**ऽसहायज्ञानदर्शनादयः । **असौ** शुद्धसद्भूतव्यवहारः स्यात् । किमाख्यः ? **अनुपचरितसंज्ञः** । अनुपचरिता संज्ञा यस्य ।

पूर्वार्द्धेन व्यवहारस्याशुद्धसद्भूतभेदोल्लेखसंज्ञमुत्तरार्धेन चानुपचरितासद्भूतभेदोल्लेखमावेदयति—

**मत्यादिविभावगुणाश्रित इत्युपचरितकः स चाशुद्धः ।**
**देहो मदीय इत्यनुपचरितसंज्ञस्त्वसद्भूतः ॥ १०६ ॥**

**स च** स पुनः सद्भूतव्यवहारोऽशुद्धः स्यात् । किमाख्यः ? **उपचरितक** उपचरितसंज्ञः । किमुल्लेखः ? **मत्यादिविभावगुणाश्रित इति**

मत्यादयश्च ते विभावगुणाश्चौपाधिकधर्माः स्युः । कस्य ? चितो जीवस्य । मतिज्ञानादयो हि स्वप्रतिबन्धकक्षयोपशमादिविशेषापेक्षाः स्युः । विभावो हि बहिरङ्गं निमित्तम् । तत्प्रभवा गुणा विभावगुणाः । असद्भूतस्तु व्यवहारः स्यात् । किमाख्यः ? अनुपचरितसंज्ञः । किमुल्लेखः ? देहो मदीय इति । संश्लेषसंबन्धसहितत्वात् ।

व्यवहारस्योपचरितासद्भूतभेदोल्लेखाख्यानपूर्वकं प्रकृतार्थोपसंग्रहमाह—

देशो मदीय इत्युपचरितसमाह्वः स एव चेत्युक्तम् ।
नयचक्रमूलभूतं नयषट्कं प्रवचनपटिष्ठैः ॥ १०७ ॥

स एव चासद्भूतव्यवहार उपचरितसमाह्व उपचरितसंज्ञः स्यात् । किमुल्लेखः ? देशो मदीय इति, संश्लेषसंबन्धाभावात् । इत्येवमुक्तं कथितम् । किं तत् ? नयषट्कं नयानां श्रुतज्ञानिनोभिप्रायाणां षट्कम् । किंविशिष्टम् ? नयचक्रमूलभूतं नयचक्रस्य मूलत्वं प्राप्तम् । कैः ? प्रवचनपटिष्ठैः । अध्यात्मतत्त्वरहस्यज्ञैरित्यर्थः । प्रवचने हि त एव प्रकृष्टं पटवः । एतत्स्वल्पमध्यात्मभाषया प्रतिपादितम् । आगमभाषया तु नैगमादिनयसप्तकमन्यत्रोक्तं प्रतिपत्तव्यम् ।

नयस्य मिथ्यात्वशङ्कां श्लोकद्वयेन निरस्यति—

अनेकान्तात्मकादर्थादपोद्धृत्याञ्जसान्नयः ।
तत्प्राप्त्युपायमेकान्तं तदंशं व्यावहारिकम् ॥ १०८ ॥
प्रकाशयन्न मिथ्या स्याच्छब्दात्तच्छास्त्रवत् स हि ।
मिथ्याऽनपेक्षोऽनेकान्तक्षेपान्नान्यस्तदत्ययात् ॥१०९॥

न स्यात् । कोसौ ? नयः स्वार्थैकदेशे व्यवसायरूपश्रुतस्याभिप्रायः । कथंभूतः ? मिथ्या असत्यः । किं कुर्वन् ? प्रकाशयन् प्रतीतिमानयन् । कम् ? एकान्तम् । एकश्चासावन्तश्च स्वभाव एकान्तोस्तित्वनास्तित्वादीनामन्यतमस्तम् । कथंभूतम् ? तदंशं तस्यानेकान्तात्मकार्थस्यैकदेशम् । पुनः कथंभूतम् ? तत्प्राप्त्युपायम् । तस्यानेकान्तात्मकार्थस्य प्राप्तेः प्रकाशनस्योपायः कारणम् । पुनरपि कथंभूतम् ? व्यावहारिकं प्रवृत्तिनिवृत्ति-

साधकम्। किं कृत्वा? **अपोद्धृत्य** पृथक्कृत्य। भेदेन विवक्षित्वेत्यर्थः। कस्मात्? **अर्थाद्** वस्तुनः श्रुतज्ञानविषयात्। कथंभूतात्? **अनेकान्तात्मकात्**। नैकोऽनेकोऽस्तित्वनास्तित्वनित्यत्वानित्यत्वसामान्यसामानाधिकरण्यविशेषणविशेष्यादिकोऽन्तः स्वभाव आत्मा शरीरं यस्य स एवम्। पुनः कथंभूतात्? **आञ्जसात्**। परमार्थसतो, न विकल्पितात्। अत्र दृष्टान्तमाह—**शब्दात् तच्छास्त्रवदिति**। यथा तच्छास्त्रं शब्दशास्त्रं व्याकरणं मिथ्या न स्यात्। किं कुर्वत्? प्रकाशयत्। कम्? एकान्तं प्रकृतिप्रत्ययादीनामन्यतमम्। कथंभूतम्? तदंशं शब्दावयवम्। पुनः कथंभूतम्? तत्प्राह्युपायं शब्दप्रकाशनकारणम्। पुनरपि कथंभूतम्? व्यावहारिकम्। किं कृत्वा? अपोद्धृत्य। कस्मात्? शब्दाद् देवदत्तः पचनित्यादिकात्। कथंभूतात्? अनेकान्तात्मकात् प्रकृतिप्रत्ययादिमयात्। पुनः कथंभूतात्? आञ्जसात्। कुत एतदित्याह—स हीत्यादि। **हि** यस्मात् **स** नयः स्यात्। कथंभूतः। **मिथ्या**। किंविशिष्टः सन्? **अनपेक्षो** द्रव्यार्थिकः पर्यायार्थिके पर्यायार्थिकश्च द्रव्यार्थिके निरपेक्षः। कस्मात्? **अनेकान्तक्षेपात्**। स्याद्वादनिरासात्। **न स्यात्**। कोसौ? **अन्यः** सापेक्षो नयः। कथंभूतः? मिथ्या। कस्मात्? **तदत्ययाद**ऽनेकान्तक्षेपाभावात्। स्याद्वादानुसरणादित्यर्थः।

प्रादेशिकविशुद्धिसंक्लेशयोः फलमुपदिशति—

**येनांशेन विशुद्धिः स्याज्जन्तोस्तेन न बन्धनम्।**
**येनांशेन तु रागः स्यात्तेन स्यादेव बन्धनम्॥ ११०॥**

**न स्यात्**। किं तत्? **बन्धनं** कर्मबन्धः। कस्य? **जन्तोर्जीवस्य**। केन? **तेनांशेन**। येन किम्? **येनांशेन** स्यात्। कासौ? **विशुद्धी** रागद्वेषमोहोपशमः। **येनांशेन तु** पुना **रागो** रागाद्यावेशो जन्तोः स्यात् **तेन स्यादेव** अवश्यं भवेत्। किं तत्? **बन्धनम्**।

अथात्र संवरविषये नयविभागः क्रियते। तथाहि। मिथ्यादृष्टेरारभ्य क्षीणकषायं यावदुपर्युपरि मन्दत्वतारतम्यावतारादशुद्धनिश्चयो वर्तते। तस्य मध्ये पुनर्गुणस्थानभेदेनाशुभशुभशुद्धानुष्ठानरूपमुपयोगत्रयं तिष्ठति। तदुच्यते—मिथ्यादृष्टिसासादनमिश्रगुणस्थानेषूपर्युपरि मन्दत्वेनाशुभोप-

योगो वर्तते । ततोप्यसंयतसम्यग्दृष्टिश्रावकप्रमत्तसंयतेषु पारम्पर्येण शुद्धोपयोगसाधक उपर्युपरि तारतम्येन शुभोपयोगो वर्तते । तदनन्तरमप्रमत्तादिक्षीणकषायपर्यन्तं जघन्यमध्यमोत्कृष्टभेदेन विवक्षितैकदेशेन शुद्धनयरूपः शुद्धोपयोगो वर्तते । तत्र च मिथ्यादृष्टिगुणस्थाने तावत्संवरो नास्ति । सासनादिगुणस्थानेषु—

"सोलसपणवीसणभं दस चउछक्केक्क बंधवोच्छिण्णा ।
दुगतीस चदुरपुव्वे पण सोलस जोगिणो एक्को ॥" इति ।

बन्धविच्छेदत्रिभङ्गीकथितक्रमेणोपर्युपरि प्रकर्षेण संवरो ज्ञातव्यः । तथा हि । मिथ्यात्वनपुंसकवेदनरकायुर्नरकगत्येकद्वित्रिचतुरिन्द्रियजातिहुण्डकसंस्थानाऽसंप्राप्तासृपाटिकासंहनननरकगतिप्रायोग्यानुपूर्व्यातपस्थावरसूक्ष्मापर्याप्तकसाधारणशरीराणां मिथ्यात्वेन बध्यमानानां सासनादिषु संवरः । निद्रानिद्राप्रचलाप्रचलास्त्यानगृद्ध्यनन्तानुबन्धिकषायस्त्रीवेदतिर्यगायुस्तिर्यग्गतिचतुःसंस्थानचतुःसंहननतिर्यग्गतिप्रायोग्यानुपूर्व्योद्द्योताप्रशस्तविहायोगतिदुर्भगदुःस्वरानादेयनीचैर्गोत्राणामनन्तानुबन्धिकषायकृतासंयमहेतुकानामेकेन्द्रियादिसासादनान्ता बन्धका, उत्तरत्र संवरः । अप्रत्याख्यानकषायमनुष्यायुर्मनुष्यगत्यौदारिकशरीरतदङ्गोपाङ्गवज्रर्षभनाराचसंहननमनुष्यगतिप्रायोग्यानुपूर्व्याणामप्रत्याख्यानकषायकृतासंयमनिमित्तानामेकेन्द्रियाद्यसंयतसम्यग्दृष्ट्यन्ता बन्धका, ऊर्ध्वं निरोधः । मिश्रगुणेनायुर्न बध्यते । प्रत्याख्यानकषायाणां प्रत्याख्यानहेत्वऽसंयमास्रवाणामेकेन्द्रियादिसंयतासंयतान्ता बन्धका, ऊर्ध्वं संवरः । असद्वेद्यारतिशोकास्थिराशुभायशस्कीर्तीनां प्रमादहेतूनां प्रमत्तादूर्ध्वं संवरः । देवायुर्बन्धारम्भस्य प्रमाद एव हेतुरप्रमादोपि तत्प्रत्यासन्नः । तत ऊर्ध्वं तस्य संवरः । कषायास्रवस्य तन्निरोधे संवरः । सच कषायस्तीव्रमध्यमजघन्यभावेन त्रिषु गुणस्थानेषु स्थितः । अपूर्वस्यादौ निद्राप्रचले बध्येते, मध्ये देवगतिपञ्चेन्द्रियजातिवैक्रियिकाहारकतैजसकार्मणशरीरसमचतुरस्रसंस्थानवैक्रियिकाहारकशरीराङ्गोपाङ्गवर्णगन्धरसस्पर्शदेवगतिप्रायोग्यानुपूर्व्यागुरुलघूपघातपरघातोच्छ्वासप्रशस्तविहायोगतित्रसबादरपर्याप्तकप्रत्येकशरीरस्थिरशुभसुभगसुस्वरादेयनिर्माणतीर्थकरत्वानि, अन्ते हास्यरतिभयजुगुप्सा बध्यन्ते । एतस्य तीव्रकषायास्रवस्य ऊर्ध्वं निरोधः ।

अनिवृत्तावादिसमयादारभ्य संख्येयेषु भागेषु पुंवेदक्रोधसंज्वलनौ, मध्ये संख्येयेषु भागेषु मानमायासंज्वलनौ बध्येते, चरमसमये लोभसंज्वलनमास्रवते। अग्रे संव्रियते। पञ्चज्ञानावरणचतुर्दर्शनावरणयशस्कीर्त्युच्चैर्गोत्रपञ्चान्तरायाणां मन्दकषायास्रवाणां सूक्ष्मो बन्धक, ऊर्ध्वं संवरः। योगहेतुसद्वेद्यस्योपशान्तक्षीणकषायसयोगानां बन्धः, अयोगिनि संवरः।

अत्र च शुद्धनिश्चये शुद्धबुद्धैकस्वभावो निजात्मा ध्येयस्तिष्ठतीति शुद्धध्येयत्वाच्छुद्धावलम्बनत्वाच्छुद्धात्मस्वरूपसाधकत्वाच्च शुद्धोपयोगो घटते। स च भावसंवर इत्युच्यते। एष च संसारकारणभूतमिथ्यात्वरागाद्यशुद्धपर्यायवदशुद्धो न स्याद्, नापि फलभूतकेवलज्ञानलक्षणशुद्धपर्यायवच्छुद्धः स्यात्। किंतु ताभ्यामशुद्धशुद्धपर्यायाभ्यां विलक्षणं शुद्धात्मानुभूतिरूपनिश्चयरत्नत्रयात्मकं मोक्षकारणमेकदेशव्यक्तिरूपमेकदेशनिरावरणं च तृतीयमवस्थान्तरं भण्यते।

नित्यात्यन्तनिर्मलस्वपरप्रकाशनसमर्थचिदानन्दात्मकपरमात्मभावनोद्भूतशुद्धस्वात्मानुभूतिरूपनिश्चयरत्नत्रयात्मकधर्मामृतसमुद्रमवगाहमानैरुदीर्णरसलेशोपि तत्स्थस्योपासकवर्गस्यानुग्रहाय स्यादित्युपदिशति—

कथमपि भवकक्षं जाज्वलद्दुःखदाव,-
ज्वलनमशरणो ना बम्भ्रमन् प्राप्य तीरम्।
श्रितबहुविधसत्त्वं धर्मपीयूषसिन्धो,—
रसलवमपि मज्जत्कीर्णमृध्नोति विन्दन्॥ १११॥

ऋध्नोति ज्ञानसंयमादिना प्रह्लादबलौजोवीर्यादिना च वर्धते। कोसौ? ना पुरुषः। किं कुर्वन्? विन्दन् लभमानः। कम्? रसलवमपि स्तोकमपि निर्यासम्। कीदृशम्? मज्जत्कीर्णं मज्जद्भिर्धर्मपीयूषसिन्धौ स्नाद्भिर्घटमानयोगैर्मुमुक्षुभिर्धन्यतमलोकैश्च कीर्णं उद्गीर्णं। किं कृत्वा? प्राप्य। किं तत्? तीरम्। तत्प्रत्यासत्तिमिति यावत्। कस्य? धर्मपीयूषसिन्धोर्धर्मसुधाम्भोधेः। कीदृशम्? श्रितबहुविधसत्त्वम्। श्रिता आश्रिता बहुविधा आसन्नभव्यादिप्रकाराः सत्त्वा जीवा यत्र तत्तथोक्तम्। कथम्? कथमपि महता कष्टेन। किं कुर्वन्? बम्भ्रमन् कुटिलमटन्। किं

तत्? **भवकक्षं** संसारारण्यम् । कीदृशम् ? **जाज्वलद्दुःखदावज्वलनम्** । जाज्वलन्तो देदीप्यमाना दुःखदावज्वलना यत्र । कीदृशः सन् ? **अशरणो**ऽत्राणः ।

धर्माचार्यैर्व्युत्पादितमतिः सङ्गत्यागादिना स्वात्मानं तद्भवे भवान्तरेषु वा निःसंसारं करोतीत्याह—

**त्यक्त्वा सङ्गं सुधीः साम्यसमभ्यासवशाद्ध्रुवम् ।**
**समाधिं मरणे लब्ध्वा हन्त्यल्पयति वा भवम् ॥ ११२ ॥**

हन्ति नाशयति । कोसौ ? **सुधीः** प्रमाणनयनिक्षेपानुयोगैर्व्युत्पन्नप्रज्ञश्चरमदेहो भव्यः । कम् ? **भवम्** । स एवाचरमदेहोऽ**ल्पयति** ह्रासयति संसारम् । किं कृत्वा ? **लब्ध्वा** प्राप्य । कम् ? **समाधिं** रत्नत्रयैकाग्रताम् । क्व ? **मरणे** प्राणत्यागसमये । कथम् ? **ध्रुवमवश्यम्** । कस्मात् ? **साम्यसमभ्यासवशात्** । सामायिकसन्ततभावनाबलात् । किं कृत्वा ? **त्यक्त्वा** । कम् ? **सङ्गम्** ।

अभेदसमाधिमहिमानमभिष्टौति—

**अयमात्मात्मनात्मानमात्मन्यात्मन आत्मने ।**
**समादधानो हि परां विशुद्धिं प्रतिपद्यते ॥ ११३ ॥**

हि यस्मात्प्रतिपद्यते प्राप्नोति । कोसौ ? **अयं** स्वसंवेदनसुव्यक्त **आत्मा** जीवः । काम् ? **विशुद्धिम्** । किंविशिष्टाम् ? **परां** घातिकर्मक्षयलक्षणां सकलकर्मक्षयलक्षणां वा । किं कुर्वाणः ? **समादधानो** ध्यायन् । कम् ? **आत्मानं** शुद्धचिदानन्दमयं स्वम् । केन ? **आत्मना** स्वसंवेदनरूपेण स्वेन । क्व ? **आत्मनि** निर्विकल्पे स्वे । कस्मात् ? **आत्मनः** करणान्तःकरणज्ञानात्मकात्स्वस्मात् । व्यावर्त्य । कस्मै ? **आत्मने** शुद्धचिदानन्दस्वरूपाय स्वस्मै ।

ध्यानस्य सामग्रीक्रमं साक्षादसाक्षाच्च फलं कथयति—

**इष्टानिष्टार्थमोहादिच्छेदाच्चेतः स्थिरं ततः ।**
**ध्यानं रत्नत्रयं तस्मात्तस्मान्मोक्षस्ततः सुखम् ॥ ११४ ॥**

भवति। किं तत् ? **चेत**श्चित्तम् । किंविशिष्टम् ? **स्थिरं** निश्चलम् । कस्मात् ? **इष्टानिष्टार्थमोहादिच्छेदात्** । इष्टानिष्टयोरर्थयोः स्वरूपानवबोधो मोहः । इष्टे प्रीतिः रागोऽनिष्टे चाप्रीतिर्द्वेषः । तेषां छेदान्निरासात् । तथा भवति । किं तत् ? **ध्यानम्** । कस्मात् ? **ततः** स्थिराच्चेतसः । तथा भवति । किं तत् ? **रत्नत्रयम्** । कस्मात् ? **तस्माद्** ध्यानात् । तथा भवति । कोसौ ? **मोक्षः** । कस्मात् ? **तस्माद्**रत्नत्रयात् । तथा भवति । किं तत् ? **सुखम्** । कस्मात् ? **ततो** मोक्षात् । इति भद्रम् ॥ ग्रंथसंख्या ॥ १६०० ॥

यो धर्मामृतमुद्दधार सुमनस्तृप्त्यै जिनेन्द्रागम-
क्षीरोदं शिवधीर्निमथ्य जयतात्स श्रीमदाशाधरः ।
भव्यात्मा हरदेव इत्यभिधया ख्यातश्च नन्द्यादिमं,
टीकाशुक्तिमचीकरत्सुखमिमां तस्योपयोगाय यः ॥

इत्याशाधरविरचितायां स्वोपज्ञ**धर्मामृतानगार**धर्मटीकायां भव्यकुमुदचन्द्रिकासंज्ञायां **धर्मस्वरूपनिरूपणः** प्रथमोऽध्यायः ॥ १ ॥

---

# अथ द्वितीयोऽध्यायः ॥ २ ॥

इह हि "उद्द्योतोद्यवनिर्वाहसिद्धिनिस्तरणैर्भजन्।
भव्यो मुक्तिपथं भाक्तं साधयत्येव वास्तवम्" ॥ इति

पूर्वमुक्तम्। तत्रादौ सम्यक्त्वाराधनाप्रक्रमे मुमुक्षूणां स्वसामग्रीतः समुद्भूतमपि सम्यग्दर्शनमासन्नभव्यस्य सिद्धिसंपादनार्थमारोहत्प्रकर्षं चारित्रमपेक्षते इत्याह—

**आसंसारविसारिणोऽन्धतमसान्मिथ्याभिमानान्वया-**
**च्च्युत्वा कालबलान्निमीलितभवानन्त्यं पुनस्तद्बलात्।**
**मीलित्वा पुनरुद्गतेन तदपक्षेपादविद्याच्छिदा,**
**सिद्ध्यै कस्यचिदुच्छ्रयत् स्वमहसा वृत्तं सुहृन्मृग्यते ॥ १ ॥**

अन्धतमसाद् द्रव्यमिथ्यात्वात् पक्षे दुर्नयविलसितात्, मिथ्याभिमानान्वयाद् विपरीताभिनिवेशलक्षणभावमिथ्यात्वेन पक्षे दुरभिनिवेशावष्टम्भरूपयुक्तिप्रणीताहङ्कारेण चानुगम्यमानात्, कालबलात् उपलक्षणात् कालादिलब्ध्यवष्टम्भात् पक्षे कार्यसिद्ध्यनुकूलसमयसामर्थ्यात्। निमीलितभवानन्त्यं तिरस्कृतानन्तसंसारं यथा भवति। तद्बलादनाद्यनुबद्धमिथ्यात्वसामर्थ्यात्। मीलित्वा तिरोभूय। भव्यः खल्वनादिमिथ्यादृष्टिः कालादिलब्ध्यान्तर्मुहूर्तमौपशमिकसम्यक्त्वमनुगम्य पुनस्ततः प्रच्युत्य नियमेन मिथ्यात्वमाविशति। तदुक्तम्—

"निशीथं वासरस्येव निर्मलस्य मलीमसम्।
पश्चादायाति मिथ्यात्वं सम्यक्त्वस्यास्य निश्चितम्" ॥ इति।

तदपक्षेपात् तथाविधान्धतमसप्रध्वंसात्। अविद्याच्छिदा अविद्यां कुमतिकुश्रुतविभङ्गस्वभावं मोहसंशयविपर्ययरूपं वा अज्ञानत्रयं छिनत्ति सम्यङ्मत्यादिरूपतां प्रापयतीत्यविद्याच्छित्, तेन। सिद्ध्यै स्वात्मोपलब्धये आत्मोत्कर्षपरापकर्षसाधनार्थं च। कस्यचिदासन्नभव्यस्य विजिगीषोश्च। उच्छ्रयत् उद्यत्। स्वमहसा सम्यग्दर्शनलक्षणेन प्रतापरूपेण च निजतेजसा।

मृग्यते अपेक्ष्यते। किं तत्? वृत्तं चारित्रम्। किंविशिष्टम्? सुहृन्मित्रम्। केन? स्वमहसा स्वस्यात्मनः स्वमात्मीयं महस्स्वमहस्तेन। कस्य? कस्यचित्। किं कुर्वत्? उच्छ्रयत्। कस्यै? सिध्यै। किंविशिष्टेन? अविद्याच्छिदा। कथंभूतेन भूत्वा? उद्गतेन उद्यतेन। कथं? पुनः। कस्मात्? तदुपक्षेपात्। किं कृत्वा? मीलित्वा। कथम्? पुनः। कस्मात्? तद्बलात्। किं कृत्वा? च्युत्वा अपेत्य। कस्मात्? अन्धतमसात्। किंविशिष्टात्? आसंसारविसारिणः संसारमभिव्याप्य स्वकार्ये विपरीताभिनिवेशे प्रवर्तनशीलात्। पुनः किंविशिष्टात्? मिथ्याभिमानान्वयात्। अन्वीयत इत्यन्वयः। मिथ्याभिमानेनान्वयोनुगम्यमानं मिथ्याभिमानान्वयः तस्मात्। कुतस्तथाविधात्ततः प्रच्युतमित्याह—कालबलात्। कथं? च्युत्वा प्रच्युत्य निमीलितभवानन्त्यम्।

मिथ्यात्वस्योपस्कारिकां सामग्रीं प्रतिनिवर्तयितुं मुमुक्षून् व्यापारयति—

**द्रवयन्तु सदा सन्तस्तां द्रव्यादिचतुष्टयीम्।**
**पुंसां दुर्गतिसर्गे या मोहारेः कुलदेवता॥ २॥**

द्रवयन्तु दूरीकुर्वन्तु। के? सन्तो मुमुक्षवः। काम्? तां द्रव्यादिचतुष्टयीम्। कथम्? सदा। तत्र द्रव्यं परसमयप्रतिमादिः। क्षेत्रं तदायतनतीर्थादिः। कालः संक्रान्तिग्रहणादिः। भावः शङ्कादिः। या किम्? या भवति। किंविशिष्टा? कुलदेवता गोत्रदेवी। कस्य? मोहारेः मिथ्यात्वशत्रोः। क्व कर्तव्ये? दुर्गतिसर्गे दुर्गतेर्मिथ्याज्ञानस्य नरकादिगतेर्वा सर्गे निर्माणे। केषाम्? पुंसां जीवानाम् यथा प्रतिपक्षजनानां दुर्गतौ दारिद्र्ये कर्तव्ये जिगीषोः कुलदेवता जागर्ति तथा मोहस्य प्राणिनां दुर्गतौ कर्तव्यायां यथोक्तद्रव्यादिचतुष्टयीति भावः।

मिथ्यात्वस्य कारणं लक्षणं चोपलक्षयति—

**मिथ्यात्वकर्मपाकेन जीवो मिथ्यात्वमृच्छति।**
**स्वादुं पित्तज्वरेणेव येन धर्मं न रोचते॥ ३॥**

ऋच्छति गच्छति। कोसौ? जीवः। किं तत्? मिथ्यात्वं विपरीताभिनिवेशम्। केन? मिथ्यात्वकर्मपाकेन मद्यसदृशस्य दर्शनमोहकर्मण

उदयेन । येन किम् ? येन विपरीताभिनिवेशेनाविष्टो जीवो न रोचते न श्रद्धत्ते । कम् ? धर्मं वस्तुयाथात्म्यम् । कमिव केनेत्याह—यथा न रोचते । कोसौ ? पित्तज्वरेणाविष्टो नरः । कम् ? स्वादुं मधुररसम् ।

मिथ्यात्वस्य विकल्पांस्तत्प्रणेतृमुखेन लक्षयति—

बौद्धशैवद्विजश्वेतपटमस्करिपूर्वकाः ।
एकान्तविनयभ्रान्तिसंशयाज्ञानदुर्दृशः ॥ ४ ॥

भवन्ति । के ? बौद्धादयः । किंविशिष्टाः ? एकान्तादिदुर्दृशः । बौद्धश्च शैवश्च द्विजश्च श्वेतपटश्च मस्करी च बौद्धशैवद्विजश्वेतपटमस्करिणः । ते पञ्च पूर्वे आद्यो येषां यौगादीनां ते तत्पूर्वकाः । एकान्तः सर्वथा क्षणिकादिः । भ्रान्तिर्विपर्ययः । एकांतश्च विनयश्च भ्रान्तिश्च संशयश्चाज्ञानं च तानि । तैर्दुर्दृशो मिथ्यादृष्टयः । मस्करीति मस्करिपूरणनामा पार्श्वनाथ-तीर्थोत्पन्न ऋषिः । स सद्योजातकेवलज्ञानाद्वीरजिनाद् ध्वनिमिच्छंस्तत्रा-जातध्वनौ मय्येकादशाङ्गधारिण्यपि नास्य ध्वनिनिर्गमोऽभूत् स्वशिष्ये तु गौतमे सोभूदिति मत्सराद्विकल्प्य नायं सर्वज्ञ इति ततोपसृत्य अज्ञाना-न्मोक्ष इति मतं प्रकाशितवान् ।

एकान्तमिथ्यात्वस्य दोषमाख्याति—

अभिसरति यतोऽङ्गी सर्वथैकान्तसंवित्,—
परयुवतिमनेकान्तात्मसंवित्प्रियोपि ।
मुहुरुपहितनानाबन्धदुःखानुबन्धं,
तमनुषजति विद्वान् को नु मिथ्यात्वशत्रुम् ॥ ५ ॥

नु अहो को विद्वाननुषजति । कम् ? तं मिथ्यात्वशत्रुम् । न कश्चि-त्प्रेक्षापूर्वकारी तमनुबध्नातीत्यर्थः । कीदृशम् ? मुहुरित्यादि, नानाबन्धाः प्रकृतिस्थित्यादिकर्मबन्धप्रकाराः रज्जुनिगडादिबन्धनानि च तद्वशाद् दुःख-स्यानुबन्धोऽविच्छेदः मुहुर्वारंवारमुपहितः संयोजितो नानाबन्धदुःखा-नुबन्धो येन सः । यतः किम् ? येन हेतुना अङ्गी प्राणी अभिसरति

अभिगच्छति सेवते । काम् ? सर्वथैकान्तसंवित्परयुवतिम् । सर्वथैकान्तानां केवलनित्यक्षणिकभावाभावभेदाभेदवादानां संवित्प्रतिज्ञा ज्ञानं वा सर्वथैकान्तसंवित् । सा परयुवतिः परस्त्री च मोहादिहेतुत्वात् । कीदृशोपि ? अनेकान्तात्मसंवित्प्रियोपि अनेकान्तात्मनो बहिरन्तर्वस्तुनः संवित् प्रिया वल्लभा यस्य स एव न परो मिथ्यादृष्टिरित्यपिशब्दार्थः ।

विनयमिथ्यात्वं निन्दति—

**शिवपूजादिमात्रेण मुक्तिमभ्युपगच्छताम् ।**
**निःशङ्कं भूतघातोयं नियोगः कोपि दुर्विधेः ॥ ६ ॥**

भवति । कोसौ ? अयं निःशङ्कं निरारेकं क्रियमाणो भूतघातः प्राणिवधः । किं भवति ? नियोगो व्यापारः । कस्य ? दुर्विधेः दुर्दैवस्य । किंविशिष्टः ? कोप्यलौकिकः । अथवा दुर्विधेर्दुरागमप्रयोगस्य नियोगो नियमेन प्रेरणमिति व्याख्येयम् । केषाम् ? विनयवादिनाम् । किं कुर्वताम् ? अभ्युपगच्छतामङ्गीकुर्वताम् । काम् ? मुक्तिं मोक्षम् । केन शिवपूजादिमात्रेण । शिवपूजा स्वयमाहृतबिल्वपत्रादियजनमुदकप्रदानप्रदक्षिणीकरणात्मबिडम्बनादिका । सा आदिर्यस्य गुरुपूजादेः सोयं शिवपूजादिर्विनयः । तन्मात्रेण क्रियान्तरनिरपेक्षेण ।

विपर्यासमिथ्यात्वपरिहारे प्रेरयति—

**येन प्रमाणतः क्षिप्तां श्रद्दधानाः श्रुतिं रसात् ।**
**चरन्ति श्रेयसे हिंसां स हिंस्यो मोहराक्षसः ॥ ७ ॥**

हिंस्यो वध्यः स्वहितकामैः । कोसौ ? सः मोहराक्षसः । मोहो विपरीतमिथ्यात्वनिमित्तं कर्म, मोहो राक्षसो निशाचर इवापकारभूयस्त्वात् । येन किम् ? येन हेतुना चरन्त्यनुतिष्ठन्ति मीमांसकाः । काम् ? हिंसां पशुवधादिकम् । कस्मै ? श्रेयसे स्वर्गादिसाधनपुण्यार्थम् । कस्मात् ? रसात् हर्षात् । किं कुर्वाणाः ? श्रद्दधाना रोचमानाः । काम् ? श्रुतिं वेदम् । किंविशिष्टाम् ? क्षिप्तां बौद्धादिभिस्तिरस्कृताम् । केन ? प्रमाणतः अनाप्तप्रणीतत्वात् पशुवधप्रधानत्वादित्यादियुक्तिबलेन ।

संशयमिथ्यादृष्टेः कलिकाले साहायकमाविष्करोति—

**अन्तस्खलच्छल्यमिव प्रविष्टं रूपं स्वमेव स्ववधाय येषाम् ।**
**तेषां हि भाग्यैः कलिरेष नूनं तपत्यलं लोकविवेकमश्नन् ॥८॥**

नूनं निश्चितमहमेवं मन्ये—तपति निरङ्कुशं विजृंभते । कोसौ ? एष प्रतीयमानः कलिर्दुःषमकालः । किं कुर्वन् ? अश्नन् भक्षयन् संहरन् । कम् ? लोकविवेकं व्यवहर्तृंजनानां युक्तायुक्तविचारम् । कथम् ? अलं पर्याप्तम् । कैः ? भाग्यैः पुण्यैः । केषाम् ? तेषां हि तेषामेव सितपटानाम् । येषां किं ? येषां भवति । किं तत् ? स्वमेव रूपं । किं केवली कवलाहारी उतस्विदन्यथेत्यादि दोलायितप्रतीतिलक्षणमात्मस्वरूपम् । कस्मै ? स्ववधाय आत्मनो विपरीताभिनिवेशलक्षणपरिणमनेनोपघातार्थम् । किमिव ? शल्यमिव काण्डादि यथा । किंविशिष्टम् ? प्रविष्टम् । क्व ? अन्तः शरीरमध्ये । किं कुर्वत् ? स्खलत् प्रचलत् । कलिरित्यनेन कलिकाले श्वेतपटमतमुद्भूदिति ज्ञापयति ।

अज्ञानमिथ्यादृशां दुर्ललितान्यनुशोचति—

**युक्तावनाश्वस्य निरस्य चाप्तं भूतार्थमज्ञानतमोनिमग्नाः ।**
**जनानुपायैरतिसंदधानाः पुष्णन्ति ही स्वव्यसनानि धूर्ताः ९**

पुष्णन्ति संतर्पयन्ति । के ? ते धूर्ताः । कानि स्वव्यसनानि आत्मनोभिमतदुराचारान् । कथम् ? ही कष्टम् । किं कुर्वते ? अतिसंदधाना वञ्चयमानाः । कान् ? जनान् लोकान् । कैः ? उपायैः तदभिप्रायानुप्रवेशोपक्रमैः । किंविशिष्टाः सन्तः ? अज्ञानतमोनिमग्नाः अबोधान्धकारब्रुडिताः । किं कृत्वा ? अनाश्वस्य विश्वासमकृत्वा । कस्याम् ? युक्तौ सर्वज्ञोस्ति सुनिश्चितासंभवद्बाधकप्रमाणत्वात्सुखादिवदित्यादिप्रमाणव्यवस्थायाम् । तथा निरस्य युक्त्याभासबलेन निराकृत्य । कम् ? आप्तं सर्वज्ञम् । किंविशिष्टम् ? भूतार्थं परमार्थसन्तम् ।

प्रकारान्तरेण मिथ्यात्वभेदान् कथयन् सर्वत्र सर्वदा तस्यापकारकत्वं कथयति—

**तत्त्वारुचिरतत्त्वाभिनिवेशस्तत्त्वसंशयः ।**
**मिथ्यात्वं वा क्वचित्किंचिन्नाश्रेयो जातु तादृशम्॥१०॥**

वाशब्दः पक्षान्तरसूचने भवति । किंतन्मिथ्यात्वं तत्त्वारुच्यादिभेदात् त्रिविधम् । तत्र तत्त्वारुचिर्वस्तुयाथात्म्ये नैसर्गिकमश्रद्धानम् । तथा चोक्तम्—

"एकेन्द्रियादिजीवानां घोराज्ञानविवर्तिनाम् ।
तीव्रसंतमसाकारं मिथ्यात्वमगृहीतकम्" इति ॥

अतत्त्वाभिनिवेशो गृहीतमिथ्यात्वं परोपदेशाज्जातं त्रिषष्ठ्यधिकत्रिशतभेदम् । तथा चोक्तम्—

"भेदाः क्रियाऽक्रियावादिविनयाज्ञानवादिनाम् ।
गृहीतासत्यदृष्टीनां त्रिषष्टित्रिशतप्रमाः ॥" इति ।

एतत्प्रपञ्चो ज्ञानदीपिकायां द्रष्टव्यः ।

तत्त्वसंशयो जिनोक्तं तत्त्वं सत्यं नचेति संकल्पः । न चास्ति । किम् ? अश्रेयः पापमकल्याणं वा किंचित् । किंविशिष्टम् ? तादृशं येन केनापि मिथ्यात्वेन तुल्यम् । क ? क्वचिद् देशे । जातु कदाचिदपि ।

मिथ्यात्वव्यवच्छेदपरं प्रशंसति—

**यो मोहसप्तार्चिषि दीप्यमाने चेक्लिश्यमानं पुरुषं झषं वा ।**
**उद्धृत्य निर्वापयतीद्धविद्यापीयूषसेकैः स कृती कृतार्थः ॥११॥**

स कृती विद्वान्, कृतार्थः पूर्णमनोरथः स्यात् । यः किम् ? यो निर्वापयति विध्यापयति । कम् ? पुरुषं जीवम् । कमिव ? झषं वा मत्स्यमिव । कैः ? इद्धविद्यापीयूषसेकैः दीप्तप्रमाणनयाद्यधिगमसुधासेचनैः । किं कृत्वा ? उद्धृत्य मिथ्यात्वाग्नेः पृथक्कृत्य । किं कुर्वाणम् ? चेक्लिश्यमानं भृशं पुनः पुनर्वा उपतप्यमानम् । क ? मोहसप्तार्चिषि मिथ्यात्वाग्नौ । किं कुर्वाणे ? दीप्यमाने ज्वलति । सप्तार्चिरित्युपमानपदं मिथ्यात्वस्य सप्तापि भेदाः कैश्चिदिष्यन्त इति सूचयति । तथा च पठन्ति—

"ऐकान्तिकं सांशयिकं च मूढं स्वाभाविकं वैनयिकं तथैव ।
व्युद्ग्राहिकं तद्विपरीतसंज्ञं मिथ्यात्वभेदानवबोध सप्त ॥"

अथवा मोह इत्यनेन मिथ्यात्वसम्यङ्मिथ्यात्वसम्यक्त्वाख्यास्त्रयो दर्शनमोहभेदा अनन्तानुबन्धिक्रोधमानमायालोभाख्याश्चत्वारश्चारित्रमोहभेदा गृह्यन्ते सप्तानामपि सम्यक्त्वघातकत्वेन पुरुषसंतापकत्वादिति सप्तार्चिःशब्दः स्मरयति ।

मिथ्यात्वसम्यक्त्वयोः सुखप्रतीत्यर्थं लक्षणमुपसंगृह्णाति—

**ग्रासाद्यादीनवे देवे वस्त्रादिग्रन्थिले गुरौ ।**
**धर्मे हिंसामये तद्धीर्मिथ्यात्वमितरेतरत् ॥ १२ ॥**

भवति । किं तत् ? मिथ्यात्वम् । किम् ? तद्धीर्देवगुरुधर्मबुद्धिः । क्व ? देवे । किंविशिष्टे ? ग्रासाद्यादीनवे–ग्रासादिभिः कवलाहारस्त्रीशस्त्राक्षसूत्रधारणादिभिः कार्यैरनुमीयमाना आदीनवाः क्षुद्रागद्वेषमोहादयो दोषा यस्य स तस्मिन् । तथा गुरौ । किंविशिष्टे ? वस्त्रादिग्रन्थिले वस्त्रदण्डादिग्रन्थग्राहिणि । वस्त्रादिग्रन्थिक इति वा पाठः । तत्र वस्त्रादिग्रन्थोस्यास्तीति "ठेनावतः" इति मत्वर्थीयष्ठः प्रत्ययः । उक्तं च—

**सर्वाभिलाषिणः सर्वभोजिनः सपरिग्रहाः ।**
**अब्रह्मचारिणो मिथ्योपदेशा गुरवो न तु ॥**

तथा धर्मे किंविशिष्टे ? हिंसामये प्राणव्यपरोपणरूपे ।

तथा भवति । किं तत् ? इतरत् सम्यक्त्वम् । किम् ? तद्धीः । किंविशिष्टा ? इतरा निर्दोषे देवे निर्ग्रन्थे गुरौ अहिंसालक्षणे च धर्मे देवगुरुधर्मबुद्धिरित्यर्थः ।

सम्यक्त्वसामग्रीमाशंसति—

**तद् द्रव्यमव्यथमुदेतु शुभैः स देशः**
**संतन्यतां प्रतपतु प्रततं स कालः ।**
**भावः स नन्दतु सदा यदनुग्रहेण**
**प्रस्तौति तत्त्वरुचिमाप्तगवी नरस्य ॥ १३ ॥**

उदेतु स्वकार्ययोद्भूयात् । किं तत् ? तद् द्रव्यं जिनदेहतत्प्रतिमादि ।

कथं कृत्वा ? अव्यथं निर्बाधम् । तथा संतन्यताम् अविच्छिन्नमाश्रीयताम् । कोसौ ? स देशः समवसरणचैत्यालयादिः । कैः ? शुभैः कल्याणैः । तथा प्रतपतु अव्याहतशक्तिर्भूयात् । कोसौ ? स कालोर्धपुद्गलावर्तादिः जिन-जन्माभिषेकनिःक्रमणादिर्वा । कथम् ? प्रततं सततम् । तथा नन्दतु समृद्धो भूयात् । कोसौ ? स भावोऽधःप्रवृत्तकरणादिः । कथम् ? सदा । यदनुग्रहेण येषां द्रव्यादीनामतिशयाधानेन प्रस्नौति प्रक्षरत्याविर्भावयति । कासौ ? आप्तगवी परापरगुरूणां गौर्वाक् । काम् ? तत्त्वरुचिं तत्त्वस्य परापरवस्तु-याथात्म्यस्य रुचिः श्रद्धानं विपरीताभिनिवेशविविक्तात्मनः स्वरूपं, न त्वि-च्छालक्षणं, तस्योपशान्तकषायादिषु मुक्तात्मसु चासंभवात् । कस्य ? नरस्य जीवस्य । यथा मनुष्यस्याप्तप्रत्ययिता गौरनड्वाही योग्यद्रव्याद्यनुग्रहात् क्षीरं प्रस्नौतीति श्लेषोपमाच्छायालंकारः ।

परमाप्तलक्षणमाह—

मुक्तोष्टादशभिर्दोषैर्युक्तः सार्वज्ञसंपदा ।
शास्ति मुक्तिपथं भव्यान् योसावाप्तो जगत्पतिः ॥१४॥

दोषैः । ते यथा—

क्षुधा तृषा भयं द्वेषो रागो मोहश्च चिन्तनम् ।
जरा रुजा च मृत्युश्च स्वेदः खेदो मदो रतिः ॥ १ ॥
विस्मयो जननं निद्रा विषादोऽष्टादश ध्रुवाः ।
त्रिजगत्सर्वभूतानां दोषाः साधारणा इमे ॥ २ ॥
एतैर्दोषैर्विनिर्मुक्तः सोयमाप्तो निरंजनः ।
विद्यंते येषु ते नित्यं तेत्र संसारिणः स्मृताः ॥ ३ ॥

एतेनापायापगमातिशय उक्तः । सार्वज्ञसंपदा—सार्वज्ञे अनन्तज्ञानादिच-तुष्टयलक्षणायां जीवन्मुक्तौ सति, संपत् समवसरणाष्टमहाप्रातिहार्यादि विभू-तिः, तया । एतेन ज्ञानातिशयः पूजातिशयश्चोक्तः । शास्तीत्यादि । एतेन वच-नातिशय उक्तः । एवमुत्तरत्रापि बोध्यम् । असावाप्तः स्यात् । किंविशिष्टः ? जगत्पतिस्त्रैलोक्यनाथः । यः किम् ? यः शास्ति । कान् ? भव्यान् । कम् ? मुक्तिपथम् । किंविशिष्टः सन् ? मुक्तस्त्यक्तः । कैः ? दोषैः । कतिभिः ? अष्टादशभिः । पुनः किंविशिष्टः ? युक्तः सहितः । कया ? सार्वज्ञसंपदा ।

मुमुक्षून् परमाप्तसेवायां व्यापारयति—

यो जन्मान्तरतत्त्वभावनभुवा बोधेन बुद्ध्वा स्वयं,
श्रेयोमार्गमपास्य घातिदुरितं साक्षादशेषं विदन्।
सद्यस्तीर्थकरत्वपक्त्रिमगिरा कामं निरीहो जगत्,
तत्त्वं शास्ति शिवार्थिभिः स भगवानाप्तोत्तमः सेव्यताम् १५

सेव्यतामाराध्यताम्। कोसौ ? स आप्तोत्तमो भगवानिन्द्रादीनां पूज्यः। कैः ? शिवार्थिभिः। यः किम् ? यः शास्ति। किम् ? जगद् भव्यलोकम्। किम् ? तत्त्वं जीवादिवस्तु। कथम् ? कामं यथेष्टम्। किंविशिष्टः सन् ? निरीहः शासनतत्फलवाञ्छारहितः, तन्निमित्तमोहप्रक्षयात्। कया ? सद्यस्तीर्थकरत्वपक्त्रिमगिरा, सद्यः साक्षादशेषवेदनक्षणे जातेन तीर्थकरत्वपाकेन तीर्थकरत्वाख्यपुण्यविशेषोदयेन निर्वृत्तया वाचा। किं कुर्वन् ? विदन् जानन्। किं तत् ? अशेषं सर्वम्। कथम् ? साक्षात् प्रत्यक्षम्। किं कृत्वा ? अपास्य विश्लेष्य। किं तत् ? घातिदुरितं मोहनीयज्ञानावरणदर्शनावरणान्तरायाख्यकर्मचतुष्टयम्। किं कृत्वा ? बुद्ध्वा ज्ञात्वा। कम् ? श्रेयोमार्गं मोक्षोपायं। कथम् ? स्वयं परोपदेशमन्तरेण। केन ? बोधेन ज्ञानेन। किंविशिष्टेन ? जन्मान्तरतत्त्वभावनभुवा। जन्मान्तरेऽन्यस्मिन्भवे तत्त्वभावनं वस्तुयाथात्म्याभ्यासः, तस्माद्भवतीति तद्भूस्तेन।

ऐदंयुगीनानां तथाविधाप्तनिर्णयः कुतः स्यादित्यारेकायामाह—

शिष्टानुशिष्टात् सोत्यक्षोप्यागमाद्युक्तिसंगमात्।
पूर्वापराविरुद्धाच्च वेद्यतेद्यतनैरपि ॥ १६ ॥

वेद्यते निश्चीयते। कोसौ ? स आप्तोत्तमः। कैः ? अद्यतनैः सांप्रतिकैः श्रेयोर्थिभिः। किं पुनस्तत्कालीनैरित्यपिशब्दार्थः। किंविशिष्टोपि ? अत्यक्षोपि चक्षुरादीनामलक्ष्योपि। कस्मात् ? आगमात्—

"आप्तेनोत्सन्नदोषेण सर्वज्ञेनागमेशिना।
भवितव्यं नियोगेन नान्यथा ह्याप्तता भवेत्॥"

इत्यादिकात्। किंविशिष्टात् ? शिष्टानुशिष्टात्। शिष्टा आप्तोपदेशसंपादितशिक्षाविशेषाः स्वामिसमन्तभद्रादयः। तैरनुशिष्टाद् गुरुपर्वक्र-

मेणोपदिष्टात् । पुनः किंविशिष्टात् ? युक्तिसंगमात् युक्त्या संयुज्यमानात् । युक्तिश्चात्र 'आप्तागमः प्रमाणं स्याद्यथावद्वस्तुसूचकत्वात्' इत्यादिका । पुनरपि किंविशिष्टात् ? पूर्वापराविरुद्धात्, "न हिंस्यात्सर्वभूतानी"ति, "यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयंभुवे"ति चेत्यादिवन्न पूर्वापरविरोधसहितात् । यतो वचसो दुष्टत्वादुष्टत्वे तथाविधाश्रयवशाद्भवतस्ततः शिष्टानुशिष्टादित्युक्तम् ।

अत एवेदमाह—

**विशिष्टमपि दुष्टं स्याद्वचो दुष्टाशयाश्रयम् ।**
**घनाम्बुवत्तदेवोच्चैर्वन्द्यं स्यात्तीर्थगं पुनः ॥ १७ ॥**

स्यात् । किं तत् ? वचः । किंविशिष्टम् ? दुष्टमऽश्रद्धेयतया विपरीतार्थकारि । किंविशिष्टं ? विशिष्टमपि आप्तोपदिष्टं, किं पुनरितरत् । किंविशिष्टं सत् ? दुष्टाशयाश्रयं दर्शनमोहोदयाक्रान्तचित्तपुरुषस्थम् । किंवत् ? घनाम्बुवत् । घनस्य गङ्गाम्बुवर्षिमेघस्य जलं पथ्यमपि दुष्टाधारगतमपथ्यं यथा । तदेव वचः पुनरुच्चैर्वन्द्यमत्यन्तपूज्यं स्यात् । किंविशिष्टं सत् ? तीर्थगमऽदुष्टचित्तपुरुषाश्रयं पवित्रदेशाश्रयमिव घनाम्बु ।

वाक्यस्य यत्र येन प्रामाण्यं तत्र तेन तत्कथयति—

**दृष्टेर्थेऽध्यक्षतो वाक्यमनुमेयेनुमानतः ।**
**पूर्वापराविरोधेन परोक्षे च प्रमाण्यताम् ॥ १८ ॥**

प्रमाण्यतां प्रमाणं क्रियतां शिष्टैः । किं तत् ? वाक्यं परस्परसापेक्षाणां पदानामेकपराणां निरपेक्षः समुदायः । क ? अर्थे वस्तुनि । किंविशिष्टे ? दृष्टे प्रत्यक्षप्रमाणग्रहणयोग्ये । केन ? अध्यक्षतः प्रत्यक्षेण । तथाऽनुमेयेऽनुमानग्रहणयोग्येर्थे वाक्यमनुमानतः साधनात् साध्यविज्ञानेन प्रमाण्यताम् । च तथा परोक्षेऽस्मदादिप्रत्यक्षलैङ्गिकग्रहणायोग्येर्थे अतींद्रियविषये वाक्यं पूर्वापराविरोधेन प्रमाण्यताम् ।

आप्तानाप्तोक्तवाक्ययोर्लक्षणमाह—

**यैकवाक्यतया विष्वग्वर्तते साहती श्रुतिः ।**
**क्वचिद्धि केनचिद्भूता वर्तन्ते वाक्क्रियादिना ॥ १९ ॥**

स्यात् । कासौ ? सा श्रुतिः प्रवचनम् । किंविशिष्टा ? आर्हती जैनी । या किम् ? या वर्तते व्याप्रियते । कया ? एकवाक्यतया एकादशार्थप्रतिपादकत्वेन । क्व ? विश्वक् सर्वत्र सिद्धान्ते तर्के काव्यादौ च । हि यस्माद्धूर्तैर्न्ते जीवन्ति । के ? धूर्ताः परप्रतारणपराः । केन ? वाक्क्रियादिना वचनचेष्टावेषादिना । केन ? केनचिन्नियतेन । क्व ? क्वचिन्नियतविषये जिनवाक्ये ।

हेतुप्रतिघातशङ्कां प्रत्याचष्टे—

**जिनोक्ते वा कुतो हेतुबाधगन्धोपि शंक्यते ।**
**रागादिना विना को हि करोति वितथं वचः ॥ २० ॥**

वा अथवा कुतः शङ्क्यते न कुतश्चिद्युक्तिज्ञैर्विकल्प्यते इत्यर्थः । कोसौ ? हेतुबाधगन्धोपि । हेतुभिर्युक्तिभिर्बाधो विपरीतार्थोपस्थापनम् । तस्य गन्धो लेशः । किं पुनः साकल्यमित्यपिशब्दार्थः । क्व ? जिनोक्ते । जिनस्य रागादीनां जेतुरुक्तं वचनं, तस्मिन् । यत्र तु रागादयः स्युस्तत्र वचसो वैतथ्यं संभवत्येव । अत्र व्यतिरेकेण समर्थनमाह,—हि यस्मात् को न कश्चित्करोति । किं तत् ? वचः । किंविशिष्टम् ? वितथं मिथ्या । कथम् ? विना । केन ? रागादिना रागद्वेषमोहानामन्यतमेन ।

रागाद्युपहतानामाप्ततां प्रतिक्षिपति—

**ये रागादिजिताः किंचिज्जानन्ति जनयन्त्यपि ।**
**संसारवासनान्तेपि यद्याप्ताः किं ठकैः कृतम् ॥ २१ ॥**

ये रागादिजिताः रागद्वेषमोहैरभिभूताः सन्तः किंचिदल्पं जानन्ति तथा जनयन्ति । काम् ? संसारवासनां गृहगृहिण्याद्यभिलाषसंस्कारम् । तेपि यद्याप्ता यथार्थवादिनः कल्प्यन्ते लोकैस्तदा किं ठकैः कृतं खारपटैः कोपराधः कृतो, येन तेप्याप्तत्वेन न प्रतिपद्यन्ते इति सामर्थ्याद् गम्यते ।

आप्ताभासानामुपेक्षणीयतोपायमुपदिशति—

**योऽर्धाङ्गे शूलपाणिः कलयति दयितां मातृहा योत्ति मांसं,**
**पुंस्ख्यातीक्षावलाद्यो भजति भवरसं ब्रह्मवित्तत्परो यः ।**

**यश्च स्वर्गादिकामः स्यति पशुमकृपो भ्रातृजायादिभाजः,**
**कानीनाद्याश्च सिद्धा य इह तदवधिप्रेक्षया ते ह्युपेक्ष्याः ॥२२॥**

उपेक्ष्या रागद्वेषाविषयीकर्तव्याः। तेषु रागो द्वेषश्च स्वहितकामैर्न कर्तव्य इत्यर्थः। के ते ? शम्भुसुगतसांख्यवेदान्तियाज्ञिकव्यासवशिष्ठादयः। कया तदवधिप्रेक्षया। तेषां शम्भुप्रभृतीनामवधयः शास्त्राणि तदवधयः। तेषां प्रेक्षा विमर्शस्तया। कथम् ? हि नियमेन। उपेक्ष्या एवेत्यर्थः। यः किम् ? यः शम्भुः कलयति धारयति। काम् ? दयितां पार्वतीम्। क्व ? अर्धाङ्गे शरीरार्धे। किंविशिष्टः सन् ? शूलपाणिः शूलं शस्त्रविशेषः पाणौ हस्ते यस्य स एवम्। तथा यः सुगतोत्ति खादति। किं तत् ? मांसम्। कथंभूतो भूत्वा ? मातृहा जन्मकाले जननीं हत्वेत्यर्थः। तथा यः सांख्यो भजति सेवते। कम् ? भवरसं विषयसुखम्। कस्मात् ? पुंस्ख्यातीक्षाबलात्। पुमान् पुरुषः ख्यातिः प्रकृतिः। पुमांश्च ख्यातिश्च पुंस्ख्याती। तयोरीक्षा ज्ञानं, तस्या बलमवष्टम्भस्तस्मात्। तथा यो वेदान्ती भवति। किंविशिष्टः? तत्परः। तद्भवरसभजनं परं प्रधानं यस्य स एवम्। किंविशिष्टः सन् ? ब्रह्मवित्। ब्रह्म आनन्दैकरूपं तत्त्वं वेत्ति ब्रह्मज्ञ इत्यर्थः। तथा यो याज्ञिकः स्यति हिनस्ति। कम् ? पशुं छागादिकम्। किंविशिष्टः सन् ? स्वर्गादिकामः। स्वर्ग आदिर्येषां पुत्रधनादीनां ते स्वर्गादयोर्थाः। तान् कामयते। कथंभूतो भूत्वा ? अकृपो निर्दयः। तथा ये इह लोके कानीनाद्या भ्रातृजायादिभाजः। भ्रातुर्जायाश्चण्डालकन्यादिस्त्रियश्च सेवितवन्तः। सिद्धाः प्रसिद्धाः ख्यातिं गताः। कन्याया अपत्यं कानीनो व्यासः। स आद्यो येषां वशिष्ठादीनां त एवम्। प्रपञ्चश्चास्य ज्ञानदीपिकायां द्रष्टव्यः।

युक्त्यनुगृहीतपरमागमाधिगतार्थपदार्थव्यवहारपरस्य मिथ्यात्वविजयमाविष्करोति—

**यो युक्त्यानुगृहीतयाप्तवचनज्ञस्यात्मनि स्फारिते,—**
**ष्वर्थेषु प्रतिपक्षलक्षितसदाद्यानन्त्यधर्मात्मसु।**
**नीत्या क्षिप्तविपक्षया तदविनाभूतान्यधर्मोत्थया,**
**धर्मं कस्यचिदर्पितं व्यवहरत्याहन्ति सोन्तस्तमः ॥ २३ ॥**

युक्त्या—आप्तवचनं प्रमाणं दृष्टेष्टाविरुद्धत्वात् सर्वमनेकान्तात्मकं सत्त्वादित्यादिकया । अनुगृहीतया व्यवस्थितया आप्तवचनज्ञप्त्या ।

"जीवो त्ति हवदि चेदा उवओगविसेसिदो पहू कत्ता ।
भोत्ता य देहमेत्तो ण हु मुत्तो कम्मसंजुत्तो ॥"

इत्याद्यागमज्ञानेन । वचनमुपलक्षणम् । तेनाप्तहस्तसंज्ञादिजनितमपि ज्ञानमागम एव । तथा च सूत्रम्—

"आप्तवचनादिनिबन्धनमर्थज्ञानमागमः" इति ।

स्फारितेषु स्फुरद्रूपीकृतेषु अर्थेषु जीवपुद्गलधर्माधर्माकाशकालेषु षट्सु पदार्थेषु प्रतीत्यादि । सत् सत्ता भाव इत्यर्थः । भावप्रधानोयं निर्देशः । सत् आदिर्येषां नित्यभेदादीनां धर्माणां ते सदादयः प्रतिपक्षाविरुद्धधर्मा यथाक्रममसत्क्षणिकभेदादयः प्रतिपक्षैर्लक्षिता विशिष्टाः सदादयः प्रतिपक्षलक्षितसदादयः । ते च ते अनन्ता एवानन्त्या धर्मा विशेषाः प्रतिपक्षलक्षितसदाद्यानन्त्यधर्माः । त एवात्मा स्वरूपं येषां ते तथोक्ताः । नीत्या नीयते परिच्छिद्यते प्रमाणपरिगृहीतार्थैकदेशोऽनयेति नीतिर्नयः स्वार्थैकदेशे व्यवसायात्मको बोध इत्यर्थः । आक्षिप्तविपक्षया आक्षिप्तोऽपेक्षितोऽक्षिप्तो वाऽनिराकृतो विपक्षः प्रत्यनीकनयो यया । द्रव्यार्थनयो हि पर्यायार्थनयं पर्यायार्थनयश्च द्रव्यार्थनयमपेक्षमाण एव सम्यग् भवति नान्यथा । एवं सदसदादिष्वपि चिन्त्यम् । तदित्यादि । तेन विवक्षितेन धर्मेणाविनाभूतः सहभावेन क्रमभावेन वा नियतोऽन्यधर्मो हेतुः, साध्याविनाभावित्वेन निश्चितो हेतुरिति वचनात् । तत्र तस्माद्वा उत्था उत्थानं यस्याः सा तया । तद्यथा, पर्वते धर्मिणि सिसाधयिषितो धर्मो वह्निः । तदविनाभावित्वेन निश्चितो धर्मो धूमः । तज्जनिता प्रतिपत्तिर्नीतिर्व्यवहर्तॄणामप्रतिपन्नं वह्निं पर्वतस्थं प्रवृत्तिविषयं निवृत्तिविषयं वा कुर्यात् धर्मं सदसदादीनामन्यतमं कस्यचिज्जीवादिपदार्थेषु षट्सु मध्ये विवक्षितस्यैकस्य अर्पितं विवक्षितं व्यवहरति प्रवृत्तिनिवृत्तिविषयं करोति । अन्तस्तमो मिथ्यात्वमज्ञानं वा । आहन्ति समन्ततो नाशयति स्वस्य परस्य च निराकरोतीत्यर्थः । कोसौ ? सः । किं तत् ? अन्तस्तमः । यः किम् ? यो व्यवहरति । कम् ? धर्मम् ।

किंविशिष्टम् ? अर्पितम् । कया ? नीत्या । किंविशिष्टया ? आक्षिप्तविपक्षया । पुनः किंविशिष्टया ? तदविनाभूतान्यधर्मोत्थया । कस्य संबन्धिनम् ? कस्यचित् । केषु मध्ये । अर्थेषु । किंविशिष्टेषु ? प्रतिपक्षलक्षितसदाद्यानन्त्यधर्मात्मसु । पुनः किंविशिष्टेषु ? स्फारितेषु । क्व ? आत्मन्यन्तस्तत्त्वे । कया ? आप्तवचनज्ञप्त्या । किंविशिष्टया ? अनुगृहीतया । कया ? युक्त्या ।

जीवादिपदार्थान् प्रत्येकं युक्त्या समर्थयते—

**सर्वेषां युगपद्गतिस्थितिपरीणामावगाहान्यथा,—**
**योगाद्धर्मतदन्यकालगगनान्यात्मा त्वहंप्रत्ययात् ।**
**सिध्येत् स्वस्य परस्य वाक्प्रमुखतो मूर्तत्वतः पुद्गल-**
**स्ते द्रव्याणि षडेव पर्ययगुणात्मानः कथंचिद् ध्रुवाः ॥२४**

सिध्येदिति मध्यदीपकत्वात्प्रतिवाक्यं योज्यम् । तत्र वचनपरिणामेन सिध्येयुः परीक्षकचेतसि प्रतीतिमागच्छेयुः । कानि ? धर्मतदन्यकालगगनानि । धर्मश्च तदन्यश्चाधर्मः कालश्च गगनं चाकाशं, तानि चत्वारि । कस्मात् ? युगपद् गतिस्थितिपरीणामावगाहान्यथायोगात् । केषाम् ? सर्वेषां यथास्वं जीवादिपदार्थानाम् । अन्यथा धर्मादीनन्तरेणायोगोऽनुपपत्तिरन्यथायोगः । गतिश्च स्थितिश्च परीणामश्चावगाहश्च गतिस्थितिपरीणामावगाहाः । युगपद्भाविनो गतिस्थितिपरीणामावगाहा युगपद्गतिस्थितिपरीणामावगाहाः । तेषामन्यथायोगस्तदन्यथानुपपत्तिस्तस्मात् । आत्मा जीवस्तु पुनः स्वस्य स्वदेहस्थः सिध्येत् प्रतीतिमागच्छेत् । कस्मात् ? अहंप्रत्ययात् अहमित्यन्तर्मुखाकारतया प्रतीतेः । तथा परस्यात्मा परशरीरस्थो जीवः सिध्येत् । कस्मात् ? वाक्प्रमुखतः । वाक् वचनं प्रमुख आदिर्यस्य चेष्टादिविशिष्टकार्यस्य तद्वाक्प्रमुखं, तस्मात् । तथा सिध्येत्पुद्गलः । कस्मात् ? मूर्तत्वतो रूपादिमत्त्वात् । ते च धर्माधर्मकालाकाशजीवपुद्गला गुणपर्ययवत्त्वात् द्रव्याणि भवन्ति । कति ? षडेव । नो न्यूनानि नाधिकानि । किंविशिष्टास्ते ? पर्ययगुणात्मानः । क्रमभुवः पर्ययाः सहभुवो गुणाः । पर्ययाश्च गुणाश्च पर्ययगुणाः । ते आत्मानः स्वभावा येषां ते तथोक्ताः । पुनः

किंविशिष्टाः ? कथंचिद् ध्रुवाः । सर्वेषां मध्ये गतिस्थितिपक्षे जीवपुद्गलानां तेषामेव सक्रियत्वात् गतिमतामेव च स्थितिसंभवात्, परिणामावगाहपक्षे पुनः षण्णामपि, अपरिणामिनः पदार्थस्य खपुष्पकल्पत्वात् आधारमन्तरेणाधेयस्थित्ययोगात् । न परः कालः, परेषामिव स्वस्यापि परिणामस्य कारणं प्रदीप इव प्रकाशस्य । आकाशं च परेषामिव स्वस्याप्यवकाशहेतुः, आकाशं च स्वप्रतिष्ठमित्यभिधानात् । अहंप्रत्ययात् अहं सुखी अहं दुःखीत्यादिज्ञानात् प्रतिप्राणि स्वयं संवेद्यमानात् । मूर्तस्वतो रूपादिमत्त्वात् । यस्य हि रूपरसगन्धस्पर्शाः सत्तयाऽभिव्यक्त्या वा प्रतीयन्ते स सर्वोपि पुद्गलः । तेन पृथिव्यप्तेजोवायूनां पर्यायभेदेनान्योन्यं भेदो रूपाद्यात्मकपुद्गलद्रव्यात्मकतया वाभेदः । षडेव, पृथिव्यप्तेजोवायूनां पुद्गलपरिणामविशेषत्वेन द्रव्यान्तरत्वायोगात् दिश आकाशप्रदेशपङ्क्तिरूपतया ततोनर्थान्तरत्वात् । द्रव्यमनसः पुद्गले भावमनसश्चात्मनि पर्यायतयान्तर्भावात् परपरिकल्पितस्य च मनोद्रव्यस्यासिद्धेः । पर्याया अर्थपर्याया व्यञ्जनपर्यायाश्चेति द्वेधा । तत्राद्या धर्मादिषु । ते परे च जीवपुद्गलयोः । उक्तं च—

धर्माधर्मनभःकाला अर्थपर्यायगोचराः ।  
व्यञ्जनार्थेन[1] संबद्धौ द्वावन्यौ जीवपुद्गलौ ॥ १ ॥  
स्थूलो व्यञ्जनपर्यायो वाग्गम्यो नश्वरः स्थिरः ।  
सूक्ष्मः प्रतिक्षणध्वंसी पर्यायश्चार्थसंज्ञकः ॥ २ ॥ इति ।

गुणा मूर्तद्रव्यस्था मूर्ता अमूर्त्तद्रव्यस्थाश्चामूर्ता कथंचिद् ध्रुवा द्रव्यरूपतया नित्याः पर्यायरूपतया चानित्या इति कथंचिच्छब्दाल्लभ्यते । तथाहि । जीवादि वस्तु नित्यं तदेवेदमिति प्रतीतेः । यद्धि बालाद्यवस्थायां प्रतिपन्नं देवदत्तादिवस्तु तद्युवाद्यवस्थायां तदेवेदमिति निरारेकं प्रत्यभिज्ञानतो व्यवहरन्ति सर्वेपि । तथा तदनित्यं बालाद्यवस्थातो युवाद्यवस्थान्येति निर्बाधतया प्रतीतेः ।

एवं धर्मादिवदास्रवाद्यपि समधिगम्य श्रद्दध्यादित्यनुशास्ति—

**धर्मादीनधिगम्य सच्छ्रुतनयन्यासानुयोगैः सुधीः,**  
**श्रद्दध्याददिदाज्ञयैव सुतरां जीवांस्तु सिद्धेतरान् ।**

---

१ व्यञ्जनेन तु संबद्धौ इति पाठ आलापपद्धत्यादौ दृश्यते ।

**स्यान्मन्दात्मरुचेः शिवाप्तिभवहान्यर्थो ह्यपार्थः श्रमो
मन्येताप्तगिरास्रवाद्यपि तथैवाराधयिष्यन् दृशम् ॥ २५ ॥**

श्रद्दध्यादभिनिविशेत । कोसौ ? सुधीर्धीधनः । कान् ? धर्मादीन् । किं कृत्वा ? अधिगम्य ज्ञात्वा । कैः ? सच्छ्रुतनयन्यासानुयोगैः । श्रुतनयौ प्रागुक्तलक्षणौ । न्यासो नामादिनिक्षेपः । अनुयोगो निर्देशादिः सदादिश्च श्रुतं च नयश्च न्यासश्चानुयोगश्च श्रुतनयन्यासानुयोगाः । सन्तः समीचीनाः श्रुतनयन्यासानुयोगाः सच्छ्रुतादयस्तैः । तथा श्रद्दध्यात् । कोसौ ? अवित् । ईषद्वेत्तीत्यविन्मन्दमतिः । कान् ? धर्मादीन् । किं कृत्वा ? अधिगम्य । कया ? आज्ञयैव, 'नान्यथावादिनो जिना' इत्येवं मनसि समाधाय । तथा श्रद्दध्यात् सुधीरविच्च । कान् ? जीवान् । किंविशिष्टान् ? सिद्धेतरान् मुक्तान् संसारिणश्च । कथम् ? सुतरां धर्माद्यजीवेभ्योतिशयेन । किं कृत्वा ? सच्छ्रुतादिभिराज्ञया चाधिगम्य । तुर्विशेषे । अत्र समर्थनमाह—हि यस्मात् स्यात् । कोसौ ? श्रमस्तपश्चरणाद्यभ्यासः । किंविशिष्टः ? अपार्थः शिवाप्तिभवहान्योरप्रसाधकः । कस्य ? मन्दात्मरुचेः । मन्दा अनुद्रिक्ता आत्मनश्चेतनस्य रुचिः श्रद्धा यस्य स एवम् । किंविशिष्टोसौ ? शिवाप्तिभवहान्यर्थः । शिवाप्तिर्मुक्तिप्राप्तिर्भवहानिः संसारनिरासः । शिवाप्तिश्च भवहानिश्च शिवाप्तिभवहानी अर्थौ प्रयोजने यस्य स एवम् । न केवलं तांस्तथा श्रद्दध्यात्, मन्येतापि प्रतिपद्येत च सुधीरविच्च । किं तत् ? आस्रवादि आस्रवबन्धपुण्यपापसंवरनिर्जरामोक्षलक्षणं तत्त्वम् । कया ? आप्तगिरा गुरुवाचा । कथम् ? तथैव । सुधीः सच्छ्रुतादिभिरविच्चाज्ञयैवेत्यर्थः । किं करिष्यन् ? आराधयिष्यन् उद्द्योतनादिभिर्भक्तुमिच्छन् । काम् ? दृशं सम्यक्त्वम् । एतदन्तदीपकत्वात्पूर्वत्रापि योज्यम् ।

जीवपदार्थं विशेषेणाधिगमयति—

**जीवे नित्येऽर्थसिद्धिः क्षणिक इव भवेन्न क्रमादक्रमाद्वा,
नामूर्ते कर्मबन्धो गगनवदणुवद् व्यापकेऽध्यक्षबाधा ।
नैकस्मिन्नुद्भवादिप्रतिनियमगतिः क्ष्मादिकार्येन चित्त्वं,
यत्तन्नित्येतरादिप्रचुरगुणमयः स प्रमेयः प्रमाभिः ॥ २६ ॥**

प्रमेयो निश्चेयो मुमुक्षुभिः। कोसौ? स जीवः। किंविशिष्टः? नित्येतरादिप्रचुरगुणमयः। नित्यश्चेतरश्चानित्यश्च नित्येतरौ। तावादी येषां मूर्तामूर्तादीनां ते नित्येतरादयः। ते च ते प्रचुरा अनेके गुणा धर्माः। तैर्निर्वृत्तः। नित्यानित्यमूर्तामूर्ताद्यनेकधर्मात्मक इत्यर्थः। काभिः? प्रमाभिः स्वसंवेदनानुमानागमप्रमाणैः। कथं? तत् तस्मात् यद्यस्मान्न भवेत्। कासौ? अर्थसिद्धिः कार्यनिष्पत्तिः। पूर्वोत्तराकारपरिहारावाप्तिस्थितिलक्षणपरिणामेनार्थक्रियोपपत्तिः। कस्मात्? क्रमात्। कालक्रमेण देशक्रमेण च न केवलमक्रमाद्वा अक्रमेण च यौगपद्येन। क्व? जीवे आत्मनि। किंविशिष्टे? नित्ये एकरूपतया कालत्रयव्यापिनि यौगादिकल्पिते। कस्मिन्निव? क्षणिक इव क्षणक्षयिणि भावे बौद्धादिकल्पिते यथा। तथा न भवेत्। कोसौ? कर्मबन्धः पुण्यपापसंबन्धः। क्व? जीवे। किंविशिष्टे? अमूर्ते सर्वथा मूर्तिरहिते यौगादिकल्पिते। किंवत्? गगनवदाकाशे यथा। तथा भवेत्? कासौ? अध्यक्षबाधा प्रत्यक्षविरोधः। क्व? जीवे। किंविशिष्टे? व्यापके सर्वगते यौगादिकल्पिते। कस्मिन्निव? अणुवत् वटकणिकादिमात्रे कैश्चित्कल्पिते यथा। तथा न भवेत्। कासौ? उद्भवादिप्रतिनियमगतिः। उद्भवो जन्म आदिर्येषां जरामरणादीनां ते उद्भवादयः। तेषां प्रतिनियमः प्रतिविशेषः। तस्य गतिः प्रतिपत्तिः। क्व? जीवे। किंविशिष्टे? एकस्मिन् ब्रह्माद्वैतवादिकल्पिते। तथा न भवेत्। किं तत्? चित्त्वं चेतनत्वम्। क्व? जीवे। किंविशिष्टे? क्ष्मादिकार्ये पृथिव्यप्तेजोवायुभिरुत्पाद्ये चार्वाककल्पिते।

जीवादिवस्तुनः सर्वथा नित्यत्वे सर्वथा क्षणिकत्वे च क्रमयौगपद्याभ्यामर्थक्रियाकारित्वानुपपत्त्याऽवस्तुत्वं प्रसञ्जयति—

**नित्यं चेत्स्वयमर्थकृत्तदखिलार्थोत्पादनात् प्राक्क्षणे,**
**नो किंचित् परतः करोति परिणाम्येवान्यकाङ्क्षं भवेत्।**
**तन्नैतत् क्रमतोर्थकृन्न युगपत् सर्वोद्भवाप्तेः सकृत्,—**
**नातश्च क्षणिकं सहार्थकृदिहाव्यापिन्यहो कः क्रमः २७**

चेद्यदि यौगादिभिरिष्यते। किं तत्? नित्यं परमाण्वादिवस्तु सर्वथा नित्यतयाभ्युपगतम्। किंविशिष्टम्? अर्थकृत् कार्यकारि। कथम्? स्वयं

सहकारिकारणमन्तरेणैव। तत् ततो नो किंचित्करोति नित्यं वस्तु। क? परतो द्वितीयादिक्षणेषु। कस्मात्? अखिलार्थोत्पादनात् सकलस्वकार्यकरणात्। क? प्राक्क्षणे प्रथमक्षण एव। अथैवमुच्यते सहकार्यपेक्षमेव तत्स्वकार्यं कुर्यात् इत्यत्राह, परीत्यादि। भवेत्। किंतत्? नित्यं वस्तु। किंविशिष्टं? परिणाम्येवोत्पादव्ययध्रौव्यैकत्वलक्षणवृत्तियुक्तमेव। किंविशिष्टं सत्? अन्यकांक्षं स्वकार्यकरणे सहकार्यपेक्षमन्यथा तदघटनात्। यत एवं तत्तस्मान्न भवति। किं तत्? एतन्नित्यं वस्तु। किंविशिष्टं? अर्थकृत्। केन? क्रमतः कालक्रमेण। तर्हि यौगपद्येन तत्स्वकार्यं करिष्यतीत्यत्राह—न युगपदिति। न भवति। किं तत्? नित्यम्। किंविशिष्टम्? अर्थकृत्। कथम्? युगपदेकक्षणे एव। कुतः? सकृत्सर्वोद्भवाप्तेः सर्वेषां कार्याणां युगपदुत्पत्तिप्रसङ्गात्। अत्राह बौद्धः—मा करोतु नित्यमर्थक्रियाम् क्षणिकं तु करिष्यतीति। अत्राह—नेत्यादि। न भवति तावत् क्षणिकमेकक्षणस्थायि वस्तु। किंविशिष्टम्? अर्थकृत्। कथम्? सह युगपदक्रमेणेत्यर्थः। कस्मात्? अतश्च सकृत्सर्वोद्भवाप्तेरेव। क एवमाह क्षणिकमक्रमेणार्थकृत्। किं तर्हि? क्रमेणैव तत् तथा स्यात्। अत्राह—अहो आश्चर्यं, कः स्यात्क्रमः? न कोपि। देशक्रमः कालक्रमो वा न स्यादित्यर्थः। क? इह क्षणिके। किंविशिष्टे? अव्यापिनि कालान्तरे देशान्तरे वाऽननुवर्तिनि। यदाहुः—

"यो यत्रैव स तत्रैव यो यदैव तदैव सः।
न देशकालयोर्व्याप्तिर्भावानामिह विद्यते॥" इति।

जीवस्य कथंचिन्मूर्तत्वानुवादपुरःसरं कर्मबन्धं समर्थयते—

**स्वतोऽमूर्तोपि मूर्तेन यद्गतः कर्मणैकताम्।**
**पुमाननादिसंतत्या स्यान्मूर्तो बन्धमेत्यतः॥ २८॥**

यद्यस्माद्गतः प्राप्तः। कोसौ? पुमान् जीवः। काम्? एकतां क्षीरनीरवदेकलोलीभावम्। कथम्? सह। केन? कर्मणा। किंविशिष्टेन? मूर्तेन पौद्गलिकेन। कया? अनादिसंतत्या। बीजाङ्कुरवदनादिकालसंतानेन। किंविशिष्टोपि? अमूर्तोपि रूपादिरहितोपि। केन? स्वतः स्वरूपेण। अतो

भवति पुमान् । किंविशिष्टः ? स्यान्मूर्तः कथंचिद्रूपादिमान् । कर्मणा सहान्योन्यप्रदेशानुप्रवेशलक्षणामेकत्वपरिणतिमापन्नो जीवो व्यवहारेण मूर्त इत्युच्यते इत्यर्थः । अतश्च कथंचिन्मूर्तत्वादेव एति गच्छति । कोसौ ? पुमान् । कम् ? बन्धं कर्मपुद्गलैः सह संश्लेषम् ।

आत्मनो मूर्तत्वे युक्तिमाह—

**विद्युदाद्यैः प्रतिभयहेतुभिः प्रतिहन्यते ।**
**यच्चाभिभूयते मद्यप्रायैर्मूर्तस्तदङ्गभाक् ॥ २९ ॥**

तत् तस्माद्भवति । कोसौ ? अङ्गभाक् । अङ्गं शरीरं भजत्यात्मीयात्मभावेनाध्यवस्यतीत्यङ्गभाग् जीवः । किंविशिष्टः ? मूर्तः । यद्यस्मात् प्रतिहन्यते निरुद्धप्रसरः क्रियते जीवः । कैः ? प्रतिभयहेतुभिः अतर्कितोपस्थितत्रासकारणैः । किंविशिष्टैः ? विद्युदाद्यैः तडिन्मेघगर्जिताशनिपातादिभिः । यतश्चाभिभूयते व्याहतसामर्थ्यः क्रियते जीवः । कैः ? मद्यप्रायैर्मदिरामदनकोद्रवविषधत्तूरकादिभिः ।

कर्मणो मूर्तत्वे प्रमाणमाह—

**यदाखुविषवन्मूर्तसंबन्धेनानुभूयते ।**
**यथास्वं कर्मणः पुंसा फलं तत्कर्म मूर्तिमत् ॥ ३० ॥**

तत् तस्माद्भवति । किं तत् ? कर्म । किंविशिष्टम् ? मूर्तिमद् मूर्तम् । यद्यस्मादनुभूयते भुज्यते । किं तत् ? फलं सुखदुःखहेतुरिन्द्रियविषयः । कस्य ? कर्मणः । केन ? पुंसा जीवेन । कथम् ? यथास्वं यथायथम् । केन ? मूर्तसंबन्धेन । किंवत् ? आखुविषवत् । प्रयोगः, कर्म मूर्तं, मूर्तसंबन्धेनानुभूयमानफलत्वादाखुविषवत् । आखुविषपक्षे फलं शरीरे मूषकाकारशोफरूपो विकारः ।

जीवस्य स्वोपात्तशरीरपरिमाणत्वं साधयति—

**स्वाङ्ग एव स्वसंवित्त्या स्वात्मा ज्ञानसुखादिमान् ।**
**यतः संवेद्यते सर्वैः स्वदेहप्रमितिस्ततः ॥ ३१ ॥**

भवति। कोसौ? आत्मा। किंविशिष्टः? स्वदेहप्रमितिः। कस्मात्? ततः। यतः किम्? यतः संवेद्यते निर्बाधमनुभूयते। कोसौ? स्वात्मा निजजीवः। कैः? सर्वैः। किंविशिष्टः? ज्ञानसुखादिमान्। ज्ञानदर्शनादिभिर्गुणैः सुखदुःखादिभिश्च पर्यायैः परिणतः। कया? स्वसंवित्त्या स्वसंवेदनप्रत्यक्षेण। क्व? स्वाङ्ग एव, न परशरीरे नाप्यन्तराले। स्वाङ्गेपि सर्वत्रैव तिलेषु तैलमित्यादिवदभिव्यापकाधारस्य विवक्षितत्वात्। प्रयोगः—देवदत्तात्मा तद्देहे एव तत्र सर्वत्रैव च विद्यते तत्रैव तत्र सर्वत्रैव च स्वासाधारणगुणाधारतयोपलभ्यमानत्वात्। यो यत्रैव यत्र सर्वत्रैव च स्वासाधारणगुणाधारतयोपलभ्यते स तत्रैव तत्र सर्वत्रैव च विद्यते। यथा देवदत्तगृहे एव तत्र सर्वत्रैव चोपलभ्यमानः स्वासाधारणभासुरत्वादिगुणः प्रदीपः। तथा चायं, तस्मात्तथेति। तदसाधारणगुणा ज्ञानदर्शनसुखवीर्यलक्षणाः। ते च सर्वाङ्गीणास्तत्रैव चोपलभ्यन्ते। तस्मादात्मा स्वदेहप्रमितिरेव स्थितः।

देहे देहे भिन्नो जीव इति दर्शयति—

**यदैवैकोश्नुते जन्म जरां मृत्युं सुखादि वा।**
**तदैवान्योऽन्यदित्यङ्ग्या भिन्नाः प्रत्यङ्गमङ्गिनः॥ ३२॥**

अङ्ग्या बोध्याः परीक्षकैः। के? अङ्गिनो जीवाः। किंविशिष्टाः? भिन्नाः पृथग्भूताः। कथम्? प्रत्यङ्गम् अङ्गमङ्गं प्रति। कथम्? इति यतः। यदैव यस्मिन्नेव कालेऽश्नुते प्राप्नोति। कोसौ? एकः पुमान्। किं तत्? जन्म जरां मृत्युं सुखादि वा तदैव तस्मिन्नेव कालेऽन्यः पुरुषोऽश्नुते। किं तत्? अन्यत्—जरादि जन्मादि च। यदा ह्येको जायते तदैवान्यो जीर्यति म्रियते वा। यदैवैको जीर्यति म्रियते वा तदैवान्यो जायते। तथा यदैकः सुखमैश्वर्यादिकं वानुभवति तदैवान्यो दुःखं दौर्गत्यादिकं वानुभवति। इति जगद्वैचित्री कस्य न वास्तवी निराबाधबोधे प्रतिभासते।

चार्वाकं प्रति जीवस्य पृथिव्यादिभूतकार्यतां प्रतिषेधति—

**चितश्चेत् क्ष्माद्युपादानं सहकारि किमिष्यते।**
**तच्चेत् तत्त्वान्तरं तत्त्वचतुष्कनियमः क्व सः॥ ३३॥**

चेद्यदि चार्वाकैः कल्प्यते । किं तत् ? क्ष्मादि पृथिव्यादि भूतचतुष्टयं किम् ? उपादानमुपादानकारणम् । कस्याः ? चितश्चेतनायाः । तदा किमिष्यते चार्वाकैः ? किम् ? सहकारि बहिरङ्गकारणं, तदन्तरेण क्ष्माद्युपादानादेव चेतनालक्षणकार्योत्पत्त्यनुपपत्तेः सकलकार्याणामन्तरङ्गबहिरङ्गकारणकलापाधीनजन्मत्वात् । चेत् कल्प्यते । किं तत् ? तत्सहकारि । किम् ? तत्त्वान्तरं पृथिव्यादिचतुष्टयादन्यत् । तर्हि क्व स्यात् ? न क्वापि । कोसौ ? सः । पृथिव्यापस्तेजो वायुरिति तत्त्वानि । तत्समुदये शरीरेन्द्रियविषयसंज्ञाः, इति चार्वाकसिद्धान्ते प्रसिद्धस्तत्त्वचतुष्कनियमः ।

का चेतनेत्याह—

**अन्वितमहमहमिकया प्रतिनियतार्थावभासिबोधेषु ।**
**प्रतिभासमानमखिलैर्यद्रूपं वेद्यते सदा सा चित् ॥ ३४ ॥**

सा चित् चेतनोच्यते । यत्किम् ? यद्रूपमाकारो वेद्यते स्वयमनुभूयते । कदा ? सदा । कैः ? अखिलैः समस्तैश्छद्मस्थैर्जीवैः । किं कुर्वाणम् ? प्रतिभासमानमात्मानं दर्शयत् । कया ? अहमहमिकया=य एवाहं पूर्वं घटमद्राक्षं स एवाहमिदानीं पटं पश्यामीत्यादिपूर्वोत्तराकारपरामर्शरूपया संविरया । किंविशिष्टम् ? अन्वितमनुस्यूतम् । केषु ? प्रतीत्यादिप्रतिनियतार्थान् यथास्वमिन्द्रियग्रहणयोग्यान् घटपटादीनवभासयन्ति तच्छीलाः प्रतिनियतार्थावभासिनः । ते च ते बोधाश्च ज्ञानानि, तेषु सा च कर्मफलकार्यज्ञानचेतनाभेदात् त्रेधा ।

यद्येवं तर्हि कः किं प्राधान्येन चेतयते इत्याह—

**सर्वे कर्मफलं मुख्यभावेन स्थावरास्त्रसाः ।**
**सकार्यं चेतयन्तेऽस्तप्राणित्वा ज्ञानमेव च ॥ ३५ ॥**

चेतयन्तेऽनुभवन्ति । के ? सर्वे स्थावरा एकेन्द्रिया जीवाः पृथिवीकायिकादयः । किं तत् ? कर्मफलं सुखदुःखम् । केन ? मुख्यभावेन । तथा चेतयन्ते । के ? त्रसा द्वीन्द्रियादयः । किं तत् ? कर्मफलम् । किंविशिष्टम् ? सकार्यम् । क्रियते इति कार्यं कर्म । बुद्धिपूर्वो व्यापार इत्यर्थः । तेन सहितम् । कार्यचेतना हि प्रवृत्तिनिवृत्तिकारणभूतक्रियाप्राधान्ये-

नोत्पाद्यमानः सुखदुःखपरिणामः । तथा चेतयन्ते । के? अस्तप्राणित्वाः प्राणित्वमतिक्रान्ता जीवाः । किम्? ज्ञानमेव । ते हि व्यवहारेण जीवन्मुक्ताः परमार्थेन परममुक्ताश्च । मुक्ता एव हि निर्जीर्णकर्मफलत्वादत्यन्तकृतकृत्यत्वाच्च स्वतोऽव्यतिरिक्तस्वाभाविकसुखं ज्ञानमेव चेतयन्ते । जीवन्मुक्तास्तु मुख्यभावेन ज्ञानं गौणतया त्वन्यदपि । ज्ञानादन्यत्रेदमहमिति चेतनं ह्यज्ञानचेतना । सा द्विविधा कर्मचेतना कर्मफलचेतना च । तत्र ज्ञानादन्यत्रेदमहं करोमीति चेतनं कर्मचेतना । ज्ञानादन्यत्रेदं चेतयेहमिति चेतनं कर्मफलचेतना । सा चोभय्यपि जीवन्मुक्ते गौणी । बुद्धिपूर्वककर्तृत्वभोक्तृत्वयोरुच्छेदात् ।

अथास्रवतत्त्वं व्याचष्टे—

**ज्ञानावृत्त्यादियोग्याः सदृगधिकरणा येन भावेन पुंसः,**
**शस्ताशस्तेन कर्मप्रकृतिपरिणतिं पुद्गला ह्यास्रवन्ति ।**
**आगच्छन्त्यास्रवोसावकथि पृथगसद्दृग्मुखस्तत्प्रदोष,—**
**प्रष्ठो वा विस्तरेणास्रवणमुत मतः कर्मताप्तिः स तेषाम् ॥३६॥**

अस्यानुप्रेक्षाप्रकरणोक्त–युक्ते चित्तप्रसत्त्येत्यादिश्लोकस्य चैकवाक्यतया संबन्धः कर्तव्यः । अकथि कथितः पूर्वाचार्यैः । कोसौ ? असौ शुभोऽशुभश्चात्मपरिणामः । किम्? आस्रवः । येन किम्? येन पुंसो जीवस्य भावेन परिणामेन शस्ताशस्तेन शुभेनाशुभेन च आस्रवन्ति आगच्छन्ति । के ? पुद्गलाः कर्मवर्गणारूपा योगद्वारेण प्रविशन्तः । काम् ? कर्मप्रकृतिपरिणतिं ज्ञानावरणादिकर्मस्वभावेन पूर्वोत्तराकारपरिहारावाप्तिस्थितिलक्षणं परिणमनम् । कथम्? हि स्फुटम् । किंविशिष्टाः ? ज्ञानावृत्त्यादियोग्या ज्ञानावरणादिकर्मसमर्थाः । पुनः किंविशिष्टाः ? सदृगधिकरणा जीवेन सह समानस्थानाः । उक्तं च—

अत्ता कुणदि सहावं तत्थगदा पुग्गला सहावेहिं ।
गच्छंति कम्मभावं अण्णोण्णा गाढमवगाढा ॥

शस्तेन युक्तोऽशस्तः शस्ताशस्तः । तेन । शुभेनाशुभेन चेत्यर्थः । पृथगिति योजनात् । तत्र शुभः प्रशस्तरागादिरशुभः संज्ञादिः । तावेतौ

शुभाशुभभावौ द्रव्यपुण्यपापास्रवयोर्निमित्तमात्रत्वेन कारणभूतत्वात् तदास्रवक्षणादूर्ध्वं भावपुण्यपापास्रवौ वाच्यौ तन्निमित्तौ च शुभाशुभकर्मपरिणामौ योगद्वारेण प्रविशतां पुद्गलानां द्रव्यपुण्यपापास्रवौ। इति तमेवोभयं भावास्रवं विस्तरेणाह—पृथगित्यादि। अकथि असावास्रवः। केन? विस्तरेण। किम्? पृथक् प्रत्येकम्। असद्दृग्मुखो मिथ्यादर्शनाविरतिप्रमादकषाययोगपञ्चकम्। वा अथवा विस्तरेणास्रवोऽकथि। किम्? पृथक् तत्प्रदोषप्रष्ठः—"तत्प्रदोषनिन्हवमात्सर्यान्तरायासादनोपघाता ज्ञानदर्शनावरणयोः" इत्यादिसूत्रकारक्रमोक्तः। असती अप्रशस्ता दृग् असद्दृग् मिथ्यादर्शनम्। असद्दृग् मुखे आदौ यस्याविरत्यादेः सोयमसद्दृग्मुखः। तयोर्ज्ञानदर्शनयोः प्रदोषस्तत्प्रदोषः। स प्रष्ठ आद्यो यस्यासौ तत्प्रदोषप्रष्ठः। उत अथवा मतः पूर्वाचार्यैरिष्टः। कोसौ? स आस्रवः। किम्? आस्रवणम्। केषाम्? तेषां योगद्वारेण प्रविशतां ज्ञानावृत्यादियोग्यपुद्गलानाम्। आस्रवणमिति कोर्थः? कर्मतास्तिः कर्मतया ज्ञानावरणादिकर्मभावेनास्तिः परिणतिः। अत्रैष द्रव्यास्रवः पूर्वश्च भावास्रव इतिमन्तव्यम्। उक्तं च—

आसवदि जेण कम्मं परिणामेणप्पणो स विण्णेओ।
भावासवो जिणुत्तो कम्मासवणं परो होदि॥

भावास्रवभेदप्रतिपत्त्यर्थमाह—

मिथ्यादर्शनमुक्तलक्षणमसुभ्रंशादिकोऽसंयमः,
शुद्धावष्टविधौ दशात्मनि वृषे मान्द्यं प्रमादस्तथा।
क्रोधादिः किल पञ्चविंशतितयो योगस्त्रिधा चास्रवाः,
पञ्चैते यदुपाधयः कलियुजस्ते तत्प्रदोषादयः॥ ३७॥

भवन्ति। के? एते मिथ्यादर्शनादयः पञ्चास्रवभावा इत्यर्थः। भवति तावन्मिथ्यादर्शनम्। किंविशिष्टम्? उक्तलक्षणं मिथ्यात्वकर्मपाकेनेत्यादिनोक्तं लक्षणं यस्य तत्। तथा भवत्यसंयमोऽविरतिः। किंविशिष्टः? असुभ्रंशादिकः। असूनां प्राणानां भ्रंशो व्यपरोपणमसुभ्रंशो हिंसा। स

आदिर्यस्य सः । एवं पृथिव्यादिषट्कायहननषडिन्द्रियासंयमनभेदाद्विरति-र्द्वादशधेत्यर्थः । तथा भवति प्रमादः । किम् ? मान्द्यमनुत्साहः । कस्याम् ? शुद्धौ । किंविशिष्टायाम् ? अष्टविधौ । अष्टौ विधयः प्रकारा यस्याः सैवम् । तथा वृषे धर्मे मांद्यं । किंविशिष्टे ? दशात्मनि उत्तमक्षमादिदशलक्षणे । उक्तं च—

संज्वलनोकषायाणां यः स्यात्तीव्रोदयो यतेः ।
प्रमादः सोस्त्यनुत्साहो धर्म्ये शुद्ध्यष्टके तथा ॥

तद्भेदाः पञ्चदश । यथा—

विकहा तहा कसाया इन्दिय णिद्दा य तह य पणओ य ।
चदु चदु पण एगेगं होंति पमादा हु पण्णरसा ॥

तथा भवति क्रोधादिः कषायवर्गः । किंविशिष्टः ? पञ्चविंशतितयः । क्रोध-मानमायालोभाः प्रत्येकमनन्तानुबन्ध्यप्रत्याख्यानावरणप्रत्याख्यानावरण-संज्वलनविकल्पाः षोडश, हास्यरत्यरतिशोकभयजुगुप्सास्त्रीवेदपुंवेदनपुंसक-वेदाश्च नव, इति पञ्चविंशत्यवयवः । कथं किल कषायाः षोडश प्रोक्ताः ? नो कषाया यतो नव । ईषद्भेदो न भेदः अतः कषायाः पञ्चविंशतिरित्या-गमोक्त्या । तथा भवति । कोसौ ? योग आत्मप्रदेशपरिस्पन्दलक्षणो मनोवाक्कायव्यापारः । कतिधा ? त्रिधा, कायकर्म वाक्कर्म मनःकर्म चेति । यदुपाधयो येषां मिथ्यादर्शनादिभावास्रवभेदानां विशेषा भवन्ति । के ते ? सूत्रोक्तास्तत्प्रदोषादयः । किंविशिष्टाः ? कलियुजः कलीन् स्थित्यनुभागा-पेक्षया यथास्वं सूत्रोक्तानि ज्ञानावरणादीनि कर्माणि प्रकृतिप्रदेशापेक्षया च सर्वाणि युञ्जन्ति जीवेन सहैकत्वपरिणतिं नयन्तीति कलियुजः मिथ्यादर्श-नादयश्च समस्ता व्यस्ताश्चैतेषां भेदाश्च समस्ता व्यस्ता बन्धहेतवः । तथाहि ।

प्रथमतृतीयगुणस्थानयोः पञ्चापि । सासादनासंयतसद्दृष्ट्योश्चत्वारस्तयो-र्मिथ्यात्वाभावात् । संयतासंयतप्रमत्तसंयतयोस्त्रयो मिथ्यात्वाविरत्यभावात् । अप्रमत्तादिसूक्ष्मसाम्परायान्तेषु कषाययोगौ । शान्तकषायादीनां योगः । अयोग्यबन्धकः । कषायान्ताः स्थित्यनुभागबन्धहेतवः । प्रकृतिप्रदेश-बन्धहेतुर्योगः ।

बन्धस्वरूपनिर्णयार्थमाह—

स बन्धो बध्यन्ते परिणतिविशेषेण विवशी,—
क्रियन्ते कर्माणि प्रकृतिविदुषो येन यदि वा ।
स तत्कर्माम्नातो नयति पुरुषं यत्सुवशतां,
प्रदेशानां यो वा स भवति मिथः श्लेष उभयोः॥३८॥

भवति । कोसौ ? स बन्धः । येन किम्? येन परिणतिविशेषेण बध्यन्ते। कोर्थः ? विवशीक्रियन्ते पारतन्त्र्यं नीयन्ते योगद्वारेण प्रविशद्दशायां पुण्यपापरूपतया परिणम्य प्रविष्टानि विशिष्टशक्त्या परिणमय्य भोग्यतया संबद्धानि क्रियन्ते इत्यर्थः । कानि ? कर्माणि कर्मत्वपरिणतपुद्गलद्रव्याणि । कस्य ? प्रकृतिविदुषः प्राक्तनकर्मानुभवतो जीवस्य । पूर्वार्जितकर्मदत्तफलं स्वीकुर्वत इत्यर्थः । प्रकृतिं विद्वान् वेदयमानो जीवः प्रकृतिविद्वांस्तस्य । परिणतिविशेषोत्र मोहरागद्वेषस्निग्धपरिणामः । मोहनीयकर्मोदयसंपादितो विकार इत्यर्थः । स एव जीवभावः कर्मपुद्गलानां विशिष्टशक्तिपरिणामेनावस्थानस्य निमित्तत्वाद्बन्धस्यान्तरङ्गकारणं, जीवप्रदेशवर्तिकर्मस्कन्धानुप्रवेशलक्षणकर्मपुद्गलग्रहणस्य कारणत्वाद्बहिरङ्गकारणं योगः । तद्विवक्षायां परिणतिविशेषेणेत्यस्य योग इत्यर्थो वाच्यो, मनोवाक्कायवर्गणालम्बनात्मप्रदेशपरिस्पन्दलक्षणस्य तस्यापि जीवविकारत्वाविशेषात् । एतेन बाह्यमन्तरंगं च बन्धकारणं व्याख्यातं प्रतिपत्तव्यम् । उक्तं च—

जोगणिमित्तं गहणं जोगो मणवयणकायसंभूदो ।
भावणिमित्तो बन्धो भावो रदिरायदोसमोहजुदो ॥

यदि वा अथवा आम्नातः कथितः पूर्वाचार्यैः । कोसौ ? स बन्धः । किं तत् ? कर्म । यत्किम् ? यन्नयति प्रापयति । कम् ? पुरुषं जीवम् । काम् ? स्ववशतां स्वस्य पारतन्त्र्यम् । भोक्तृतयाऽऽत्मना सह संबध्नातीत्यर्थः । एष कर्मस्वातन्त्र्यविवक्षायां बन्ध उक्तो द्विष्ठत्वात्तस्य । वा अथवा स बन्धो भवति । यः किं ? यः श्लेष उपश्लेषणम् । केषाम् ? प्रदेशानाम् । कयोः ? उभयोर्जीवकर्मस्कन्धयोः । कथम् ? मिथः परस्परम् । कर्मपुद्गलानां जीवप्रदेशवर्तिकर्मस्कन्धान् योगद्वारेणानुप्रविष्टानां कषाया-

दिवशाद्विशिष्टशक्तिपरिणामेनावस्थानमित्यर्थः। इह हि बन्धनं बन्ध इति भावसाधनो घञ्। उक्तं च—

परस्परप्रदेशानां प्रवेशो जीवकर्मणोः।
एकत्वकारको बन्धो रुक्मकाञ्चनयोरिव॥

यथा च भाजनविशेषप्रक्षिप्तानां विविधरसवीर्यवत्पुष्पफलानां मदिरादिभावेन परिणामस्तथा पुद्गलानामप्यात्मस्थितानां योगकषायादिवशात्कर्मभावेन परिणामः। स च मन्दतीव्रादिकारणवशान्मन्दतीव्रादिरूपो भवति। तदत्र मोहरागद्वेषस्निग्धः शुभोऽशुभो वा परिणामो जीवस्य भावबन्धः। तन्निमित्तेन शुभाशुभकर्मत्वपरिणतानां पुद्गलानां जीवेन सहान्योन्यमूर्छनं संश्लेषः द्रव्यबन्धः। उक्तं च—

बज्झदि कम्मं जेण दु चेदणभावेण भावबन्धो सो।
कम्मादपदेसाणं अण्णोण्णपवेसणं इदरो॥
पयडिट्ठिदिअणुभागप्पदेसभेदादु चदुविधो बंधो।
जोगा पयडिपदेसा ठिदिअणुभागा कसायदो होंति॥

आस्रवे बन्धे च मिथ्यात्वाविरत्यादिकारणानि समानानि को विशेषः? इति चेत्, प्रथमक्षणे कर्मस्कन्धानामागमनमास्रवः आगमनानन्तरं द्वितीयक्षणादौ जीवप्रदेशेष्ववस्थानं बन्ध इति भेदः। तथास्रवे योगो मुख्यो बन्धे च कषायादिः। यथा राजसभायामनुग्राह्यनिग्राह्ययोः प्रवेशने राजादिष्टपुरुषो मुख्यः। तयोरनुग्रहनिग्रहकरणे राजादेशः। इति कथंचिदास्रवबन्धौ प्रति तत्कारणानां भेदः।

यद्येवं तर्हि के प्रकृत्यादय इत्याह—

**ज्ञानावरणाद्यात्मा प्रकृतिस्तद्विधिरविच्युतिस्तस्मात्।**
**स्थितिरनुभवो रसः स्यादणुगणना कर्मणां प्रदेशश्च॥३९॥**

भवति। कोसौ? तद्विधिः तस्य द्रव्यबन्धस्य विधिः प्रकारो भेदः। किमाख्यः? प्रकृतिः। किमात्मा? ज्ञानावरणाद्यात्मा। ज्ञानावरणादिश्चासावात्मा च, ज्ञानावारकादिः स्वभावोऽर्थानवगमादिस्वकार्यकरणशक्तिरिति यावत्। केषाम्? कर्मणाम्। ज्ञानावरणस्य हि कर्मणोऽर्थानवगमः कार्यं

प्रक्रियते प्रभवत्यस्या इति प्रकृतिः स्वभावो निम्बगुडादेस्तिक्तत्वमधुरत्वादिवत्। एवं दर्शनावरणस्यार्थानालोचनम्। वेद्यस्य सदसल्लक्षणस्य सुखदुःखसंवेदनम्। दर्शनमोहस्य तत्त्वार्थाश्रद्धानम्। चारित्रमोहस्यासंयमः। आयुषो भवधारणम्। नाम्नो नारकादिनामकरणम्। गोत्रस्योच्चैर्नीचैः स्थानसंशब्दनम्। अन्तरायस्य दानादिविघ्नकरणम्। क्रमेण तद्दृष्टान्तार्था गाथा यथा—

**पडपडिहारसिमज्जाहलिचित्तकुलालभंडयारीणं।**
**जह एदेसिं भावा तह कम्माणं वियाणाहि॥**

एवंरूपका बन्धकारिण एवंस्वभावाः परमाणवो बध्यन्ते इत्यर्थः। तथा भवति। कोसौ? तद्विधिः। किमाख्यः? स्थितिः। किमात्मा? अविच्युतिरप्रच्यवनम्। कस्मात्? तस्माद् ज्ञानावरणादिलक्षणादात्मनः स्वभावात्। केषाम्? कर्मणाम्। यथाजागोमहिष्यादिक्षीराणामेतावत्कालं माधुर्यस्वभावादप्रच्युतिः स्थितिस्तथा ज्ञानावरणादीनामर्थानवगमनादिस्वभावादेतावत्कालमप्रच्युतिः स्थितिः। अर्थानवगमनादिकार्यकारित्वेन रूपेणाप्रच्युतेनैतावत्कालमेते बध्यन्ते बद्धास्तिष्ठन्तीत्यर्थः। तथा स्यात्। कोसौ? तद्विधिः। किमाख्यः? अनुभवः। किमात्मा? रसः स्वगतसामर्थ्यविशेषः। केषाम्? कर्मणाम्। यथाजागोमहिष्यादिक्षीराणां तीव्रमन्दादिभावेन स्वकार्यकरणे शक्तिविशेषोनुभवस्तथा कर्मपुद्गलानां स्वकार्यकरणे सामर्थ्यविशेषोनुभवः। स्वकार्यकरणसमर्थाः परमाणवो बध्यन्ते इत्यर्थः। प्रकृतिबन्धे ह्यष्टकर्मयोग्या आस्रवानीतास्ते बध्यन्ते, अनुभागबन्धे तु वीर्यविशेषविशिष्टा इति प्रकृतिबन्धादस्य विशेषः। क्वचिद्धि जीवे शुभपरिणामप्रकर्षाच्छुभप्रकृतीनां प्रकृष्टोनुभवोऽशुभप्रकृतीनां निकृष्टः, अशुभपरिणामप्रकर्षेऽशुभप्रकृतीनां प्रकृष्टः शुभप्रकृतीनां निकृष्टो बन्धमायाति। स च घातिकर्मणां लतादार्वस्थिपाषाणशक्तिभेदेनाशुभाघातिकर्मणां निम्बकाञ्जीरविषहालाहलरूपेण शुभाघातिकर्मणां च गुडखण्डशर्करामृतरूपेण चतुर्धा भिद्यते। तथा स्यात्। कोसौ? तद्विधिः। किमाख्यः? प्रदेशः। किमात्मा? अणुगणना परमाणुपरिच्छेदेनेयत्तावधारणम्। केषाम्? कर्मणां कर्मभावपरिणतपुद्गलस्कन्धानाम्। एतावद् एतावत्परमाणुप्रमाणप्रदेशा ज्ञानावरणा-

दिकर्मभावपरिणतपुद्गलस्कन्धा बध्यन्ते इत्यर्थः । कषायादिकारणविचित्रभावाद्बन्धविचित्रभावः । कारणानुरूपं हि कार्यम् । उक्तं च—

**स्वभावः प्रकृतिः प्रोक्ता स्थितिः कालावधारणम् ।**
**अनुभागो विपाकस्तु प्रदेशोंऽशविकल्पनम् ॥**

किंच, यथान्नादेर्गृहीतस्यानेकविकारसमर्थवातपित्तश्लेष्मखलरसभावेन परिणामस्तथा कारणवशादागतस्य कर्मण आस्रवो नारकत्वादिनानारूपतयात्मनि परिणामः । तथा यथाम्भो नभसः पतदेकरसं भाजनादिसामग्रीविशेषाद्विश्वग्रसत्वेन परिणमते तथा ज्ञानावरणस्याविशिष्टस्याप्यागच्छतः कषायादिसामग्रीतारतम्यान्मत्याद्यावरणरूपेण परिणामः । तथा वेद्यमप्यविशिष्टमागतं कारणविशेषात्सदसद्भेदेन सद्वेद्यमसद्वेद्यं चाल्पमहत्त्वादिभेदेन व्यतिरिच्यते । एवं शेषाणामपि कर्मणां भेदप्रभेदा बोद्धव्याः । एकं कर्म कर्मसामान्यात् । द्विधा पुण्यपापभेदात् । चतुर्द्धा प्रकृत्यादिभेदात् । अष्टधा ज्ञानावरणादिभेदात् । एवं संख्येयासंख्येयानन्तविकल्पं कर्म भवति ।

पुण्यपापपदार्थनिर्णयार्थमाह—

**पुण्यं यः कर्मात्मा शुभपरिणामैकहेतुको बन्धः ।**
**सद्वेद्यशुभायुर्नामगोत्रभित्ततोऽपरं पापम् ॥ ४० ॥**

पुण्यं द्रव्यपुण्यमित्यर्थः । यावता[1] पुद्गलस्य कर्तुर्निश्चयकर्मतामापन्नो विशिष्टप्रकृतित्वपरिणामो जीवशुभपरिणामनिमित्तो द्रव्यपुण्यम् । जीवस्य च कर्तुर्निश्चयकर्मतामापन्नः शुभपरिणामो द्रव्यपुण्यस्य निमित्तमात्रत्वेन कारणीभूतत्वात्तदास्रवक्षणादूर्ध्वं भावपुण्यं भवति । किं तत्? तत्पुण्यम् । यः किम्? यो बन्धः । किंविशिष्टः? कर्मात्मा कर्मरूपः । पुनः किंविशिष्टः? शुभपरिणामैकहेतुकः शुभपरिणाम एकः प्रधानं हेतुः कारणं यस्य स एवम् । अत्र योगस्य बहिरङ्गत्वाद्गौणत्वम् । तत्पुनः पुण्यं भवति । किंविशिष्टम्? सद्वेद्यशुभायुर्नामगोत्रभित् । सच्च तद्वेद्यं च सद्वेद्यम् । आयुश्च नाम च गोत्रं च आयुर्नामगोत्राणि । शुभानि च तान्यायुर्नामगो-

१ येन कारणेन ।

त्राणि च शुभायुर्नामगोत्राणि । सद्वेद्यं च शुभायुर्नामगोत्राणि च सद्वेद्यशुभायुर्नामगोत्राणि । तान्येव भिदो भेदा यस्य तत्तथोक्तम् । तत्र सद्वेद्यं सुखफलं कर्म । शुभमायुस्त्रिधा नारकायुर्वर्जम् । शुभं नाम सप्तत्रिंशद्भेदं—मनुष्यदेवगती पञ्चेन्द्रियजातिः पञ्चशरीराणि त्रीण्यङ्गोपाङ्गानि समचतुरस्रसंस्थानवज्रर्षभनाराचसंहनने द्वे प्रशस्तवर्णगन्धरसस्पर्शा मनुष्यदेवगत्यानुपूर्व्ये अगुरुलघुपरघातोच्छ्वासातपोद्योतप्रशस्तविहायोगतयस्त्रसबादरपर्याप्तप्रत्येकशरीरस्थिरशुभसुभगसुस्वरादेययशःकीर्तयो निर्माणं तीर्थकरत्वमुच्चैर्गोत्रं च । इति द्वाचत्वारिंशत्प्रकृतयः ।

पापं द्रव्यपापमित्यर्थः । यतः पुद्गलस्य कर्तुर्निश्चयकर्मतामापन्नो विशिष्टप्रकृतित्वपरिणामो जीवाशुभपरिणामनिमित्तो द्रव्यपापम् । जीवस्य च कर्तुर्निश्चयकर्मतामापन्नोऽशुभपरिणामो द्रव्यपापस्य निमित्तमात्रत्वेन कारणीभूतत्वात्तदास्रवक्षणादूर्ध्वं भावपापं भवति । किं तत् ? पापम् । किंविशिष्टम् ? अपरमन्यत् । कस्मात् ? ततः पुण्यात् । अशुभपरिणामैकहेतुककर्मात्मबन्धरूपं द्व्यशीतिज्ञानावरणादिप्रकृतिभेदमित्यर्थः । ज्ञानावरणस्य प्रकृतयः पञ्च । दर्शनावरणस्य नव । मोहनीयस्य षड्विंशतिः सम्यक्त्वसम्यङ्मिथ्यात्ववर्जाः[1] । पञ्चान्तरायस्य नरकगतितिर्यग्गती द्वे चतस्रो जातयः पञ्चेन्द्रियजातिवर्जाः पञ्च संस्थानानि समचतुरस्रवर्जानि पञ्च संहननानि वज्रर्षभनाराचवर्जानि अप्रशस्तवर्णगन्धरसस्पर्शा नरकगतितिर्यग्गत्यानुपूर्व्यद्वयमुपघाताप्रशस्तविहायोगतिस्थावरसूक्ष्मापर्याप्तसाधारणशरीरास्थिराशुभदुर्भगदुःस्वरानादेयायशःकीर्तयश्चेति नामप्रकृतयश्चतुस्त्रिंशत् । असद्वेद्यं नरकायुर्नीचैर्गोत्रं चेति ।

संवरस्वरूपविकल्पनिर्णयार्थमाह—

**स संवरः संव्रियते निरुध्यते कर्मास्रवो येन सुदर्शनादिना ।**
**गुप्त्यात्मना वात्मगुणेन संवृतिस्तद्योग्यतद्भावनिराकृतिः स वा ॥**

भवत्ति । कोसौ ? सः संवरो भावसंवरः शुभाशुभपरिणामनिरोधो द्रव्यपुण्यपापसंवरस्य हेतुरित्यर्थः । येन किम् ? येन सुदर्शनादिना गुप्त्यादिना

१ एतद्द्वयमुदयापेक्षयैव विभज्यते कर्म न बन्धसत्तापेक्षया यतः ।

वात्मगुणेन चेतनपरिणामेन । संव्रियते कोर्थो निरुध्यते । कोसौ ? कर्मास्रवः । कर्म ज्ञानावरणाद्यास्रवत्यनेन भावास्रवो मिथ्यादर्शनादिरित्यर्थः । सुदर्शनादिः सम्यग्दर्शनज्ञानसंयमादिः गुप्त्यादिः । उक्तं च—

वदसमिदीगुत्तीओ धम्माणुपिहापरीसहजओ य ।
चारित्तं बहुभेया णायव्वा भावसंवरविसेसा ॥

वा अथवा भवति । कोसौ ? सः संवरो द्रव्यसंवर इत्यर्थः । किमात्मा ? संवृत्तिः कोर्थस्तद्योग्यतद्भावनिराकृतिः । तस्य कर्मणो योग्या कर्मयोग्यपुद्गलाः । तेषां तद्भावः कर्मत्वपरिणतिस्तद्योग्यतद्भावः । तस्य निराकृतिर्निराकरणम् ।

निर्जरातत्त्वनिश्चयार्थमाह—

**निर्जीर्यते कर्म निरस्यते यया पुंसः प्रदेशस्थितमेकदेशतः ।**
**सा निर्जरा पर्ययवृत्तिरंशतस्तत्संक्षयो निर्जरणं मताथ सा ४२**

भवति । कासौ ? सा निर्जरा । किंलक्षणा ? पर्ययवृत्तिः संक्लेशनिवृत्तिरूपा परिणतिर्भावनिर्जरेत्यर्थः । यया किम् ? यया कर्तृभूतया करणभूतया वा निर्जीर्यते कोर्थो निरस्यते । किं तत् ? कर्म । किंविशिष्टम् ? प्रदेशस्थितम् प्रदेशेष्वंशेष्ववस्थितम् । कस्य ? पुंसो जीवस्य । केन ? एकदेशत एकदेशेन, न साकल्येन । अथवा सा निर्जरा मता इष्टा । किम् ? निर्जरणं कोर्थस्तत्संक्षयो जीवप्रदेशस्थितकर्मविश्लेषः । केन ? अंशत एकदेशेन । एषा द्रव्यनिर्जरा । अथ कथं पर्ययवृत्तिः संक्लेशनिवृत्तिरूपा परिणतिरुच्यते ? परिशुद्धो यो बोधः पर्ययस्तत्र वृत्तिरिति व्युत्पत्तेः । यावता कर्मवीर्यशातनसमर्थो बहिरङ्गान्तरङ्गतपोभिर्बृंहितः शुद्धोपयोगो भावनिर्जरा । तदनुभावनीरसीभूतानामेकदेशेन संक्षयः समुपात्तकर्मपुद्गलानां च द्रव्यनिर्जरा ।

द्रव्यनिर्जराभेदनिर्णयार्थमाह[2]—

**द्विधाऽकामा सकामा च निर्जरा कर्मणामपि ।**
**फलानामिव यत्पाकः कालेनोपक्रमेण च ॥ ४३ ॥**

१ स भावास्रव इति भवितव्यम् । २—निर्ज्ञानार्थमित्यपि पाठः ।

भवति । कासौ ? निर्जरा प्रत्यासत्तेर्द्रव्यनिर्जरेत्यर्थः । कतिधा ? द्विधा अकामा सकामा चेति । तत्राकामा कालपक्वकर्मनिर्जरणलक्षणा । सैव विपाकजाऽनौपक्रमिकी चोच्यते । सकामा पुनरुपक्रमापक्वकर्मनिर्जरणलक्षणा। सैवाविपाकजौपक्रमिकी चोच्यते । अत्र समर्थनमाह—यद्यस्माद्भवति । कोसौ ? पाकः पचनं फलदातृत्वम् । केषाम् ? कर्मणामपि । केन कालेन, न केवलं कालेन, उपक्रमेण च । केषामिव ? फलानामिव । यथाम्रादिफलानां पाको विशिष्टरसादिपरिणामः कश्चित्स्वानुरूपकालेन कश्चिच्च पुरुषप्रयुक्तोपायेन तथा ज्ञानावरणादिकर्मणामपि स्वफलसंपादनमित्यर्थः । यत्काले फलदानत्वेन हि यत्कर्मार्जितं तस्मिन्नेव काले फलदानाद्या भवति सा विपाकजा, यत्कर्मबलादुदयावलीं प्रवेश्यानुभूयते आम्रादिवत् सेतरा । उपक्रमो हि बुद्धिपूर्वकप्रयोगस्वपरिणामः । स च मुमुक्षूणां शुभाशुभपरिणामनिरोधलक्षणसंवरेण शुद्धोपयोगेन च युक्तं तपः । इतरजनानां तु स्वपरयोर्बुद्धिपूर्वकः सुखदुःखसाधनप्रयोगः । पर्ययवृत्तिरित्यनेन सामान्यतः परिणाममात्रस्याप्याश्रयणात् । तथा चोक्तम्—

अबुद्धिपूर्वापेक्षायामिष्टानिष्टं स्वदैवतः ।
बुद्धिपूर्वव्यपेक्षायामिष्टानिष्टं स्वपौरुषात् ॥

मोक्षतत्त्वं लक्षयति—

**येन कृत्स्नानि कर्माणि मोक्ष्यन्तेऽस्यन्त आत्मनः ।**
**रत्नत्रयेण मोक्षोसौ मोक्षणं तत्क्षयः स वा ॥ ४४ ॥**

स्यात् । कोसौ ? असौ मोक्षो जीवन्मुक्तिलक्षणो भावमोक्षः । येन किम् ? येन रत्नत्रयेण निश्चयसम्यग्दर्शनज्ञानचारित्रेण । तत्परिणतेनात्मनेत्यर्थः । मोक्ष्यन्ते कोर्थोऽस्यन्ते अपूर्वाणि परमसंवरद्वारेण निरुध्यन्ते पूर्वोपात्तानि च परमनिर्जराद्वारेण भृशं विश्लेष्यन्ते । कानि ? कर्माणि । किंविशिष्टानि ? कृत्स्नानि प्रथमं घातीनि मोहप्रभृतीनि पश्चाच्चाघातीन्यायुरादीनि । कस्मात् ? आत्मनो जीवात् । वा अथवा स मोक्षः स्यात् । किम् ? मोक्षणं कोर्थस्तत्क्षयो वेदनीयायुर्नामगोत्ररूपाणां कर्मपुद्गलानां जीवेन सहात्यन्तविश्लेषः । स एष द्रव्यमोक्षः । उक्तं च—

"आत्यन्तिकः स्वहेतोर्यो विश्लेषो जीवकर्मणोः ।
स मोक्षः फलमेतस्य ज्ञानाद्याः क्षायिका गुणाः ॥"

तथा, "बन्धहेत्वभावनिर्जराभ्यां कृत्स्नकर्मविप्रमोक्षो मोक्षः" इत्यादि ।

तथा चोक्तं द्रव्यसंग्रहेपि—

"सव्वस्स कम्मणो जो खयहेदू अप्पणो हु परिणामो ।
णेयो स भावमोक्खो दव्वविमोक्खो य कम्मपुधभावो ॥"

तत्त्वार्थवार्तिके तु—

ततो मोहक्षयोपेतः पुमानुद्भूतकेवलः ।
विशिष्टकरणः साक्षादशरीरत्वहेतुना ॥
रत्नत्रितयरूपेणायोगिकेवलिनोन्तिमे ।
क्षणे विवर्तते ह्येतदबाध्यं निश्चयान्नयात् ॥
व्यवहारनयाश्रित्या त्वेतत्प्रागेव कारणम् ।
मोक्षस्येति विवादेन पर्याप्तं न्यायदर्शिनः ॥

मुक्तात्मस्वरूपं प्ररूपयति—

**प्रक्षीणे मणिवन्मले स्वमहसि स्वार्थप्रकाशात्मके,**
**मज्जन्तो निरुपाख्यमोघचिदचिन्मोक्षार्थितीर्थक्षिपः ।**
**कृत्वानाद्यपि जन्म सान्तममृतं साद्यप्यनन्तं श्रिताः,**
**सद्दृग्धीनयवृत्तसंयमतपःसिद्धाः सदानन्दिनः ॥४५॥**

भवन्ति । के ? मुक्तात्मानः । किंविशिष्टाः ? सद्दृगित्यादि । दृग् दर्शनं, धीर्ज्ञानं, नयः स्वार्थैकदेशव्यवसायो, वृत्तं चारित्रं, संयमतपसी प्रसिद्धे । दृक् च धीश्च नयश्च वृत्तं च संयमश्च तपश्च दृग्धीनयवृत्तसंयमतपांसि । सन्ति समीचीनानि दृगादीनि षट् सद्दृगादीनि । तैः सिद्धाः साधितात्मस्वभावाः । आरम्भावस्थापेक्षया सम्यक्त्वादिभिः सिद्धा इत्यर्थः । केचिद्धि

सम्यग्दर्शनाराधनाप्राधान्येन प्रक्रम्य संपूर्णं रत्नत्रयं कृत्वा प्रक्षीणकर्ममलकलङ्काः स्वात्मोपलब्धिलक्षणां सिद्धिमध्यासिताः । एवं सम्यग्ज्ञानादावपि योज्यम् । किं कुर्वन्तः ? मज्जन्तः प्लवमानाः प्रतिक्षणमुत्पादव्ययध्रौव्यैकत्वलक्षणां वृत्तिमाक्रामन्तः । क्व ? स्वमहसि स्वाभाविकनिजतेजसि । किंविशिष्टे ? स्वार्थप्रकाशात्मके । स्व आत्मा अर्थस्त्रैकालिकं ज्ञेयं वस्तु । स्वश्चार्थश्च स्वार्थौ । तयोः प्रकाशो युगपद्भाविदृग्ज्ञप्तिलक्षणःपरिणामः । स एवात्मा स्वरूपं यस्य तस्मिन् । क्व सति ? मले द्रव्यभावरूपे कर्मणि । किंविशिष्टे ? प्रक्षीणे निःशेषतः क्षयं गते । किंवत् ? मणिवत् । यथा मणयो जात्यरत्नानि स्वसंसर्गिणि मले प्रच्युते, स्वपररूपोद्द्योतस्वभावे स्वतेजसि मज्जन्ति तथा मुक्तात्मान इत्यर्थः । पुनः किंविशिष्टाः । नीत्यादि । उपाख्या स्वभावः । उपाख्याया निष्क्रान्तो निरुपाख्यो निःस्वभावः । तथा मोघा निष्फला चिच्चेतना यत्रासौ मोघचित् । तथाऽविद्यमाना चिद्यत्रासावचित् । निरुपाख्यश्च मोघचिच्चाचिच्च निरुपाख्यमोघचिदचितः । ते च ते मोक्षाश्च मुक्तयो वा निरुपाख्यमोघचिदचिन्मोक्षाः । तानर्थयन्ते वाञ्छन्ति अभ्युपगच्छन्ति ये ते तदर्थिनः । तत्र निरुपाख्यमोक्षार्थिनः 'प्रदीपनिर्वाणकल्पमात्मनो निर्वाणमिति' निःस्वभावमोक्षवादिनो बौद्धाः । मोघचिन्मोक्षार्थिनः 'चैतन्यं पुरुषस्य स्वरूपं, तच्च ज्ञेयाकारपरिच्छेदपराङ्मुखम्' इति निष्फलचैतन्यरूपमोक्षवादिनः सांख्याः। अचिन्मोक्षार्थिनो बुद्ध्यादिनवात्मविशेषगुणोच्छेदलक्षणनिश्चैतन्यमोक्षवादिनो वैशेषिकाः । तेषां तीर्थान्यागमान् क्षिपन्ति निराकुर्वन्ति, जीवन्मुक्त्यवस्थायां[1] तद्विलक्षणमोक्षव्यवस्थापकत्वात् परममुक्त्यवस्थायां च तत्प्रतिष्ठितत्वात्[2], यत एवम् । पुनरपि किंविशिष्टाः ? श्रिता अध्यासिताः । किं तत् ? अमृतं मोक्षम् । किंविशिष्टम् ? अनन्तं पुनर्भवाभावान्निरवधि । किंविशिष्टमपि ? साद्यपि

१ जीवन्मुक्त्यवस्थायामुपदिशन्तस्तत्त्वानि केवलज्ञानिनो मोक्षस्वरूपं तथा नोपादिशन् यथा बौद्धादय उपादिशन् । किंतु तद्विलक्षणरूपेणोपादिशन् । स चोपदेशो युक्तिभिः समर्थितश्च । अतो बौद्धादिकल्पितं मोक्षस्वरूपं निराकुर्वाणास्ते इति हेतुपूर्विका निराकरणप्रतिज्ञा । २ यथा च जीवन्मुक्तौ मुक्तिस्वरूपं व्यवस्थाप्य दर्शितं तत्रैव ते तिष्ठन्ति परममुक्तौ सत्याम् । इत्ययमपि हेतुस्तन्निरासे ।

पर्यायरूपतया आदिमदपि । किं कृत्वा ? कृत्वा । किं तत् ? जन्म संसारम् । किंविशिष्टम् ? सान्तं सविनाशम् । किंविशिष्टमपि ? अनाद्यपि संतानरूपतया आदिरहितमपि । पुनः किंविशिष्टाः ? सदानन्दिनः नित्यानन्दभाजः । अथवा सदा सर्वदा नन्दितुमनन्तज्ञानादिसमृद्धीभवितुं शीलमेषां त एवम् । इति समासतो जीवादिनवपदार्थव्यवस्था । व्यासतस्तु परमागमार्णवावगाहनादधिगन्तव्या ।

एवंविधतत्त्वार्थश्रद्धानलक्षणस्य सम्यक्त्वस्य सामग्रीविशेषं श्लोकद्वयेनाह—

**दृष्टिघ्नसप्तकस्यान्तर्हेतावुपशमे क्षये ।**
**क्षयोपशम आहोस्विद्भव्यः कालादिलब्धिभाक् ॥ ४६ ॥**
**पूर्णः संज्ञी निसर्गेण गृह्णात्यधिगमेन वा ।**
**त्र्यज्ञानशुद्धिदं तत्त्वश्रद्धानात्म सुदर्शनम् ॥ ४७ ॥ युग्मम् ।**

गृह्णाति स्वीकरोति । कोसौ ? भव्यः सिद्धेर्योग्यो जीवः । किं तत् ? सुदर्शनम् । किंविशिष्टम् ? तत्त्वश्रद्धानात्म तत्त्वानां जीवादीनां श्रद्धानं तथेति प्रतिपत्तिरात्मा स्वरूपं यस्य, तद्दर्शनमोहरहितमात्मस्वरूपं, न पुना रुचिस्तस्याः क्षीणमोहेष्वभावात् । तथा च सम्यक्त्वाभावेन ज्ञानचारित्राभावात्तेषां मुक्त्यभावः स्यात् । यत्तु तत्त्वरुचिमिति प्रागुक्तं तदुपचारात् । पुनः किंविशिष्टम् ? त्र्यज्ञानशुद्धिदम् । त्रयाणामज्ञानानां मिथ्यामतिश्रुतावधीनां शुद्धिं यथार्थग्राहित्वहेतुं नैर्मल्यं दत्ते यत्तदेवम् । केन ? निसर्गेणाधिगमेन वा । क्व सति ? अन्तर्हेतौ अन्तरङ्गकारणे । किंविशिष्टे ? उपशमे क्षये आहोस्विदथवा क्षयोपशमे । कस्य ? दृष्टिघ्नसप्तकस्य । दृष्टिघ्नानां सप्तकं तस्य । किंविशिष्टो भव्यः ? कालादिलब्धिभाक् काल आदिर्येषां वेदनाभिभवादीनां ते कालादयस्तेषाम् लब्धिः सम्यक्त्वादाने योग्यता । तां भजन् । पुनः किंविशिष्टः ? पूर्णः आहारशरीरेन्द्रियप्राणापानभाषामनोलक्षणषट्पर्याप्तियुक्तः । पुनरपि किंविशिष्टः ? संज्ञी शिक्षालापोपदेशग्राही । उक्तं च—

चदुगदिभव्वो सण्णी पज्जत्तो सुद्धगो य सागारो ।
जागारो सल्लेस्सो सलद्धिगो सम्ममुवगमइ ॥

दृष्टिघ्नानि । दृष्टिं सम्यक्त्वं घ्नन्ति इति दृष्टिघ्नानि मिथ्यात्वसम्यग्मिथ्यात्वसम्यक्त्वानन्तानुबन्धिक्रोधमानमायालोभाख्यानि कर्माणि । उपशमः स्वफलदानसामर्थ्यानुद्भवः । क्षय आत्यन्तिकी निवृत्तिः । क्षयोपशमः—सर्वथात्मगुणप्रच्छादिकाः कर्मशक्तयः सर्वघातिस्पर्धकान्युच्यन्ते । विवक्षितैकदेशेनात्मगुणप्रच्छादिकाश्च देशघातिस्पर्द्धकानि । सर्वघातिस्पर्द्धकानामुदयाभाव एव क्षयस्तेषामेवास्तित्वमुपशम उच्यते । क्षयेण सहित उपशमस्तेषामेव देशघातिस्पर्द्धकानामुदयश्च । इति समुदायेन क्षयोपशमो भण्यते । कालादिलब्धयो यथा—भव्यः कर्माविष्टोऽर्द्धपुद्गलपरिवर्तपरिमाणे कालेऽवशिष्टे प्रथमसम्यक्त्वयोग्यो भवति । इति काललब्धिः । आदिशब्देन वेदनाभिभवजातिस्मरणजिनेन्द्रार्चादर्शनादयो गृह्यन्ते । पद्यानि—

धर्मश्रुतिजातिस्मृतिसुरर्द्धिजिनमहिमदर्शनं मरुताम् ।
बाह्यं प्रथमदृशोऽङ्गं विना सुरर्द्धीक्षयानतादिभुवाम् ॥
ग्रैवेयकिणां पूर्वे द्वे सजिनार्चेक्षणे नरतिरश्चाम् ।
सरुगभिभवे त्रिषु प्राक् श्वभ्रेष्वन्येषु स द्वितीयोसौ ॥
क्षायोपशमिकीं लब्धिं शौद्धीं दैशनिकीं भवी ।
प्रायोगिकीं समासाद्य कुरुते करणत्रयम् ॥

प्रागुपात्तकर्मपटलानुभागस्पर्द्धकानां शुद्धियोगेन प्रतिसमयानन्तगुणहीनानामुदीरणा क्षायोपशमिकी लब्धिः १ । श्लोकः—

वर्गः शक्तिसमूहोणोरणूनां वर्गणोदिता ।
वर्गणानां समूहस्तु स्पर्द्धकं स्पर्द्धकापहैः ॥

क्षयोपशमविशिष्टोदीर्णानुभागस्पर्द्धकप्रभवः परिणामः सातादिकर्मबन्धनिमित्तं सावद्यकर्मबन्धविरुद्धः शौद्धी लब्धिः । २ । यथार्थतत्त्वोपदेशतदुपदेशकाचार्याद्युपलब्धिरुपदिष्टार्थग्रहणधारणविचारणशक्तिर्वा दैशनिकी लब्धिः । ३ । अन्तःकोटीकोटीसागरोपमस्थितिकेषु कर्मसु बन्धमापद्यमानेषु विशुद्धपरिणामयोगेन सत्कर्मसु संख्येयसागरोपमसहस्रोनायामन्तःको-

टीकोटीसागरोपमस्थितौ स्थापितेष्वाद्यसम्यक्त्वयोग्यता भवति इति प्रायोगिकी लब्धिः । ४ । श्लोकः—

अथप्रवृत्तकापूर्वानिवृत्तिकरणत्रयम् ।
विधाय क्रमतो भव्यः सम्यक्त्वं प्रतिपद्यते ॥

भव्योऽनादिमिथ्यादृष्टिः षड्विंशतिमोहप्रकृतिसत्कर्मकः सादिमिथ्यादृष्टिर्वा षड्विंशतिमोहप्रकृतिसत्कर्मकः सप्तविंशतिमोहप्रकृतिसत्कर्मको वाष्टाविंशतिमोहप्रकृतिसत्कर्मको वा प्रथमसम्यक्त्वमादातुकामः शुभपरिणामाभिमुखोऽन्तर्मुहूर्तमनन्तगुणवृद्ध्या वर्धमानविशुद्धिश्चतुर्षु मनोयोगेष्वन्यतमेन मनोयोगेन चतुर्षु वाग्योगेष्वन्यतमेन वाग्योगेनौदारिकवैक्रियिककाययोगयोरन्यतरेण काययोगेन त्रिषु वेदेष्वन्यतमेन वेदेनालीढो निरस्तसंक्लेशो हीयमानान्यतमकषायः साकारोपयोगो वर्धमानशुभपरिणामयोगेन सर्वप्रकृतीनां स्थितिं ह्रासयन्नशुभप्रकृतीनामनुभागबन्धमपसारयन् शुभप्रकृतीनां वर्धयंस्त्रीणि करणानि प्रत्येकमन्तर्मुहूर्तकालानि कर्तुमुपक्रमते । तत्रान्तःकोटीकोटीस्थितिकानि कर्माणि कृत्वा अधःप्रवृत्तकरणमपूर्वकरणमनिवृत्तिकरणं च क्रमेण प्रविशति । तत्र सर्वकरणानां प्रथमसमये स्वल्पशुद्धिः । ततः प्रतिसमयमन्तर्मुहूर्तसमाप्तेरनन्तगुणा द्रष्टव्या । सर्वाणि करणान्यन्वर्थानि । अथ प्राग्न प्रवृत्ताः कदाचिदीदृशाः करणाः परिणामा यत्र तदथप्रवृत्तकरणम् । अधःस्थैरुपरिस्थाः समानाः प्रवृत्ताः करणा यत्र तदधःप्रवृत्तकरणमिति वान्वर्थसंज्ञा । अपूर्वाः समये समयेऽन्ये शुद्धतराः करणा यत्र तदपूर्वकरणम् । एकसमयस्थानामनिवृत्तयोऽभिन्नाः करणा यत्र तदनिवृत्तिकरणम् । सर्वेषु करणेषु नानाजीवानामसंख्येयलोकप्रमाणाः परिणामा द्रष्टव्याः । तत्राथप्रवृत्तकरणे स्थितिखण्डनानुभागखण्डनगुणश्रेणिसंक्रमा न सन्ति । परमनन्तगुणवृद्धया विशुद्ध्याऽशुभप्रकृतीरनन्तगुणानुभागहीना बध्नाति शुभप्रकृतीरनन्तगुणरसवृद्धाः, स्थितिमपि पल्योपमासंख्येयभागहीनां करोति । अपूर्वकरणानिवृत्तिकरणयोः स्थितिखण्डनादयः सन्ति । क्रमेणाशुभप्रकृतीनामनुभागोऽनन्तगुणहान्या शुभप्रकृतीनां चानन्तगुणवृद्धया वर्तते । तत्रानिवृत्तिकरणस्यासंख्येयेषु भागेषु गतेष्वन्तरकरणमारभते येन दर्शनमोहनीयं निहत्य

चरमसमये त्रिधा करोति शुद्धाशुद्धमिश्रभेदेन सम्यक्त्वं मिथ्यात्वं सम्यङ्मिथ्यात्वं चेति । श्लोकः—

प्रशमय्य ततो भव्यः सहानन्तानुबन्धिभिः ।
ता मोहप्रकृतीस्तिस्रो याति सम्यक्त्वमादिमम् ॥
संवेगप्रशमास्तिक्यदयादिव्यक्तलक्षणम् ।
तत्सर्वदुःखविध्वंसि त्यक्तशङ्कादिदूषणम् ॥

उक्तं च—

क्षीणप्रशान्तमिश्रासु मोहप्रकृतिषु क्रमात् ।
पश्चाद् द्रव्यादिसामग्र्या पुंसां सद्दर्शनं त्रिधा ॥

कौ निसर्गाधिगमावित्याह—

**विना परोपदेशेन सम्यक्त्वग्रहणक्षणे ।**
**तत्त्वबोधो निसर्गः स्यात्तत्कृतोधिगमश्च सः ॥ ४८ ॥**

स्यात् । कोसौ ? निसर्गः । को निसर्गः ? तत्त्वबोधः । क्व ? सम्यक्त्वग्रहणक्षणे । कथम् ? विना । केन ? परोपदेशेन गुर्वादेर्वचनविशेषमन्तरेणैव । तथाधिगमः स्यात् । कोसौ ? स तत्त्वबोधः । किंविशिष्टः ? तत्कृतस्तेन परोपदेशेन जनितः ।

एतदेव समर्थयते—

**केनापि हेतुना मोहवैधुर्यात्कोपि रोचते ।**
**तत्त्वं हि चर्चानायस्तः कोपि च क्षोदखिन्नधीः ॥४९॥**

हि यस्माद्रोचते श्रद्धत्ते । कोसौ ? कोपि कश्चिद्भव्यः । किं तत् ? तत्त्वं परापरवस्तुयाथात्म्यम् । किंविशिष्टः सन् ? चर्चानायस्तः । चर्चया क्षोदेनानायस्त आयासमप्राप्तः । कस्मात् ? मोहवैधुर्यात् । मोहयन्ति दर्शनं प्रतिबध्नन्तीति मोहा मिथ्यात्वादिसप्तप्रकृतयः । तेषां वैधुर्यमुपशमः क्षयः क्षयोपशमो वा मोहवैधुर्यं तस्मात् । केन ? हेतुना निमित्तेन । किंविशिष्टेन ? केनापि वेदनाभिभवादीनामन्यतमेन जनितात् । कोपि च कश्चित् क्षोद-

खिन्नधीर्विचारक्लिष्टमनाः सन् मोहवैधुर्यात्तत्त्वं रोचते इति संबन्धः। उक्तं च—

निसर्गोऽधिगमो वापि तदाप्तौ कारणद्वयम्।
सम्यक्त्वभाक् पुमान्यस्मादल्पानल्पप्रयासतः॥

किंच—

यथा शूद्रस्य वेदार्थे शास्त्रान्तरसमीक्षणात्।
स्वयमुत्पद्यते ज्ञानं तत्त्वार्थे कस्यचित्तथा॥

इदानीं सम्यक्त्वभेदानाह—

तत्सरागं विरागं च द्विधौपशमिकं तथा।
क्षायिकं वेदकं त्रेधा दशधाज्ञादिभेदतः॥ ५०॥

तत्सुदर्शनं भवति। कतिधा? द्विधा। कथम्? सरागं विरागं च। तथा तत्त्रेधा भवत्यौपशमिकं क्षायिकं वेदकं चेति। तथा तद्दशधा भवत्याज्ञादिभेदतः। आज्ञादिभिर्भेदमाश्रित्य।

सरागेतरसम्यक्त्वयोरधिकरणलक्षणोपलक्षणार्थमाह—

ज्ञे सरागे सरागं स्याच्छमादिव्यक्तिलक्षणम्।
विरागे दर्शनं त्वात्मशुद्धिमात्रं विरागकम्॥ ५१॥

दर्शनं सरागं स्यात्। क? ज्ञे तत्त्वज्ञे पुंसि। किंविशिष्टे? सरागे असंयतसम्यग्दृष्ट्यादौ। किंविशिष्टम्। शमादिव्यक्तिलक्षणं शमादीनां प्रशमसंवेगानुकम्पास्तिक्यानां व्यक्तिरुपलब्धिः सैव लक्षणं ज्ञापकं यस्य तत्तथोक्तम्। विरागे तूपशान्तकषायादिगुणस्थानवर्तिनि दर्शनं स्यात्। किंविशिष्टम्? विरागकं वीतरागम्। पुनः किंविशिष्टम्? आत्मशुद्धिमात्रम्। आत्मनो जीवस्य शुद्धिर्दृग्मोहस्योपशमेन क्षयेण वा जनितप्रसादः। सैव तन्मात्रं, न प्रशमादिचतुष्टयम्। तत्र हि चारित्रमोहस्य सहकारिणोऽपायान्न प्रशमाद्यभिव्यक्तिः स्यात्। केवलं स्वसंवेदनेनैव तद्वेद्येत।

प्रशमादीनां लक्षणमाह—

प्रशमो रागादीनां विगमोऽनन्तानुबन्धिनां संवेगः।
भवभयमनुकम्पाखिलसत्त्वकृपास्तिक्यमखिलतत्त्वमतिः॥५२॥

भवति । कोसौ ? प्रशमः । किम् ? विगमोऽनुद्रेकः । केषाम् ? रागादीनां क्रोधादीनाम् । साहचर्यान्मिथ्यात्वसम्यङ्मिथ्यात्वयोश्च । किंविशिष्टानाम् ? अनन्तानुबन्धिनाम् । अनन्तं संसारमनुबध्नन्ति बीजाङ्कुरन्यायेन प्रवर्तयन्ति तच्छीलाः । तथा भवति । कोसौ ? संवेगः । किम् ? भवभयं संसारभीरुता । तथा भवति । कासौ ? अनुकम्पा । किम् ? अखिलसत्त्वकृपा । अखिलेषु त्रसस्थावरेषु नरकादिगतिषु सीदत्सु जीवेषु कृपा दया । तथा भवति । किम् ? आस्तिक्यम् । किम् ? अखिलतत्त्वमतिः । हेयस्य परद्रव्यादेर्हेयत्वेनोपादेयस्य च स्वशुद्धात्मस्वरूपस्योपादेयत्वेन प्रतिपत्तिः । अखिलानां स्वपरद्रव्याणां तत्त्वेन हेयोपादेयत्वेन मतिः प्रतिपत्तिरिति विग्रहः ।

स्वपरगतसम्यक्त्वसद्भावनिर्णयः केन स्यादित्याह—

**तैः स्वसंविदितैः सूक्ष्मलोभान्ताः स्वां दृशं विदुः ।**
**प्रमत्तान्तान्यगां तज्जवाक्चेष्टानुमितैः पुनः ॥ ५२ ॥**

विदुः जानन्ति । के ? सूक्ष्मलोभान्ताः । सूक्ष्मो लोभः साम्परायो यस्यासौ सूक्ष्मलोभो दशमगुणस्थानवर्ती जीवोऽन्ते येषामसंयतसम्यग्दृष्ट्यादीनां ते सूक्ष्मलोभान्ता असंयतसम्यग्दृष्ट्यादिसूक्ष्मसांपरायपर्यन्ताः सप्त । कां विदुः ? दृशं सम्यक्त्वम् । किंविशिष्टाम् ? स्वामात्मीयाम् । कैः ? तैः स्वगतसम्यक्त्वजन्यैः प्रशमादिभिश्चतुर्भिर्लिङ्गैः । किंविशिष्टैः ? स्वसंविदितैः स्वेनात्मना सम्यग्निर्णीतैः । प्रमत्तान्तान्यगां पुनर्दृशं विदुः । सूक्ष्मलोभान्ता यथास्वं व्यवहारिणः । कैः ? तैः । किंविशिष्टैः ? तज्जवाक्चेष्टानुमितैः । प्रमत्तः प्रमादशबलचारित्रोऽन्ते येषां ते प्रमत्तान्ताः । ते च तेऽन्ये प्रमातुरात्मनो भिन्नाः प्रमत्तान्तान्ये । तान् गच्छतीति तद्गा । तामसंयतसम्यग्दृष्टिसंयतासंयतप्रमत्तसंयताख्यपरजीववर्तिनीम् । तेभ्यः स्वगतसम्यक्त्वजन्यप्रशमादिभ्यो जाते तज्जे । वाक्च चेष्टा च वाक्चेष्टे वचःकायव्यापारौ । तज्जे च ते वाक्चेष्टे च तज्जवाक्चेष्टे । ताभ्यामनुमिताः परगताः प्रशमादयस्तज्जवाक्चेष्टानुमितास्तैः । अयमर्थः, सम्यक्त्वनिमित्तकान् प्रशमादीन् स्वस्य स्वसंवेदनेन निश्चित्य तदविनाभाविन्यौ च वाक्चेष्टे यथास्वं निर्णीय तथाविधे च परस्य वाक्चेष्टे

दृष्ट्वा ताभ्यां तद्धेतून् प्रशमादीन्निश्चित्य तैः परस्य सम्यक्त्वमनुमिनुयात् ।

औपशमिकस्यान्तरङ्गहेतुमाह—

**शमान्मिथ्यात्वसम्यक्त्वमिश्रानन्तानुबन्धिनाम् ।**
**शुद्धेम्भसीव पङ्कस्य पुंस्यौपशमिकं भवेत् ॥ ५४ ॥**

भवेत् । किं तत्? औपशमिकं सम्यक्त्वम् । क्व? पुंसि जीवे । किंविशिष्टे? शुद्धे । कस्मात्? शमादुपशमात् । केषाम्? मिथ्यात्वसम्यक्त्वमिश्रानन्तानुबन्धिनाम् । कस्मिन्निव? शुद्धे कतकफलप्रक्षेपसंपादितात्पङ्कस्य शमादम्भसि स्फटिकभाजनस्थे—जले यथा । यदुदयात्सर्वज्ञोक्तमार्गश्रद्धानपराङ्मुखो मिथ्यादृष्टिर्भवति तन्मिथ्यात्वम् । मिथ्यात्वमेव शुभपरिणामनिरुद्धस्वरसमौदासीन्यस्थितं श्रद्धानाप्रतिबन्धकं सम्यक्त्वं परं, यदुदयात्सर्वज्ञोक्तसम्यग्दृष्टिर्जीव उच्यते । मिथ्यात्वकर्मार्द्धशुद्धस्वरसं मिश्रं सम्यग्मिथ्यात्वमुच्यते । प्रक्षालनविशेषात्क्षीणाक्षीणमदशक्तिकोद्रववत् । यदुदयादात्मनोर्द्धशुद्धमदनकोद्रवौदनोपयोगापादितमिश्रपरिणामवदुभयात्मको भवति परिणामः । मिथ्यात्वं च सम्यक्त्वं च मिश्रं चानन्तानुबन्धिनश्च क्रोधादयश्चत्वार इति विग्रहः । उपशमः प्रयोजनमस्येत्यौपशमिकम् ।

क्षायिकस्यान्तरङ्गहेतुमाह—

**तत्कर्मसप्तके क्षिप्ते पङ्कवत्स्फटिकेम्बुवत् ।**
**शुद्धेऽतिशुद्धं क्षेत्रज्ञे भाति क्षायिकमक्षयम् ॥ ५५ ॥**

भाति । किं तत्? क्षायिकं सम्यक्त्वम् । किं विशिष्टम् । अक्षयमविनाशि । पुनः किंविशिष्टम्? अतिशुद्धं=त्यक्तशङ्कादिदूषणत्वेन शुद्धादौपशमिकादतिशयेन शुद्धं, प्रक्षीणप्रतिबन्धकत्वात् । अत एव भाति नित्यं दीप्यते, कदाचित्केनापि क्षोभयितुमशक्यत्वात् । तदुक्तम्—

रूपैर्भयंकरैर्वाक्यैर्हेतुदृष्टान्तदर्शिभिः ।
जातु क्षायिकसम्यक्त्वो न क्षुभ्यति विनिश्चलः ॥

क्व तद्भाति? क्षेत्रज्ञे आत्मनि । किंविशिष्टे? शुद्धे । अतीत्यत्रापि योज्यम् । अत्यन्तनिर्मले इत्यर्थः । क्व सति? तत्कर्मसप्तके । तेषां मिथ्यात्वादीनां कर्मणां सप्तके । किंविशिष्टे? क्षिप्ते सामग्रीविशेषेण विश्लेषिते । किं-

वत्? पङ्कवत्। कर्दमे यथा। किंवद्भाति? अम्बुवत्। यथा पङ्के क्षिप्ते शुद्धे स्फटिके स्फटिकभाजनेऽतिशुद्धं जलं भातीत्यर्थः।

वेदकस्यान्तरङ्गहेतुमाह—

**पाकाद्देशघ्नसम्यक्त्वप्रकृतेरुदयक्षये।**
**शमे च वेदकं षण्णामगाढं मलिनं चलम्॥ ५६॥**

भवति। किं तत्? वेदकं क्षायोपशमिकं सम्यक्त्वम्। किंविशिष्टम्? अगाढं मलिनं चलं च। कस्मात्? पाकादुदयात्। कस्याः? देशघ्नसम्यक्त्वप्रकृतेः। सम्यक्त्वमेव प्रकृतिः सम्यक्त्वप्रकृतिः। देशं सम्यग्दर्शनांशं हन्तीति देशघ्नी। सा चासौ सम्यक्त्वप्रकृतिश्च देशघ्नसम्यक्त्वप्रकृतिस्तस्याः। न केवलं तत्पाकात्, उदयक्षये शमे च सति। केषाम्? षण्णां मिथ्यात्वादीनामुदयप्राप्तानामुदयस्य निवृत्तौ। तेषामेवानुदयप्राप्तानामुपशमे च सदवस्थालक्षणे।

वेदकस्यागाढत्वं दृष्टान्तेनाचष्टे—

**वृद्धयष्टिरिवात्यक्तस्थाना करतले स्थिता।**
**स्थान एव स्थितं कम्प्रमगाढं वेदकं यथा॥ ५७॥**

**वेदकमगाढं** भण्यते। किंविशिष्टम्? **स्थान एव** देवादौ स्वविषये एव **स्थितम**वष्टब्धं सत् **कम्प्रं** कम्पनशीलम्। केव? **वृद्धयष्टिरिव**। किंविशिष्टा? **अत्यक्तस्थाना**। किंविशिष्टा सती? **करतले** हस्ततले **स्थिता**। **यथे**त्युदाहरणप्रदर्शने।

तदगाढतोल्लेखमाह—

**स्वकारितेऽर्हच्चैत्यादौ देवोऽयं मेऽन्यकारिते।**
**अन्यस्यासाविति भ्राम्यन्मोहाच्छ्राद्धोपि चेष्टते॥५८॥**

**चेष्टते** प्रवृत्तिनिवृत्ती करोति। कोसौ? **श्राद्धोपि** श्रद्धावान् सद्दृष्टिः। किंपुनर्मिथ्यादृष्टिरित्यपिशब्दार्थः। कस्मात्? **मोहात्** सम्यक्त्वप्रकृतिविपाकात्। किं कुर्वन्? **भ्राम्यन्** भ्रान्तिं संशयं गच्छन्। कथमिति। वर्तते। कोसौ? **अयं देवः**। कस्य? **मे** मम। क्वैवं प्रवर्तते? **अर्हच्चैत्यादौ**

जिनप्रतिमातद्गृहादौ सम्यक्त्वक्रियासाधने । किंविशिष्टे ? **स्वकारिते** आत्मना निर्मापिते । तथा वर्तते । कोसौ ? **असौ देवः** । कस्य ? **अन्यस्य** । कैवं प्रवर्तते ? अर्हच्चैत्यादौ । किंविशिष्टे ? **अन्यकारिते** ।

तन्मालिन्यमाचष्टे—

**तदप्यलब्धमाहात्म्यं पाकात्सम्यक्त्वकर्मणः ।**
**मलिनं मलसङ्गेन शुद्धं स्वर्णमिवोद्भवेत् ॥ ५९ ॥**

**उद्भवेत्** । आत्मानं लभेत कदाचित् । किं तत् ? **तद्** वेदकम् । कथंभूतं सत् ? **मलिनं** । किंविशिष्टम् ? **अलब्धमाहात्म्यम**प्राप्तकर्मक्षपणातिशयम् । केन ? **मलसङ्गेन** । शङ्कादिदोषसंसर्गेण । कस्मात् ? **पाकात्** शुभपरिणाममान्द्ये सत्युदयात् । कस्य ? **सम्यक्त्वकर्मणः** । किंविशिष्टं सत् ? **शुद्धं** प्राग् निर्मलमपि जातमपि शब्दस्यात्र योजनं । किमिव ? **स्वर्णमिव** यथा काञ्चनं पूर्वं स्वहेतोः शुद्धमप्युत्पन्नं सद्रजतादिमलसंसर्गेणालब्धमाहात्म्यं स्यात् तथा प्रकृतमपि ।

तच्चलत्वं विवृणोति—

**लसत्कल्लोलमालासु जलमेकमिव स्थितम् ।**
**नानात्मीयविशेषेषु चलतीति चलं यथा ॥ ६० ॥**

वेदकं **चलमुच्यते** । कुतः ? **इति** हेतोः यतश्चलति । केषु ? **नानात्मीयविशेषेषु** नानाप्रकारस्वविषयदेवादिभेदेषु । किमिव ? **एकं जलमिव** । किंविशिष्टम् ? **स्थितम्** । कासु ? **लसत्कल्लोलमालासु** । लसन्तीषु तरङ्गपङ्क्तिषु । **यथे**त्यनेनोल्लेखं दर्शयति ।

तदुल्लेखमाह—

**समेप्यनन्तशक्तित्वे सर्वेषामर्हतामयम् ।**
**देवोस्मै प्रभुरेषोस्मा इत्यास्था सुदृशामपि ॥ ६१ ॥**

भवति । कासौ ? **आस्था** प्रतिपत्तिदार्ढ्यम् । केषाम् ? **सुदृशामपि** सम्यग्दृष्टीनामपि । कथं ? **इति** एवं भवति । कोसौ ? **अयं** पार्श्वनाथादिर्देवः । किंविशिष्टः ? **प्रभुः** समर्थः । कस्मै ? **अस्मै** उपसर्गनिवारणा-

दिकर्मणे। एष च शान्तिनाथादिर्देवो भवति। किंविशिष्टः? प्रभुः। कस्मै? अस्मै शान्तिकादिकर्मणे। क सति? अनन्तशक्तित्वे। किंविशिष्टे? समेपि समानेपि। केषाम्? सर्वेषामर्हतां तीर्थकराणाम्। अनन्ताः शक्तयो येषां तेऽनन्तशक्तयस्तेषां भावस्तत्त्वं तस्मिन्। किं च—

क्रियन्तमपि यत्कालं स्थित्वा चलति तच्चलम्।
वेदकं मलिनं जातु शङ्काद्यैर्यत्कलङ्क्यते॥
यच्चलं मलिनं चास्मादगाढमनवस्थितम्।
नित्यं चान्तर्मुहूर्तादिषट्षष्ट्यब्ध्यन्तवर्त्ति यत्॥

आज्ञासम्यक्त्वादिभेदानाह—

आज्ञामार्गोपदेशार्थबीजसंक्षेपसूत्रजाः।
विस्तारजावगाढासौ परमा दशधेति दृक्॥ ६२॥

भवति। का? असौ दृक् सम्यक्त्वम्। कतिधा? दशधा दशप्रकारा। कथम्? इति एवं, भवन्ति। काः? दृशः। किंविशिष्टाः? आज्ञादिजाः। आज्ञा च मार्गश्चोपदेशश्चार्थश्च बीजं च संक्षेपश्च सूत्रं चेति विगृह्य तेभ्यो जाताः सप्त। तथा भवति। कासौ? दृक्। किंविशिष्टा? विस्तारजा विस्ताराज्जाताष्टमी। तथा भवति। कासौ? दृक्। किमाख्या? अवगाढा नवमी। तथा भवति। कासौ? दृक्। किमाख्यासौ? अवगाढा परमा प्रकर्षप्राप्ता परमावगाढाख्या दशमी च। इति दशधा दृक्।

तत्राज्ञा जिनोक्तागमानुज्ञा। मार्गो रत्नत्रयविचारसर्गः। उपदेशः पुराणपुरुषचरितश्रवणाभिनिवेशः। अर्थः प्रवचनविषये स्वप्रत्ययसमर्थः। बीजं सकलसमयदलसूचनाव्याजम्। संक्षेप आप्तश्रुतव्रतपदार्थसमासालापाक्षेपः। सूत्रं यतिजनाचरणनिरूपणमात्रम्। विस्तारो द्वादशाङ्गचतुर्दशपूर्वप्रकीर्णकविस्तीर्णश्रुतार्थसमर्थनप्रस्तारः। अवगाढा त्रिविधस्यागमस्य निःशेषतोऽन्यतमादेशावगाहालीढा। परमावगाढा अवधिमनःपर्ययकेवलाधिकपुरुषप्रत्ययप्ररूढा॥

आज्ञासम्यक्त्वसाधनोपायमाह—

**देवोर्हन्नेव तस्यैव वचस्तथ्यं शिवप्रदः ।**
**धर्मस्तदुक्त एवेति निर्बन्धः साधयेद् दृशम् ॥ ६३ ॥**

**साधयेदु**त्पादयेद् ज्ञापयेच्च । कोसौ ? **निर्बन्धो**ऽभिनिवेशः । काम् ? **दृशम्** । किमात्मा ? इत्येवंस्वरूपः । तथाहि—भवति । कोसौ ? **देवः** । क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेषः । किमाख्यः ? **अर्हन्नेव** न बुद्धादिः । तथा भवति । किं तत् ? **वचो** वाक्यम् । किंविशिष्टम् ? **तथ्यं** सत्यम् । कस्य ? **तस्यैवा**र्हत एव, नच बुद्धादेः । तथा भवति । कोसौ ? **धर्मः** । किंविशिष्टः ? **शिवप्रदो**ऽभ्युदयनिःश्रेयससंपादकः । केनोक्तः ? **तदुक्त एव** । तेनार्हता तद्वचसा वा प्रणीतो, न बुद्धादिना तदागमेन वा ।

अथ वृत्तपञ्चकेन सम्यग्दर्शनमहिमानमभिष्टौति । तत्र तावद्विनेयानां सुखस्मृत्यर्थं तत्सामग्रीस्वरूपे अनूद्य संक्षेपेणानन्यसंभविनं तन्महिमानमभिव्यक्तुमाह—

**प्राच्येनाथ तदातनेन गुरुवाग्बोधेन कालारुण,—**
**स्थामक्षामतमश्छिदे दिनकृतेवोदेष्यताविष्कृतम् ।**
**तत्त्वं हेयमुपेयवत्प्रतियता संवित्तिकान्ताश्रिता**
**सम्यक्त्वप्रभुणा प्रणीतमहिमा धन्यो जगज्जेष्यति॥६४॥**

**जेष्यति** । कोसौ ? **धन्यः** कृतपुण्यः । किं तत् ? **जगत्** । निश्चयेन स्वचिन्मयं व्यवहारेण च जीवादिसमुदायमयं लोकम् । किंविशिष्टः सन् ? **प्रणीतमहिमा** । केन ? **सम्यक्त्वप्रभुणा** । किंविशिष्टेन ? **संवित्तिकान्ताश्रिता** । संवित्तिः सम्यग्ज्ञप्तिः । सैव कान्ता कथंचिदविभक्तत्वात् । संवित्तिकान्ता तां श्रयति भजत्यात्मना संबध्नातीति संवित्तिकान्ताश्रित्तेन । किंकुर्वता ? **प्रतियता** । किं तत् ? **तत्त्वम्** । किंविशिष्टम् ? **हेयम्** । किंवत् ? **उपेयवत्** उपादेयवत् । पुनः किंविशिष्टम् ? **आविष्कृतं** प्रकाशितम् । केन ? **गुरुवाग्बोधेन** । किंविशिष्टेन ? **प्राच्येन** । न केवलम् । **अथ** अथवा **तदातनेन** । किं करिष्यता ? **उदेष्यता** । केनेव ?

**दिनकृतेव** आदित्येन यथा । दिनं करोतीति दिनकृत्तेन । **किमर्थमुदेष्यता? कालारुणस्थामक्षामतमश्छिदे** ।

अथ पदार्थः कथ्यते । प्राच्येन सम्यक्त्वोत्पत्तेः प्राग्भाविना तदातनेन सम्यक्त्वोत्पत्तिसमसमयभाविना गुरुवाग्बोधेन वाचो वचनस्योपलक्षणाद्धस्तसंज्ञादेश्च कार्यभूतो बोधो ज्ञानं वाग्बोध आगमज्ञानं तत्त्वार्थाधिगम इति यावत् । गुरुर्महान्, परोपदेशानपेक्षत्वात् । गुरुश्चासौ वाग्बोधश्च गुरुवाग्बोधो निसर्ग इति संज्ञितः । तथा गुरोर्धर्मोपदेशकस्य वाक् गुरुवाक् । तज्जन्यो बोधो गुरुवाग्बोधोऽधिगम इति संज्ञितः । तेनोभयेनापि प्राच्येन तदातनेन वा प्रकाशितं हेयमुपादेयं च तत्त्वं प्रतियता प्रतीतिविषयं कुर्वतेति संबन्धः । कालेत्यादि । कालशब्देनात्रोपलक्षणात् सम्यक्त्वोत्पत्तियोग्यकालक्षेत्रद्रव्यभावचतुष्टयं ग्राह्यम् । अरुणः सूर्यसारथिः । कालोऽरुण इव दर्शनमोहान्धकारापकर्षनिमित्तत्वात् । कालारुणस्य स्थाम शक्तिः कालारुणस्थाम । तेन क्षामं कृशीकृतं तमो दर्शनप्रतिबन्धकं कर्म ध्वान्तं च कालारुणस्थामक्षामतमः । तस्य च्छेदनं छित् निरासस्तच्छित् तस्यै । सम्यक्त्वोत्पत्तियोग्यसमयादिचतुष्टयसूर्यसारथिशक्त्या कृशीकृतस्य मिथ्यात्वस्य तिमिरस्य च निरासार्थमित्यर्थः । उदेष्यता सम्यग्भावाभिमुखेनोदयाभिमुखेन च । एतेन सम्यक्त्वोत्पत्तिनिमित्तभूतो बोधः स्वरूपेण सम्यक् सम्यक्त्वोत्पत्तिनिमित्तत्वेनैव सम्यगिति न मोक्षमार्ग इत्युक्तं स्यात् । अतः सम्यक्त्वसहजन्मैव बोधो मोक्षमार्ग इति प्रतिपत्तव्यम् । न चैवं तयोः कार्यकारणभावविरोधः, समसमयभावित्वेपि तयोः प्रदीपप्रकाशयोरिव तस्य सुघटत्वात् । तथा चोक्तम्—

**कारणकार्यविधानं समकालं जायमानयोरपि हि ।**
**दीपप्रकाशयोरिव सम्यक्त्वज्ञानयोःसुघटम् ॥**

अतएव सम्यक्त्वाराधनानन्तरं ज्ञानाराधनोपदेक्ष्यते । तदप्युक्तम्—

**सम्यग्ज्ञानं कार्यं सम्यक्त्वं कारणं वदन्ति जिनाः ।**
**ज्ञानाराधनमिष्टं सम्यक्त्वानन्तरं तस्मात् ॥**

तेनैतत्सितपटाचार्यवचनमनुचितम्—

**चतुर्वर्गाग्रणीर्मोक्षो योगस्तस्य च कारणम् ।**
**ज्ञानश्रद्धानचारित्ररूपं रत्नत्रयं च सः ॥**

उपेयवदुपादेयेन स्वशुद्धात्मस्वरूपेण तुल्यम् । संवित्तिकान्ताश्रिता सम्यग्ज्ञप्तिप्रियायुक्तेन। स एष सम्यक्त्वानन्तरमाराध्यो मोक्षमार्गभूतो बोधः। न चानयोः पृथगाराधनं न संगच्छते लक्षणभेदेन भेदात् । तदुक्तम्—

पृथगाराधनमिष्टं दर्शनसहभाविनोपि बोधस्य ।
लक्षणभेदेन यतो नानात्वं संभवत्यनयोः ॥

सम्यक्त्वप्रभुणा । सम्यक्त्वं च तत्प्रभुश्च । स परमाराध्यस्तत्प्रसादैकसाध्यत्वात्सिद्धेः । यत्तारिवकाः—

किं पलविएण बहुणा सिद्धा जे णरवरा गए काले ।
सिज्झिहहिं जे विभविया तं जाणह सम्ममाहप्पं ॥

सम्यक्त्वं प्रभुरिवेत्यत्रोक्तिलेशपक्षे प्रभुः स्वमते शक्रादिः परमते तु पार्वतीपतिः श्रीपतिर्वा । तत्कान्ता च शच्यादिः पार्वत्यादिश्च । प्रणीतमहिमा प्रवर्तितमाहात्म्यः जेष्यति वशीकरिष्यते । सर्वज्ञः सर्वजगद्भोक्ता च भविष्यतीत्यर्थः । अत्र "तन्निसर्गादधिगमाद्वेति" वचनात् प्राच्येनाथ तदातनेनेत्यादिना सामग्र्यनुवादः । एतेन नैसर्गिकमधिगमजं चेति द्विधा सम्यक्त्वं बहिरङ्गकारणापेक्षया स्यादित्यपि प्रतिपत्तव्यम् । हेयमित्यादिना स्वरूपानुवादः प्रणीतेत्यादिना सम्यक्त्वस्य महिमाभिव्यक्तिः कृता मन्तव्या । भवति चात्रार्याद्वयम्—

तत्त्वपरीक्षाऽतत्त्वव्यवच्छिदा तत्त्वनिश्चयं जनयेत् ।
स च दृग्मोहशमादौ तत्त्वरुचिं सा च सर्वसुखम् ॥
शुभपरिणामनिरुद्धस्वरसं प्रशमादिकैरभिव्यक्तम् ।
स्यात्सम्यक्त्वमनन्तानुबन्धिमिथ्यात्वमिश्रशमे ॥

निर्मलगुणालंकृतसम्यक्त्वस्य निरतिशयमाहात्म्ययोगितया सर्वोत्कर्षवृत्तिमाशंसति—

यो रागादिरिपून्निरस्य दुरसान्निर्दोषमुद्यन् रथं,
संवेगच्छलमास्थितो विकचयन्विष्वक्कृपाम्भोजिनीम् ।
व्यक्तास्तिक्यपथस्त्रिलोकमहितः पन्थाः शिवश्रीजुषा,-
माराद्धन्पृणतीप्सितैः स जयतात्सम्यक्त्वतिग्मद्युतिः ॥ ६५ ॥

**जयतात्** सर्वोत्कर्षेण वर्तताम् । कोसौ ? **सः सम्यक्त्वतिग्मद्युतिः।** सम्यक्त्वं तिग्मद्युतिरादित्य इव बुभुक्षूणामिव मुमुक्षूणामाराध्यतमत्वात् । यः किम् ? **यः पृणति** प्रीणयति । कान् ? **आराद्धॄन्** आराधकान् । कैः ? **ईप्सितैर्वाञ्छितार्थैः** । किं कुर्वन् ? **विकचयन्** विकसितां कुर्वन् विकाशयन्नित्यर्थः । काम् ? **कृपाम्भोजिनीम्** । क ? **विष्वक्** सर्वभूतेषु सर्वभूतले च । कृपा अनुकम्पा अम्भोजिनी पद्मिनीवाल्हादहेतुत्वात् । किंविशिष्टः सन् ? **आस्थितः** आरूढः । कम् ? **रथम्** । किंविशिष्टम् ? **संवेगच्छलं** संवेगेन च्छल्यते स्वरूपतः प्रच्छाद्यते इति संवेगच्छलस्तम् । संवेगरूपं स्यन्दनमित्यर्थः । संवेगस्य रथेन साधर्म्यं गगनस्येव संसारशेषस्य सुखेन लङ्घ्यहेतुत्वात् । किं कुर्वन् ? **उद्यन्** ऊर्ध्वमाक्रामन् । कथं कृत्वा ? **निर्दोषं** निःशङ्कादिमलं । दोषेति रात्रेरभावेन च । किं कृत्वा ? **निरस्य** । कान् ? **रागादिरिपून्** । किंविशिष्टान् ? **दुरसान्** दुर्निवारान् । रागादयः सप्त मिथ्यात्वादयो रिपवः षष्टिकोटिसहस्रसंख्याः संदेहादिराक्षसा इव संध्यात्रयेपि सूर्यस्येव सम्यक्त्वस्य कालत्रयेपि प्रतिबन्धकत्वात् । निरस्येत्युदयतः स्वरूपतो वा काललब्ध्यादिना व्युच्छेद्य । पक्षे, ब्राह्मणैर्निपात्य सन्देहादि संध्योपास्त्यनन्तरदत्तार्घाञ्जलिजलबिन्दुवज्रैस्त्रिसंध्यं किल द्विजैः कर्तृभिः सूर्येण निपात्यन्ते । तथा **व्यक्तास्तिक्यपथः** । आस्तिक्यं पन्था इवेष्टस्थानप्राप्तिहेतुत्वात् । व्यक्तः प्रकटीकृत आस्तिक्यपथो येन स एवम् । तथा **त्रिलोकमहितो** जगत्त्रयपूजितः । तथा **पन्थाः** प्राप्त्युपायः । केषाम् ? **शिवश्रीजुषाम्** अनन्तज्ञानादिलक्षणां मोक्षलक्ष्मीं प्रीत्या सेवितुमिच्छताम् । पक्षे, मोक्षस्थानं गच्छताम् । सिद्धा हि सूर्यमण्डलं भित्त्वा यान्तीति केचित् । तथा चोक्तं संन्यासविधौ—

**संन्यसन्तं द्विजं दृष्ट्वा स्थानाच्चलति भास्करः ।**
**एष मे मण्डलं भित्त्वा परं ब्रह्माधिगच्छति ॥**

लोकेपि—

**णमह परमेसरं तं कंपेते पाविऊण रविबिम्बं ।**
**णिव्वाणजणियच्छिद्दं जेण कयं छारछाणणयं ॥**

घृणतीति घृण प्रीणने तुदादिः ॥

पुण्यमपि सकलकल्याणनिर्माणे सम्यक्त्वानुग्रहादेव समर्थं भवतीति प्रतिपादयितुमाह—

**वृक्षाः कण्टकिनोपि कल्पतरवो ग्रावापि चिन्तामणिः,**
**पुण्याद्गौरपि कामधेनुरथवा तन्नास्ति नाभून्नवा ।**
**भाव्यं भव्यमिहांगिनां मृगयते यज्ञातु तद्भ्रूकुटिं,**
**सम्यग्दर्शनवेधसो यदि पदच्छायामुपार्च्छन्ति ते ॥ ६६ ॥**

अपिः सर्वत्र विस्मये । भवन्ति । के? **वृक्षाः** । किंविशिष्टाः? **कण्टकिनोपि** बब्बूलादयोपि । किमात्मानः? **कल्पतरवः** कल्पवृक्षाः । कस्मात्? **पुण्यात्** सुकृतविपाकात् । तथा भवति । कोसौ? **ग्रावापि** । सामान्यपाषाणोपि । किमात्मा? **चिन्तामणिः** । कस्मात्? पुण्यात् । तथा भवति । कासौ? **गौरपि** सामान्यसुरभिरपि । किं रूपा? **कामधेनुः** । **अथवा** कियदद्भुतं वाच्यम्? यावता **तद्भव्यं** कल्याणमिह लोकेऽङ्गिनां प्राणिनां संबन्धि **नास्ति** न विद्यते, **नाभून्न** भूतं, **नवा** नापि **भाव्यं** भविष्यति । यत्किम्? **यज्ञातु** कदाचिदपि **मृगयते**ऽपेक्षते । काम्? **तद्भ्रूकुटिं** तस्य पुण्यस्य भ्रुकुटिम् । इयमत्र भावना—ये सम्यग्दर्शनमाराधयन्ति तेषां तादृशं पुण्यमुपतिष्ठते येन त्रैकाल्ये त्रैलोक्येपि ये तीर्थकरत्वपदपर्यन्ता अभ्युदयास्ते संपाद्यन्ते । भ्रूकुटिवचनमत्रेदं लक्षयति—यो महान् प्रभुस्तदाज्ञां योतिक्रामति स तं प्रति क्रोधाद्भ्रुकुटिमारचयति । न च सम्यक्त्वसहचारिपुण्यं केनापि संपादयितुमारब्धेनाभ्युदयेन लङ्घ्येत । सर्वोप्यभ्युदयस्तदुदयानन्तरमेव संपद्यते इत्यर्थः । यदि किम्? **यदि तेङ्गिन उपार्च्छन्ति** प्राप्नुवन्ति । काम्? **पदच्छायां** प्रतिष्ठाप्रभां पादाश्रयं च । कस्य? **सम्यग्दर्शनवेधसः** । सम्यग्दर्शनं वेधा इव सर्वपुरुषार्थसर्गे कामचारित्वात् ॥

सुसिद्धसम्यग्दर्शनस्य न परं विपदपि संपद्भवति । किं तर्हि? तन्नामोच्चारिणोपि विपद्भिः सद्यो मुच्यन्ते इति प्रकाशयति—

**सिंहः फेरुरिभः स्तभोग्निरुदकं भीष्मः फणी भूलता,**
**पाथोधिः स्थलमन्दुको मणिसरश्चौरश्च दासोञ्जसा ।**

**तस्य स्याद्ग्रहशाकिनीगदरिपुप्रायाः पराश्चापद,—**
**स्तन्नाम्नापि वियन्ति यस्य वदते सद्दृष्टिदेवी हृदि ॥ ६७ ॥**

**यस्य** महात्मनः **सद्दृष्टिदेवी** सम्यग्दर्शनदेवता **हृदि** हृदये **वदते** वदितुं दीप्यते सुसिद्धा भवतीत्यर्थः । **तस्य** भीष्मा भयंकराः प्राणान्तोपसर्गवर्गसर्गोद्यताः सिंहादयः श्रृगालादिरूपा अञ्जसा परमार्थेन स्युः । इति समुदायार्थः । तत्र **स्यात्** । कोसौ ? **भीष्मः सिंहः** केशरी । किंविशिष्टः ? **फेरुः** शृगालः । कस्य संबन्धित्वेन ? **तस्य** । कथम् ? **अञ्जसा** । तद्धुंकारमात्रेण भीष्मोपि सिंहो दूरं पलायते इत्यर्थः । तथा भीष्म **इभस्तस्य स्तभः स्यात्** । क्रूरोपि गजस्तेन छाग इव कर्णे धृत्वा आरुह्यते इत्यर्थः । तथा भीष्मोप्यग्निस्तस्योदकं जलं स्यात् । जलवत्तेनोपयुज्यते इत्यर्थः । तथा भीष्मः **फणी** सर्पस्तस्य **भूलता** गण्डूपदः स्यात् । गण्डूपदवत्तेन लङ्घ्यते इत्यर्थः । तथा **पाथोधिः** समुद्रस्तस्य **स्थलं** स्यात् । तेन स्थलमिव गम्यते इत्यर्थः । तथाऽन्दुकः श्रृङ्खला तस्य **मणिसरः** स्यात् । मुक्ताफलमाला संपद्यते इत्यर्थः । तथा **चौरस्तस्य दासः** स्यात् । धनक्रीत इव तत्कर्म करोतीत्यर्थः । किं बहुना, **वियन्ति** नश्यन्ति । काः ? **आपदो** विनिपाताः । केन ? **तन्नाम्नापि** तस्य नामोच्चारणमात्रेणापि प्राणिनाम् । किंविशिष्टाः ? **ग्रहशाकिनीगदरिपुप्रायाः** । ग्रहाश्च शाकिन्यश्च गदाश्च ज्वरादिव्याधयो रिपवश्च शत्रवस्तदादयः । किंविशिष्टाः ? **पराश्च** प्रकृष्टा अपि । वदते इत्यत्र "दीप्त्युपोक्तिज्ञानेहविमत्युपमन्त्रणे वदत" इत्यनेनात्मनेपदम् ॥

मुमुक्षून् सम्यग्दर्शनाराधनायां प्रोत्साहयन् दुर्गतिप्रतिबन्धपुरस्सरं परमाभ्युदयसाधनाङ्गत्वं साक्षान्मोक्षाङ्गत्वं च तस्य द्रढयितुमाह—

**परमपुरुषस्याद्या शक्तिः सुदृग् वरिवस्यतां,**
**नरि शिवरमासाचीक्षां या प्रसीदति तन्वती ।**
**कृतपरपुरभ्रंशं कृप्तप्रभाभ्युदयं यया**
**सृजति नियतिः फलाभोक्त्रीकृतत्रिजगत्पतिः ॥ ६८ ॥**

**वरिवस्यतां** हे मुमुक्षवो, युष्माभिराराध्यताम् । कासौ ? **सुदृक्** सम्यग्दृष्टिः । किमात्मा ? **शक्तिः** । किंविशिष्टा ? **आद्या** प्रधानभूता । कस्य ? **परमपुरुषस्य** परमात्मनः । या किम् ? **या प्रसीदति** शङ्कादिमलकलङ्कविकलतया प्रसन्ना भवति । क्व ? **नरि** पुंसि । किं कुर्वती ? **तन्वती** दीर्घीकुर्वती । कां ? **शिवरमासाचीक्षाम्** । साची तिर्यगीक्षणमीक्षा साचीक्षा तिर्यक् प्रेक्षणम् । कटाक्ष इत्यर्थः । शिवरमाया मोक्षलक्ष्म्याः साचीक्षा शिवरमासाचीक्षा ताम् । मोक्षलक्ष्मीं तद्भवलभ्यां द्वित्रिभवलभ्यां वा कुर्वतीत्यर्थः । तथा **यया सुदृशा क्लृप्तप्रभा** आहितप्रभावातिशया सती **नियतिः** प्रक्रमात्पुण्यं, **सृजति** निष्पादयति । कम् ? **अभ्युदयम्** । कथं कृत्वा ? **कृतपरपुरभ्रंशम्** । सा च किंविशिष्टा ? **फेलाभोक्त्रीकृतत्रिजगत्पतिः** । क्रियाविशेषणं चेदम् । परेण सम्यक्त्वापेक्षया मिथ्यात्वेन संपाद्यानि पुराणि शरीराणि एकेन्द्रियादिकायाः परपुराणि । तेषां भ्रंशोऽप्रादुर्भावः परपुरभ्रंशः । पक्षे, परेषां शत्रूणां पुराणि नगराणि परपुराणि, तेषां भ्रंशो विनाशः । कृतः परपुरभ्रंशो यत्राभ्युदयसर्जनकर्मणि तदेवम् । सम्यक्त्वाराधको हि जीवः सम्यक्त्वग्रहणात्प्रागबद्धायुष्कश्चेत्तदा नरकादिदुर्गतिं न प्राप्नोति बद्धायुष्कोप्यधोनरकभूमिषट्कादिषु नोत्पद्यते । तथा चोक्तम्—

> छसु हेट्ठिमासु पुढविसु जोइसवणभवणसव्वइत्थीसु ।
> बारसमिच्छुववाए सम्माइट्ठी ण उववण्णा ॥

एतेनेदमपि यौगमतं प्रत्युक्तं भवति—

> नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ।
> [1]अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥

न चोपभोगात्प्रक्षये कर्मान्तरस्यावश्यंभावात्संसारानुच्छेदः, समाधिबलादुत्पन्नतत्त्वज्ञानस्यावगतकर्मसामर्थ्योत्पादितयुगपदशेषशरीरद्वारावाप्ताशेषभोगस्योपात्तकर्मप्रक्षयात्, भाविकर्मोत्पत्तिनिमित्तमिथ्याज्ञानजनितानुसंधानविकलत्वाच्च संसारोच्छेदोपपत्तेः । अनुसंधीयते गतं चित्तमनेनेत्यनुसंधानं

---

१ अवश्यमनुभोक्तव्यमित्यपि पाठोस्ति ।

रागद्वेषाविति नियतिरिति । पक्षे महेश्वरशक्तिविशेषः । तत्राद्यशक्तिर्हि पार्वती । तया चाहितातिशया सती नियतिर्भक्तान् प्रति परमाभ्युदयं करोतीति भावः । फेलेत्यादि, फेला भुक्तोच्छिष्टम् । सा चेह सुरेन्द्रादिविभूतिः । तां हि भुक्त्वा त्यक्त्वा च सम्यक्त्वाराधकाः । परमार्हन्त्यलक्ष्मीलक्षणं परमाभ्युदयं लब्ध्वा शिवं लभन्ते । तथा चोक्तम्—

देवेन्द्रचक्रमहिमानममेयमानं
राजेन्द्रचक्रमवनीन्द्रशिरोर्चनीयम् ।
धर्मेन्द्रचक्रमधरीकृतसर्वलोकं,
लब्ध्वा शिवं च जिनभक्तिरुपैति भव्यः ॥

फेलां भोक्तारस्ताच्छील्यादिना भुञ्जानाः फेलाभोक्तारः । अतथाभूतास्तथाभूताः कृताखिजगत्पतय ऊर्ध्वमध्याधोभुवनस्वामिनो यया यत्र वा ।

एवमनन्यसामान्यमहिमा सम्यक्त्वपरमप्रभुः कथमाराध्यत इति पृच्छन्तं प्रत्याह—

मिथ्यादृग् यो न तत्त्वं श्रयति तदुदितं मन्यतेऽतत्त्वमुक्तं,
नोक्तं वा तादृगात्माऽऽभवमयममृतेतीदमेवागमार्थः ।
निर्ग्रन्थं विश्वसारं सुविमलमिदमेवामृताध्वेति तत्त्व,—
श्रद्धामाधाय दोषोज्झनगुणविनयापादनाभ्यां प्रपुष्येत् ॥६९॥

प्रपुष्येत् प्रकृष्टपुष्टिं नयेत् । क्षायिकरूपां कुर्यादित्यर्थः । कोसौ? मुमुक्षुः । काम्? तत्त्वश्रद्धाम् । कथंभूताम्? इदमेवागमार्थो निर्ग्रन्थं विश्वसारं सुविमलमिदमेवामृताध्वा इत्येवंस्वरूपाम् । किं कृत्वा? आधाय अन्तःसन्निहितां कृत्वा । काभ्यां प्रपुष्येत्? दोषोज्झनगुणविनयापादनाभ्यां । कुतो हेतोरेवं प्रपुष्येत्? मिथ्यादृगित्यादि । स भवति । किंविशिष्टः? मिथ्यादृग् मिथ्यादृष्टिः । यः किम्? यो न श्रयति न प्रतिपद्यते । किं तत्? तत्तत्त्वम् । किंविशिष्टम्? उदितं 'यो युक्त्ये'त्यादिना प्रबन्धेन प्रागुक्तम् । तथा यो मन्यते प्रतिपद्यते । किं तद्? अतत्त्वं यथोक्ततत्त्वादन्यथाभूतम् । किंविशिष्टम्? उक्तमुपदिष्टं नोक्तं वानुपदिष्टम् । तथा चोक्तम्—

मिच्छाइट्ठी जीवो उवइट्ठं पवयणं ण सद्दहदि ।
सद्दहदि असब्भावं उवइट्ठं अणुवइट्ठं वा ॥

अमृत मृतः । कोसौ ? अयमहमित्यनुपचरितप्रत्ययगोचर आत्मा जीवः । किंविशिष्टः सन् ? तादृग् मिथ्यादृक् । कियन्तं कालम् ? आभवमासंसारमनादिकालमित्यर्थः । इत्यस्माद्धेतोस्तत्त्वश्रद्धां प्रपुष्येदित्यर्थः । किंरूपाम् ? इदमेवेत्यादि । वर्तते । किं तत् ? इदमेव प्रतीयमानं निर्ग्रन्थम् । ग्रथ्नन्ति दीर्घीकुर्वन्ति संसारमिति ग्रन्था मिथ्यादर्शनज्ञानचारित्राणि । तेभ्यो निष्क्रान्तं रत्नत्रयमित्यर्थः । किंविशिष्टम् ? आगमार्थः सकलप्रवचनवाच्यम् । तथा विश्वसारं सकलजगदुत्कृष्टम् । तथा इदमेव निर्ग्रन्थं सुविमलमत्यन्तशुद्धं सद्भवति । किंविशिष्टम् ? अमृताध्वा अमृतस्य जीवन्मुक्तेः परममुक्तेश्चाध्वा मार्गः प्राप्त्युपायः । इतिशब्दः स्वरूपार्थः । मिथ्यात्वादित्रयं हेयं तत्त्वं रत्नत्रयं चोपादेयमित्येवं विप्रतिपत्तिरूपमित्यर्थः । तदुक्तम्—

णिग्गंथं पावयणं इणमेव अणुत्तरं सुपरिसुद्धं ।
इणमेव मोक्खमग्गोत्ति मदी कायव्विया तम्हा ॥

दोषः स्वकार्यकारित्वहापनं स्वरूपाल्पीकरणं वा । तद्विपरीतो गुणः । विनयः प्रश्रयः । दोषाणामुज्झनं त्यजनं दोषोज्झनम् । गुणाश्च विनयश्च गुणविनयाः । तेषामापादनं प्रापणं गुणविनयापादनम् । दोषोज्झनं च गुणविनयापादनं च दोषोज्झनगुणविनयापादने ताभ्याम् ॥

सम्यक्त्वस्योद्द्योतनाराधनां विधापयिष्यन् मुमुक्षूंस्तदतीचारपरिहारे व्यापारयति—

दुःखप्रायभवोपायच्छेदोद्युक्तापकृष्यते ।
दृग्लेश्यते वा येनासौ त्याज्यः शङ्कादिरत्ययः ॥७०॥

त्याज्यो वर्ज्यो मुमुक्षुभिः । कोसौ ? असावत्ययोऽतिचारः । किंविशिष्टः ? शङ्कादिः शङ्काकाङ्क्षाप्रमुखः । येन किम् ? येनापकृष्यते स्वकार्यकारित्वं हाप्यते लेश्यते वा स्वरूपेणाल्पीक्रियते । कासौ ? दृक् सम्य-

त्त्वम्। किंविशिष्टा ? दुःखेत्यादि । दुःखं प्रायेण यस्मिन्नसौ दुःखप्रायो बहुदुःखोऽर्थादल्पसुखश्च भवः संसारो दुःखप्रायभवः । तस्योपायः साक्षात्कर्मबन्धोऽसाक्षाच्च मिथ्यात्वादित्रयम् । तस्य छेदेऽत्यन्तविश्लेषे उद्युक्ता उद्यता उक्तं च—

नाङ्गहीनमलं छेत्तुं दर्शनं जन्मसंततिम् ।
न हि मन्त्रोऽक्षरन्यूनो निहन्ति विषवेदनाम् ॥

अतीचारो हि दर्शनसापेक्षस्यान्तर्वृत्त्या बहिर्वृत्त्या वांशखण्डनमुच्यते ॥

शङ्कालक्षणमाह—

**विश्वं विश्वविदाज्ञयाभ्युपयतः शङ्कास्तमोहोदयाज्,**
**ज्ञानावृत्त्युदयान्मतिः प्रवचने दोलायिता संशयः ।**
**दृष्टिं निश्चयमाश्रितां मलिनयेत्सा नाहिरज्ज्वादिगा,**
**या मोहोदयसंशयात्तदरुचिः स्यात्सा तु संशीतिदृक् ॥७१**

**शङ्का** शङ्काख्योतीचारो भण्यते । कोसौ ? **संशयः** । किमात्मा ? **मतिः** प्रतिपत्तिः । किंविशिष्टा ? **दोलायिता** दोलेवाचरिता । उभयकोटिस्पर्शिनीत्यर्थः । क्व विषये ? **प्रवचने** सर्वज्ञोक्ततत्त्वे । कस्मात् ? **ज्ञानावृत्त्युदयाज्** ज्ञानावरणकर्मविपाकात् । किंविशिष्टात् ? **अस्तमोहोदयात्** । अस्तस्तिरोभूतः शुभपरिणामनिरुद्धस्वरसो मोहोदयः सम्यक्त्वाख्यदृग्मोहविपाको यस्मिन् स एवम् । कस्य ? पुंसः । किं कुर्वतः ? **अभ्युपयतस्**तथा प्रतीतिगोचरं कुर्वतः । किं तत् ? **विश्वं** समस्तं वस्तुविस्तारम् । कया ? **विश्वविदाज्ञया** विश्वविदः सर्वज्ञस्याज्ञा शासनं तया । **सा च** प्रवचनगोचरा शङ्का **मलिनयेद्**दूषयेत् । काम् ? **दृष्टिम्** । किंविशिष्टाम् ? **आश्रिताम्** । कम् ? **निश्चयं** प्रत्ययम् । **न तु** मलिनयेत् । **सा** शङ्का दृष्टिम् । किंविशिष्टा ? **अहिरज्ज्वादिगा** अहिर्वा रज्ज्वादिर्वेति स्थाणुर्वा पुरुषो वेत्यादिका । **या तु स्यात्** । कासौ ? **तदरुचिः** प्रवचनाश्रद्धा । कस्मात् ? **मोहोदयसंशयाद्** दर्शनमोहोदयसंपादितसंदेहात् । **सा** शङ्का **संशीतिदृक्** संशयमिथ्यात्वं भण्यते । सातिचारः स ह्येकदेशभङ्गः ।

शङ्कानिराकरणे नियुङ्क्ते—

प्रोक्तं जिनैर्न परथेत्युपयन्निदं स्यात्,
किंवान्यदित्थमथवाऽपरथेति शङ्काम्।
स्वस्योपदेष्टुरुत कुण्ठतयानुषक्तां,
सद्युक्तितीर्थमचिरादवगाह्य मृज्यात्॥ ७२॥

मृज्यात् शोधयेदपनयेन्मुमुक्षुः। किं कुर्वन्? जिनैर्वीतरागसर्वज्ञैः प्रोक्तं सर्वमनेकान्तात्मकमिति मतं न परथा नान्यथा स्यादित्युपयन् गृह्णन्। काम्? शङ्काम्। कस्मात्? अचिरात्तत्क्षणादेव। किं कृत्वा? अवगाह्य अन्तः प्रविश्य। किं तत्? सद्युक्तितीर्थं युक्त्यागमकुशलमुपाध्यायं युक्त्यनुगृहीतमागमं वा, तयोरेव परमार्थतीर्थत्वात्। तदुक्तम्—

जैनश्रुततदाधारौ तीर्थं द्वावेव तत्त्वतः।
संसारस्तीर्यते ताभ्यां तत्सेवी तीर्थसेवकः॥

सती समीचीना अबाधिता युक्तिर्नयप्रमाणात्मको हेतुर्यस्य यत्र वा तत् सद्युक्ति। लौकिकोपि हि पङ्कादिलेपं कथंचित् प्रमादाल्लग्नं सद्युक्तिनिरुपसर्गं तीर्थं नद्यादिघट्टमचिरादवगाह्य शोधयतीत्युक्तिलेशः। किंविशिष्टां शङ्काम्? अनुषक्तां हृदि विलग्नाम्। कया? कुण्ठतया मतिमान्द्येन। कस्य? स्वस्यात्मनः। उत अथवा उपदेष्टुर्गुर्वादेः कुण्ठतया वचनानयेन अनावरणेन वा। किंरूपां शङ्काम्? इदं स्यादित्यादि। इदं जिनोक्तं धर्मादितत्त्वं किं स्यादन्यद्वा स्याद्वैशेषिकोक्तं द्रव्यगुणादि नैयायिकोक्तं वा प्रमाणप्रमेयादि सांख्योक्तं वा प्रधानपुरुषादि बौद्धोक्तं वा दुःखसमुदयादि। तथा किमिदं जिनोक्तं तत्त्वमित्थं सामान्यविशेषात्मकत्वेन प्रकारेण स्यादथवाऽपरथा भेदैकान्तादिप्रकारेण स्यात्। इत्येवं विमर्शरूपाम्।

शङ्कातिचारादपायं दर्शयति—

सुरुचिः कृतनिश्चयोपि हन्तुं द्विषतः प्रत्ययमाश्रितः स्पृशन्तम्।
उभयीं जिनवाचि कोटिमाजौ तुरगं वीर इव प्रतीर्यते तैः ७३

प्रतीर्यते प्रतिक्षिप्यते प्रतिहन्यते इत्यर्थः। कोसौ? सुरुचिः सुदृष्टिः पुरुषः। कैः? तैर्द्विषद्भिः। किंविशिष्टोपि? कृतनिश्चयोपि एते मयावश्यं हन्तव्या इति विहिताग्रहोपि। किं कर्तुम्? हन्तुम्। कान्? द्विषतो मोहारीन्। किंविशिष्टः सन्? आश्रितः। कम्? प्रत्ययं प्रतीतिम्। किं कुर्वन्तम्? स्पृशन्तमालम्बमानम्। काम्? कोटिं वस्त्वंशम्। किंविशिष्टाम्? उभयीम्। इदं स्यादन्यथा वेत्येवंरूपां शङ्कामित्यर्थः। क? जिनवाचि सर्वज्ञवचने। क इव? वीर इव। यथा शूरः पुरुषः सुरुचिः सुदीप्तिः शत्रून्निहन्तुं कृतनिर्बन्धोपि आजौ रणभूमौ कोटिं तदंशमुभयीं पौरस्त्यां पाश्चात्त्यां च स्पृशन्तं धावेन गच्छन्तं वाजिनमारूढस्तैः प्रतिहन्यते इत्युपमालंकारः॥

भयसंशयात्मकशङ्कानिरासे यत्नमुपदिशति—

भक्तिः परात्मनि परं शरणं नुरस्मिन्,
देवः स एव च शिवाय तदुक्त एव।
धर्मश्च नान्य इति भाव्यमशङ्कितेन,
सन्मार्गनिश्चलरुचेः स्मरताऽञ्जनस्य॥ ७४॥

भाव्यं भवितव्यं मुमुक्षुणा। किंविशिष्टेन? अशङ्कितेन भयसंशयरहितेन। तद्भेदाद्विधा हि शङ्का। कथम्? इति अनेन प्रकारेण भवति। कासौ? परात्मनि परमात्मनि भक्तिर्भावविशुद्धोऽन्तरङ्गानुरागः। किम्? शरणमपायरक्षणोपायः। कस्य? नुः पुरुषस्य। क? अस्मिन्लोके। कथम्? परं केवलम्। तथा भवति। कोसौ? स एव परात्मा। किंविशिष्टः? देव आराध्यः। कस्मै? शिवाय मोक्षाय। नान्यः शिवादिः। तथा तदुक्त एव धर्मः शिवाय भवति, नान्यः शिवाद्युक्तः। किं कुर्वतैवमशङ्कितेन भाव्यम्? स्मरता ध्यायता। कस्य? अञ्जनस्य अञ्जननामानं चौरमित्यर्थः। किंविशिष्टस्य? सन्मार्गनिश्चलरुचेः। सन्मार्गे सत्पथे निश्चला निष्कम्पा रुचिः श्रद्धा यस्य स एवम्॥

काङ्क्षातिचारनिश्चयार्थमाह—

या रागात्मनि भङ्गुरे परवशे सन्तापतृष्णारसे,
दुःखे दुःखदबंधकारणतया संसारसौख्ये स्पृहा।

स्याज्ज्ञानावरणोदयैकजनितभ्रान्तेरिदं दृक्तपो,–
माहात्म्यादुदियान्ममेत्यतिचरत्येषैव काङ्क्षा दृशम् ७५॥

**अतिचरति** देशतः खण्डयति । कासौ ? **काङ्क्षा** । किंविशिष्टा ? **एषैव** येत्यादिना प्रक्रान्ता, न कृष्यादिना धान्यधनादावाकाङ्क्षा, अन्यथातिप्रसङ्गात् । काम् ? **दृशं** सम्यक्त्वम् । या किम् ? **या स्यात्** । कासौ ? **स्पृहा** इच्छा । क ? **संसारसौख्ये** । किंविशिष्टे ? **रागात्मनि** इष्टवस्तुविषयप्रीतिरूपे । तथा **भङ्गुरे** स्वयमेव नाशिनि । तथा **परवशे** पुण्योदयाधीने । तथा **संतापतृष्णारसे** । रस्येतेनुभूयेते इति रसावनुभवौ । संतापतृष्णे रसावनुभवौ फले यस्मात् तदेवम् । तथा **दुःखे** । कया ? **दुःखदबन्धकारणतया** । दुःखदश्चासौ बन्धश्चाशुभकर्मोपश्लेषो दुःखदबन्धः । तस्य कारणं, तद्भावेन । कस्य ? **ज्ञानावरणोदयैकजनितभ्रान्तेः** । ज्ञानावरणोदयेनैकेन जनिता भ्रान्तिर्यथोक्ते संसारसुखे सुखबुद्धिर्यस्य स एवम् । एक इति दृङ्मोहोदयसहायरहितः । सुदृष्टीनां तन्निमित्तभ्रान्त्यसंभवादन्यथा मिथ्याज्ञानप्रसङ्गात् । तथा चोक्तम्–

उदये यद्विपर्यस्तं ज्ञानावरणकर्मणः ।
तदस्थास्नुतया नोक्तं मिथ्याज्ञानं सुदृष्टिषु ॥

कथं कृत्वा तत्रासौ स्यादित्यत्राहेदमित्यादि । **उदियादुद्भूयात्** । किं तत् ? **इदमि**न्द्रादिपदं संसारसौख्यं वा । कस्य ? **मम** । कस्मात् ? **दृक्तपोमाहात्म्यात्** सम्यक्त्वस्य तपसो वा प्रभावात् । उक्तं च–

स्यां देवः स्यामहं यक्षः स्यां वा वसुमतीपतिः ।
यदि सम्यक्त्वमाहात्म्यमस्तीतीच्छां परित्यजेत् ॥

आकाङ्क्षापराणां सम्यक्त्वफलहानिं कथयति–

यल्लीलाचललोचनाञ्चलरसं पातुं पुनर्लालसाः,
स्वश्रीणां बहु रामणीयकमदं मृद्नन्त्यपीन्द्रादयः ।
तां मुक्तिश्रियमुत्कयद्विदधते सम्यक्त्वरत्नं भव,–
श्रीदासीरतिमूल्यमाकुलधियो धन्यो ह्यविद्यातिगः ॥७६॥

**विदधते** कुर्वन्ति । के ? **आकुलधियः** । आकुला विषयसेवनोत्सुका धीरन्तःकरणप्रवृत्तिर्येषां ते । किं तत् ? **सम्यक्त्वरत्नम्** । किंविशिष्टम् ? **भवश्रीदासीरतिमूल्यम्** । भवश्रीः संसारलक्ष्मीर्दासी कर्मकरीव कर्मस्वामिपरतन्त्रत्वात् । भवश्रीदास्या रतिः संभोगः । तस्या मूल्यं भाटीप्रदानम् । किं कुर्वत् ? **उत्कयदुत्कण्ठितां** कुर्वत् । काम् ? **तां मुक्तिश्रियम्** । कोसौ तच्छब्देन परामृश्यते इत्याह, यल्लीलेत्यादि । **मृद्नन्ति** संचूर्णयन्ति । के ? **इन्द्रादयः** । इन्द्रः शचीपतिरादिर्येषामहमिन्द्रादीनां तेपि । कम् ? **रमणीयकमदं** रतिकारित्वाहंकारम् । कासाम् ? **स्वश्रीणां** निजलक्ष्मीणाम् । कथं कृत्वा ? **बहु** भृशमित्यर्थः । किंविशिष्टाः सन्तः ? **लालसा** अतिलम्पटाः । किं कर्तुम् ? **पातुमनुभवितुम्** । कम् ? **यदि**त्यादि । लीलया यदृच्छया चलश्चञ्चलः । स चासौ लोचनाञ्चलो नेत्रविभागान्तस्तज्जो रसो हर्षो यस्या मुक्तिश्रियो **लीलाचललोचनाञ्चलरसस्तम्** । निर्विकारपरमचिच्चमत्कारमात्रानुभूतसंभूतसहजानन्दस्वभावसुखामृतमित्यर्थः । कथम् ? **पुनर्भूयः** । इयमत्र भावना त्रिलोके तपश्चरद्भिर्यैःप्रशमसुखमनुभूतं तत्पुनरनुभवितुकामाः स्वर्विभूतिसुखेष्वरज्यन्तः पुनः प्रशमसुखाय तपश्चरितुमत्रावतरीतुमिन्द्रादयोपीच्छन्ति । अत्र समर्थनमाह— **हि** यस्माद्भवति । कोसौ ? **धन्यः** सुकृती । किंविशिष्टः ? **अविद्यातिगः** । अविद्ययानभिभूयत इत्यर्थः । अनित्याशुचिदुःखानात्मसु विपरीतख्यातिरविद्या ॥

सम्यक्त्वादिजनितपुण्यानां पुंसां संसारसुखाकाङ्क्षाकरणान्न किमपि फलं स्यादिति दर्शयति— .

**तत्त्वश्रद्धानबोधोपहितयमतपःपात्रदानादिपुण्यं,**
**यद्गीर्वाणाग्रणीभिः प्रगुणयति गुणैरर्हणामर्हणीयैः ।**
**तत्प्राध्वंकृत्य बुद्धिं विधुरयसि मुधा क्वापि संसारसारे,**
**तत्र स्वैरं हि तत् तामनुचरति पुनर्जन्मनेऽजन्मने वा** ७७

भो सुखार्थिन्, **मुधा विधुरयसि** । विफलं विक्लवां करोषि त्वम् । काम् ? **बुद्धिम्** । क्व ? **क्वापि** क्वचिदाकाङ्क्षाक्रोडीकृते **संसारसारे**

भवरसे । अस्मात्पुण्योदयादभ्युदयातिशयो मे भूयादिति वृथा कल्पयसीत्यर्थः। किं कृत्वा ? प्राध्वंकृत्य बद्ध्वा। किं तत् ? तत्पुण्यम्। यत्किम् ? यत् तत्त्वश्रद्धानादिजनितं पुण्यं कर्तृ प्रगुणयति सज्जयति कारयतीत्यर्थः। काम् ? अर्हणां पूजाम्। कैः कर्तृभिः ? गीर्वाणाग्रणीभिः शक्रादिभिः। कैः कृत्वा ? गुणैस्तीर्थकरत्वादिभिः। किंविशिष्टैः ? अर्हणीयैः। पूज्यैः। तत्त्वश्रद्धानं च बोधश्च ताभ्यामुपहितानि विशिष्टानि यमतपःपात्रदानपरोपकारादीनि पुण्यसाधनानि तज्जनितं सुकृतं तत्पुण्यं हि यस्मात् तादृक् पुण्यं भवति। किंविशिष्टम् ? स्वैरं त्वत्कल्पनानिरपेक्षम्। क्व ? तत्र संसारसारे चरति च प्रवर्तते। किं तत् ? पुण्यम्। कथम् ? तामनु तया त्वद्बुद्ध्या सह। कस्मै ? पुनर्जन्मने उत्तमदेवमनुष्यत्वलक्षणपुनर्भवार्थम्, अजन्मने वा अपुनर्भवार्थम्॥

आकाङ्क्षानिरोधेऽतियत्नमुपदिशति—

पुण्योदयैकनियतोभ्युदयोत्र जन्तोः,
प्रेत्याप्यतश्च सुखमप्यभिमानमात्रम्।
तन्नात्र पौरुषतृषे परवागुपेक्षा,—
पक्षो ह्यनन्तमतिवन्मतिमानुपेयात्॥ ७८॥

जन्तोर्जीवस्यात्रेह लोके प्रेत्यापि परलोके वाभ्युदयः स्यात्। कीदृशः ? पुण्योदयैकनियतः पुण्योदयेनैकेन पौरुषरहितेन नियतः प्रतिबद्धः। पुण्योदये सत्येव भवति तदभावे न भवत्येवेत्यर्थः। अतश्चाभ्युदयात्सुखमपि स्यात्। कीदृशम् ? अभिमानमात्रमहं सुखीत्यनुरक्तकल्पनामात्रम्। यत एवं तत्तस्मान्नोपेयाद् नाश्रयेत्। कोसौ ? मतिमान् प्रेक्षापूर्वकारी। के ? पौरुषतृषे। क्व ? अत्र एतयोरभ्युदयतज्जनितसुखयोः अभ्युदयसाधने पुरुषकारं तत्सुखे च तृष्णां न कुर्यादित्यर्थः। किंवत् ? अनन्तमतिवत्। अनन्तमतिर्नाम श्रेष्ठिपुत्री यथा। कथंभूतो भूत्वा ? परवागुपेक्षापक्षः। परवाचः सर्वथैकान्तवादिमतानि। तत्रोपेक्षा रागद्वेषोपरमः। सैव पक्षोभ्युपगमो यस्य स एवम्। हि स्फुटार्थे।

विचिकित्सातिचारं लक्षयति—

**कोपादितो जुगुप्सा धर्माङ्गे याऽशुचौ स्वतोऽङ्गादौ ।**
**विचिकित्सा रत्नत्रयमाहात्म्यारुचितया दृशि मलः सा ॥७९॥**

**सा विचिकित्सा** स्यात् । किम् ? **मलो** दोषः । क ? **दृशि** सम्यक्त्वे । कया ? **रत्नत्रयमाहात्म्यारुचितया** सम्यग्दर्शनादिप्रभावारोचकत्वेन । या किम् ? **या जुगुप्सा** स्यात् । क ? **अङ्गादौ** शरीरादौ द्रव्ये क्षुत्तृष्णादौ भावे च । किंविशिष्टे ? **अशुचौ** अपवित्रेऽरम्ये च । कुतः ? **स्वतः** स्वभावेन । पुनः किंविशिष्टे ? **धर्माङ्गे** । रत्नत्रयसाधने । कस्मात् ? **कोपादितः** क्रोधादिवशात् ।

महतां स्वदेहे निर्विचिकित्सितामाहात्म्यमाह—

**यद्दोषधातुमलमूलमपायमूल-**
**मङ्गं निरङ्गमहिमस्पृहया वसन्तः ।**
**सन्तो न जातु विचिकित्सितमारभन्ते**
**संविद्रते हृतमले तदिमे खलु स्वे ॥ ८० ॥**

**इमे सन्तो हृतमले** विलीनकर्ममालिन्ये **स्वे** आत्मनि **खलु** निश्चयेन **तत्संविद्रते** संवित्तिं लभन्ते । यत्किम् ? **यज्जातु** कदाचित्सन्तः साधवो **विचिकित्सितं** जुगुप्सां **नारभन्ते** न कुर्वन्ति । किं कुर्वन्तः ? **आवसन्तो**धितिष्ठन्तः । किं तत् ? **अङ्गं** शरीरम् । किंविशिष्टम् ? **दोषधातुमलमूलम्** । दोषा वातपित्तकफाः । धातवो रसा असृङ्मांसमेदोस्थिमज्जशुक्राणि । मला दूषिका प्रस्वेदादयः । ते मूलं प्रतिष्ठा आश्रयो यस्य, शुक्रार्तवस्थैस्तैरारब्धत्वात् । तथा**ऽपायमूलं** विनिपातकारणम् । कयाऽऽवसन्तः ? **निरङ्गमहिमस्पृहया** निरङ्गा अशरीरा मुक्तात्मानः । तेषां महिमा अनन्तज्ञानादिगुणसंपत् तदभिलाषेण ॥

महासत्त्वानां निमित्तसन्निधानेपि जुगुप्सानुद्भवं भावयति—

**किंचित्कारणमाप्य लिङ्गमुदयन्निर्वेदमासेदुषो,**
**धर्माय स्थितिमात्रविध्यनुगमेप्युच्चैरवद्याद्भिया ।**

स्नानादिप्रतिकर्मदूरमनसः प्रव्यक्तकुत्स्याकृतिं,
कायं वीक्ष्य निमज्जतो मुदि जिनं स्मर्तुः क शूकोद्गमः ॥८१॥

क्व स्यान्न क्वापि। कोसौ? शूकोद्गमः। शूकाया जुगुप्साया उद्गमः उद्भूतिः। कस्य? सद्दृष्टेः। किं कुर्वतः? निमज्जतो ब्रुडतः। क्व? मुदि आनन्दे। किंविशिष्टस्य सतः? स्मर्तुः। स्मरति तच्छीलः। कम्? जिनमर्हद्भट्टारकम्। किं कृत्वा? वीक्ष्य दृष्ट्वा। कम्? कायम्। किंविशिष्टम्? प्रव्यक्तकुत्स्याकृतिमत्यन्तप्रकटितबीभत्सनीयरूपम्। कस्य? तपस्विनः। किंविशिष्टस्य? आसेदुष आश्रितस्य। किम् तत्? लिङ्गमाचेलक्यलोचादिकम्। किंविशिष्टम्? उद्यन्निर्वेदं वर्धमानवैराग्यम्। किं कृत्वा? आप्य प्राप्य। किम्? किंचिदिष्टवियोगादिकं कारणम्। पुनः किंविशिष्टस्य? स्नानादिप्रतिकर्मदूरमनसः स्नानाभ्यङ्गादिप्रसाधनादत्यन्तनिवृत्तचित्तस्य। कया? भिया भयेन। कस्मात्? अवद्यात् पापात्। कथम्। उच्चैरतिशयेन। क्व सति? स्थितिमात्रविध्यनुगमेपि। स्थितिरेव स्थितिमात्रं, न बहिश्चाकचिक्यादिकम्। तस्मै विधिर्विहिताचरणम्। तस्यानुगमेनुवर्तने। कस्मै? धर्माय धर्मं साधयितुम्। कायो यथा तिष्ठति तथा विहितमशनादिकमनुतिष्ठतोपीत्यर्थः।

विचिकित्साविरहे यत्नमुपदिशति—

द्रव्यं विडादि करणैर्न ममैति पृक्तिं,
भावः क्षुदादिरपि वैकृत एव मेऽयम्।
तत्किं मयात्र विचिकित्स्यमिति स्वमृच्छे,—
दुद्दायनं मुनिरुगुद्धरणे स्मरेच्च ॥ ८२ ॥

ऋच्छेद्गाविशेत् सद्दृष्टिः पुमान् विचिकित्सायामुद्भवन्त्याम्। कम्? स्वमात्मानम्। कथम्? इत्येवं प्रति गच्छति। किम् तद्? द्रव्यम्। किंविशिष्टम्। विडादि विष्टामूत्रादि। काम्? पृक्तिं संपर्कम्। कैः सह? करणैरचेतनैः स्पर्शनादीन्द्रियैः, न मया चिद्रूपेण मूर्तस्य मूर्तेनैव संपर्कोपपत्तेः। तथायं प्रतीयमानो मे मम संबन्धी क्षुदादिः क्षुत्तृष्णादिर्भावोपि स्यात्। किंविशिष्टः? वैकृत एव वैकारिक एव कर्मोदयकृतत्वात्।

तत्तस्मादत्रैतयोर्द्रव्यभावयोर्मध्ये किं मया विचिकित्स्यं जुगुप्स्यं, न कि-मपि । इति भावयन् शुद्धचिदात्मानमात्मानं सद्दृष्टिरध्यासीत । तथा स्मरेदसौ। कम् ? उद्दायनमुद्दायननामानं राजानम् । कस्मिन् कर्तव्ये ? मुनिरुगुद्धरणे मुनीनां रुजो रोगादुद्धरणे निःसारणे । मुनीन् छर्द्यादिकं कुर्वतः प्रतिकुर्वाणः शूकां न कुर्यादित्यर्थः ॥

परदृष्टिप्रशंसाख्यं सम्यक्त्वमलं निषेद्धुं प्रयुङ्क्ते—

**एकान्तध्वान्तविध्वस्तवस्तुयाथात्म्यसंविदाम् ।**
**न कुर्यात्परदृष्टीनां प्रशंसां दृक्कलङ्किनीम् ॥ ८३ ॥**

**न कुर्यात्** सद्दृष्टिः । काम् ? **प्रशंसां** श्लाघाम् । केषाम् ? **परदृष्टी-नाम्** । परत्रानेकान्तादन्यत्र सर्वथैकान्ते दृष्टिरभिनिवेशो येषां ते पर-दृष्टयो बौद्धादयस्तेषाम् । किंविशिष्टानाम् ? एकांतेति । **एकान्तध्वान्तेन** सर्वथा क्षणिकाद्यभिनिवेशितमिरेण विध्वस्ता निरस्ता वस्तुयाथात्म्यसंविदऽने-कान्ततत्त्वसंवित्तिर्येषां ते तथोक्ताः[1] । किंविशिष्टां तत्प्रशंसाम् ? **दृक्कलङ्किनीं** सम्यक्त्वदूषणशीलाम् ।

अनायतनसेवाख्यं दृष्टिदोषं निषेधयितुमाह—

**मिथ्यादृग्ज्ञानवृत्तानि त्रीणि त्रींस्तद्वतस्तथा ।**
**षडनायतनान्याहुस्तत्सेवां दृङ्मलं त्यजेत् ॥ ८४ ॥**

**आहुः** ब्रुवन्त्याचार्याः । कानि ? **अनायतनानि** । कति ? **षट्** । कथम् ? **मिथ्यादृग्ज्ञानवृत्तानि त्रीणि** मिथ्यादर्शनं मिथ्याज्ञानं मिथ्याचारित्रं च । **तथा तद्वतो** मिथ्यादृगादियुक्तान् पुरुषांस्त्रीन् मिथ्यात्विनं मिथ्याज्ञानिनं मिथ्याचारित्रिणं च। **त्यजेत्**। सम्यक्त्वाराधनोद्यतः । काम् ? **तत्सेवां** तेषां षण्णामप्युपासनाम् । किंविशिष्टाम् ? **दृग्मलं** सम्यक्त्वदोषं यतः । एतेन

**"सम्मत्तादीचारा संका कंखा तहेव विदिगिंछा ।**
**परदिट्ठीण पसंसा अणायदणसेवणा चेव ॥"**

---

१ तथोक्ता इत्यस्य स्थाने 'तेषाम्' इति पाठ एव समीचीनो, मूले षष्ठीबहु-वचनस्योपलम्भात् ।

इत्याराधनाशास्त्रोक्ताः पञ्च सम्यक्त्वातीचाराः सूत्रिताः प्रतिपत्तव्याः ।

मिथ्यात्वाख्यमनायतनं निषेद्धुं यतयति—

**सम्यक्त्वगन्धकलभः प्रबलप्रतिपक्षकरटिसंघट्टम् ।**
**कुर्वन्नेव निवार्यः स्वपक्षकल्याणमभिलषता ॥ ८५ ॥**

**निवार्यो** निषेधनीयः सम्यक्त्वाराधनोद्यतेन भव्येन यूथनाथेन यथा । कोसौ ? **सम्यक्त्वगन्धकलभः** । सम्यक्त्वं गन्धकलभ इव यूथस्येव ज्ञानचारित्रस्यागामिपरिपुष्टिनिमित्तत्वात् । गन्धेन विशिष्टः कलभः करिपोतो गन्धकलभः । किं कुर्वन् ? **कुर्वन्नेव**, न कृतवान् । कर्तुमुद्यत इत्यर्थः । कम् ? प्रेत्यादि । प्रतिपक्षः सम्यक्त्वापेक्षया मिथ्यात्वं गन्धकलभापेक्षया प्रतिपक्षः करटी प्रत्यनीकयूथनाथः प्रतिपक्षकरटी । प्रतिहस्तीव प्रतिलोमवृत्तित्वात् । **प्रबलो** दुर्निवारः **प्रतिपक्षकरटी** प्रबलप्रतिपक्षकरटी । तेन सह संघट्टः प्रतिजिघांसया संघटना, तम् । किं कुर्वता ? **अभिलषता** वाञ्छता । किम् ? **स्वपक्षस्या**त्माभ्युपगतव्रतादेर्निजयूथस्य च **कल्याणं** कुशलम् ।

सम्यक्त्वप्रौढिमतो मदमिथ्यात्वावेशशङ्कां निरस्यति—

**मा भैषीर्दृष्टिसिंहेन राजन्वति मनोवने ।**
**न मदान्धोपि मिथ्यात्वगन्धहस्ती चरिष्यति ॥ ८६ ॥**

भो सुदृक्सदृष्टे, **मा भैषीर्मा** भयं कार्षीस्त्वं, यतो **न चरिष्यति** न चेष्टिष्यते । कोसौ ? **मिथ्यात्वगन्धहस्ती** । मिथ्यात्वं गन्धहस्तीव, वनस्येव मनसो विप्लावकत्वात् । क ? **मनोवने** । मनश्चित्तं वनमाराम इव, कामितफलदानसमर्थत्वात् । किंविशिष्टे ? **राजन्वति** । दुष्टनिग्रहशिष्टपरिपालनपरेण राज्ञा युक्ते । परपराभवाविषये इत्यर्थः । केन ? **दृष्टिसिंहेन** सम्यक्त्वकेसरिणा । किंविशिष्टोपि ? **मदान्धोपि** । मदैर्जात्याद्यभिमानैरन्धयति युक्तायुक्तालोकनविकलं पुरुषं करोतीति मदान्धः । पक्षे, मदेन दानजलेनोन्मार्गचारी च ।

जात्यादिभिरात्मोत्कर्षसंभाविनः सधर्माभिभवनमुखेन सम्यक्त्वमाहात्म्यहानिं दर्शयति—

**संभावयन् जातिकुलाभिरूप्यविभूतिधीशक्तितपोर्चनाभिः ।**
**स्वोत्कर्षमन्यस्य सधर्मणो वा कुर्वन् प्रधर्षं प्रदुनोति दृष्टिम् ८७**

**प्रदुनोति** माहात्म्यादपकर्षति पुरुषः । काम् ? **दृष्टिं** सम्यक्त्वम् । किं कुर्वन् ? **संभावयन्** । कम् ? **स्वोत्कर्षम्** । काभिः ? जात्यादिभिः । **जाति**र्मातृपक्षः । **कुलं** पितृपक्षः । **आभिरूप्यं** सौरूप्यम् । **विभूति**र्ग्रामसुवर्णादिसमृद्धिः । **धीः** शिल्पकलादिज्ञानम् । **शक्तिः** पराक्रमः । **तपो**नशनाद्यनुष्ठानम् । **अर्चना** पूजा । जात्यादीनामितरेतरयोगो द्वन्द्वः । जात्यादिभिर्व्यस्तैः समस्तैर्वा । अहमस्मादुत्कृष्ट इत्युत्प्रेक्षमाण इत्यर्थः । न केवलं स्वोत्कर्षं संभावयन् **कुर्वन् वा** । कं ? **प्रधर्षं** जात्यादिद्वारेण तिरस्कारम् । कस्य ? **अन्यस्य** । किंविशिष्टस्य ? **सधर्मणः** साधर्मिकस्य ।

जातिकुलमदयोः परिहारार्थमाह—

**पुंसोपि क्षतसत्त्वमाकुलयति प्रायः कलङ्कैः कलौ,**
**सद्दृग्वृत्तवदान्यतावसुकलासौरूप्यशौर्यादिभिः[1] ।**
**स्त्रीपुंसैः प्रथितैः स्फुरत्यभिजने जातोसि चेद्दैवत,—**
**स्तज्जात्या च कुलेन चोपरि मृषा पश्यन्नऽधः स्वं क्षिपेः ८८**

भो जातिकुलोच्चंमन्य, **जातोसि चेद्** यद्युत्पन्नस्त्वमसि । क ? **अभिजने**ऽन्वये । कस्मात् ? **दैवतः** प्राक्तनपुण्यविपाकात् । किं कुर्वति ? **स्फुरति** जनमनस्सु चमत्कुर्वति । कैः ? **स्त्रीपुंसै**र्नारीनरैः । किंविशिष्टैः ? **प्रथितैः** ख्यातैः । कैः ? सदित्यादि । **सद्दृग्वृत्ते** सम्यक्त्वसदाचारौ । **वदान्यता** दानशौण्डत्वम् । **वसु** धनम् । **कला** गीतादयः । **सौन्दर्यं** चारुत्वम् । **शौर्यं** वीरत्वम् । **आदि**शब्देन नयविनयगाम्भीर्यशौंडीर्यादि । दृक् च वृत्तं च दृग्वृत्ते । सती च दृग्वृत्ते च सद्दृग्वृत्ते । ते च वदान्यता च वसु च कलाश्च सौदर्यं च शौर्यादयश्चेति द्वन्द्वः । कदा ? **कलौ** दुःषमासमये । किं कुर्वति ? **आकुलयति** दूषयति सति । कान् ? **पुंसोपि** किं पुनः स्त्रीः इत्यपि शब्दार्थः । कैः ? **कलङ्कै**रपवादैः । कथम् ? **प्रायो** बाहु-

---

१ श्लोकेत्र सौरूप्यशब्दोस्ति टीकायां तु सौन्दर्यशब्दो वर्तते ।

त्येन। कथं कृत्वा? **क्षतसत्त्वं** क्षतं हतं सत्त्वं मनोगुणो यत्र तत् । ततो नु किम्? **क्षिपेः** पातयेस्त्वम्। कम्? **स्वमात्मानम्।** क? **अधो** हीनपदे सम्यक्त्वविराधनायां तस्य सुघटत्वात्। उक्तं च—

**जातिरूपकुलैश्वर्यशीलज्ञानतपोबलैः।**
**कुर्वाणोऽहंकृतिं नीचं गोत्रं बध्नाति मानवः॥**

किं कुर्वन्? **पश्यन्** मनसालोकयन्। कम्? **स्वम्।** क? **उपरि** प्रक्रमवशात्सधर्मणाम्। कया? **जात्या च कुलेन च।** कथम्? **मृषा** सङ्घयेनापि संवृतिमता जातिकुलयोः परमार्थतः शुद्धेर्निश्चेतुमशक्यत्वात्। तदुक्तम्—

**अनादाविह संसारे दुर्वारे मकरध्वजे।**
**कुले च कामिनीमूले का जातिपरिकल्पना॥**

सौरूप्यमदाविष्टस्य दोषं दर्शयति—

**यानारोप्य प्रकृतिसुभगानङ्गनायाः पुमांसं,**
**पुंसश्चास्यादिषु कविठका मोहयन्त्यङ्गनां द्राक्।**
**तानिन्द्रादीन्न परमसहन्नुन्मदिष्णून्वपुस्ते,**
**स्रष्टाऽस्राक्षीद्ध्रुवमनुपमं त्वां च विश्वं विजिष्णुम्॥८९**

**मोहयन्ति** वैचित्र्यं नयन्ति । के? **कविठकाः।** लोकोत्तरवर्णनानिपुणकवयष्ठका इव पुरुषार्थोपमर्दकत्वात् । कम्? **पुमांसम्।** कथम्? **द्राग्** वर्णनानन्तरमेव। किं कृत्वा? **आरोप्य** कल्पयित्वा। कान्? **यान्** इन्द्रादीन् चन्द्रकमलादीनुपमानभूतानर्थान्। किंविशिष्टान्? **प्रकृतिसुभगान्** निसर्गरम्यान्। केषु? **आस्यादिषु** मुखनयनादिषूपमेयभूतेष्वर्थेषु। कस्याः? **अङ्गनायाः** कामिन्याः। तथा कविठका **अङ्गनां च** मोहयन्ति द्राक्। किं कृत्वा? यान् प्रकृतिसुभगानिन्द्रादीन्**पुंसः** पुरुषस्यास्यादिष्वारोप्य । **ध्रुवमहमेवं मन्ये तानिन्द्रादीनुन्मदिष्णून्** स्वोत्कर्षसंभाविनो **न परं** न केवलमसहन्नसहमानो **वपुस्ते** तव शरीर**मनुपमं** मुखादिषु चन्द्राद्युपमातीतं **स्रष्टा** विधाताऽस्राक्षीत् प्रत्युत चन्द्रादीनप्युपमेयान्कर्तुं सृष्टवानिति भावः । किं तु **त्वां च** त्वामपि

विश्वं विजिष्णुं सम्यक्त्वबलेन समस्तजगद्विजयं साधु कुर्वाणमसहमानो विधाता तव शरीरमनन्योपमं व्यधादित्यहं संभावयामि। इयमत्र भावना—भवान्सम्यक्त्वमाहात्म्याद्विश्वं व्यजेष्यत यदि हतविधिस्तवेदृक् सौरूप्यमुत्पाद्य तन्मदेन सम्यक्त्वं नादूषयिष्यत। अत्रेयं पदघटना—अस्राक्षीत्। कोसौ? स्रष्टा। किं तद्? वपुः। कस्य? ते। किंविशिष्टम्? अनुपमम्। किं कुर्वन्? असहन्। कान्? तानिन्द्रादीन्। किंविशिष्टान्? उन्मदिष्णून्। कथम्? ध्रुवं निश्चितम्। न परमेवं, किं तर्हि? वपुस्ते स्रष्टाऽस्राक्षीत्। किं कुर्वन्? असहन्। कम्? त्वां च त्वामपि। किंविशिष्टम्? विजिष्णुं विजयते इत्येवं साधुकारी विजिष्णुः।

लक्ष्मीमदं निषेद्धुं वक्रभणित्या नियुङ्क्ते—

**या दैवैकनिबन्धना सहभुवां यापद्भियामामिषं,**
**या विस्रम्भमजस्रमस्यति यथासन्नं सुभक्तेष्वपि।**
**या दोषेष्वपि तन्वती गुणधियं युङ्क्तेनुरक्त्या जनान्,**
**स्वभ्यस्तान्न तया श्रियाशु ह्रियसे यान्त्यान्यमान्ध्यान्न चेत् ९०**

या श्रीर्भवति। कीदृशी? दैवैकनिबन्धना। दैवमिह पुराकृतं शुभकर्म तदेकं पौरुषनिरपेक्षं निबन्धनं कारणं यस्याः सैवम्। तथा या श्रीर्भवति। किम्? आमिषं ग्रासो विषयो वा। कासाम्? आपद्भियां विपद्भीतीनाम्। कीदृशीनाम्? सहभुवाम् सहोत्थानाम्। तथा चोक्तम्—

बह्वपायमिदं राज्यं त्याज्यमेव मनस्विनाम्।
यत्र पुत्राः ससोदर्या वैरायन्ते निरन्तरम्॥

तथा या सुभक्तेष्वपि अत्यन्तभक्तियुक्तेष्वपि मध्ये यथासन्नं यो य आसन्नः पुत्रभ्रात्रादिस्तत्र तत्र विस्रम्भं विश्वासमजस्रं नित्यमस्यति क्षिपति निवर्तयति सुभक्तेपि पुत्रादौ स्वापहारशङ्कामाविष्करोतीत्यर्थः। तथा या युङ्क्ते योजयति। कान्? जनान् लोकान्। कया? अनुरक्त्याऽनुरागेण। किं कुर्वती? तन्वती। काम्? गुणधियं गुणकल्पनाम्। केषु?

दोषेष्वपि ब्रह्महत्यादिषु। ब्रह्मघ्नोपि हि धनी धनलोभाद्वृद्धैरप्याश्रीयते। तदुक्तम्—

वयोवृद्धास्तपोवृद्धा ये च वृद्धा बहुश्रुताः।
सर्वे ते धनवृद्धस्य द्वारि तिष्ठन्ति किङ्कराः॥

अत्र हे भ्रातः, स्वभ्यस्व आत्मानमुत्कृष्टं संभावय त्वम्। कया? तया प्रागुक्तविशेषणविशिष्टया श्रिया लक्ष्म्या। अंत्रेति[1] मान्यत्वामन्त्रणे। स्वभ्यस्वाङ्गेति वा पाठः। तत्राङ्गेति प्रियत्वामन्त्रणे। चेद्यदि न ह्रियसे न प्रच्याव्यसे त्वम्। कस्मात्? आन्ध्याद् युक्तायुक्तविवेकवैकल्यात्। किं कुर्वत्या? यान्त्या आश्रयन्त्या। कम्। अन्यं पुरुषान्तरम्। कथम्? आशु सद्यः। इयमत्र भावना—क्षणिकतया पुरुषान्तरं गच्छन्त्या लक्ष्म्या यदि सद्योऽन्धत्वान्न प्रच्याव्यसे अन्यथा पुरुषान्तरं मम लक्ष्मीरेषा गच्छतीति दुःसहदुःखं प्राप्नुयास्त्वं न चैवं सर्वस्यापि प्रायेण लक्ष्मीसमागमे पश्यतोप्यदर्शनस्य तद्विगमे च दर्शनस्य स्फुटमुपलम्भात्। यल्लोकोक्तिः—

संपयपडलहिँ लोयणइं वंभजेच्छायंजंति।
ते दालिद्दसलाइयइं अंजिय णिम्मल हुंति॥

शिल्पादिज्ञानिनां मदावेशमनुशोचति—

शिल्पं वै मदुपक्रमं जडधियोप्याशु प्रसादेन मे,
विश्वं शासति लोकवेदसमयाचारेष्वहं दृङ् नृणाम्।
राज्ञां कोहमिवावधानकुतुकामोदैः सदस्यां मनः,
कर्षत्येवमहो महोपि भवति प्रायोद्य पुंसां तमः॥ ९१

अहो कष्टं भवति। किं तत्? महोपि शिल्पादिज्ञानाख्यं तेजोपि। किम्? तमः स्वपरपरिणामाविवेकहेतुत्वादन्धकारः। केषाम्? पुंसाम्। क? अद्यास्मिन्काले। कथम्? प्रायः। कश्चिदद्यापि शिल्पादिज्ञानविशिष्टोपि तद्गर्वं न करोतीत्येवमर्थमेतत्। कथम्? एवमनेन प्रकारेण। तमेव दर्शयति—वै स्फुटं वर्तते। किं तत्? शिल्पं पत्रच्छेदादि करकौशलम्।

[1] अंत्रेति पाठस्थाने आत्मेति पाठं संभावये।

किंविशिष्टम् ? **मदुपक्रमं** मया प्रथममारब्धम्। मत्कृतं शिल्पं दृष्ट्वान्यैः कृतमित्यर्थः। ममोपक्रमो मदुपक्रमः। "उपज्ञोपक्रमं तदाद्युक्तौ" इति समासे नपुंसकत्वम्। तथा **शासति** परेभ्यः प्रतिपादयन्ति। के ? **जडधियो** मंदमतयोपि। किं तत् ? **विश्वं** चराचरं जगत्। केन ? **प्रसादेनानुग्रहेण**। कस्य ? **मे** मम। कथं ? **आशु**, शीघ्रं मदनुग्रहादनन्तरमेव। लोकस्थितिव्युत्पादने अहमेव गुरुरित्यर्थः। तथा **वर्तेहं**। किं ? **दृक्** दृष्टिः। केषां ? **नृणां** मनुष्याणां। केषु ? **लोकवेदसमयाचारेषु**। लोकश्च वेदश्च समयाश्च नानालिंगिमतानि लोकवेदसमयास्तेषामाचारा विहिताचरणानि। लोकाद्याचारान् स्फुटं दर्शयितुं ममैव प्रावीण्यमित्यर्थः। तथा **अहमिव** मया तुल्यं **कः कर्षति** आक्षिपति स्वाधीनं करोतीत्यर्थः। किं तत् ? **मनः**। केषां ? **राज्ञां**। कैः ? **अवधानकुतुकामोदैः**। कस्यां ? **सदस्यां** सभायां न कश्चित् कर्षतीत्यर्थः। अवधानान्येव कुतुकानि कौतुकानि तत्कृता आमोदा आनन्दा, अवधानकुतुकान्येव वा आमोदाः परिमला राजादिलोकानां मनोनुरंजकत्वात्। अवधानानि युगपत्पाठगीतनृत्यादिविषयावधारणानि। यल्लोके—

> व्यावृत्तं प्रकृतं वियद्धि लिखितं पृष्टार्पितं व्याकृतं,
> मात्राशेषममात्रमंकशबलं तत्सर्वतोभद्रवत्।
> यः शक्तो युगपद्गृहीतुमखिलं काव्ये च संचारयन्
> वाचं सूक्तिसहस्रभंगिसुभगां गृह्णातु पत्रं समे॥"

कुलीनस्य बलमददुर्लक्षतां लक्षयति—

> **शाकिन्या हरिमाययाभिचरितान् पार्थः किलास्थद्विषो,**
> **वीरोदाहरणं वरं स न पुना रामः स्वयं कूटकृत्।**
> **इत्यास्थानकथाप्रसंगलहरीहेलाभिरुत्प्लावितो,**
> **हृत्क्रोडाल्लयमेति दोःपरिमलः कस्यापि जिह्वांचले॥९२॥**

**एति** गच्छति। कोसौ ? **दोःपरिमलः**, दोषोर्बाह्वोः परिमलो लक्षणया वीर्यं प्रशस्यतमत्वात्। कं ? **लयम**लक्षत्वं। क ? **जिह्वांचले** जिह्वाग्रे अवाच्यो भवतीत्यर्थः। कस्य ? **कस्यापि** कुलीनस्य। किंविशिष्टः सन् ?

**उत्प्लावितः** ऊर्ध्वं प्रेरितः । कस्मात् ? **हृत्क्रोडात्** हृदयमध्यात् । काभिः ? **आस्थानकथाप्रसंगलहरीहेलाभिः,** कथाप्रसंगा वार्ता लहर्यो महोर्मयः हेला अनियता प्रवृत्तिः । आस्थाने सभायां कथाप्रसंगास्ते लहर्य इव दूरव्यापित्वात् तासां हेलाः । कथं ? **इति** एवं किलैवं श्रूयते । **आस्थत्** निराकृतवान् । कोसौ ? **पार्थः** अर्जुनः । कान् ? **द्विषः** कौरवान् । किंविशिष्टान् ? **अभिचारितान्** उपतप्तान् प्रतिबद्धशक्तीन् । कया ? **हरिमायया** विष्णुवंचनया । कयेव ? **शाकिन्या** शाकिन्येव ईक्षणिकया यथा । लुप्तोपमेयं । स तथाभूतः पार्थो **वरं** भवतु । किं **वीरोदाहरणं** अर्जुनेन सदृशा इमे वीरा इत्यस्तु **न पुना रामो** दाशरथिस्तदस्तु । कुतः ? **स्वयं कूटकृत्** । वालिवधादिप्रस्तावे आत्मना कूटं कृतवान् यतः ॥

तपोमदस्य दुर्जयत्वं व्यनक्ति—

> **कर्मारिक्षयकारणं तप इति ज्ञात्वा तपस्तप्यते,**
> **कोप्येतर्हि यदीह तर्हि विषयाकांक्षा पुरो धावति ।**
> **अप्येकं दिनमीदृशस्य तपसो जानीत यस्तत्पद,–**
> **द्वंद्वं मूर्ध्नि वहेयमित्यपि दृशं मथ्नाति मोहासुरः ॥ ९२**

**मथ्नाति** कदर्थयति । कोसौ ? **मोहासुरः** अज्ञानदैत्यः । कां ? **अपि दृशं** न परं चारित्रं यावता सम्यक्त्वमपीत्यर्थः । कथं ? **इति इहास्मिन्** क्षेत्रे **एतर्हि** एतस्मिन् काले **कोपि** कश्चित् **यदि तप्यते**ऽर्जयति । किं तत् ? **तपः** । किं कृत्वा ? **ज्ञात्वा** निश्चित्य । कथं ? भवति । किं तत् ? **तपः** । किंविशिष्टं ? **कर्मारिक्षयकारणं** मोहादिशत्रुनिबर्हणमिति । **तर्हि** तदा **पुरो धावति** अग्रे वेगेन गच्छति । कासौ ? **विषयाकांक्षा** । लाभाद्यपेक्षया तपः क्षिप्रं दूष्यते इत्यर्थः । **वहेयं** धारयेयमहं । किंतत् ? **तत्पदद्वंद्वं** तस्य पादद्वयं । क्व ? **मूर्ध्नि** । यः किं ? **यो जानीत** । कस्य ? **तपसः** । किंविशिष्टस्य ? **ईदृशस्य,** मया निरीहतया विधीयमानेन तपसा सदृशस्य । कियंतं कालं ? **अप्येकं दिनं** एकमप्यहरीदृशं तपश्चरितुं प्रवर्तेत इत्यर्थः । तपसः इत्यत्र "ज्ञास्वार्थेकरण" इत्यनेन षष्ठी ॥

पूजामदकर्तुर्दोषं प्रदर्शयति—

स्वे वर्गे सकले प्रमाणमहमित्येतत्कियद्यावता,
पौरा जानपदाश्च संत्यपि मम श्वासेन सर्वे सदा ।
यत्र क्वाप्युत यामि तत्र सपुरस्कारां लभे सत्क्रिया,—
मित्यर्चामदमूर्णनाभवदधस्तंतुं वितन्वन् पतेत् ॥ ९४ ॥

**पतेत्** भ्रश्येत् जीवः । क्व ? **अधः** हीनपदे । किं कुर्वन् ? **वितन्वन्** दीर्घीकुर्वन् । कं ? **अर्चामदं** पूजाहङ्कारं । किंवत् ? **ऊर्णनाभवत्**, यथा ऊर्णनाभः कौलिकस्तंतुं लालास्वरूपं वितन्वन्नधोऽधरदेशे पतेत् । कथं वितन्वन् ? **इति** । किमिति ? **कियत्** किं परिमाणं वर्तते । किं किमेतत् । कथम् ? **इति** वर्तेहं । किंविशिष्टः ? **प्रमाणम्** अविसंवादी सर्वत्र प्रतिष्ठावानित्यर्थः । क्व ? **वर्गे** सजातीयसमूहे । किंविशिष्टे ? **स्वे** निजे । पुनः किंविशिष्टे ? **सकले** सर्वत्र । कुत इत्याह—**यावता** येन कारणेन **सर्वे पौरा** नागरा, **जानपदा अपि** देशवास्तव्यलोकाश्च **श्वसन्ति** प्राणन्ति मदेकायत्तास्तिष्ठन्तीत्यर्थः । केन ? **श्वासेन** । कस्य ? **मम** । कदा ? **सदा** । **उत** अथवा **यत्र क्वापि** यस्मिन्कस्मिंश्चित्स्थाने **यामि** गच्छाम्यहं **तत्र** सर्वत्र **लभे** प्राप्नोम्यहम् । काम् ? **सत्क्रियां** सत्कारम् । किंविशिष्टाम् ? **सपुरस्कारां** पुरस्कारसहिताम् । सर्वत्र श्रेष्ठेषु कर्मस्वग्रे कृत्वा पूज्योहमित्यर्थः ॥

एवं प्रसङ्गायातैः साधर्मिकान् प्रति जात्याद्यष्टमदैः सह मिथ्यात्वाख्यमनायतनं त्याज्यतया प्रकाश्य साम्प्रतं तद्वतः सप्त त्याज्यतया प्रकाशयति—

सम्यक्त्वादिषु सिद्धिसाधनतया त्रिष्वेव सिद्धेषु ये,
रोचन्ते न तथैकशस्त्रय इमे ये च द्विशस्ते त्रयः ।
यश्च त्रीण्यपि सोप्यमी शुभदृशा सप्तापि मिथ्यादृश,-
स्त्याज्याः खण्डयितुं प्रचण्डमतयः सद्दृष्टिसम्राट्पदम् ९५

**त्याज्या** दूरीकार्याः । के ? **अमी सप्तापि मिथ्यादृशो** मिथ्यादृष्टयः । केन ? **शुभदृशा** सम्यग्दृष्टिना । किंविशिष्टाः यतः ? **प्रचण्डमतयोऽद्-**

क्षबुद्धयः । किं कर्तुम् ? खण्डयितुं स्वरूपेण प्रभावेन वा विकलीकर्तुम् । किं तत् ? **सद्दृष्टिसम्राट्पदं** सम्यक्त्वसाम्राज्यम् । के अमी ? इत्यत्राह—**इमे त्रयस्तावत्** । ये किम् ? **ये न रोचन्ते** न श्रद्दधते । किं तत् ? **एकशः** एकैकम् । केषु ? **सम्यक्त्वादिषु** मध्ये । कथम् ? **तथा** सिद्धिसाधनतया । किंविशिष्टेषु ? **सिद्धेषु** आगमनिर्णीतेषु । कया ? **सिद्धिसाधनतया** मोक्षमार्गत्वेन । कतिषु ? **त्रिष्वेव** समुदितेषु न व्यस्तेषु । तथा **ते त्रयः** । ये किम् ? **ये न रोचन्ते** । किं तद् ? **द्विशो** द्वे द्वे सम्यक्त्वादिषु मध्ये सिद्धिसाधनतया । तथा **सोपि** सप्तमो मिथ्यादृक् स्यात् । यः किम् ? **यस्त्रीण्यपि** सम्यक्त्वादीनि सिद्धिसाधनतया न रोचते । तथाहि । कश्चित्सम्यक्त्वज्ञाने मोक्षमार्गं मन्यते, न चारित्रम् । अन्यः सम्यक्त्वचारित्रे न ज्ञानम् । अन्यतरो ज्ञानचारित्रे, न सम्यक्त्वम् । एवमुत्तरत्रापि चिन्त्यम् । उक्तं च—

> एकैकं न त्रयो द्वे द्वे रोचन्ते न परे त्रयः ।
> एकस्त्रीणीति जायन्ते सप्ताप्येते कुदर्शनाः ॥

अपरैरपि मिथ्यादृष्टिभिः सह संसर्गं प्रतिषेधयति—

> **मुद्रां सांव्यवहारिकीं त्रिजगतीवन्द्यामपोह्यार्हतीं,**
> **वामां केचिदहंयवो व्यवहरन्त्यन्ये बहिस्तां श्रिताः ।**
> **लोकं भूतवदाविशन्त्यवशिनस्तच्छायया चापरे,**
> **म्लेच्छन्तीह तकैस्त्रिधा परिचयं पुंदेहमोहैस्त्यज ॥ ९६ ॥**

इह क्षेत्रे संप्रति काले **केचित्तापसादयो** **व्यवहरन्ति** प्रवृत्तिनिवृत्तिविषयां कुर्वन्ति । काम् ? **मुद्रां** व्रतचिह्नम् । किंविशिष्टाम् ? **वामां** विपरीतां जटाधारणभस्मोद्धूलनादिरूपाम् । किंविशिष्टाः सन्तः **अहंयवोऽ**-हंकारिणः । किं कृत्वा ? **अपोह्य** अपवादविषयां कृत्वा । निषिद्धेत्यर्थः । काम् ? मुद्राम् । किंविशिष्टाम् ? **आर्हतीं** जैनीमाचेलक्यादिलिङ्गलक्षणाम् । पुनः किंविशिष्टाम् ? **त्रिजगतीवन्द्यां** जगत्त्रयनमस्याम् । पुनरपि किंविशिष्टाम् ? **सांव्यवहारिकीं** समीचीनप्रवृत्तिनिवृत्तिप्रयोजनाम् । पक्षे, टंकादिनाणकाकृतिं समीचीनामपोह्य मिथ्यारूपां क्षुद्रां व्यवहरन्तीतिव्याख्येयं

अन्ये पुनर्द्रव्यजिनलिंगधारिणो मुनिमानिनोऽवशिनोऽजितेन्द्रियाः संतस्तां तथाभूतामार्हतीं मुद्रां बहिः शरीरे न मनसि श्रिताः प्रपन्ना आविशन्ति संक्रामंति विचेष्टयंतीत्यर्थः। कम्? लोकं धर्मकामं जनम्। किंवत्? भूतवद् ग्रहैस्तुल्यम्। अपरे पुनर्द्रव्यजिनलिङ्गधारिणो मठपतयो म्लेच्छन्ति म्लेच्छा इवाचरन्ति। लोकशास्त्रविरुद्धमाचारं चरन्तीत्यर्थः। कया? तच्छायया आर्हतगतप्रतिरूपेण। तथा च पठन्ति—

पण्डितैर्भ्रष्टचारित्रैर्बठरैश्च तपोधनैः।
शासनं जिनचन्द्रस्य निर्मलं मलिनीकृतम्।

भोः सम्यक्त्वाराधक त्यज मुञ्च त्वम्। कम्? त्रिधा परिचयं मनसानुमोदनं वाचा कीर्तनं कायेन संसर्गं च। कैः सह? तकैः कुत्सितैस्तैस्त्रितयैः। किंविशिष्टैः? पुंदेहमोहैः पुरुषाकारमिथ्यात्वैः। तदुक्तम्—

कापथे पथि दुःखानां कापथस्थेप्यसंमतिः।
असंपृक्तिरनुत्कीर्तिरमूढा दृष्टिरुच्यते॥

बाह्या अप्याहुः—

पाखण्डिनो विकर्मस्थान् वैडालव्रतिकान् शठान्।
हेतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत्॥

मिथ्याज्ञानाख्यमनायतनं त्याजयति—

विद्वानविद्याशाकिन्याः क्रूरं रोद्धुमुपप्लवम्।
निरुन्ध्यादपराध्यन्तीं प्रज्ञां सर्वत्र सर्वदा॥ ९७॥

निरुन्ध्यान्निवारयेत्। कोसौ? विद्वान् समीक्ष्यकारी। काम्? प्रज्ञां त्रिकालविषयार्थपरिच्छेदिकां बुद्धिम्। किं कुर्वतीम्? अपराध्यन्तीं विभ्रमं गच्छन्तीम्। क्व कदा? सर्वत्र सर्वदा। किं कर्तुम्? रोद्धुं प्रतिबद्धुम्। कम्? उपप्लवमुपसर्गम्। किंविशिष्टम्? क्रूरं कर्कशम्। कस्याः? अविद्याशाकिन्याः।

मिथ्याज्ञानिभिः संपर्कमपाकरोति—

कुहेतुनयदृष्टान्तगरलोद्गारदारुणैः।
आचार्यव्यञ्जनैः सङ्गं भुजङ्गैर्जातु न व्रजेत्॥ ९८॥

**जातु** कदाचित्सद्दृष्टिर्न **व्रजेन्न** गच्छेत्। कम्? **सङ्गं** संसर्गम्। कैः सह? **भुजङ्गैर्विटैः** सर्पैर्वा। किंविशिष्टैः? **आचार्यव्यञ्जनैः**। आचार्याः सदाचारचारिणो व्यञ्जनं वेषो स्वरूपव्यवधायको येषाम्। पुनः किंविशिष्टैः? **कुहेत्वित्यादि**। कुत्सिता प्रमाणबाधिता हेतवो युक्तयो, **नयाः** पक्षा, **दृष्टान्ता** उदाहरणानि **गरलानि** विषाणीव मोहमूर्छादिहेतुत्वात्। तेषा**मुद्गार** उत्सर्गः। तेन **दारुणा** घोराः॥

भूयोपि भङ्ग्यन्तरेणाह—

**भारयित्वा पटीयांसमप्यज्ञानविषेण ये।**
**विचेष्टयन्ति संचक्ष्यास्ते क्षुद्राः क्षुद्रमंत्रिवत्॥ ९९॥**

**संचक्ष्या** वर्जनीयाः सम्यक्त्वाराधकैः। के? **ते क्षुद्रा** मिथ्योपदेष्टारो दुर्जनाः। किंवत्? **क्षुद्रमन्त्रिवत्**=दुष्टगारुडिका यथा। ये किम्? **ये विचेष्टयन्ति** विरुद्धं वर्तयन्ति। कम्? **पटीयांसमपि** तत्त्ववेत्तारमपि, किं पुनरतत्त्वविदमतत्त्वज्ञं वेत्यपि शब्दार्थः। पक्षे अदष्टपूर्वं, किं पुनर्दष्टपूर्वं शङ्कितदंशं वेत्यपि शब्दार्थः। किं कृत्वा? **भारयित्वा** विह्वलीकृत्य मोहवशं नीत्वा। केन? **अज्ञानविषेण** मिथ्याज्ञानगरलेन।

मिथ्याचारित्राख्यमनायतनं प्रतिक्षिपति—

**रागाद्यैर्वा विषाद्यैर्वा न हन्यादात्मवत्परम्।**
**ध्रुवं हि प्राग्वधेऽनन्तं दुःखं भाज्यमुदग्वधे॥ १००॥**

**न हन्यान्न** हिंस्यान्मिथ्याचारित्राख्यमनायतनं जिहासुः सद्दृष्टिः। कम्? **परं** परात्मानम्। किंवत्? **आत्मवत्** आत्मानं यथा। कैः? **रागाद्यैर्वा** रागद्वेषादिभिर्मोहोदयजन्यविकारैः दृष्टश्रुतानुभूतभोगाकाङ्क्षारूपनिदानबन्धादिसमस्तरागादिदोषैरित्यर्थः। न केवलं तैर्**विषाद्यैर्वा** विषशस्त्रजलाग्निप्रवेशादिभिः। वा शब्दौ परस्परसमुच्चये। इदमत्र तात्पर्यं—रागादिपरिणत्या स्वपरयोर्विशुद्धिपरिणामलक्षणं साम्यमुपघ्नतो मिथ्याचारित्रलक्षणानायतनसेवया सम्यक्त्वं मलिनी स्यात्। सैषा भावमिथ्याचारित्रसेवा। विषादिभिस्तु स्वं परं वा घ्नतो द्रव्यमिथ्याचारित्रसेवा स्यात्। एतदेव समर्थयते—**हि** यस्माद्भवति। किं तत्? **दुःखं** स्वपरयोः

पीडा । किंविशिष्टम् ? **अनन्तम्** । क ? **प्राग्वधे** रागद्वेषादिभिरात्मनः परस्य च घाते । कथम् ? **ध्रुवं** निश्चितम् । **उदग्वधे** पुनर्विषशस्त्रादिभिः स्वपरयोर्घाते सति निरवधि दुःखं **भाज्यं** विकल्पनीयम् । अयमभिप्रायो—विषादिभिर्हन्यमानोपि जीवो यदि पञ्चनमस्कारमनाः स्यात्तदा नानन्तदुःखभाग्भवत्यन्यथा भवत्येवेति ।

हिंसाहिंसयोर्माहात्म्यमाह—

**हीनोपि निष्ठया निष्ठागरिष्ठः स्यादहिंसया ।**
**हिंसया श्रेष्ठनिष्ठोपि श्वपचादपि हीयते ॥ १०१ ॥**

**स्या**त्पुरुषः । किंविशिष्टः ? **निष्ठागरिष्ठो** व्रताद्यनुष्ठानमहिष्ठः । कया ? **अहिंसया** द्रव्यभावहिंसानिवृत्त्या । किंविशिष्टोपि ? **हीनो**ल्पो रिक्तो वा । कया ? **निष्ठया** । व्रताद्यनुष्ठानेन । **अपि**र्विस्मये । **हिंसया** पुनः पुमान् **हीयते** निकृष्टो भवति । कस्मात् ? **श्वपचादपि** चाण्डालादपि । किंविशिष्टोपि ? **श्रेष्ठनिष्ठोपि** ।

मिथ्याचारित्रपरैः सह सांगत्यं प्रत्याख्याति—

**केचित्सुखं दुःखनिवृत्तिमन्ये प्रकर्तुकामाः करणीगुरूणाम् ।**
**कृत्वा प्रमाणं गिरमाचरन्तो हिंसामहिंसारसिकैरपास्याः १०२**

**अपास्या** दूरतस्त्याज्याः । के ? **केचित् सुखं** शर्म **प्रकर्तुकामाः** । स्वस्य स्वेषां वा प्रकर्षेणोत्पादयितुमिच्छन्तः । तथा**न्ये दुःखनिवृत्तिं प्रकर्तुकामाः** । किं कुर्वन्तः ? **हिंसामाचरन्तः** । किं कृत्वा ? **कृत्वा** । काम् ? **गिरं** वाचम् । किंविशिष्टाम् ? **प्रमाण**मविसंवादिनीम् । केषाम् ? **करणीगुरूणां** मिथ्याचार्याणाम् । करण्योपाधियुक्त्या गुरव इति विग्रहः । **कैरपास्याः** ? **अहिंसारसिकै**रहिंसायामासक्तैः ।

त्रिमूढापोढत्वं सम्यग्दृष्टेर्भूषणत्वेनोपदिशति—

**यो देवलिङ्गिसमयेषु तमोमयेषु,**
**लोके गतानुगतिकेप्यपथैकपान्थे ।**
**न द्वेष्टि रज्यति न च प्रचरद्विचारः,**
**सोऽमूढदृष्टिरिह राजति रेवतीवत् ॥ १०३ ॥**

**राजति** दीप्यते सम्यक्त्वाराधकत्वेन स्फुरति । कोसौ ? **अमूढदृष्टिः** । क्व ? इह लोके । किंवत् ? **रेवतीवद्रेवत्यास्तुल्यम्** । यः किम् ? **यः प्रचरद्विचारः** सन्न **द्वेष्टि** द्वेषं न करोति **न च रज्यति** नापि प्रीतिं करोति । केषु ? **देवलिङ्गिसमयेषु** । देवाश्च लिङ्गिनश्च समयाश्च शास्त्राणि तेषु । किंविशिष्टेषु ? **तमोमयेषु** अज्ञानरूपेष्वज्ञानबहुलेषु वा । न केवलं तेषु **लोकेपि** व्यवहर्तृजने । किंविशिष्टे ? **गतानुगतिकेपि** अविचारप्रमुखेप्यनुगतिरनुवृत्तिर्यस्य स एवम् । दृष्टानुसारिणीत्यर्थः । पुनः किंविशिष्टे **अपथैकपान्थे** केवलोन्मार्गनित्यचारिणि अपथे एकस्मिन् पान्थः पन्थानं नित्यं यातीति पान्थः "पन्थोणो नित्यम्" इति तद्धितोयं । विचारः प्रत्यक्षानुमानागमैर्यथावस्थितवस्तुव्यवस्थापनहेतुः क्षोदः । प्रचरन् प्रकर्षेण देशकालसकलपुरुषपरिषदपेक्षबाधकाभावलक्षणेन चरन्प्रवर्तमानो विचारो यस्य स तथोक्तः ।

ननु च कथमेतद् यावता लोकदेवतापाषण्डिभेदात्रिधैव मूढमनुश्रूयते । तथा च स्वामिसूक्तानि—

आपगासागरस्नानमुच्चयः सिकताश्मनाम् ।
गिरिपातोग्निपातश्च लोकमूढं निगद्यते ॥
वरोपलिप्सयाशावान् रागद्वेषमलीमसाः ।
देवता यदुपासीत देवतामूढमुच्यते ॥
सग्रन्थारम्भहिंसानां संसारावर्तवर्तिनाम् ।
पाषण्डिनां पुरस्कारो ज्ञेयं पाषण्डिमोहनम् ॥

नैष दोषः, कुदेवे कुलिङ्गिनि वा कदागमस्यान्तर्भावात् । कथमन्यथेदं स्वामिसूक्तमुपपद्येत,—

**भयाशास्नेहलोभाच्च कुदेवागमलिङ्गिनाम् ।**
**प्रणामं विनयं चैव न कुर्युः शुद्धदृष्टयः ॥**

एतदनुसारेणैव ठक्कुरोपीदमपाठीत्—

**लोके शास्त्राभासे समयाभासे च देवताभासे ।**
**नित्यमपि तत्त्वरुचिना कर्तव्यममूढदृष्टित्वम् ॥**

अमूढा षडनायतनत्यागादनभिभूता दृष्टिः सम्यक्त्वं यस्यासावमूढदृष्टिः । एतेन षडनायतनवर्जनाद्वारेणामूढदृष्टित्वगुणोपि पञ्चमः स्मृतिप्रसिद्धः संगृहीतः । सिद्धान्ते तु चत्वार एव दृग्विशुद्धिविवृद्ध्यर्था गुणाः श्रूयन्ते । तथा चाराधनाशास्त्रम्—

उवगूहणठिदिकरणं वच्छल्लपहावणा गुणा भणिया[1] ।
सम्मत्तविसुद्धीए उवगूहणगारया चउरो ॥

एतद्विपर्ययाश्चान्येऽनुपगूहनादयश्चत्वारो दर्शनदोषाः संभवन्ति । अत एव विस्तररुचीन् प्रति पञ्चविंशतिसम्यक्त्वदोषान् व्याचक्षते । तथा चोक्तम्—

मूढत्रयं मदाश्चाष्टौ तथानायतनानि षट् ।
अष्टौ शङ्कादयश्चेति दृग्दोषाः पञ्चविंशतिः ॥

अनुपगूहनादिकारिणः सम्यक्त्ववैरिण इत्याचष्टे—

**यो दोषमुद्भावयति स्वयूथ्ये यः प्रत्यवस्थापयतीममित्ये ।**
**न योनुगृह्णाति न दीनमेनं मार्गं च यः प्लोषति दृग्द्विषस्ते१०४**

भवन्ति । के ? ते अनुपगूहनास्थितीकरणावात्सल्याप्रभावनाकर्तारश्चत्वारः क्रमेणोक्ताः । किंविशिष्टाः ? दृग्द्विषः । दृशं द्विषन्ति । सम्यक्त्वविराधका इत्यर्थः । कस्क इत्याह—यस्तावदुद्भावयति प्रकाशयति । कम् ? दोषं सन्तमसन्तं वा सम्यक्त्वाद्यतीचारम् । क ? स्वयूथ्ये सधर्मणि । तथा यो न प्रत्यवस्थापयति पूर्ववत्पुनर्न व्यवस्थापयति । कम् ? इमं स्वयूथ्यं दर्शनादेः प्रच्यवन्तम् । क ? इत्ये गन्तव्ये पथीत्यर्थः । तथा यो नानुगृह्णाति नाहितसामर्थ्यं करोति । कम् ? एनं स्वयूथ्यम् । किंविशिष्टं सन्तम् ? दीनं प्रक्षीणपुरुषार्थसाधनसामर्थ्यम् । तथा यः प्लोषति दहति माहात्म्याद्भ्रंशयति । निष्प्रभावतया लोके प्रकाशयतीत्यर्थः । कम् ? मार्गमभ्युदयनिःश्रेयसप्राप्त्युपायम् । इति दोषोज्झनमुक्तम् ।

इतो गुणापादनमुच्यते । तत्र तावदुपगूहनगुणमन्तर्बहिर्वृत्तिरूपेण द्विविधमप्यवश्यकर्तव्यतयोपदिशति—

---

१ उपगूहनस्थितिकरणे वात्सल्यप्रभावने गुणा भणिताः ।
सम्यक्त्वविशुद्ध्यामुपगूहनकारकाश्चत्वारः ॥

धर्मं स्वबन्धुमभिभूष्णु कषायरक्षः,
क्षेप्तुं क्षमादिपरमास्त्रपरः सदा स्यात् ।
धर्मोपबृंहणधियाऽबलबालिशात्म,—
यूथ्यात्ययं स्थगयितुं च जिनेन्द्रभक्तः ॥ १०५ ॥

सदा स्यान्मुमुक्षुः । किंविशिष्टः ? क्षमादिपरमास्त्रपरः क्षान्तिमार्दवादिदिव्यायुधप्रधानः । किं कर्तुम् ? क्षेप्तुं निग्रहीतुम् । किं तत् ? कषायरक्षः । कषायः क्रोधादिवर्गो रक्षो राक्षस इव घोरदुर्निवारत्वात् । किंविशिष्टम् ? अभिभूष्णु ताच्छील्येन व्याहतशक्तिं कुर्वाणम् । कम् ? धर्मं सम्यक्त्वरूपं रत्नत्रयरूपं वा । किंविशिष्टम् ? स्वबन्धुमात्मनो बन्धुवदिहामुत्र चोपकारकत्वात् । तथा नित्यं मुमुक्षुः स्यात् । किंविशिष्टः ? जिनेन्द्रभक्तः । जिनेन्द्रभक्ताख्यश्रेष्ठिवच्चेष्टेतेत्यर्थः । किं कर्तुम् ? स्थगयितुं छादयितुम् । कम् ? अबलबालिशात्मयूथ्यात्ययम् । अबला अशक्ताः, बालिशा अज्ञाः, आत्मनः स्वस्य संबन्धिनि यूथे सधर्मवर्गे भवा आत्मयूथ्याः । अबलाश्च बालिशाश्चाबलबालिशाः । ते च ते आत्मयूथ्याश्च । तेषामत्ययो दोषस्तम् । कया ? धर्मोपबृंहणधिया धर्मस्योपबृंहणमुपचयापादनम् तत्र धीस्तया । धर्मो मया प्रतिवर्धनीय इति चिन्तयतेत्यर्थः ।

स्वपरयोः स्थितीकरणाचरणमाह—

दैवप्रमादवशतः सुपथश्चलन्तं,
स्वं धारयेल्लघु विवेकसुहृद्बलेन ।
तत्प्रच्युतं परमपि द्रढयन् बहुस्वं,
स्याद्वारिषेणवदलं महतां महार्हः ॥ १०६ ॥

धारयेत्सन्मार्गे स्थिरीकुर्यान्मुमुक्षुः । कम् ? स्वमात्मानम् । कथम् ? लघु शीघ्रम् । केन ? विवेकसुहृद्बलेन युक्तायुक्तविचारमित्रावष्टम्भेन । किं कुर्वन्तम् ? चलन्तं प्रच्योतुमुन्मुखीभवन्तम् । कस्मात् ? सुपथो व्यस्तात्समस्ताद्वा रत्नत्रयात् । केन ? दैवप्रमादवशतः । दैवं पुराकृतं मार्गप्रतिबन्धककर्म । प्रमादोऽनवधानम् । दैवं च प्रमादश्च तयोर्वशः

सामर्थ्यं, तेन । बलवता दैवेन प्रमादेन चेत्यर्थः । तथा स्यान्मुमुक्षुः । किंविशिष्टः ? महार्हः पूजायोग्यः । केषाम् ? महतामिन्द्रादीनाम् । कथम् ? अलं पर्याप्तम् । किंवत् ? वारिषेणवत् । वारिषेणो नाम श्रेणिक-महाराजपुत्रो यथा । किं कुर्वन् ? द्रढयन् सन्मार्गे स्थिरीकुर्वन् । कम् ? परमपि पुष्पडालवत् साधर्मिकमपि । किंविशिष्टम् ? तत्प्रच्युतं ततः सुपथः प्रच्योतुमारब्धम् । सन्मार्गप्रच्यवनोन्मुखमित्यर्थः । किंवत् ? बहुस्व-मात्मानमिव । ईषदसिद्धः स्व इति विगृह्य "वा सुपो बहुपः प्राक्" इत्यने-न बहुप्रत्ययः पूर्वो विधीयते ।

अन्तर्बहिर्वात्सल्यकरणे प्रयुङ्क्ते—

धेनुः स्ववत्स इव रागरसादभीक्ष्णं,
दृष्टिं क्षिपेन्न मनसापि सहेत्क्षतिं च ।
धर्मे सधर्मसु सुधीः कुशलाय बद्ध,—
प्रेमानुबन्धमथ विष्णुवदुत्सहेत ॥ १०७ ॥

क्षिपेद् व्यापारयेन्मुमुक्षुः । काम् ? दृष्टिमन्तर्मतिम् । क्व ? धर्मे । कथम् ? अभीक्ष्णमनारतम् । कस्मात् ? रागरसात् प्रीत्यतिरेकात् । केव ? धेनुरिव यथाऽचिरप्रसूता गौः स्ववत्से निजतर्णके रागरसादभीक्ष्णं दृष्टिं चक्षुर्व्यापारयत्येवं मुमुक्षुरपि दृष्टिं व्यापारयेदित्यर्थः । तथा तद्वदेवासौ मनसापि क्रियमाणां च धर्मे क्षतिमुपद्रवं न सहेत क्षमेत । तथो-त्सहेत उद्योगं कुर्यात्सुधीः । किंवत् ? विष्णुवत् । विष्णुर्नामर्षिर्यथा । कस्मै ? कुशलाय कल्याणं कर्तुम् । केषु ? सधर्मसु साधर्मिकेषु । कथं कृत्वा ? बद्धप्रेमानुबन्धम् । बद्धः कृतः प्रेम्णः स्नेहस्यानुबन्धोनुवृत्ति-र्यत्रोत्सहनकर्मणि तत् । अथश्चार्थे ।

अन्तरङ्गबहिरङ्गप्रभावनामाह—

रत्नत्रयं परमधाम सदानुबध्नन्,
स्वस्य प्रभावमभितोद्भुतमारभेत ।
विद्यातपोयजनदानमुखावदानै,—
र्वज्रादिवज्जिनमतश्रियमुद्धरेच्च ॥ १०८ ॥

**आरभेतोपक्रमेत** मुमुक्षुः। किम्? **प्रभावमचिन्त्यशक्तिविशेषम्**? कस्य? **स्वस्यात्मनः**। किंविशिष्टम्? **अद्भुतमाश्चर्यम्**। क? **अभितः** समन्तात्सर्वत्र। किं कुर्वन्? **अनुबध्नन्ननुवर्तयन्**। किं तत्? **रत्नत्रयम्**। किंविशिष्टम्? **परमधाम** प्रकृष्टतेजः। कथम्? **सदा** सर्वदा। तथो-**द्धरेत्** प्रकाशयेन्मुमुक्षुः। काम्? **जिनमतश्रियं** जिनशासनमाहात्म्यम्? कैः? **विद्याद्यवदानैः**। किंवत्? **वज्रादिवत्**। वज्रकुमारादिभिस्तुल्यम्। **विद्या** आकाशगमनादिकरी साधितसिद्धा, पठितसिद्धो मन्त्रः, स्याद्वादज्ञानं च। **तपः** इच्छानिरोधः **यजनं** जिनयज्ञो नित्यमहादिः। **दान**मनुग्रहार्थं स्वस्यातिसर्गः। विद्या च तपश्च यजनं च दानं च तानि, **मुखे** आदौ येषां सिद्धमन्त्रदिव्यरत्नसिद्धौषधिप्रयोगाणां तानि विद्यादीन्यवदानान्यऽद्भुतकर्माणि, तैः। मन्त्रप्रभृत्यवदानेष्वप्युदाहरणान्यागमतः प्रतिपत्तव्यानि।

प्रकारान्तरेण गुणापादनमाह—

**देवादिष्वनुरागिता भववपुर्भोगेषु नीरागता,**
**दुर्वृत्तेनुशयः स्वदुष्कृतकथा सूरेः क्रुधाद्यस्थितिः।**
**पूजार्हत्प्रभृतेः सधर्मविपदुच्छेदः क्षुधाद्यर्दिते,—**
**ष्वङ्गिष्वार्द्रमनस्कताष्ट चिनुयुः संवेगपूर्वा दृशम्॥१०९॥**

**चिनुयु**र्वर्द्धयेयुः। के? **संवेगपूर्वाः** संवेगनिर्वेदादयः। कति? **अष्ट** अष्टौ। काम्? **दृशं** शङ्काद्यतीचाररहितं सम्यक्त्वम्। ते यथाक्रमं यथा—

**संवेओ णिव्वेओ णिंदा गरुहा य उवसमो भत्ती।**
**वच्छल्लं अणुकंपा गुणा हु सम्मत्तजुत्तस्स॥**

तानेव यथोद्देशं निर्देशयति। तथाहि। संवेगो निगद्यते। किम्? **अनुरागिता** ख्यात्यादिनिरपेक्षोनुरागः। केषु? **देवादिषु** देवे गुरौ संघे धर्मे धर्मफलदर्शने च। तथा निर्वेदो निवेद्यते। किम्? **नीरागता** वैराग्यम्। केषु? **भववपुर्भोगेषु** संसारशरीरस्रग्वनितादिविषयेषु। तथा निन्दा निर्दिश्यते। किम्? **अनुशयः** पश्चात्तापः। क? **दुर्वृत्ते** दुष्टेनुष्ठिते। तथा गर्हा व्याह्रियते। किम्? **स्वदुष्कृतकथा** आत्मना दुष्टानुष्ठितस्य कथनम्। कस्याग्रे? **सूरेराचार्यस्य**। तथोपशमोनुशिष्यते। किम्? **क्रुधाद्यस्थिति**-

क्रोधादेरस्थिरत्वम् । अनन्तानुबन्ध्यादीनामनुद्रेक इत्यर्थः । तथा भक्तिरभिधीयते । किम्? पूजा । कस्य? अर्हत्प्रभृतेर्जिनसिद्धादिपूज्यवर्गस्य । तथा वात्सल्यमभिलप्यते । किम्? सधर्मविपदुच्छेदः स्वयूथ्यानामापदो निरसनम् । तथानुकम्पा निरूप्यते । किम्? आर्द्रमनस्कता दयामृदुहृदयत्वम् । केषु ? अङ्गिषु प्राणिषु । किंविशिष्टेषु? क्षुधाद्यर्दितेषु बुभुक्षातृष्णादिपीडितेषु । इति गुणापादनम् ॥

अथ विनयापादनमुच्यते—

धर्मार्हदादितच्चैत्यश्रुतभक्त्यादिकं भजेत् ।
दृग्विशुद्धिविवृद्ध्यर्थं गुणवद्विनयं दृशः ॥ ११० ॥

भजेत्सेवेन्मुमुक्षुः । कम्? विनयं माहात्म्यापादनोपायम् । कस्याः? दृशः सम्यक्त्वस्य । किमात्मकम्? धर्मस्यादि । किमर्थम्? दृग्विशुद्धिविवृद्ध्यर्थम् । दृशः सम्यक्त्वस्य विशुद्धिः शङ्कादिमलनिरासेन संपादितप्रसादो नैर्मल्यमिति यावत् । दृग्विशुद्धेर्विवृद्धिर्विशेषेणोपचयो दृग्विशुद्धिविवृद्धिः । सैवार्थः प्रयोजनं यत्र भजनकर्मणि तदेवम् । किंवत्? गुणवद् । यथोपगूहनादिगुणकदम्बकं दर्शनविशुद्धिं विवर्धयितुं सेवेत तथा धर्मादिविषयभक्त्यादिलक्षितलक्षणं दृग्विनयमपीत्यर्थः । तत्र धर्मो रत्नत्रयम् । अर्हदादयोऽर्हत्सिद्धाचार्योपाध्यायसाधवः । तच्चैत्यान्यर्हदादिप्रतिबिम्बानि । श्रुतमविस्पष्टतर्कणलक्षणं भावश्रुतमङ्गप्रविष्टाङ्गबाह्यविकल्पं शब्दात्मकं द्रव्यश्रुतं लिप्यक्षरात्मकं वा । भक्तिरादिर्यस्य पूजादेस्तद्भक्त्यादिकं पञ्चकम् । धर्मश्चार्हदादयश्च तच्चैत्यानि च श्रुतं च धर्मार्हदादितच्चैत्यश्रुतानि । तेषु भक्त्यादिकं तद्भक्त्यादिकम् । तत्र भक्तिर्भावविशुद्धियुक्तोनुरागः । पूजा द्वेधा द्रव्यभावभेदात् । तत्र द्रव्यपूजाऽर्हदादीनुद्दिश्य गन्धाक्षतादिदानम् । भावपूजा कायेनाभ्युत्थानप्रदक्षिणीकरणप्रणामादिका वाचा गुणस्तवनं, मनसा गुणानुस्मरणं, वर्णजननं, विदुषां परिषदि यशोजननं गुणकीर्तनमिति यावत् । अवर्णवादनाशनमसद्भूतदोषोद्भावननिराकरणमाऽऽसादनपरिहारोऽवज्ञावर्जनम् । उक्तं च—

अरहंतसिद्धचेदियसुदे य धम्मे य साहुवग्गे य ।
आयरियउवज्झायसु पवयणे दंसणे चावि ॥

भत्ती पूया वण्णजणणं च णासणमवण्णवादस्स।
आसादण परिहारो दंसणविणओ समासेण ॥

एतद्व्याख्यानं विस्तरतोऽपराजिताचार्यविरचितमूलाराधनाटीकायामस्मत्कृते च मूलाराधनादर्पणाख्ये तन्निबन्धे द्रष्टव्यम् ।

प्रकारान्तरेण सम्यक्त्वविनयमाह—

**धन्योस्मीयमवापि येन जिनवागप्राप्तपूर्वा मया,**
**भो विष्वग्जगदेकसारमियमेवास्यै नखच्छोटिकाम् ।**
**यच्छाम्युत्सुकमुत्सहाम्यहमिहैवाद्येति कृत्स्नं युवन्,**
**श्रद्धाप्रत्ययरोचनैः प्रवचनं स्पृष्ट्या च दृष्टिं भजेत् ॥ १११ ॥**

भजेदाराधयेन्मुमुक्षुः । काम् ? दृष्टिम् । किं कुर्वन् ? युवन् योजयन् । किंतत् ? प्रवचनं जिनागमम् । किंविशिष्टम् ? कृत्स्नं सकलम् । कैः ? श्रद्धाप्रत्ययरोचनैः । न केवलं स्पृष्ट्या च स्पर्शनेन । कथम् ? इत्येवमनेनोल्लेखेन । तत्र श्रद्धा मनसा श्रद्धानकरणं तावत्—अस्मि भवाम्यहम् । किंविशिष्टः ? धन्यः पुण्यवान् । येन किम् ? येन मयेयं सुनिश्चितासंभवद्बाधकप्रमाणा जिनवाक् सर्वमनेकान्तात्मकमिति मतमवापि प्राप्ता । किंविशिष्टा ? अप्राप्तपूर्वा आसंसारमप्राप्ता । तथा प्रत्यय—इदमेवोत्तममिति वचनम् । तथाहि । भो अहो सत्या वर्तते । कासौ ? इयमेव निराबाधा जिनवागेव । किंविशिष्टा ? विष्वग्जगदेकसारं समन्ताल्लोके एकमद्वितीयं, सारमुपादेयं वस्तु श्रेयोर्थिनाम् । तथा रोचनं नखच्छोटिकयाऽभिव्यज्यमाना रुचिः । तथाहि । यच्छामि ददाम्यहम् । काम्? नखच्छोटिकां तर्जन्यङ्गुष्ठनखघटनविघटनशब्देन सपर्याम् । कस्यै ? अस्यै जिनवाचे । तथा स्पृष्टिरनुष्ठानम् । तथाहि । उत्सहाम्यहं स्वसंवेदनप्रत्यक्षोहमुत्साहं करोमि । क्व ? इहैवास्यामेव जिनवाचि । कदा ? अद्य संप्रति । कथं कृत्वा ? उत्सुकं सोत्कण्ठम् । उक्तं च—

सद्दहया पत्तियआ रोचयफासंतया पवयणस्य ।
सयलस्स जे णरा ते सम्मत्ताराहया हुंति ॥

इति विनयापादनम् ।

अष्टाङ्गपुष्टस्य संवेगादिविशिष्टस्य च सम्यक्त्वस्य दृष्टान्ताक्षेपमुखेन स्फुटयति—

**पुष्टं निःशङ्कितत्वाद्यैरङ्गैरष्टाभिरुत्कटम् ।**
**संवेगादिगुणैः कामान् सम्यक्त्वं दोग्धि राज्यवत् ॥ ११२ ॥**

दोग्धि प्रपूरयति । किंतत्? सम्यक्त्वम् । कान्? कामान् मनोरथान् । किंविशिष्टं सत्? पुष्टं प्रकर्षप्राप्तम् । कैः? अङ्गैर्माहात्म्यसाधनैः । किंविशिष्टैः? निःशङ्कितत्वाद्यैः । कतिभिः? अष्टाभिः । पुनः किंविशिष्टम्? उत्कटमुल्बणमचिन्त्यप्रभावम् । कैः? संवेगादिगुणैः । कतिभिः? अष्टाभिः । किंवत्? राज्यवत् । सम्यक्त्वं खलु निःशङ्कितत्वनिःकाङ्क्षितत्वनिर्विचिकित्सत्वामूढदृष्टित्वोपगूहनस्थितीकरणवात्सल्यप्रभावनाख्यैरष्टाभिरङ्गैः पुष्टं तथा संवेगनिर्वेदनिन्दागर्होपशमभक्तिवात्सल्यानुकम्पाख्यैरष्टभिर्गुणैरुत्कटं भवति । राज्यं तु स्वाम्यमात्यसुहृत्कोषराष्ट्रदुर्गबलाख्यैः सप्तभिरङ्गैः पुष्टं तथा संधिविग्रहयानासनद्वैधीभावसंश्रयाख्यैः षड्भिर्गुणैरुत्कटं भवति । अतो राज्यादस्यातिरेकः । अत एव काक्वा राज्यवत् सम्यक्त्वं मनोरथान् पूरयति, नैवं पूरयति । किं तर्हि? सम्यक्त्वमिव पूरयति । इति लोकोत्तरमस्य माहात्म्यमाविष्करोति ।

एवमुद्द्योतनपूर्वस्य सम्यग्दर्शनोद्द्यवनाद्याराधनोपायचतुष्टयस्य प्रयोक्तुः फलमाचष्टे—

**इत्युद्द्योत्य स्वेन सुष्ठ्वेकलोलीकृत्याक्षोभं बिभ्रता पूर्यते दृक् ।**
**येनाभीक्ष्णं संस्क्रियोद्येव बीजं तं जीवं सान्वेति जन्मान्तरेपि**

अन्वेत्यनुवर्तते । कासौ? सा दृक् सम्यक्त्वम् । कम्? तं जीवमात्मानम् । क्व? जन्मान्तरेऽन्यस्मिन्भवे । अपिशब्दात्तद्भवे मोक्षे च । एतेन निस्तरणाख्या पञ्चम्याराधना सम्यक्त्वस्य सूत्रिता । सा हि मरणान्तप्रापणं तस्योच्यते सम्यग्दर्शनज्ञानचारित्रतपसां च प्रत्येकं पञ्चप्रकाराराधना सिद्धान्ते प्रसिद्धा । तद्यथा—

उज्जोयणमुज्जवणं णिव्वहणं साहणं च णिच्छरणं ।
दंसणणाणचरित्ततवाणमाराहणा भणिया ॥

अत्र दृष्टान्तमाह—**संस्क्रियोद्येव बीजमिति** । इवशब्दो यथार्थे । यथान्वेति । कासौ ? **संस्क्रिया** मञ्जिष्ठादिरागानुवेधः । किंविशिष्टा ? **उद्या** विस्तीर्णा बीजान्तर्बहिर्भागव्यापिनी । किम् ? **बीजं** कर्पासादिप्ररोहणम् । क्व ? जन्मान्तरेपि पुनः प्रादुर्भावे । किं पुनस्तत्पर्याये इत्यपि शब्दार्थः । येन किम् ? **येन पूर्यते** साध्यते संपूर्णीक्रियते इत्यर्थः । कथम् ? **अभीक्ष्णं** नित्यं प्रतिक्षणमित्यर्थः । किं कुर्वता ? **बिभ्रता** धारयता दृशम् । कथं कृत्वा ? **अक्षोभम्** । निराकुलं वहतेत्यर्थः । किं कृत्वा ? **एकलोलीकृत्य** मिश्रयित्वा दृशम् । केन सह ? **स्वेनात्मना** । कथम् ? **सुष्टु** दृढं कृत्वा । दर्शनविशुद्धिमयमात्मानं कृत्वेत्यर्थः । किं कृत्वा ? **उद्द्योत्य** निर्मलीकृत्य दृशम् । कथम् ? **इति** मिथ्यादृक् यो न तत्त्वं श्रयतीत्यादिप्रबन्धोक्तेन प्रकारेण । अत्रेत्युद्द्योत्येत्यनेन सम्यक्त्वस्योद्द्योतनाख्याराधना बोध्या । स्वेन सुष्ठ्वेकलोलीकृत्येत्यनेनोद्द्यवनाख्या, अक्षोभं बिभ्रतेत्यनेन निर्वहणाख्या, पूर्यतेभीक्ष्णमित्यनेन साधनाख्या, तं जीवमित्यादिना च निःसरणाख्या ।

क्षायिकेतरसम्यक्त्वयोः साध्यसाधनभावं ज्ञापयति—

**सिद्ध्यौपशमिक्येति दृष्ट्या वैदिकयापि च ।**
**क्षायिकीं साधयेद् दृष्टिमिष्टदूतीं शिवश्रियः ॥११४॥**

**साधयेन्निष्पादयेन्मुमुक्षुः** । काम् ? **दृष्टिं** विपरीताभिनिवेशविविक्तात्मरूपात्मकं तत्त्वार्थश्रद्धानम् । किंविशिष्टाम् ? **क्षायिकीम्** । क्षयो मिथ्यात्वसम्यग्मिथ्यात्वसम्यक्त्वाख्यानां तिसृणां दर्शनमोहप्रकृतीनामनन्तानुबन्धिक्रोधमानमायालोभाख्यानां चतसृणां चारित्रमोहप्रकृतीनां चात्यन्तिको विश्लेषः । क्षयः प्रयोजनमस्या इति क्षायिकी । किंविशिष्टाम् ? **इष्टदूतीम्** । इष्टा अभिमता अत्यन्तमान्यत्वादनुलंघ्यवचना दूती संचारिका इष्टा चासौ दूती च इष्टदूती । कस्याः ? शिवश्रियोऽनन्तज्ञानादिचतुष्टयलक्षणाया जीवन्मुक्तेः परममुक्तेश्च । यथा हीष्टदूती नायिकां नायकेन सहावश्यं योजयति तथा क्षायिकदृष्टिरात्मना मुक्तिमित्यर्थः । कया तां साधुः साधयेदित्याह **दृष्ट्या** तत्त्वार्थश्रद्धया । किंविशिष्टया ? **औपशमिक्या** । उपशमो मिथ्यात्वादिसप्तप्रकृतीनामनुद्भूतिः । उपशमः प्रयोजनमस्या इत्यौपशमिकी तया ।

किंविशिष्टया ? सिद्धया निष्पन्नया । कथम् ? इति अनेनानन्तरोक्तेनोद्द्योतनाद्युपायपञ्चकप्रयोगलक्षणेन प्रकारेण । न केवलं, वेदिकयापि च इष्ट्या तथा सिद्धया वेदयतेऽनुभावयतीति वेदिका, सम्यक्त्वप्रकृतिविपाकसहभावित्वात् । वेदकसम्यक्त्वं हि मिथ्यात्वादीनां षण्णामुपशमे सति सम्यक्त्वप्रकृतौ च शुभपरिणामनिरुद्धस्वरसायां संजायते । इदमेव च व्यवहारपथप्रस्थायि स्यादुद्द्योतनाद्याराधनायाः स्फुटमिहैवानुभावात् । अपि चेति पक्षान्तरसूचनेऽव्ययानामनेकार्थत्वात् । वेदिकया वा इष्ट्या क्षायिकीं दृष्टिं साधयेदित्यर्थः । तथा चाहुर्भट्टाकलङ्कदेवाः—

श्रुतादर्थमनेकान्तमधिगम्याभिसंधिभिः ।
परीक्ष्य तांस्तांस्तद्धर्माननेकान् व्यावहारिकान् ॥
नयानुगतनिक्षेपैरुपायैर्भेदवेदने ।
विरचय्यार्थवाक्प्रत्ययात्मभेदान् श्रुतार्पितान् ॥
अनुयुज्यानुयोगैश्च निर्देशादिभिदां गतैः ।
द्रव्याणि जीवादीन्यात्माविवृद्धाभिनिवेशतः ॥
जीवस्थानगुणस्थानमार्गणास्थानतत्त्ववित् ।
तपोनिर्जीर्णकर्मायं विमुक्तः सुखमृच्छति ॥ इति ।

तदेतदनारतमनुध्यायता सर्वयत्नैः सम्यक्त्वाराधनायां मुमुक्षुणा प्रवर्तितव्यम् । इति भद्रम् । ( ग्रन्थसंख्या १४७२ )

यो धर्मामृतमुद्दधार सुमनस्तृप्त्यै जिनेन्द्रागम,—
क्षीरोदं शिवधीर्निमथ्य जयतात्स श्रीमदाशाधरः ।
भव्यात्मा हरदेव इत्यभिधया ख्यातश्च नन्द्यादिमं,
टीकाशुक्तिमचीकरत्सुखमिमां तस्योपयोगाय यः ॥

इत्याशाधरविरचितायां स्वोपज्ञधर्मामृतानगारधर्मटीकायां भव्यकुमुदचन्द्रिकासंज्ञायां सम्यक्त्वोत्पादनादिक्रमो नाम द्वितीयोऽध्यायः ॥ २ ॥

---

# अथ तृतीयोऽध्यायः ॥ ३ ॥

"विद्यावृत्तस्य संभूतिस्थितिवृद्धिफलोदयाः ।
न सन्त्यसति सम्यक्त्वे बीजाभावे तरोरिव ॥"

इति प्रथमं सम्यक्त्वमाराध्येदानीं सम्यग्ज्ञानाराधनां प्रस्तौति । तत्र तावत्परमज्ञानप्राप्त्युपायभूतत्वाच्छ्रुतस्य तदाराधनायां मुमुक्षूनियुङ्क्ते—

**सद्दर्शनब्राह्ममुहूर्तदृप्यन्मनःप्रसादास्तमसां लवित्रम् ।
भक्तुं परं ब्रह्म भजन्तु शब्दब्रह्माञ्जसं नित्यमथात्मनीनाः॥१॥**

**अथ** सम्यक्त्वाराधनानन्तरं भजन्त्वाराधयन्तु । के ? ते **आत्मनीना** आत्मने हिता मुमुक्षवः । किं तत् ? **शब्दब्रह्म** श्रुतज्ञानम् । किंविशिष्टम् ? **आञ्जसं** पारमार्थिकम् । स्वात्माभिमुखसंवित्तिरूपमित्यर्थः । उक्तं च—

गहियंतं सुयणाणा पच्छा संवेयणेण भाविज्जो ।
जो ण हु सुअमवलंबइ सो मुज्झइ अप्पसब्भावे ॥
लक्खणदो णियलक्खं अणुहवमाणस्स जं हवे सुक्खम् ।
सा संवित्ती भणिया सयलवियप्पाण णिड्डहणं ॥
लक्खमिह भणियमादा झेअं सब्भावसंगदो सो जि ।
वेयण तह उवलद्धी दंसणणाणं च लक्खणं तस्स ॥

कथं भजन्तु ? **नित्यं**, तदाराधनस्यैव सर्वपुरुषार्थसिद्धेः प्रधानतमोपायत्वात् । किं कर्तुम् ? **भक्तुम्**आराधयितुम् । किं तत् ? **ब्रह्म** । किं विशिष्टम् ? **परं** शुद्धचिद्रूपं स्वात्मस्वरूपम् । तद्धि शब्दब्रह्मभावनावष्टम्भादेव सम्यग्द्रष्टुं शक्येत । तथा चोक्तम्—

**स्यात्कारश्रीवासवश्यैर्नयौघैः पश्यन्तीत्थं चेत्प्रमाणेन चापि ।
पश्यन्त्येव प्रस्फुटानन्तधर्मं स्वात्मद्रव्यं शुद्धचिन्मात्रमन्तः ॥**

किंविशिष्टं परं ब्रह्म ? **लवित्रं** छेदनम् । केषाम् ? **तमसां** मोहस्य ज्ञानदर्शनावरणान्तरायाणां च । शब्दब्रह्मणो वा विशेषणमिदम् । कथंभूता भूत्वा तद्भजन्तु ? सदित्यादि । **सद्दर्शनं ब्राह्ममुहूर्त** इव चित्तप्रसत्तिहेतुत्वात् ।

तेन हृष्यद्रुत्कटीभवन्मनःप्रसादो येषां ते तथोक्ताः । ब्राह्मो हि मुहूर्तः पञ्चदशमुहूर्ताया रात्रेश्चतुर्दशो मुहूर्तो घटिकाद्वयम् । स च चित्तकालुष्यापसारणद्वारेण संदेहादिच्छेदाद्यथार्थां बुद्धिमुद्बोधयन् प्रसिद्धः । यन्नीतिः—"ब्राह्मे मुहूर्ते उत्थायेति कर्तव्यतायांसमाधिमुपेयात् । सुखनिद्राप्रसन्ने हि मनसि प्रतिफलन्ति यथार्था बुद्धय" इति ।

श्रुताराधनायाः परंपरया केवलज्ञानहेतुत्वमुपदर्शयन् भूयस्तत्रैव प्रोत्साहयति—

**कैवल्यमेव मुक्त्यङ्गं स्वानुभूत्यैव तद्भवेत् ।**
**सा च श्रुतैकसंस्कारमनसातः श्रुतं भजेत् ॥ २ ॥**

**भजेन्**मुमुक्षुः । किं तत् ? **श्रुतम्** । कस्मात् ? **अतः** । यतो **भवेत्** । किम् ? **मुक्त्यङ्गं** मोक्षस्य साक्षात्कारणम् । किं तत् ? **कैवल्यमेवा**सहायज्ञानमेव, न मत्यादिकम् । **तच्च भवेत्** । कया ? **स्वानुभूत्यैव** स्वसंवित्त्यैव । **सा च** स्वानुभूतिर्भवेत् । केन ? **श्रुतैकसंस्कारमनसा** । श्रुतस्य श्रुतज्ञानस्यैक उत्कृष्टः संस्कारो भावना यस्य तच्छ्रुतैकसंस्कारम् । तस्मिन्मनश्चान्तःकरणं, तेन ॥

मनसः श्रुतसंस्कारपुरःसरस्वसंवेदनोपयोगेन शुद्धचिद्रूपतापरिणतिं दृष्टान्तेन स्पष्टयति—

**श्रुतसंस्कृतं स्वमहसा स्वतत्त्वमाप्नोति मानसं क्रमशः ।**
**विहितोषपरिष्वङ्गं शुद्ध्यति पयसा न किं वसनम् ॥ ३ ॥**

**आप्नोति** लभते । किंतत् ? **मानसं** मनः । किम् ? **स्वतत्त्वं** शुद्धचिन्मात्रं तस्यैव मुमुक्षुभिरपेक्षणीयत्वात् । केन ? **स्वमहसा** स्वसंवेदनेन । किंविशिष्टं सत् ? **श्रुतसंस्कृतं** श्रुतज्ञानेन भावितम् । केन ? **क्रमशः** कालक्रमपरिपाकेण । उक्तं च—

अविद्याभ्याससंस्कारैरवशं क्षिप्यते मनः ।
तदेव ज्ञानसंस्कारैः स्वतस्तत्त्वेवतिष्ठते ॥

अत्र समर्थनमाह—**किं न शुद्ध्यति** । किं तत् ? **वसनं** वस्त्रम् ।

केन ? **पयसा** जलेन । निर्मलीभवत्येवेत्यर्थः । किंविशिष्टं सत् ? **विहितोषपरिष्वङ्गम्** । विहितः कृतः उषेण क्षारमृत्तिकया परिष्वङ्गः संश्लेषो यस्य तत्तथोक्तम् ॥

मत्यादिज्ञानानामप्युपयोगो मुमुक्षूणां स्वार्थसिद्ध्यै विधेय इत्युपदेशार्थमाह—

**मत्यवधिमनःपर्ययबोधानपि वस्तुतत्त्वनियतत्वात् ।**
**उपयुञ्जते यथास्वं मुमुक्षवः स्वार्थसंसिद्ध्यै ॥ ४ ॥**

**उपयुञ्जते** स्वार्थग्रहणे व्यापारयन्ति । के ? **मुमुक्षवः** । कान् ? **मत्यवधिमनःपर्ययबोधानपि** । मतिश्चावधिश्च मनःपर्ययश्च मत्यवधिमनःपर्ययाः । ते च ते बोधाश्च ज्ञानानि । न केवलं श्रुतं किन्त्वेतानपीत्यपि शब्दार्थः । कस्मात् ? **वस्तुतत्त्वनियतत्वात्** । कथम् ? **यथास्वं** यथायथम् । कस्मै ? **स्वार्थसंसिद्ध्यै** । स्वार्थस्यानन्तसुखस्यात्यन्तिकदुःखनिवृत्तेश्च संसिद्धिः संप्राप्तिस्तस्यै । इतो विस्तरः—मतिज्ञानावरणक्षयोपशमे सतीन्द्रियमनसी अग्रे कृत्वा व्यापृतः सन्नर्थं मन्यते जानात्यात्मा यया सा मतिः । तद्भेदाः मत्यादयः । तत्र मन्यते यया बहिरन्तश्च परिस्फुटं सावग्रहाद्यात्मिका मतिः स्वसंवेदनमिन्द्रियज्ञानं च सांव्यवहारिकं प्रत्यक्षम् । तदिति स्वयमनुभूतातीतार्थग्राहिणी प्रतीतिः स्मृतिः । तदेवेदं तत्सदृशं तद्विलक्षणं तत्प्रतियोगीत्यादि प्रत्यभिज्ञानं संज्ञा । अग्निना विना क्वचित्कदाचिद्धूमो न भवत्यात्मना विना शरीरे व्यापारवचनादिकं न भवतीत्यादि तर्कणमूहश्चिन्ता । धूमादिदर्शनादग्न्यादिप्रतीतिरनुमानमभिनिबोधः । रात्रौ दिवा वाऽकस्माद्बाह्यकारणमन्तरेण श्वो मे भ्रातागमिष्यतीत्येवंरूपं यद्विज्ञानमुत्पद्यते सा प्रतिभा । अर्थग्रहणशक्तिर्बुद्धिः । पाठग्रहणशक्तिर्मेधा । ऊहापोहात्मिका प्रज्ञा । इत्यादयो मतिज्ञानस्यैकस्येन्द्रियानिन्द्रियनिमित्तस्य प्रकाराः प्रतिपत्तव्याः ।

स्वावरणक्षयोपशमे सत्यधोगतं बहुतरं द्रव्यमवच्छिन्नं वा नियतं रूपिद्रव्यं धीयते व्यवस्थाप्यतेऽनेनेत्यवधिर्मुख्यदेशप्रत्यक्षज्ञानविशेषः । स त्रेधा देशावध्यादिभेदात् । तत्र देशावधिरवस्थितोऽनवस्थितोनुगाम्य-

नगुगामी वर्द्धमानो हीयमानश्चेति षोढा स्यात् । परमावधिरनवस्थितहीयमानवर्जनाच्चतुर्धा । सर्वावधिस्त्ववस्थितोनुगाम्यननुगामी चेति त्रेधा । भवति चात्र श्लोकः—

देशावधिः सानवस्थाहानिः स परमावधिः ।
वर्धिष्णुः सर्वावधिस्तु सावस्थानुगमेतरः ॥

तल्लक्षणविकल्पस्वामिशास्त्रं त्विदम्—

अवधीयते इत्युक्तोऽवधिः सीमा सजन्मभूः ।
पर्याप्तश्वभ्रदेवेषु सर्वाङ्गोत्थो जिनेषु च ॥
गुणकारणको मर्त्यतिर्यक्ष्वब्जादिचिन्हजः ।
सोवस्थितोनुगामी स्याद्वर्धमानश्च सेतरः ॥

इत्यादि । किंचावधिज्ञानिनां नाभेरुपरि शङ्खपद्मादिलाञ्छनं स्याद् , विभङ्गज्ञानिनां तु नाभेरधः सरटमर्कटादि ।

परमनोगतोर्थो मन इत्युच्यते तस्य परिस्फुटमयनं परिच्छेदनं मनःपर्ययः । तल्लक्षणं यथा—

स्वमनः परीत्य यत्परमनोनुसंधाय वा परमनोर्थम् ।
विशदमनोवृत्तिरात्मा वेत्ति मनःपर्ययः स मतः ॥

तत्स्वरूपविशेषशास्त्रं त्विदम्—

चिन्तिताचिन्तितार्द्धादिचिन्तिताद्यर्थवेदकम् ।
स्यान्मनःपर्ययज्ञानं चिन्तकश्च नृलोकगः ॥
द्विधा हृत्पर्ययज्ञानमृज्व्या विपुलया धिया ।
अवक्रवाङ्मनःकायवर्त्यर्थर्जुमतिस्त्रिधा ॥
स्यान्मतिर्विपुला षोढा वक्रावक्राङ्गवाग्घृदि ।
तिष्ठतां व्यञ्जनार्थानां षड्भिदां ग्रहणं यतः ॥
पूर्वास्त्रिकालरूप्यर्थान्वर्तमाने विचिन्तके ।
वेत्त्यस्मिन् विपुला धीस्तु भूते भाविनि सत्यपि ॥
विनिद्राष्टदलाम्भोजसन्निभं हृदये स्थितम् ।
प्रोक्तं द्रव्यमनस्तज्ज्ञैर्मनःपर्ययकारणम् ॥

इत्यादि । कस्मात् ? **वस्तुतत्त्वनियतत्वात्** ।

वस्तुनः सामान्यविशेषात्मनस्तत्त्वं याथात्म्यं वस्तुतत्त्वम् । तत्र नियताः प्रतिनियतवृत्त्या निबद्धाः । तेषां भावस्तत्त्वं तस्मात् । तथाहि । इन्द्रियजा मतिः कतिपयपर्यायविशिष्टं मूर्तमेव वस्तु वेत्ति । मनो मतिस्तु तथाविधं मूर्तममूर्तं च । अवधिस्तु तथाविधान् पुद्गलान् पुद्गलसंबद्धांश्च जीवान् । मनःपर्ययस्तु सर्वावधिज्ञानविषयानविषयानन्तिमभागमपीति । यथास्वमात्मीयप्रयोजनानतिक्रमेण । तथा हि—श्रोत्रं शास्त्रश्रवणादौ, चक्षुर्जिनप्रतिमाभक्तपानमार्गादिनिरीक्षणे, मनश्च गुणदोषविचारणस्मरणादौ, तथाऽवधिं संदिग्धश्रुतार्थनिर्णये स्वपरायुःपरिमाणादिनिश्चये च मुमुक्षवो व्यापारयन्ति । एवं मनःपर्ययमपि ।

श्रुतसामग्रीस्वरूपनिर्णयार्थमाह—

**स्वावृत्त्यपायेऽविस्पष्टं यन्नानार्थप्ररूपणम् ।**
**ज्ञानं साक्षादसाक्षाच्च मतेर्जायेत तच्छ्रुतम् ॥ ५ ॥**

तच्छ्रुतं कथ्यते । यत्किम् ? **यज्जायेतोत्पद्येत** । किं तत् ? **ज्ञानम्** । किंविशिष्टम् ? **अविस्पष्टम**विशदम् । पुनः किंविशिष्टम् ? **नानार्थप्ररूपणम्** । नानार्थं उत्पादव्ययध्रौव्यात्मकमनेकान्तात्मकं वा वस्तु । तस्य प्ररूपणं सम्यक् स्वरूपनिश्चयनम् । श्रुतमविस्पष्टतर्कणमित्यभिधानात् । कुतो जायेत ? **मतेर्म**तिज्ञानात् । कथम् ? **साक्षाद्**व्यवधानेना**साक्षाच्च** व्यवधानेन । क्व सति ? **स्वावृत्त्यपाये** श्रुतज्ञानावरणक्षयोपशमे सति । घट इत्यादिशब्दश्रवणलक्षणाया धूमोयमित्यादि चक्षुरादिज्ञानलक्षणायाश्च मतेर्जातं हि शब्दयोजनसहितं क्रमेण घटादिज्ञानं वह्न्यादिज्ञानं च शब्दजं लिङ्गजं च श्रुतं स्यात् । ततश्च जातं जलधारणादिज्ञानं पाकादिज्ञानं च श्रुतं श्रुतपूर्वमप्युपचारेण मतिपूर्वमित्युच्यते । उक्तं च—

मतिपूर्वं श्रुतं दक्षैरुपचारान्मतिर्मता ।
मतिपूर्वं ततः सर्वं श्रुतं ज्ञेयं विचक्षणैः ॥

तथा,

अर्थादर्थान्तरज्ञानं मतिपूर्वं श्रुतं भवेत् ।
शाब्दं तल्लिङ्गजं चात्र ह्यनेकद्विषड्भेदगम् ॥

श्रूयते इति श्रुतं ज्ञानरूपं शब्दरूपं च वक्तुर्यस्मिञ्ज्ञाने सति शब्दोच्चारणं श्रोतुः शब्दश्रवणानन्तरं च यज्ज्ञानं तद्भावश्रुतं, तन्निमित्तं तु वचनं द्रव्यश्रुतम् । तत्राद्यं विकल्पनिरूपणरूपं स्वविप्रतिपत्तिनिराकरणफलत्वात्स्वार्थमुच्यते । परं पुनः शब्दप्रयोगरूपं परविप्रतिपत्तिनिराकारणफलत्वात्परार्थमिति ।

यद्येवं द्विधा स्थितं श्रुतं तर्हि तद्भेदाः सन्ति न सन्ति वा ? सन्ति चेदुच्यन्ताम् । इत्याह—

**तद्भावतो विंशतिधा पर्यायादिविकल्पतः ।**
**द्रव्यतोऽङ्गप्रविष्टाङ्गबाह्यभेदाद् द्विधा मतम् ॥ ६ ॥**

**मतमिष्टं** सूरीणाम् । किं तत् ? तच्छ्रुतम् । कतिधा ? **विंशतिधा** विंशतिप्रकारम् । कस्मात् ? **पर्यायादिविकल्पतः** पर्यायतत्समासादिभेदात् । कुतोऽसौ ? **भावतो** भावमन्तस्तत्त्वमाश्रित्य तथा तन्मतम् । कतिधा ? **द्विधा** द्विप्रकारम् । कस्मात् ? **अङ्गप्रविष्टाङ्गबाह्यभेदात्** । कुतः ? **द्रव्यतो** द्रव्यं बहिस्तत्त्वमाश्रित्य । अथ विस्तरः—

तत्र पर्यायो लब्ध्यपर्याप्तसूक्ष्मनिगोतस्य प्रथमसमये जातस्य प्रवृत्तं सर्वजघन्यं ज्ञानम् तद्धि लब्ध्यक्षरापराभिधानमक्षरश्रुतानन्तभागपरिमाणत्वात् सर्वज्ञानेभ्यो जघन्यं नित्योद्घाटं निरावरणं च । न हि तावतस्तस्य कदाचनाप्यभावो भवत्यात्मनोऽप्यभावप्रसङ्गादुपयोगलक्षणत्वात्तस्य । तदुक्तम् ।

**सुहुमणिगोदअपज्जत्तयस्स जादस्स पढमसमयम्हि ।**
**हवदि हु सव्वजहण्णं णिच्चुग्घाडं णिरावरणं ॥**

तथा,

**सूक्ष्मापूर्णनिगोदस्य जातस्याद्यक्षणेऽप्यदः ।**
**श्रुतं स्पर्शमतेर्जातं ज्ञानं लब्ध्यक्षराभिधम् ॥**

एतच्च सूक्ष्मनिगोत ( द ) सर्वजघन्यक्षयोपशमापेक्षया निरावरणं, न तु सर्वथा । वस्तुत उपरितनक्षायोपशमिकज्ञानापेक्षया केवलज्ञानापेक्षया च सावरणं, संसारिणां क्षायिकज्ञानाभावाच्च क्षायोपशमिकमेव ।

तदेव ज्ञानमनन्तासंख्येयासंख्येयभागवृद्ध्या संख्येयासंख्येयानन्तगुणवृद्ध्या च वर्धमानमसंख्येयलोकपरिमाणं प्रागक्षरश्रुतज्ञानात् पर्यायसमासोऽभिधीयते। अक्षरश्रुतज्ञानं त्वेकाकाराद्यक्षराभिधेयावगमरूपं श्रुतज्ञानसंख्येयभागमात्रम्। तस्योपरिष्टादक्षरसमासोऽक्षरवृद्ध्या वर्धमानो द्वित्र्याद्यक्षरावबोधस्वभावः पदावबोधात्पुरस्तादेवं पदसमासादयोऽपि भावश्रुतभेदाः पूर्वसमासान्ता विंशतिर्यथागममधिगन्तव्याः। द्रव्यश्रुतं त्वाचारादिद्वादशभेदमङ्गप्रविष्टम्। अङ्गबाह्यं च प्रकीर्णकाख्यं सामायिकादि चतुर्दशभेदम्। तत्प्रपञ्चोपि प्रवचनाच्चिन्त्यः।

श्रुतोपयोगविधिमाह—

**तीर्थादाम्नाय निध्याय युक्त्याऽन्तः प्रणिधाय च।**
**श्रुतं व्यवस्येत् सद्विश्वमनेकान्तात्मकं सुधीः॥ ७॥**

**सुधीर्धीधनो व्यवस्येन्निश्चिनुयात्।** किं तत्? **विश्वं** जीवादिवस्तुजातम्। किंविशिष्टम्? **अनेकान्तात्मकं** द्रव्यपर्यायस्वभावम्। पुनः किंविशिष्टम्? **सद्** उत्पादव्ययध्रौव्ययुक्तम्। किं कृत्वा? **आम्नाय** आगमय्य। गृहीत्वेत्यर्थः। किं तत्? **श्रुतम्।** कस्मात्? **तीर्थादु**पाध्यायात्। तथा **निध्याय** अवलोक्य। कया? **युक्त्या** हेतुना। **च** तथा **प्रणिधाय** समाधाय निश्चलमारोप्य। क? **अन्तः** स्वात्मनि। श्रुतं खल्वविशदतया समस्तं प्रकाशयति। तदुक्तम्—

श्रुतं केवलबोधश्च विश्वबोधात्समं द्वयम्।
स्यात्परोक्षं श्रुतज्ञानं प्रत्यक्षं केवलं स्फुटम्॥

प्रयोगः—सर्वमनेकान्तात्मकं सत्त्वात्। यन्नेत्थं तन्नेत्थं, यथा खपुष्पमिति।

तीर्थाम्नायपूर्वकं श्रुतमभ्यस्येदित्युपदिशति—

**वृष्टं श्रुताब्धेरुद्धृत्य सन्मेघैर्भव्यचातकाः।**
**प्रथमाद्यनुयोगाम्बु पिबन्तु प्रीतये मुहुः॥ ८॥**

**पिबन्तु** आस्वादयन्तु। कथम्? **मुहुः** पुनः पुनः। के? **भव्यचातकाः।** भव्याश्चातकास्तोकका इव चिरमप्राप्तसदुपदेशजलत्वात्। किम्? **प्रथमाद्यनुयोगाम्बु।** प्रथमः पुराणाद्यर्थ आदिर्येषां करणा-

वर्थानां ते प्रथमादयः । तेषामनुयोगः प्रश्नोत्तरम् । तदम्बु जलमिव तृष्णाविच्छेदहेतुत्वात् । किंविशिष्टम् ? वृष्टमुदीर्णम् । कैः ? **सन्मेघैः** । सन्तः शिष्टा भगवज्जिनसेनाचार्यादयो मेघा जलदा इव विश्वोपकारकत्वात् । किं कृत्वा ? **उद्धृत्य** उच्चित्य संगृह्येत्यर्थः । कस्मात् ? **श्रुताब्धेः** परमागमसमुद्रात् ।

प्रथमानुयोगाभ्यासे नियुङ्क्ते—

**पुराणं चरितं चार्थाख्यानं बोधिसमाधिदम् ।**
**तत्त्वप्रथार्थी प्रथमानुयोगं प्रथयेत्तराम् ॥ ९ ॥**

**पुराणं** पुराभवमष्टाभिधेयं त्रिषष्टिशलाकापुरुषकथाशास्त्रम् ।

यदार्षम्—

लोको देशः पुरं राज्यं तीर्थं दानं तपोद्वयम् ।
पुराणस्याष्टधाख्येयं गतयः फलमित्यपि ॥

लोकस्तु—

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं चेति पुराणं पञ्चलक्षणम् ॥

**चरितमेकपुरुषाश्रिता कथा । अर्थाख्यानमर्थस्य** परमार्थसतोभिधेयस्याख्यानं प्रतिपादनं यत्र येन वा । **बोधिरप्राप्तानां** सम्यग्दर्शनादीनां प्राप्तिः प्राप्तानां तु पर्यन्तप्रापणम् । **समाधिर्धर्म्यशुक्लध्याने** वा । तौ दत्ते यत्तद्बोधिसमाधिदं, तच्छ्रवणात्तत्प्राप्त्याद्युपपत्तेः ॥ **प्रथयेत्तरामितरानुयोग-**त्रयादतिशयेन प्रकाशयेत् तदर्थप्रयोगदृष्टान्ताधिकरणत्वात्तस्य । **कोसौ ? तत्त्वप्रथार्थी** । तत्त्वस्य हेयस्योपादेयस्य च प्रथां प्रकाशमर्थयतेऽभीक्ष्णमिति तदर्थी । कम् ? **प्रथमानुयोगम्** । किंलक्षणम् ? **पुराणं चरितं च** । पुनः किंविशिष्टम् ? **अर्थाख्यानम्** । पुनरपि किंविशिष्टम् ? **बोधिसमाधिदम्** ।

करणानुयोगोपयोगे प्रयुङ्क्ते—

**चतुर्गतियुगावर्तलोकालोकविभागवित् ।**
**हृदि प्रणेयः करणानुयोगः करणातिगैः ॥ १० ॥**

**प्रणेयः** परिचेयः प्रणिधेय इत्यर्थः। कोसौ? **करणानुयोगो** लोकानुयोगलोकविभागपञ्चसंग्रहादिलक्षणं शास्त्रम्। क? **हृदि** चित्ते। कैः? **करणातिगैः**। करणानि चक्षुरादीन्द्रियाण्यतिगच्छन्त्यतीत्य वर्तन्ते इति। जितेन्द्रियैरित्यर्थः। किंविशिष्टोसौ? चतुर्गतीत्यादि। **चतस्रो** नारकतिर्यग्मनुष्यदेवत्वलक्षणा **गतयो** नरकादिगतिनामकर्मोदयजन्या जीवस्य पर्यायाः। युगावर्तं उत्सर्पिण्यादिकालपरावर्तनम्। लोक्यन्ते जीवादयः षट्पदार्था अस्मिन्निति लोकस्त्रिचत्वारिंशदधिकशतत्रयमात्ररज्जुपरिमित आकाशावकाशः। ततोन्योऽलोकोऽनन्तानन्तमानावच्छिन्नः केवलाकाशरूपः। चतस्रश्च ता गतयश्चतुर्गतयः। **युगानां** सुषमसुषमादिकालविभागानामावर्तः परिवर्तनं युगावर्तः। लोकश्चालोकश्च **लोकालोकौ**। तयोर्विभागः पृथक्त्वम्। चतुर्गतयश्च युगावर्तश्च लोकालोकविभागाश्च चतुर्गतियुगावर्तलोकालोकविभागाः। तान्वेत्ति यथावज्जानाति योसौ करणानुयोगज्ञानपरिणत आत्मेत्यर्थः।

चरणानुयोगमीमांसायां प्रेरयति—

**सकलेतरचारित्रजन्मरक्षाविवृद्धिकृत्।**
**विचारणीयश्चरणानुयोगश्चरणादृतैः॥ ११॥**

**विचारणीय**श्चर्चनीयः। कोसौ? **चरणानुयोगः**। आचाराङ्गोपासकाध्ययनादिशास्त्रम्। कैः? **चरणादृतै**श्चारित्रोद्यतैः। किंविशिष्टः? सकलेत्यादि। **चारित्रं** हिंसादिभ्यो निवृत्तिः। **सकलं** समग्रमितरद् विकलं देशविरतिः। सकलं चेतरच्च सकलेतरे। ते च ते चारित्रे च सकलेतरचारित्रे। तयो**र्जन्म** चाभूतयोः प्रादुर्भावो, **रक्षा** च प्रादुर्भूतयोरतीचारनिरासो, **विवृद्धिश्च** रक्षितयोरुत्कर्षापादनं सकलेतरचारित्रजन्मरक्षाविवृद्धयः। ताः **करोति** तत्प्रतिबन्धकक्षयोपशमादौ सति जनयति योसौ तथोक्तः।

द्रव्यानुयोगभावनायां व्यापारयति—

**जीवाजीवौ बन्धमोक्षौ पुण्यपापे च वेदितुम्।**
**द्रव्यानुयोगसमयं समयन्तु महाधियः॥ १२॥**

**समयन्तु** सम्यग्जानन्तु । के ? **महाधियः** कुशाग्रीयप्रज्ञाः । कम् ? **द्रव्यानुयोगसमयं** सिद्धान्तसूत्रतत्त्वार्थपञ्चास्तिकायादिशास्त्रम् । किं कर्तुम् ? **वेदितुं** निश्चेतुम् । कौ ? **जीवाजीवौ** । न केवलं तौ **बन्धमोक्षौ** । न केवलं तौ **पुण्यपापे च** ।

एवं चतुरनुयोगसंगृहीतस्य जिनागमस्य सदा सम्यगुपास्तेः फलमाह—

**सकलपदार्थबोधनहिताहितबोधनभावसंवरा,**
**नवसंवेगमोक्षमार्गस्थिति तपसि चात्र भावनान्यदिक् ।**
**सप्तगुणाः स्युरेवममलं विपुलं निपुणं निकाचितं**
**सार्वमनुत्तरं वृजिनहृज्जिनवाक्यमुपासितुः सदा ॥ १३ ॥**

द्विपदीछन्दः । **स्युर्भवेयुः** । के ? **गुणाः** । कति ? **सप्त** सकलपदार्थबोधनादयः । कस्य ? **उपासितुः** साधुत्वेन सेवमानस्य । किम् तत् ? **एवं** प्रथमानुयोगादिप्रकारेण **अत्रेदानीं** वर्तमानं **जिनवाक्यमर्हत्प्रवचनम्** । कथम् ? **सदा** नित्यम् । किंविशिष्टम् ? **अमलं** पूर्वापरविरोधादिदोषरहितम् । तथा **विपुलं** लोकालोकार्थव्यापि । तथा **निपुणं** सूक्ष्मार्थदर्शि । तथा **निकाचितमर्थावगाढम्** । तथा **सार्वं** सर्वेभ्यो हितम् । तथा **अनुत्तरं** परमोत्तमम् । नास्त्युत्तरं परमस्मादिति । तथा **वृजिनहृत्** पापापहारि । **सकलपदार्थबोधनं** त्रिकालगोचरानन्तद्रव्यपर्यायस्वरूपज्ञानम् । **हिताहितबोधनम्** । हितं सुखं तत्कारणं च । अहितं दुःखं तत्कारणं च । तद्बोधनं तत्प्राप्तिपरिहारज्ञानम् । **भावसंवरो** मिथ्यात्वाद्यास्रवनिरोधः । शुद्धस्वात्मानुभूतिपरिणाम इत्यर्थः । सकलपदार्थबोधनं च हिताहितबोधनं च भावसंवरश्चेति विग्रहः । **नवसंवेगः** प्रतिक्षणमन्यान्यसंसारभीरुता **मोक्षमार्गे** व्यवहारनिश्चयरत्नत्रये **स्थितिर**वस्थानं तस्मादविचलनं, मोक्षमार्गस्थितिः । नवसंवेगश्च मोक्षमार्गस्थितिश्चेति समाहारः[1] । **तपसि** रागादिनिग्रहोपाये **भावनाऽभ्यासः** । **अन्यदिक्** परोपदेशश्च । इति सप्त ।

---

१ द्वयोः पदयोः समाहारोऽयम्, अतो नपुंसकैकवचनतात्र ।

ज्ञानाराधनार्थमष्टधा विनयमाह—

ग्रन्थार्थतद्द्वयैः पूर्णं सोपधानमनिह्नवम् ।
विनयं बहुमानं च तन्वन् काले श्रुतं श्रयेत् ॥ १४ ॥

श्रुतं श्रयेज्जिनागममभ्यस्येन्मुमुक्षुः । क्व ? काले यथाविहितसंध्याग्रहणादिविवर्जिते । किं कुर्वन् ? तन्वन् स्फीतीकुर्वन् । कम् ? विनयं माहात्म्योद्भवे यत्नम् तथा बहुमानं प्रभूतसत्कारपुरस्कारम् । कथं कृत्वा श्रुतं श्रयेत् ? पूर्णं समग्रम् । कैः ? ग्रन्थार्थतद्द्वयैः । ग्रन्थः संदर्भः । अर्थोऽभिधेयः । तद्द्वयं ग्रन्थार्थोभयम् । ग्रन्थश्चार्थश्च तद्द्वयं चेति विग्रहः । तथा सोपधानं यथाविहितनियमविशेषसहितम् । तथा अनिह्नवं गुर्वाद्यपह्नवरहितम् ।

सम्यक्त्वाराधनानन्तरं ज्ञानाराधने हेतुमाह—

आराध्य दर्शनं ज्ञानमाराध्यं तत्फलत्वतः ।
सहभावेपि ते हेतुफले दीपप्रकाशवत् ॥ १५ ॥

दर्शनं सम्यक्त्वमाराध्य आराधनां कृत्वा ज्ञानं श्रुतज्ञानमाराध्यं भक्तव्यं मुमुक्षुभिः । कस्मात् ? तत्फलत्वतो ज्ञानस्य सम्यक्त्वकार्यत्वात् । ज्ञाने सम्यग्भावस्य सम्यक्त्वाधीनत्वात् । "णाणं सम्मं खु होदि सदि जह्मि" इति वचनात् । ननु चानयोः सहभावित्वात् सव्येतरगोविषाणवत् कथं कार्यकारणभाव इत्यत्राह सहेत्यादि । भवतः । के ? ते दर्शनज्ञाने । किंविशिष्टे ? हेतुफले कारणकार्ये । क्व सति ? सहभावेपि युगपदुत्पादेपि सति । किंवत् ? दीपप्रकाशवत् प्रदीपतदालोकौ यथा । उक्तं च—

कारणकार्यविधानं समकालं जायमानयोरपि हि ।
दीपप्रकाशयोरिव सम्यक्त्वज्ञानयोः सुघटम् ॥

तपसः समीहितार्थसाधकत्वं ज्ञानं विना न स्यादिति दर्शयति—

विभावमरुता विपद्वति चरद् भवाब्धौ सुरुक्,
प्रभुं नयति किं तपःप्रवहणं पदं प्रेप्सितम् ।

हिताहितविवेचनादवहितः प्रबोधोन्वहं,
प्रवृत्तिविनिवृत्तिकृद्यदि न कर्णधारायते ॥ १६ ॥

किं नयति न प्रापयतीत्यर्थः । किंतत्? **तपःप्रवहणम्** । तपः प्रवहणं यानपात्रमिव पारप्रापकत्वात् । कम् ? **प्रभुं** स्वामिनम् । तपःपक्षे मुमुक्षुं । पोतपक्षे सांयात्रिकम् । किंतत् ? **पदं** स्थानम् । किंविशिष्टम् ? **प्रेप्सितं** प्राप्तुमिष्टम् । किंकुर्वत् ? **चरत्** प्रवर्तमानम् । क ? **भवाब्धौ** । किंविशिष्टे ? **विपद्वति** आपद्बहुले । कथं कृत्वा ? **सुरुग्** बहुक्लेशम् । केन ? **विभावमरुता** रागाद्यावेशवायुना । यदि किम् ? **यदि न कर्णधारायते** कर्णधार इवात्मानमाचरति । कोसौ ? **प्रबोधः** सम्यग्ज्ञानम् । किंविशिष्टः ? **प्रवृत्तिविनिवृत्तिकृत्** । कस्मात्? **हिताहितविवेचनात्** । इदं हितमिति प्रकाश्य हिते प्रवर्तयन् इदमहितमिति प्रकाश्याहितान्निवर्तयंश्चेत्यर्थः । किंविशिष्टः सन् ? **अवहितो**ऽवधानपरः । अप्रमाद्यन्नित्यर्थः । कथम् ? **अन्वहमनुदिनम्** । कर्णधारो नाविकः प्रतरणकलाधिकृतो मरजीवा इति लोके ।

ज्ञानस्योद्द्योतनाद्याराधनात्रयमाह—

ज्ञानाद्यत्युदयाभिमात्युपहितैः संदेहमोहभ्रमैः,
स्वार्थभ्रंशपरैर्वियोज्य परया प्रीत्या श्रुतश्रीप्रियाम् ।
प्राप्य स्वात्मनि यो लयं समयमप्यास्ते विकल्पातिगः,
सद्यः सोस्तमलोच्चयश्चिरतपोमात्रश्रमैः काम्यते ॥१७॥

**काम्यते** इष्यते । एव साधु चरतीत्यनुमोद्यते इत्यर्थः । कोसौ ? **सः** ज्ञानोद्द्योतनोद्द्यवननिर्वहणचणो मुमुक्षुः । कैः ? **चिरतपोमात्रश्रमैः** । चिरं बहुकालं तपोमात्रे ज्ञानाराधनारहितकायक्लेशाद्यनुष्ठाने श्रमोऽभ्यासो येषां तैः । किंविशिष्टो यतः ? **सद्यस्तत्क्षणेऽस्तमलोच्चयो** निर्जीर्णाशुभकर्मसंघातः । उक्तं च—

जं अण्णाणी कम्मं खवेइ भवसयसहस्सकोडीहिं ।
तं णाणी तिहि गुत्तो खवेइ णिमिसद्धमित्तेण ॥

यः किम् ? **य आस्ते** । किंविशिष्टः सन् ? **विकल्पातिगः** किमिदं कीदृशं कस्य कस्मात् क कदेत्याद्यन्तर्जल्पसंपृक्तोत्प्रेक्षाजालच्युतः । परमानन्देन तिष्ठतीत्यर्थः । कियन्तं कालम् ? **समयमप्येकमपि** क्षणम् । अल्पकालमपीत्यर्थः । किं कृत्वा ? **प्राप्य** प्रापय्य नीत्वा । काम् ? **श्रुतश्रीप्रियाम्** । श्रुतश्रीः 'एको मे सासदो आदा' इत्यादिश्रुतज्ञानभावना प्रिया वल्लभेव स्वस्वामिनः सान्द्रानन्दनिदानत्वात् । कं प्राप्य ? **लयमेकत्वपरिणतिमाश्लेषम्** । क ? **स्वात्मनि** निजचिद्रूपे । कया ? **प्रीत्या** मुदा । किंविशिष्टया ? **परया** प्रकृष्टया । किं कृत्वा ? **वियोज्य** विच्छिद्य । कैः सह ? **संदेहमोहभ्रमैः** संशयानध्यवसायविपर्ययैः । किंविशिष्टैः ? **स्वार्थभ्रंशपरैः** पुरुषार्थध्वंसनप्रधानैः । संशयादिरहितां श्रुतश्रीप्रियां कृत्वेत्यर्थः । पुनः किंविशिष्टैः ? **ज्ञानेत्यापि** । **ज्ञानावृत्त्युदयो** ज्ञानावरणकर्मविपाकोऽ**भिमातिः** शत्रुरिवापकारैकोद्युक्तत्वात् । तेनोपहितैः प्रयुक्तैः । पक्षे सुराजानं नायकत्वेन विकल्प्य व्याख्येयम् । अत्र ज्ञानेत्यादिनोद्द्योतनं परयेत्यादिनोद्भवनं समयमित्यादिना निर्वहणं च प्रकाशितं प्रतिपत्तव्यम् ।

बोधप्रकाशस्य दुर्लभत्वमाह—

**दोषोच्छेदविजृम्भितः कृततमश्छेदः शिवश्रीपथः,**
**सत्त्वोद्बोधकरः प्रकृप्तकमलोल्लासः स्फुरद्वैभवः ।**
**लोकालोकततप्रकाशविभवः कीर्तिं जगत्पावनीं,**
**तन्वन् क्वापि चकास्ति बोधतपनः पुण्यात्मनि व्योमनि ॥१८॥**

**चकास्ति** प्रकाशते आत्मानमुपलम्भयतीत्यर्थः । कोसौ ? **बोधतपनः** । बोधो ज्ञानं तपनो भास्वानिव, दोषोच्छेदविजृम्भितत्वादिसाधारणधर्मयोगात् । क ? **क्वापि** कचित्**पुण्यात्मनि** पवित्रे जीवे । कस्मिन्निव ? **व्योमनि** नभसीव । यथा क्वचित्तिमिरिकादिमलरहिते नभोदेशे भानुः प्रकाशते तथा बोधोपीत्यर्थः । किं कुर्वन् ? **तन्वन्** विस्तारयन् । काम् ? **कीर्तिं** धर्मदेशनालक्षणां वाणीं भाक्तिकक्रियमाणां स्तुतिं च । किंविशिष्टाम् ? **जगत्पावनीं** लोकानां मलनिरसनीम् । कथंभूतो भूत्वा ? **दोषोच्छेदविजृम्भितः** । दोषोच्छेदः संदेहादिविनाशो रात्रिक्षयश्च । तत्र विजृम्भितो निरङ्कुशं स्वकार्य-

करणे प्रवृत्तः । तथा **कृततमश्छेदः** । कृतस्तमसः स्वप्रतिबन्धकस्य कर्मणो ध्वान्तस्य च छेदो विध्वंसो येन स एवम् । तथा **शिवश्रीपथः** । शिवश्रियो मोक्षलक्ष्म्याः पन्थाः प्राप्त्युपायः । पक्षे शिवानां मुक्तात्मनां श्रीपथः प्रधानमार्गः । एतच्च 'पन्थाः शिवश्रीजुषाम्' इत्यत्र समर्थितम् । तथा **सत्त्वोद्बोधकरः** सात्त्विकत्वाभिव्यक्तिकारी प्राणिनां निद्रापसारी च । तथा **प्रक्लृप्तकमलोल्लासः** । प्रक्लृप्तः प्रवर्तितः कमलायाः श्रियः, पक्षे कमलानां पङ्कजानामुल्लास उद्गतिर्विकाशश्च येन । अथवा, कस्यात्मनो मला रागादयः । तेषामुल्लास उद्भवः प्रक्लृप्तः प्रकर्षेण च्छिन्नोसौ येन बोधेनेति ग्राह्यम् । तथा **स्फुरद्वैभवः** । वैभवं त्रिजगदाधिपत्यं प्रभावविशेषश्च । स्फुरज्जनमनस्सु चमत्कुर्वद्वैभवं यस्य । तथा **लोकालोकततप्रकाशविभवः** । लोकालोकौ पूर्वोक्तौ लोकालोकश्च चक्रवालशैलः । तत्र ततो विस्तारितः प्रकाशविभव आलोकसंपद् येन ।

ज्ञानस्य साधननिस्तरणयोः प्रणुदति—

**निर्मथ्यागमदुग्धाब्धिमुद्धृत्यातो महोद्यमाः ।**
**तत्त्वज्ञानामृतं सन्तु पीत्त्वा सुमनसोऽमराः ॥ १९ ॥**

**सन्तु** भवन्तु । के ? **सुमनसो** मैत्र्यादिभावनाप्रसन्नचित्ता देवाश्च । किंविशिष्टाः सन्तु ? **अमरा** मृत्युरहिताः । मृत्युश्चात्र पुनर्मरणमपमृत्युश्च । किंविशिष्टाः सन्तः ? **महोद्यमा** बृहदुत्साहाः । किं कृत्वा ? **पीत्त्वा** उपयुज्य । किं तत् ? **तत्त्वज्ञानामृतं** परमौदासीनज्ञानपीयूषम् । किंकृत्वा ? **उद्धृत्य** उच्चित्य तत्त्वज्ञानामृतम् । कस्मात् ? **अतो** निर्मथितादागमदुग्धाब्धेः । किं कृत्वा ? **निर्मथ्य** निःशेषं शब्दतोर्थतश्चाक्षेपसमाधानैः क्षोदयित्वा । पक्षे मन्दरगिरिणा विलोड्य । कम् ? **आगमदुग्धाब्धिं** द्वादशाङ्गश्रुतक्षीरसमुद्रम् । अत्रोद्धृत्येत्यनेन साधनमवबोधयति, समग्रद्रव्यागमावगाहनप्रभवभावागमसंपूर्णीकरणलक्षणत्वात् तत्त्वज्ञानोद्धरणस्य । पीत्त्वेत्यनेन च निस्तरणमवगमयति तत्त्वज्ञानपरिणत्यनन्तरभाविनोऽमरभावस्य तच्छब्दाभिधेयत्वात् ।

मनसोत्यन्तचञ्चलत्वमनूद्य तन्निग्रहेण स्वाध्यायप्रणिधानादतिदुर्धरस्यापि संयमस्य सुवहत्वं निरूपयितुं श्लोकत्रयमाह—

लातुं वीलनमत्स्यवद्भ्रमयितुं मार्गे विदुष्टाश्वव,[1]—
न्निम्नाद्द्रोद्धुमगापगौघ इव यन्नो वाञ्छिताच्छक्यते ।
दूरं यात्यनिवारणं यदणुवद् द्राग्वायुवच्चाभितो,
नश्यत्याशु यदब्दवद्बहुविधैर्भूत्त्वा विकल्पैर्जगत् ॥ २० ॥

नो मूकवद्वदति नान्धवदीक्षते य,—
द्रागातुरं बधिरवन्न शृणोति तत्त्वम् ।
यत्राऽयते यतवचो वपुषोपि वृत्तं,
क्षिप्रं क्षरत्यवितथं तितवोरिवाम्भः ॥ २१ ॥

व्यावर्त्याशुभवृत्तितोसुनयवन्नीत्वा निगृह्य त्रपां,
वश्यं स्वस्य विधाय तद्भृतकवत्प्रापय्य भावं शुभम् ।
स्वाध्याये विदधाति यः प्रणिहितं चित्तं भृशं दुर्धरं,
चक्रेशैरपि दुर्वहं स वहते चारित्रमुच्चैः सुखम् ॥२२॥

(त्रिकलम्)

स स्वाध्याये समाहितचित्तो मुमुक्षुः **सुखं वहते** अनायासेन धरति । किंतत् ? **उच्चैरुन्नतं चारित्रमशुभनिवृत्तिशुभप्रवृत्तिरूपं संयमं** । व्रतसमितिगुप्तीरित्यर्थः । किंविशिष्टम् ? **दुर्वहं** वोढुमशक्यम् । कैः ? **चक्रेशैरपि** सकलचक्रवर्तिभिः किं पुनरितरैरित्यपिशब्दार्थः । यः किम् ? **यो विदधाति** करोति । किंतत् ? **तद्भृशं दुर्धरमत्यन्तं धर्तुमशक्यं, चित्तं** मनः । किंविशिष्टम् ? **प्रणिहितमेकाग्रम्** । क्व ? **स्वाध्याये** वाचनादिलक्षणे तपसि । किं कृत्वा ? **प्रापय्य** नीत्वा । कम् ? **भावम्** । किंविशिष्टम् ? **शुभं** प्रशस्तरागादिरूपम् । किं कृत्वा ? **विधाय** कृत्वा । किंविशिष्टम् ? **वश्यं** वशवर्ति । कस्य ? **स्वस्यात्मनः** । किंवत् ? **भृतकवत्** क्रयक्रीतदासवत् । किं कृत्वा ? **नीत्वा** प्रापय्य । काम् ? **त्रपां** लज्जाम् । किं कृत्वा ? **निगृह्य** ज्ञानसंस्कारदण्डबलेन दमयित्वा । किंवत् ? **असु-**

१ हि दुष्टाश्ववदित्यपि पाठोस्ति ।

**नयवद्** दुर्णयपुरुषवत्। किं कृत्वा? **व्यावर्त्य** निवर्त्य। कस्मात्? **अशुभवृत्तितः** प्रमादचर्याकालुष्यविषयलौल्यादिव्यापारात्। यत्किम्? **यच्चित्तं नो शक्यते** न पार्यते। किं कर्तुम्? **लातुं** ग्रहीतुम्? किंवत्? **वीलनमत्स्यवद्** मसृणतरदेहमत्स्य इव। तथा **यन्न शक्यते**। किं कर्तुम्? **गमयितुं** प्रवर्तयितुम्। क? **मार्गे** इष्टपथप्राप्त्युपाये। किंवत्? **विदुष्टाश्ववद्** दुःशीलघोटको यथा। तथा **यन्न शक्यते**। किं कर्तुम्? **रोद्धुं** निवारयितुम्। कस्मात्? **वाञ्छितादिष्टार्थात्**। क इव कस्मादित्याह— **निम्नान्नीचदेशादगापगौघ इव** पर्वतनदीपूरो यथा। नीचदेशाभिमुखगिरिनदीपूरवदिष्टार्थमभिमुखं चित्तं व्यावर्तयितुं केनापि न शक्यते इत्यर्थः। तथा **यद्दूरं याति** विप्रकृष्टदेशं गच्छति। किंविशिष्टं सत्? **अनिवारणम्**शक्यप्रतिषेधम्। किंवत्? **अणुवत्** परमाणुर्यथा। तथा **यदभितः** समन्ताद् **द्राक्** शीघ्रं **याति**। किंवत्? **वायुवत्** पवनो यथा। तथा **यदाशु** शीघ्रं **बहुविधैर्नानाप्रकारैर्विकल्पैश्चिन्ताविवर्तैर्जगद्भुवनं भृत्वा** पूरयित्वा **नश्यति** विलीयते। किंवत्? **अब्दवद्** मेघैस्तुल्यम्। यथा मेघसंघातो नानासंस्थानवर्णपरिमाणैर्विकल्पैर्भेदैर्जगद्भृत्वा शीघ्रं नश्यति तथा प्रकृतमपीत्यर्थः।

किंच, तथा यच्चित्तं **रागातुरमि**ष्टविषयरत्याक्रान्तं **सन्नो वदति** न ब्रूते। किं तत्? **तत्त्वं** वस्तुयाथात्म्यम्। किंवत्? **मूकवद्** वाग्विकलपुंवत्। तथा **यन्नेक्षते** न पश्यति रागातुरं सत्। किंतत्? तत्त्वम्। किंवत्? **अन्धवद्** दृष्टिविकलपुंवत्। तथा यद्रागातुरं सत्तत्त्वं **न शृणोति** नाकर्णयति। किंवत्? **बधिरवत्** श्रुतिविकलपुंवत्। तथा **यत्र चित्ते अयते**ऽनियंत्रिते सति **अवितथं** सत्यं **वृत्तं** चारित्रं **क्षिप्रं** शीघ्रं **क्षरति** स्रवति। कस्मात्? **यतवचोवपुषोपि** नियन्त्रितवाक्कायादपि पुरुषात्। कस्मादिव किमित्याह—**तितओरिवाम्भ**श्चालनीतो जलं यथा। उक्तं च—

> तितओरिव पानीयं चारित्रं चलचेतसः।
> वचसा वपुषा सम्यकुर्वतोपि पलायते॥

ततो व्यावर्त्येत्यादिना संबन्धः॥

ध्यानवर्जसमस्ततपोभ्यः स्वाध्यायस्योत्कृष्टशुद्धिहेतुतया समाधिमरणसिद्ध्यर्थं नित्यकर्तव्यतां दर्शयति—

नाभून्नास्ति नवा भविष्यति तपःस्कन्धे तपो यत्समं,
कर्मान्यो भवकोटिभिः क्षिपति यद्योन्तर्मुहूर्तेन तत् ।
शुद्धिं वानशनादितोऽमितगुणां येनाश्नुतेश्नन्नपि,
स्वाध्यायः सततं क्रियेत स मृतावाराधनासिद्धये ॥२३॥

स यथोक्तातिशयः **स्वाध्यायः सततं क्रियेत** नित्यं विधीयेत मुमुक्षुभिः । कस्मै? **मृतौ** मरणक्षणे **आराधनासिद्धये** । उपजातसम्यग्दर्शनादिपरिणामस्य तद्गतातिशयवृत्तिराराधना तस्याः संप्राप्त्यर्थम् । यतो **यत्समं** येन स्वाध्येन तुल्यं **नाभून्न** भूतं, **नास्ति** न विद्यते, न **वा भविष्यति** नैव संपत्स्यते । किं तत्? **तपः** । क्व मध्ये? **तपःस्कन्धे** । तपसां षण्णां बाह्यानामनशनादीनां पञ्चानां चाभ्यन्तराणां प्रायश्चित्तादीनां स्कन्धः समूहस्तपःस्कन्धस्तस्मिन् । तथा **यः** स्वाध्यायस्तत्कर्म पापमन्त**मुहूर्तेन** किंचिदूनघटिकाद्वयेन **क्षिपति** निराकरोति । यत्कर्म **अन्य**स्तपोनिधि**र्भवकोटिभि**र्जन्मलक्षशतैः क्षिपति । तथा **येन** स्वाध्यायेनाश्नुते प्राप्नोति मुमुक्षुः । काम्? **शुद्धिं** विशुद्धिपरिणामम् । कियतीम्? **अमितगुणा**मनन्तगुणाम् । केभ्यः ? **अनशनादितो**ऽनशनादितपोभ्यः । किं कुर्वन्नपि? **अश्नन्नपि** दिने दिने भोजनं कुर्वन् । किं पुनरुपवासादिकं यथाशक्ति कुर्वन्नित्यपिशब्दार्थः ।

श्रुतज्ञानाराधनायाः पारम्पर्येण मुक्तिहेतुत्वमाह—

श्रुतभावनया हि स्यात् पृथक्त्वैकत्वलक्षणम् ।
शुक्लं ततश्च कैवल्यं ततश्चान्ते पराच्युतिः ॥ २४ ॥

**हि** यस्मात् **स्यात्** संपद्येत । किंतत्? **शुक्लं** शुक्लध्यानम् । किंविशिष्टम्? **पृथक्त्वैकत्वलक्षणं** पृथक्त्वं च पृथक्त्ववितर्कवीचाराख्यमेकत्वं चैकत्ववितर्कावीचाराख्यं पृथक्त्वैकत्वे । ते एव लक्षणे स्वरूपे यस्य तत्तथोक्तम् । कया ? **श्रुतभावनया** निर्व्यग्रज्ञानापेक्षया स्वाध्यायेनैकाग्रज्ञानापेक्षया धर्मध्यानेन च । **ततश्च** तस्माद्धेतुहेतुमद्भावेन प्रवृत्तात् पृथक्त्वैकत्वलक्षणाच्छुक्लध्यानद्वयात्**कैवल्यं स्यात्** । केवलमेव कैवल्यमसहायज्ञानदर्शनपर्यायः ।

ततश्च कैवल्यात् परा परमा अच्युतिर्मुक्तिः स्यात्। क? अन्ते नाशेऽर्थात् संसारस्य । संसाराभावे पुंसः स्वात्मलाभो मोक्ष इति वचनात् । अथवाऽन्ते मरणे पण्डितपण्डितमरणप्राप्यत्वान्निर्वाणस्य । अयमर्थः—स्वाध्यायाद्धर्म्यध्यानं संपद्यते । ततः पृथक्त्ववितर्कवीचारं शुक्लध्यानम् । तस्मादेकत्ववितर्कावीचारं द्वितीयं शुक्लध्यानम् । ततोनन्तज्ञानादिचतुष्टयलक्षणा जीवन्मुक्तिः । ततश्च क्रमप्रवृत्तसूक्ष्मक्रियाप्रतिपातिव्युपरतक्रियानिवृत्तिलक्षणशुक्लध्यानद्वयातिशयः स्यात् । ततश्च सर्वकर्मक्षयाविर्भूतानन्तसम्यक्त्वादिगुणाष्टकावस्थानलक्षणा परममुक्तिः । इति भद्रम् ॥ २४ ॥ ( ग्रंथप्रमाणं ३१८ )

यो धर्मामृतमुद्धार सुमनस्तृप्त्यै जिनेंद्रागम-
क्षीरोदं शिवधीर्निमथ्य जयतात् स श्रीमदाशाधरः ।
भव्यात्मा हरदेव इत्यभिधया ख्यातश्च नंद्यादिमं
टीकाशुक्तिमचीकरत्सुखमिमां तस्योपयोगाय यः ॥

इत्याशाधरविरचितायां स्वोपज्ञधर्मामृतानगारधर्मटीकायां भव्यकुमुदचन्द्रिकासंज्ञायां ज्ञानाराधनाधिगमो नाम तृतीयोऽध्यायः ॥ ३ ॥



# अथ चतुर्थोऽध्यायः ॥ ४ ॥

अथ क्रमप्राप्तां चारित्राराधनां प्रति मुमुक्षूनुत्साहयति—

सम्यग्दृष्टिसुभूमिवैभवलसद्विद्याम्बुमाद्यद्दयां,—
मूलः सद्गतसुप्रकाण्ड उदयद्गुप्त्यग्रशाखाभरः ।
शीलोद्यद्विटपः समित्युपलतासंपद्गुणोद्घोद्गम,—
च्छेत्तुं जन्मपथक्लमं सुचरितच्छायातरुः श्रीयताम् ॥१॥

वैभवं प्रभावः स्वकार्यकरणसमर्थोऽचिन्त्यशक्तिविशेष इति यावत् । दया दुःखार्तजन्तुत्राणाभिलाषः । प्रकाण्डः स्कन्धः । विटपो विस्तारः । उपलता उपशाखा । उद्घोद्गमानि प्रशस्तपुष्पाणि । जन्म संसारः सुचरितं सर्वसावद्ययोगविरतोस्मीत्येवंरूपं सामायिकं नाम प्रागुपादेयं सम्यक्चारित्रं, तस्यैवेदंयुगीनानुद्दिश्य—छेदोपस्थापनरूपतया प्रपञ्चयमानत्वात् । छायातरुर्यस्यार्कपरिवर्तनेपि-च्छाया न चलत्यसौ ॥ श्रीयतां सेव्यतामासेवितसम्यग्दर्शनज्ञानैर्मुमुक्षुभिः । कोसौ ? सुचरितच्छायातरुः । सुचरितं छायातरुरिव, संसारमार्गसंचरणसमुद्भूतश्रमग्लानिप्रशान्तिहेतुत्वात् । किं कर्तुम् ? छेत्तुम् । कम् ? जन्मपथक्लमम् । जन्म पन्था इव । तस्य क्लमः । किंविशिष्टोसौ ? सम्यग्दृष्टीत्यादि । सम्यग्दृष्टिर्दर्शनविशुद्धिः सुभूमिः प्रशस्तभूरिव । तस्या वैभवम् । तेन लसत्स्वकार्यकरणाय स्फुरद् विद्याम्बु सम्यक्श्रुतज्ञानजलम् । तेन माद्यत् स्वकार्याय दृप्यद् दयामूलं यस्य स एवम् । दया मूलं बुध्न इव, प्ररोहणकारणत्वात् । तथा सद्गतसुप्रकाण्डः । सद्गतं सुप्रकाण्डो यस्य । तथा उदयद्गुप्त्यग्रशाखाभरः । सम्यग्योगनिग्रहो गुप्तिरग्रशाखा प्रधानावयवः । गुप्तयोग्रशाखा इवोपशाखादीनामिव समित्यादीनामाधारभूतत्वात् । गुप्त्यग्रशाखानां भरोतिशयो गुप्त्यग्रशाखाभरः । उदयन्नुच्छ्रयन् गुप्त्यग्रशाखाभरो यस्य स तथोक्तः । तथा समित्युपलतासंपत् । श्रुतनिरूपितक्रमेण प्रवृत्तिः समितिः । लताः शाखाः । उपगता लता उपलताः । तासां संपत् संपत्तिरुपलतासंपत् । समितय उपल-

तासंपद्यस्य स एवम्। तथा **शीलोद्यद्विटपः**। शीलं व्रतपरिरक्षणम्। शीलमुद्यन्नव्याहतो विटपो यस्य स एवम्। तथा **गुणोद्धोद्गमः**। गुणाः संयमविकल्पा उद्धोद्गमानि यस्य स एवम्॥

सम्यक्त्वज्ञानयोः संपूर्णत्वेपि सति चारित्रासंपूर्णतायां परममुक्त्यभावमावेदयति—

**परमावगाढसुदृशा परमज्ञानोपचारसंभृतया।**
**रक्तापि नाप्रयोगे सुचरितपितुरीशमेति मुक्तिश्रीः॥ २॥**

न एति न गच्छति नोपाश्रयति। कासौ? **मुक्तिश्रीः** परममुक्तिः। अशरीरत्वे सत्यनन्तसम्यक्त्वादिगुणसंपदित्यर्थः। कम्? **ईशं** जीवन्मुक्तम्। क्व सति? **अप्रयोगे** सयोगत्वाघातिकर्मतीव्रोदयत्वस्वरूपातीचारसद्भावाद-संपूर्णत्वेऽसंप्रदाने च। कस्य? **सुचरितपितुः**। सुचरितं निरवशेषमोहक्षयादाविर्भूतत्वाच्छश्वदमलवपुरात्यन्तिकं च क्षायिकं चारित्रं पितेव, स्वरूपलाभवज्जीवन्मुक्तवरयितुः संप्रयोगे कुलकन्याया इव परममुक्तेरवश्यापेक्षणीयत्वात्। किंविशिष्टापि? **रक्ताप्यनुकूलितापि** पक्षे उत्कण्ठितापि। कया? **परमावगाढसुदृशा** अचलकक्षायिकसम्यक्त्वेनातिचतुरदूत्या च। किंविशिष्टया? परमेत्यादि। **परमज्ञानं** केवलज्ञानमु**पचारः** कामितवस्त्रालंकारादिसत्कार इव। तेन **संभृतया** परिपुष्टया। अयमर्थो—यथोपचारपूरितमनोरथया सुचतुरसंचारिकया संभोक्तुमाकुलीकृतापि कुलकन्या पितुः संप्रदानमन्तरेण कामितशृङ्गारनायिकं नाभिगच्छति तथा परमावगाढसम्यक्त्वेन परमज्ञानप्रापितपरमातिशयेनावश्यप्राप्यतां नीतापि परममुक्तिरघातिकर्मनिर्जरणकारणसमुच्छिन्नक्रियानिवृत्तिपरमशुक्लध्यानाप्रतिलम्भादसंपूर्णत्वे क्षायिकचारित्रस्य शान्तोदात्तनायकं नालिङ्गति। एतेन परमचारित्राराधनायाः परममुक्तेः साक्षात्कारणत्वमासूत्रितं प्रतिपत्तव्यम्॥

लसद्बिद्येति समर्थयितुमाह—

**ज्ञानमज्ञानमेव स्याद्विना सद्दर्शनं यथा।**
**चारित्रमप्यचारित्रं सम्यग्ज्ञानं विना तथा॥ ३॥**

**यथा स्यात्**। किं तत्? **ज्ञानम्**। कीदृशम्? **अज्ञानमेव** ज्ञानाभा-

समेव । कथम्? **विना** । किं तत्? **सद्दर्शनम्** । **तथा चारित्रम**प्यचारित्रं चारित्राभासमेव स्यात् । कथम्? **विना** । किं तत्? **सम्यग्ज्ञानम्** ।

पुनरप्येतदेव समर्थयितुमाह—

**हितं हि स्वस्य विज्ञाय श्रयत्यहितमुज्झति ।**
**तद्विज्ञानं पुरश्चारि चारित्रस्याघमाघ्नतः ॥ ४ ॥**

**हि** यस्मात् **श्रयति** सेवते मुमुक्षुः । किं तत्? **स्वस्यात्मनो हितं** सद्दर्शनादि । किं कृत्वा? **विज्ञाय** विशेषेण बुद्ध्वा । तथा **स्वस्याहितं** मिथ्यात्वादिकं विज्ञायो**ज्झति** त्यजति । यत एवं **तत्** तस्माद्भवति । किं तत्? **विज्ञानम्** । किंविशिष्टम्? **पुरश्चारि** अग्रेसरम् । कस्य? **चारित्रस्य** । किं कुर्वतः? **आघ्नतो** निर्मूलयतः । किं तत्? **अघं** कर्म ॥

सम्यग्ज्ञानपूर्वके चारित्रे यत्नवतो जगद्विजयं कथयति—

**देहेष्वात्ममतिर्दुःखमात्मन्यात्ममतिः सुखम् ।**
**इति नित्यं विनिश्चिन्वन् यतमानो जगज्जयेत् ॥ ५ ॥**

**जयेद्**वशीकुर्यान्मुमुक्षुः । किं तत्? **जगल्लोकम्** । सर्वज्ञो भवेदित्यर्थः । तस्य लोकजिच्छब्दाभिधेयत्वात् । किंकुर्वाणः? **यतमानः** परद्रव्यनिवृत्तिशुद्धस्वात्मानुवृत्तिलक्षणं यत्नं कुर्वन् । कथंभूतो भवन्? **नित्यं** शश्वद्**विनिश्चिन्वन्** विशेषेण व्यवस्यन् । कथम्? **इति** । किमिति? भवति । कासौ? **देहेषु** स्वगतेष्वौदारिकादिषु त्रिषु चतुर्षु वा परगतेषु च यथासंभवत्सु **आत्ममति**रात्मेति मननम् देह एवाहमहमेव वा देह इति कल्पनेति यावत् । किं भवति? **दुःखं** दुःखहेतुः । तथा भवति । कासौ? **आत्ममति**रात्मेति मननम् । क? **आत्मनि** अहमेवाहमन्य एवान्य इति विकल्पनेति यावत् । किं भवति? **सुखं** सुखहेतुः ॥

दयेति सफलयितुमाह—

**यस्य जीवदया नास्ति तस्य सच्चरितं कुतः ।**
**न हि भूतद्रुहां कापि क्रिया श्रेयस्करी भवेत् ॥ ६ ॥**

यस्य पुंसो जीवदया प्राणिषु मुख्येष्वारोपितेषु वा करुणा नास्ति तस्य सच्चरितं सम्यग्धर्मः कुतः स्यात्, न कुतश्चित्, दयामूलत्वात्तस्य । हि यस्मान्न भवेत् । कासौ ? कापि काचित् स्नानदेवार्चनदानाध्ययनादिका क्रिया । कीदृशी ? श्रेयस्करी श्रेयसो धर्मस्य तत्फलकल्याणस्य वा संपादयित्री । केषाम् ? भूतद्रुहां भूतेभ्यो द्रुह्यताम् । जन्तून् हन्तुमिच्छतामित्यर्थः ॥

सदयनिर्दययोरन्तरमाविष्करोति—

**दयालोरव्रतस्यापि स्वर्गतिः स्याददुर्गतिः ।**
**व्रतिनोपि दयोनस्य दुर्गतिः स्याददुर्गतिः ॥ ७ ॥**

स्यात् । कासौ ? स्वर्गतिः । स्वः स्वर्गे गमनम् । देवत्वप्रतिलम्भ इत्यर्थः । किंविशिष्टा ? अदुर्गतिः । दुःखेन गतिः प्राप्तिर्यस्याः सा दुर्गतिः । न दुर्गतिरदुर्गतिः । सुलभेत्यर्थः । कस्य ? दयालोर्दयाशीलस्य । किंविशिष्टस्य ? अव्रतस्यापि व्रतरहितस्यापि । तथा दुर्गतिर्नरकगतिर्नारकत्वप्रतिलम्भः स्यात् । किंविशिष्टा ? अदुर्गतिः । कस्य ? दयोनस्य दयारहितस्य । किंविशिष्टस्य ? व्रतिनोपि व्रतयुक्तस्यापि ॥

निर्दयस्य तपश्चरणादिनैष्फल्यकथनपुरस्सरं दयालोस्तदकर्तृत्वेपि तत्फलपुष्टिलाभं प्रकाशयति—

**तपस्यतु चिरं तीव्रं व्रतयत्वतियच्छतु ।**
**निर्दयस्तत्फलैर्दीनः पीनश्चैकां दयां चरन् ॥ ८ ॥**

निर्दयो नरश्चिरं तपस्यतु तपः करोतु, तीव्रं व्रतयतु अत्यर्थं व्रतं करोतु, अतियच्छतु अतिमात्रं ददातु च । तथाप्यसौ तत्फलैस्तथाविधतपोव्रतदानकरणसाध्यैर्दीनो दरिद्रो रिक्तो भवति । तथा पीनश्च तत्फलैः पुष्टो भवति । कोसौ ? एकां केवलां तपश्चरणादिरहितां दयां चरन्कुर्वन् ॥

दयार्द्रनृशंसयोः सिद्ध्यर्थं क्लेशवैफल्यमभिलपति—

**मनो दयानुविद्धं चेन्मुधा क्लिश्नासि सिद्धये ।**
**मनो दयापविद्धं चेन्मुधा क्लिश्नासि सिद्धये ॥ ९ ॥**

भोः सिद्ध्यर्थिन्, मनश्चित्तं ते दयानुविद्धं कृपाभावितं चेदस्ति तदा सिद्ध्ये सिद्ध्यर्थं मुधा विफलं क्लिश्नासि अनशनादिनाऽऽत्मनः क्लेशं करोषि त्वं, दयाभावेनैकसाध्यत्वात्सिद्धेः । अथ चेदस्ति मनः । कीदृशम् ? दयापविद्धं दयामुक्तं तदा मुधा क्लिश्नासि सिद्ध्ये, निर्दयस्य केनापि कायक्लेशादिना तस्याः साधयितुमशक्यत्वात् ।

विश्वासत्रासयोः सकृपत्वनिष्कृपत्वमूलत्वमुपलक्षयति—

**विश्वसन्ति रिपवोपि दयालोर्वित्रसन्ति सुहृयोप्यदयाच्च ।**
**प्राणसंशयपदं हि विहाय स्वार्थमीप्सति ननु स्तनपोपि ॥१०॥**

**दयालो**र्दयापरस्य **रिपवो**प्यपकर्तारोपि **विश्वसन्ति** विश्वासं कुर्वन्ति । **अदयाच्च** निर्दयात्सुहृदोप्युपकर्तारोपि **वित्रसन्ति** बिभ्यति । **हि** यस्मान्नन्वहो, **स्तनपोपि** अविज्ञातव्यवहारो डिम्भोपि **ईप्सति** प्राप्तुमिच्छति । कम् ? **स्वार्थं** स्वेष्टं वस्तु । किं कृत्वा ? **विहाय** परिहृत्य । किं तत् ? **प्राणसंशयपदं** स्वेष्टसाधनायात्र प्रवर्तमानस्य मे प्राणाः स्थास्यन्ति न वेति संदेहस्थानम् ॥

दयार्द्रस्यारोपितोपि दोषो न दोषाय, किं तर्हि ? बहुगुणः स्यादित्याह—

**क्षिप्तोपि केनचिद्दोषो दयार्द्रे न प्ररोहति ।**
**तक्रार्द्रे तृणवत्किंतु गुणग्रामाय कल्पते ॥ ११ ॥**

**न प्ररोहति** नोद्गच्छति । अकीर्तिदुर्गत्यादिप्रदो न भवतीत्यर्थः । कोसौ ? **दोषः** प्राणिवधपैशून्यचौर्यादीनामन्यतमोपवादः । क्व ? **दयार्द्रे** करुणामृदौ पुंसि । कीदृशोपि ? **क्षिप्तो**प्यारोपितोपि । केन ? **केनचि**दसहिष्णुना । क्व किमिवेत्याह—**तक्रार्द्रे तृणवत्** । यथा तक्रार्द्रे मथिताप्लुते प्रदेशे तृणं न प्ररोहति न प्रादुर्भवति । तथा दयार्द्रे दोष इत्यर्थः । यच्चिकित्सा—

**न विरोहन्ति गुदजाः पुनस्तक्रसमाहताः ।**
**निषिक्तं तद्धि दहति भूमावपि तृणोलपम् ॥**

एवं च तर्ह्यसावकिंचित्करो भविष्यतीत्याशङ्कानिरासार्थमाह किंत्वित्यादि । **किंतु कल्पते** संपद्यते । कोसौ ? असहिष्णुनाऽऽरोपितो दोषः । कस्मै ? **गुणग्रामाय** । गुणा अशुभकर्मनिर्जरणशिष्टसभासाधुकारलोकसम्मतत्वतत्क्षेत्राधिष्ठातृदेवतापक्षपातादयः । तेषां ग्रामः संघातस्तस्मै ॥

निर्दयस्यान्यकृतोपि दोषः संपद्यते इत्याह—

**अन्येनापि कृतो दोषो निस्त्रिंशमुपतिष्ठते ।**
**तटस्थमप्यरिष्टेन राहुमर्कोपरागवत् ॥ १२ ॥**

**उपतिष्ठते** संक्रामति । अनेन कृतोयमिति लगतीत्यर्थः । कोसौ ? **दोषः** । कम् ? **निस्त्रिंशं** निर्दयम् । किंविशिष्टमपि ? **तटस्थं** निकटमुदासीनं वा । **अपि**र्विस्मये । किंविशिष्टो दोषः ? **कृतः** । केन ? **अन्येनापि** मद्प्रमादादिवशेन केनापि निस्त्रिंशेन । किंवत् ? **अर्कोपरागवत्** । यथार्कोपरागः सूर्यग्रहण**मरिष्टेना**दित्यच्छादकग्रहविशेषेण कृतः समानमण्डलवर्तित्वात्तटस्थं **राहुं** चन्द्रच्छादकग्रहविशेषमुपतिष्ठते तथा प्रकृतोपि । तथा चागमः—

**राहुस्स अरिट्ठस्स य किंचूणं जोयणं अधोगंता ।**
**छम्मासे पव्वंते चंदरविं छादयन्ति कमा ॥**

तथा,—

**राहुअरिट्ठविमाणद्धयादुवरि पमाणअंगुलचउक्कं ।**
**गंतूण ससिविमाणा सूरविमाणा कमे होंति ॥**

सकृदप्यपकृतोपकर्तारमसकृदपकरोतीति दृष्टान्तेन स्फुटयति—

**विराधकं हन्त्यसकृद्विराद्धः सकृदप्यलम् ।**
**क्रोधसंस्कारतः पार्श्वकमठोदाहृतिः स्फुटम् ॥ १३ ॥**

**सकृद**प्येकवारमपि **विराद्धः** कृतापकारो जीवो **विराधक**मपकर्तारं जीव**मसकृ**दनेकवारं **हन्ति** हिनस्ति । कस्मात् ? **अलं** पर्याप्तादनन्तानुबन्धिनः **क्रोधसंस्कारतो**ऽनन्तानुबन्धिक्रोधवासनावशादित्यर्थः । कथं कृत्वा ? पार्श्वेत्यादि । **पार्श्व**स्त्रयोविंशस्तीर्थंकरः । **कमठ**स्तस्यैव मरुभूतिभवभावी ज्येष्ठभ्राता । पार्श्वश्च कमठश्च पार्श्वकमठौ । तावेवो**दाहृति**रुदाहरणम् । तत्र तया वा **स्फुटं** स्पष्टप्रतीतिकम् ।

दयाभावनापरस्य प्रीतिविशेषं फलत्वेनोपदिशति—

**तत्त्वज्ञानच्छिन्नरम्येतरार्थप्रीतिद्वेषः प्राणिरक्षामृगाक्षीम् ।**
**आलिङ्ग्यालं भावयन्निस्तरङ्गस्वान्तः सान्द्रानन्दमङ्गत्यसङ्गः॥१४**

असङ्गो यतिस्तत्त्वज्ञानच्छिन्नरम्येतरार्थप्रीतिद्वेषो भूत्वा प्राणिरक्षामृगाक्षीमालिङ्ग्य क्रोडीकृत्य अलं पर्याप्तं भावयन्गुणानुस्मरणद्वारेण पुनः पुनश्चेतसि निवेशयन् निस्तरङ्गस्वान्तो निर्विकल्पमनाः सन् सान्द्रानन्दं निबिडप्रमोदमङ्गति गच्छति । रमयतीति रम्यो मनःप्रियोर्थ इतरोऽरम्यः । अर्थो विषयः । रम्यश्चेतरश्च रम्येतरौ । तौ च तावर्थौ च रम्येतरार्थौ । प्रीती रागो द्वेषोऽप्रीतिः । प्रीतिश्च द्वेषश्च प्रीतिद्वेषौ । रम्येतरार्थयोः प्रीतिद्वेषौ रम्येतरार्थप्रीतिद्वेषौ । तत्त्वज्ञानेन यथावदर्थावगमेन—च्छिन्नौ निराकृतौ रम्येतरार्थप्रीतिद्वेषौ येन स एवम् । प्राणिनां रक्षा दुःखनिराकरणबुद्धिः प्राणिरक्षा दया । मृगस्येवाक्षिणी यस्याः सा मृगाक्षी कामिनी । प्राणिरक्षा मृगाक्षीव, सर्वाङ्गीणसुखावहसङ्गत्वात् । तरङ्गा ऊर्मयः । तरङ्गा इव तरङ्गाः क्षणिकत्वाद्, विकल्पाः । तरङ्गेभ्यो निष्क्रान्तं निस्तरङ्गं स्वान्तं मनो यस्य स तथोक्तः । न विद्यन्ते सङ्गाश्चेतनेतरपरिग्रहा यस्यासावऽसङ्गः शक्यत्यागानां त्यागी अशक्यत्यागेषु ममत्वत्यागीत्यर्थः ॥

दयारक्षार्थं विषयत्यागमुपदिशति—

सद्वृत्तकन्दलीं काम्यामुद्भेदयितुमुद्यतः ।
यैश्छिद्यते दयाकन्दस्तेऽपोह्या विषयाखवः ॥ १५ ॥

ते विषयाखवो मुमुक्षुभिरपोह्याः प्रतिषेध्याः । विषयाश्चक्षुरादिमुखैरिष्टानिष्टतया निरूप्यमाणा रूपादयोर्थाः । ते आखवो मूषिका इव कन्दस्येव दयायाश्छेदकत्वात् । ते के ? यैश्छिद्यते निकृत्यते । कोसौ ? दयाकन्दः । किंविशिष्टः ? उद्यत उद्युक्तः । किं कर्तुम् ? उद्भेदयितुमाविर्भावयितुम् । काम् ? सद्वृत्तकन्दलीम् । सद्वृत्तं सम्यक्चारित्रं कन्दली कन्दकिशलयमुकुलस्तोम इव, कन्दस्येव दयायाः कार्यत्वात् । किंविशिष्टाम् ? काम्यां तत्फलार्थिभिः स्पृहणीयाम् ॥

इन्द्रियाणां प्रज्ञापघातनसामर्थ्यं कथयति—

स्वार्थरसिकेन ठकवद्विकृष्यतेऽक्षेण येन तेनापि ।
न विचारसंपदः परमनुकम्पाजीवितादपि प्रज्ञा ॥ १६ ॥

न परं न केवलं येन तेनापि स्वनिमित्तसन्निधानाल्लब्धबलेन चक्षु-

रादीनामन्यतमेनाऽक्षेण स्वार्थरसिकेन स्वविषयलम्पटेन सता विचार-संपदः सकाशात् प्रज्ञा पुंसो यथावदर्थग्रहणशक्तिर्विकृष्यते दूरीक्रियते । प्रच्याव्यते इत्यर्थः । किंत्वनुकम्पाजीवितादपि । किंवत्? ठकवत् खारपटेन तुल्यम् । अयमर्थो–येन तेनापि ब्राह्मणादीनामन्यतमेन ठकेन निजप्रयोजनकामेन सता प्रजानातीति प्रज्ञा अतिविदग्धा स्त्री संपदो भूषणादिश्रियो जीविताच्च विच्छिद्यते तथा यथोक्तेनेन्द्रियेण प्रज्ञा विशिष्टा बुद्धिर्विचाराद्युक्तायुक्तविवेचनात् करुणापरिणामाच्च प्रच्याव्यते मिथ्यात्वं नीयते इत्यर्थः । ततो मुमुक्षुणा सदेन्द्रियजये यतितव्यमिति विधौ वाक्यार्थः पर्यवस्यति ॥

विषयिणोऽपायं दर्शयति—

**विषयामिषलाम्पट्यात्तन्वन्नृजु नृशंसताम् ।**
**लालामिवोर्णनाभोऽधः पतत्यहह दुर्मतिः ॥ १७ ॥**

अहहेति खेदे । हा कष्टमित्यर्थः । दुर्मतिर्विषयाभिलाषदूषितधिषणः पुरुषः पतति । क्व? अधोऽधरदिशि । नरकादिगतावित्यर्थः । किं कुर्वन्? तन्वन् विस्तारयन् । काम्? नृशंसतां हिंसकताम् । कस्मात्? विषयामिषलाम्पट्यादिष्टार्थग्रासलौल्यात् । कथं कृत्वा? ऋजु सम्मुखम् । क इव काम्? लालामूर्णनाभ इव । अयमर्थो– यथा लूताकीटस्तन्तुरूपां लालामामिषलाम्पट्यात् प्राणिलक्षणग्रासरसिकत्वेनर्जु प्राञ्जलं कृत्वा तन्वन् दीर्घीकुर्वन्नधोऽधरदेशे पतत्येवं प्राकरणिकोपि ।

विषयनिस्पृहस्येष्टसिद्धिमाचष्टे—

**यथाकथंचिदेकैव विषयाशापिशाचिका ।**
**क्षिप्यते चेत्प्रलप्यालं सिध्यतीष्टमविघ्नतः ॥ १८ ॥**

प्रलप्यालमलं प्रलपनेन । अनर्थकं न वक्तव्यमित्यर्थः । चेद्यदि क्षिप्यते निराक्रियते श्रेयोर्थिना । कासौ? विषयाशापिशाचिका इष्टेन्द्रियार्थलिप्सा पिशाचीव । किंविशिष्टा? एकैव केवलैव । कथम्? यथाकथंचित् येन केनापि ज्ञानवैराग्यादिभावनाप्रकारेण । तदा सिध्यति

निष्पद्यते। किं तत्? इष्टं प्रकृतत्वात्सुचरितमूलभूतं दयाख्यं वस्तु। केन? अविघ्नतः प्रत्यूहरहितत्वेन।

किं तत्सद्व्रतमित्याह—

हिंसाऽनृतचुराऽब्रह्मग्रन्थेभ्यो विरतिर्व्रतम्।
तत्सत्सज्ज्ञानपूर्वत्वात् सद्दृशश्चोपबृंहणात् ॥ १९ ॥

भवति। किं तत्? व्रतम्। किम्? विरतिर्मनोवाक्कायकृतकारितानुमतैर्निवृत्तिः। केभ्यः? हिंसादिभ्यः। प्रमत्तयोगात्प्राणव्यपरोपणं हिंसा असदभिधानमनृतम्। चुरा चौर्यम्—अदत्ताऽऽदानं स्तेयम्। मैथुनमब्रह्म। ग्रन्थो—मूर्छा परिग्रहः। हिंसा चानृतं च चुरा चाब्रह्म च ग्रन्थश्च त एवम्। तत्र सर्वजीवविषयमहिंसाव्रतम्। अदत्तपरिग्रहत्यागौ सर्वद्रव्यविषयौ द्रव्यैकदेशविषयाणि चानृतमैथुनविरतिव्रते रात्रिभोजनविरमणं षष्ठमणुव्रतं च। उक्तं च—

पढमह्मि सव्वजीवा तिदीये चरिमे य सव्वदव्वाणि।
सेसा महव्वदा खलु तदेकदेसह्मि दव्वाणं ॥

तच्च व्रतं सत् प्रशस्तं भण्यते। कस्मात्? सज्ज्ञानपूर्वत्वात्। सज्ज्ञानं समीचीनो बोधः पूर्वं कारणं यस्य तत् सज्ज्ञानपूर्वम्। तस्य भावस्तत्वं, तस्मात्। न केवलं, सद्दृशः सम्यक्त्वस्योपबृंहणाच्चाभिवर्धनात्॥

व्रतमहिमानं वर्णयति—

अहो व्रतस्य माहात्म्यं यन्मुखं प्रेक्षतेतराम्।
उद्द्योतेतिशयाधाने फलसंसाधने च दृक् ॥ २० ॥

अहो आश्चर्यं, माहात्म्यं व्रतस्य वर्तते, यन्मुखं यस्य व्रतस्य मुखं लक्षणया प्रधानं सामर्थ्यं प्रेक्षतेतराम् अतिशयेनापेक्षते। कासौ? दृक् सम्यक्त्वम्। क्व? उद्द्योते शङ्कादिमलापनयने। तथातिशयाधाने कर्मक्षपणलक्षणशक्त्युत्कर्षसंपादने। तथा फलसंसाधने इन्द्रादिपदप्रापणपूर्वकनिर्वाणलक्षणस्य नानाविधापायनिवारणलक्षणस्य च फलस्य साक्षादुत्पादने। एतेन संक्षेपतः सम्यक्त्वचारित्रे द्वे एवाराध्ये सम्यक्चारित्रमेकमेवेत्युक्तं भवति। प्रेक्षतेतरामित्यत्र ज्ञानापेक्षया तरांप्रत्यय, उद्द्योतादिषु साध्येषु ज्ञानमुखस्यापि सम्यक्त्वेनापेक्षणीयत्वात्॥

सकलेतरविरत्योः स्वामिनौ निर्दिशति—

**स्फुरद्बोधो गलद्वृत्तमोहो विषयनिःस्पृहः ।**
**हिंसादेर्विरतः कात्स्न्र्याद्यतिः स्याच्छ्रावकोंऽशतः ॥२१॥**

**स्फुरद्बोध**त्वादित्रयविशिष्टो जीवः **कात्स्न्र्यात्**साकल्यतो **हिंसादेः** पापकर्मपञ्चकाद्**विरतः स्यात्**। स च **यति**रिति संकेतितः । तथा तत्त्रयविशिष्टो जीवोंऽशत एकदेशतो हिंसादेर्विरतः स्यात् । स च **श्रावक** इति संज्ञितः । **स्फुरन्** हेयोपादेयोपेक्षणीयत्वेन जीवादिषु जाग्रद्**बोधो** ज्ञानं यस्य स स्फुरद्बोधः । **गलन्** क्षयोपशमरूपतया हीयमानो **वृत्तमोहो** यतेः प्रत्याख्यानावरणक्रोधादिलक्षणश्चारित्रमोहः श्रावकस्य वाऽप्रत्याख्यानावरणक्रोधादिलक्षणश्चारित्रमोहो यस्य स गलद्वृत्तमोहः । सामायिकच्छेदोपस्थापनयोः संयमासंयमस्य च विवक्षितत्वात् तत्त्रयस्यैवात्रत्येदानीन्तनजीवेषु संभवात्। **विषयेषु** दृष्टश्रुतानुभूतेषु भोगोपभोगेषु **निःस्पृहो** निरीहो विषयनिःस्पृहः ।

अथ चतुर्दशभिः पद्यैरहिंसाव्रतं व्याचष्टे । तत्र तावद्धिंसालक्षणमाह—

**सा हिंसा व्यपरोप्यन्ते यत् त्रसस्थावराङ्गिनाम् ।**
**प्रमत्तयोगतः प्राणा द्रव्यभावस्वभावकाः ॥ २२ ॥**

**सा हिंसा** भण्यते । यत्किम्? **यद् व्यपरोप्यन्ते** यथासंभवं वियोज्यन्ते पुरुषैः । के? **प्राणाः** । किंविशिष्टाः? **द्रव्यभावस्वभावकाः** । द्रव्यं च भावश्च द्रव्यभावौ । तौ स्वभावौ येषां ते एवम् । द्रव्यरूपा भावरूपाश्चेत्यर्थः । केषाम्? **त्रसस्थावराङ्गिनाम्** । त्रसनामकर्मोदयवशीकृतास्त्रसाः । स्थावरनामकर्मोदयवशवर्तिनः स्थावराः । अङ्गानि शरीराण्येषां सन्तीत्यङ्गिनः । त्रसाश्च स्थावराश्च त्रसस्थावराः । ते च तेऽङ्गिनश्चेति विग्रहः । कस्मात्? **प्रमत्तयोगतः** । इन्द्रियप्रचारमनवधार्य प्रवर्तते यः स प्रमत्तः । प्रमत्तकषायोदयाविशिष्टो हिंसादिकारणेषु स्थितोऽहिंसायां शाठ्येन यतते यः स वा प्रमत्तः । राजचौरभक्तस्त्रीकथाचतुष्टयं पञ्चेन्द्रियाणि निद्राप्रणयावेतैः परिणतो वा प्रमत्तः । तस्य प्रमत्तजीवस्य कायवाङ्मनःकर्मरूपो योगः प्रमत्तयोगस्तस्मात् । तमाश्रित्येत्यर्थः । अथवा प्रमादः सकषायत्वम् ।

तद्वानात्मपरिणामः प्रमत्तः। तस्य योगः संबन्धस्तस्मात्। रागाद्यावेशादित्यर्थः। प्राणा इन्द्रियादयो दश। तदुक्तम्—

पंचवि इंदियपाणा मणवच्चिकायेसु तिण्णि बलपाणा।
आणप्पाणप्पाणा आउगपाणेण हुंति दह पाणा॥

ते च चित्सामान्यानुविधायिपुद्गलपरिणामो द्रव्यप्राणाः। पुद्गलसामान्यानुविधायी चित्परिणामो भावप्राणाः। तदुभयभाजो जीवाः संसारिणस्त्रसाः स्थावराश्च। तत्र स्पर्शरसगन्धवर्णशब्दान् स्पर्शनरसनघ्राणचक्षुःश्रोत्रेषु क्रमेण द्वाभ्यां त्रिभिश्चतुर्भिः पञ्चभिश्च पृथग्जानन्तो द्वीन्द्रियादयश्चतुर्धा त्रसाः। तद्विकल्पश्लोका यथा—

जलूकाशुक्तिशम्बूकगण्डूपदकपर्दकाः।
जठरकृमिशङ्खाद्या द्वीन्द्रिया देहिनो मताः॥
कुन्थुः पिपीलिका गुम्भी यूकामत्कुणवृश्चिकाः।
मर्कोटकेन्द्रगोपाद्यास्त्रीन्द्रियाः सन्ति देहिनः॥
पतङ्गा मशका दंशा मक्षिकाकीटगर्मुतः।
पुत्रिकाचञ्चरीकाद्याश्चतुरक्षाः शरीरिणः॥
नारका मानवा देवास्तिर्यञ्चश्च चतुर्विधाः।
सामान्येन विशेषेण पञ्चाक्षा बहुधा स्थिताः॥

द्रव्येन्द्रियाकारा यथा—

यवनालमसूरातिमुक्तकेन्द्वर्धसन्निभाः।
श्रोत्राक्षिघ्राणजिह्वाः स्युः स्पर्शनेऽनेकधाकृतिः॥

त्रसक्षेत्रं यथा—

उववादमारणंतियजिणकवाडादिरहिय सेस तसा।
तसनाडिबाहिरह्मि य णत्थित्ति जिणेहिँ णिद्दिट्ठं॥

स्पर्शनेनैकेन स्पर्शं जानन्त एकेन्द्रियाः पृथिव्यप्तेजोवायुवनस्पतयः पञ्च स्थावराः। तेषां च बुद्धिपूर्वव्यापारादर्शनेऽप्यण्डान्तर्लीनादित्रसवज्जीवत्वं निश्चीयेत। तदुक्तम्—

अंडेसु पवट्टंता गब्भट्ठा माणुसा य मुच्छगया।
जारिसया तारिसया जीवा एगिंदिया णेया॥

ते च पञ्चतयेपि सूक्ष्माः सर्वत्र सन्ति। स्थूलास्त्विमे—

मृत्तिका बालिका चैव शर्करा चोपलः शिला।
लवणायस्तथा ताम्रं त्रपु सीसकमेव च॥
रूप्यं सुवर्णं वज्रं च हरितालं च हिङ्गुलम्।
मनःशिला तथा तुत्थमञ्जनं च प्रवालकम्॥
झीरोलकाभ्रकं चैव मणिभेदाश्च बादराः।
गोमेदो रुजकोऽङ्कश्च स्फटिको लोहितप्रभः॥
वैडूर्यं चन्द्रकान्तश्च जलकान्तो रविप्रभः।
गैरिकश्चन्दनश्चैव बर्वरो वक एव च॥
मोचो मसारगल्वश्च सर्वे एते प्रदर्शिताः।
संरक्ष्याः पृथिवीजीवा यतिभिर्ज्ञानपूर्वकम्॥

एते षट्त्रिंशत्। अत्र बालिका रूक्षाङ्गाराद्युद्भवा वालुका। शर्करा परुषरूपा त्र्यस्रचतुरस्रादिरूपा। उपलो वृत्तपाषाणः। शिला बृहत्पाषाणः। त्रपू रङ्गम्। अञ्जनं सौवीराञ्जनम्। झीरोलकाभ्रबालुका चिक्यचिक्यरूपा। गोमेदः कर्केतनमणिर्गोरोचनावर्णः। रुजको राजावर्तमणिरतसीपुष्पवर्णः। अङ्कः पुलिकमणिः प्रवालवर्णः। लोहितप्रभः पद्मरागः। वैडूर्यं मयूरकण्ठवर्णम्। जलकान्त उदकवर्णः। रविप्रभः सूर्यकान्तः। गैरिको रुधिराख्यमणिर्गैरिकवर्णः। चन्दनः श्रीखण्डसमगन्धवर्णो मणिः। वर्वरो मरकतमणिः वकः पुष्परागमणिर्वकवर्णः। मोचो नीलमणिः कदलीपत्रवर्णः। मसारगल्वः मसृणपाषाणमणिर्विद्रुमवर्णः। शर्करोपलशिलावज्रप्रवालवर्जिताः शुद्धपृथिवीविकाराः। शेषाः खरपृथ्वीविकाराः। एतेष्वेव च पृथिव्यष्टकं मेर्वादिशैला द्वीपा विमानानि भवनानि वेदिकाप्रतिमातोरणस्तूपचैत्यवृक्षजम्बूशाल्मलिधातक्यो रत्नाकरादयश्चान्तर्भवन्ति।

अवश्यायो हिमं चैव मिहिका विन्दुशीकराः।
शुद्धं घनोदकं चाम्बुजीवा रक्ष्यास्तथैव ते॥

अवश्यायो रात्रिपश्चिमप्रहरे निरभ्राकाशात्पतितं सूक्ष्मोदकम्। मिहिका

धूमाकारजलं कुहूडरूपं, धूमरीत्यर्थः । बिन्दुः स्थूलबिन्दुजलम् । शीकरः सूक्ष्मबिन्दुजलम् । शुद्धं चन्द्रकान्तजलं सद्यः पतितजलं वा । घनोदकं समुद्रह्रदघनवाताद्युद्भवम् । चशब्देन वापीनिर्झरादिजलं करकाश्च गृह्यन्ते ।

ज्वालाङ्गारस्तथार्चिश्च मुर्मुरः शुद्ध एव च ।
अनलश्चापि ते तेजोजीवा रक्ष्यास्तथैव च ॥

अर्चिः प्रदीपशिखाद्यग्रम् । मुर्मुरः कारीषोग्निः । शुद्धो वज्रविद्युत्सूर्यकान्ताद्युद्भवोग्निः सद्यः पातितो वा । अनलः सामान्योग्निर्धूमादिसहितः । चशब्देन स्फुलिङ्गवाडवाग्निनन्दीश्वरधूमकुण्डिकामुकुटानलादयो गृह्यन्ते ।

वात उद्भ्रमकश्चान्य उत्कलिर्मण्डलिस्तथा ।
महान् घनस्तनुर्गुञ्जास्ते पाल्याः पवनाङ्गिनः ॥

वातः सामान्यरूपः । उद्भ्रमो यो भ्रमन्नूर्ध्वं गच्छति । उत्कलिर्लहरीवातः । मण्डलिर्यः पृथिवीलग्नो भ्रमन्गच्छति । महान् महावातो वृक्षादिमोटकः । घनो घनोदधिर्घननिलयः । तनुस्तनुवातो व्यजनादिकृतः । गुञ्जा उदरस्थाः पञ्चवाताः । लोकप्रच्छादकभवनविमानाधारादिवाता अत्रैवान्तर्भवन्ति ।

मूलाग्रपर्वकन्दोत्थाः स्कन्धबीजसमुद्भवाः ।
सम्मूर्छिमास्तथानन्तकायाः प्रत्येककायिकाः ॥
त्वग्मूलकन्दपत्राणि प्रवालः प्रसवः फलम् ।
स्कन्धो गुच्छस्तथा गुल्मस्तृणं वल्ली च पर्व च ॥
शैवलं पणकः किण्वं कवकः कुहणस्तथा ।
बादराः सूक्ष्मकायास्तु जलस्थलनभोगताः ॥
गूढसन्धिशिरापर्वसमभङ्गमहीरुकम् ।
छिन्नोद्भवं च सामान्यं प्रत्येकमितरद्वपुः ॥
वल्लीवृक्षतृणाद्यं स्यादेकाक्षं च वनस्पतिः ।
परिहार्या भवन्त्येते यतिना हरिताङ्गिनः ॥

मूलोत्थास्ते येषां मूलं प्रादुर्भवति । ते च हरिद्रार्द्रकादयः । अग्रोत्थाः कोरण्टकमल्लिकाकुब्जकादयः । पर्वोत्था इक्षुवेत्रादयः । कन्दोत्थाः कन्दलीपिण्डालुकादयः । स्कन्धोद्भवाः सल्लकीपारिभद्रकादयः । बीजोद्भवा यवगोधूमकादयः । संमूर्छिमास्ते मूलाद्यभावेपि येषां जन्म स्वयोग्यपुद्गलोपादानका-

रणात् । दृश्यते हि शृङ्गाच्छारो गोमयाच्छालूकं बीजमन्तरेणोत्पत्तिमत् । तेन वनस्पतिजातिर्बीजोद्भवा संमूर्छिमा चेति द्विधा स्यादित्युक्तं प्रतिपत्तव्यम् । अनन्तकाया अनन्तः साधारणः कायो येषां ते साधारणाङ्गाः स्नुहीगुडूच्यादयः । अनन्तनिगोदाश्रितत्वादनंतः कायो येषां तेऽनन्तकायाः मूलकादयः प्रतिष्ठिताङ्गाः प्रत्येकभेदाः । उक्तं च—

एकमपि प्रजिघांसुर्निहन्त्यनन्तान्यतस्ततोऽवश्यम् ।
करणीयमशेषाणां परिहरणमनन्तकायानाम् ॥

प्रत्येककायिका एकमेकं प्रति प्रत्येकं पृथग्भिन्नो भिन्नः कायो येषामस्ति ते पूगनालिकेरादयः । उक्तं च—

एकमेकस्य यस्याङ्गं प्रत्येकाङ्गः स कथ्यते ।
साधारणः स यस्यांगमपरैर्बहुभिः समम् ॥

मूलोत्थादयोऽनन्तकायाः प्रत्येककायाश्च भवन्ति प्रतिष्ठितेतराङ्गत्वात् । तथा संमूर्छिमा अपीति योज्यम् । त्वगित्यादि । संमूर्छिमवनस्पतिजातिस्वरूपप्रतिपादनार्थमिदमुभयावयवख्यापनार्थं वा । त्वक् छल्ली । प्रसवः पुष्पम् । गुच्छ एककालीनबहुसमूहो जातिमल्लिकादिः । गुल्मः कन्थारिकाकरमार्दिकादिसंघातः । किंच, पुष्पमन्तरेण यस्योत्पत्तिः फलानां स फल इत्युच्यते यस्य पुष्पाण्येव भवन्ति न फलानि स पुष्प इत्युच्यते । यस्य पत्राण्येव भवन्ति न पुष्पाणि न फलानि स पत्र इत्युच्यते । इत्यादि बोध्यम् । शैवलमुदकगतकायिका हरितवर्णाः । पणकः सार्द्रेष्टकभूमिकुड्योद्भवकालिका । किण्वं वर्षाकालोद्भवच्छत्राणि । कवकः शृङ्गोद्भवाङ्कुरा जटाकाराः । कुहण आहारकाञ्जिकादिगतपुष्पिका । बादराः स्थूलाः पृथ्वीकायिकादयः पञ्चाप्येते पूर्वोक्ताः । सूक्ष्मकायाः सर्वेपि पृथिव्यादिभेदा वनस्पतिभेदाश्चाङ्गुलासंख्यातभागशरीरोदयः । गूढान्यदृश्यमानानि । समभङ्गं त्वचारहितम् । अहीरुकं सूत्राकारादिवर्जितं मञ्जिष्टादिकम् । छिन्नोद्भवं छिन्नेन-च्छेदेनोद्भवति रोहति उपलक्षणाच्छिन्नरोहि च । सामान्यं साधारणं वल्लीत्यादि । प्रत्येकशरीरं किंभूतमिति पृष्टे सत्युत्तरमिदम्—वृक्षाः पुष्पफलोपगाः वनस्पतिः फलवान् । हरिताङ्गिनः प्रत्येकाङ्गाः साधारणाङ्गाः सर्वेपि हरितकाया इत्यर्थः ।

जीवत्वं चैषामागमतः सर्वत्वगपहरणे मरणादाहारादिसंज्ञास्तित्वाच्च निश्चेयम् । ते क्षुदकादिना शाद्वला भवन्ति । स्पृष्टाश्च लज्जिकादयः संकुचन्ति । वनितागण्डूषादिना बकुलादयो हर्षविकासादिकं कुर्वन्ति । निधानादिकं दिशि पादादिकं च प्रसारयन्ति । इति क्रमेणाहारभयमैथुनपरिग्रहसंज्ञावन्तः किल वृक्षाः स्युः । निगोत ( द ) लक्षणं यथा—

**साहारणमाहारो साहारणमाणपाणगहणं च ।**
**साहारणजीवाणं साहारणलक्खणं भणियं ॥**
**जत्थेक्कु मरदि जीवो तत्थ दु मरणं हवे अणंताणं ।**
**चंकमइ जत्थ इक्को चंकमणं तत्थऽणंताणं ॥**

चंकमइ चङ्क्रामति । उत्पद्यते इत्यर्थः ।

**एकणिगोदसरीरे जीवा दव्वप्पमाणदो दिट्ठा ।**
**सिद्धेहिं अणंतगुणा सव्वेण वितीदकालेण ॥**

ते च नित्येतरभेदाद्विधा । तद्यथा—

**त्रसत्वं ये प्रपद्यन्ते कालानां त्रितयेपि नो ।**
**ज्ञेया नित्यनिगोतास्ते भूरिपापवशीकृताः ॥[1]**
**कालत्रयेपि यैर्जीवैस्त्रसता प्रतिपद्यते ।**
**सन्त्यनित्यनिगोतास्ते चतुर्गतिविहारिणः ॥**

तथा पृथिव्यादयः पञ्चापि साधारणाः पृथिव्यादिकायाः पृथिव्यादिकायिकाः पृथिव्यादिजीवाश्च भवन्ति । श्लोकः—

**क्ष्माद्याः साधारणाः क्ष्मादिकाया जीवोज्झिताः श्रिताः ।**
**जीवैस्तत्कायिकाः श्रेयास्तज्जीवा विग्रहेतिगैः ॥**

---

१ "अत्थि अणंता जीवा जेहिं ण पत्तो तसाण परिणामो ।
भावकलंकसुपउरा णिगोदवासं ण मुंचंति ॥"

अत्र गोमटसारजीवकाण्डस्य कायमार्गणायामुक्तायां गाथायामस्यामेवं व्याख्यातं यद्यपर्यन्तं यैर्जीवैर्व्यवहारराशिर्न लब्धा ते नित्यनिगोदाः । अग्रे ते त्रसादिपर्यायांल्लप्स्यन्ते नवेति नात्र निर्भरोयं नित्यनियमः ।

तत्रान्त्या द्वयेपि संयतै रक्ष्याः । तद्देहाकारा यथा—

समानास्ते मसूराम्भोबिन्दुसूचीव्रजध्वजैः ।
धराम्भोग्निमरुत्कायाः क्रमाच्चित्रास्तरुत्रसाः ॥

संसारिणः पुनर्द्वेधा प्रतिष्ठितेतरभेदात् । तद्यथा ।

प्रत्येककायिका देवाः श्वाभ्राः केवलिनोर्द्वयम् ।
आहारकधरातोयपावकानिलकायिकाः ॥
निगोतैर्बादरैः सूक्ष्मैरेते सन्त्यप्रतिष्ठिताः ।
पञ्चाक्षा विकला वृक्षा जीवाः शेषाः प्रतिष्ठिताः ॥

तेषां च पूर्णापूर्णानां प्राणसंख्या यथा—

सर्वेष्वङ्गेन्द्रियायूंषि पूर्णेष्वानः शरीरिषु ।
वाग् द्वित्र्यादिहृषीकेषु मनः पूर्णेषु संज्ञिषु ॥
ते संज्ञिनि दशैकैको हीनोन्येष्वंत्ययोर्द्वयं ।
अपर्याप्तेषु सप्ताद्योरेकैकोन्येषु हीयते ॥

संज्ञिनः पर्याप्तस्य स्पर्शनं रसनं घ्राणं चक्षुः श्रोत्रं मानोवाक्कायबलानि त्रीण्यायुरुच्छ्वासश्चेति दश । असंज्ञिनो मनोवर्ज्या नव । चतुरिन्द्रियस्य मनःश्रोत्रवर्जा अष्टौ । त्रीन्द्रियस्य ते चक्षुर्वर्जाः सप्त । द्वीन्द्रियस्य ते घ्राणवर्ज्याः षट् । एकेन्द्रियस्य ते रसनवाग्बलाभ्यां विना चत्वारः । तथा संज्ञिनोऽसंज्ञिनश्चापर्याप्तस्य मनोवागुच्छ्वासवर्ज्यास्ते सप्त । चतुरिन्द्रियस्य श्रोत्रवर्ज्याः षट् । त्रीन्द्रियस्य ते चक्षुर्वर्ज्याः पञ्च । द्वीन्द्रियस्य ते घ्राणं विना चत्वारः । एकेन्द्रियस्य ते रसनं विना त्रयः । पर्याप्तापर्याप्तलक्षणं यथा—

गृहवस्त्रादिकं द्रव्यं पूर्णापूर्णं यथा भवेत् ।
पूर्णेतरास्तथा जीवाः पर्याप्तेतरनामतः ॥
आहाराङ्गेन्द्रियप्राणवाचः पर्याप्तयो मनः ।
चतस्रः पञ्च षट् चैकद्व्यक्षादौ संज्ञिनां च ताः ॥
पर्याप्ताख्योदयाज्जीवः स्वस्वपर्याप्तिनिष्ठितः ।
वपुर्यावदपर्याप्तं तावन्निर्वृत्त्यपूर्णकः ॥

निष्ठापयेन्न पर्याप्तिमपूर्णस्योदये स्वकाम् ।
सान्तर्मुहूर्तमृत्युः स्याल्लब्ध्यपर्याप्तकः स तु ॥

पर्याप्तिश्चाहारपरिणामादिशक्तिकारणनिष्पत्तिरुच्यते । श्लोकः—

आहारपरिणामादिशक्तिकारणसिद्धयः ।
पर्याप्तयः षडाहारदेहाक्षोच्छ्वासवाङ्मनः ॥

इमे च जीवसमासाश्चतुर्दश—

समणा अमणा णेया पंचेंदिय णिम्मणा परे सव्वे ।
बादरसुहुमेइंदी सव्वे पज्जत्त इदरा य ॥

तथा गुणस्थानैर्मार्गणाभिश्च विस्तरेणागमतो जीवान्निश्चित्य रक्षेत् । गुणस्थानानि यथा—

मिथ्यादृक् सासनो मिश्रोऽसंयतोऽणुव्रतस्ततः ।
सप्रमादेतराऽपूर्वानिवृत्तिकरणास्तथा ।
सूक्ष्मलोभोपशान्ताख्यौ निर्मोहो योग्ययोगिनौ ।
गुणाश्चतुर्दशेत्येते मुक्ता मुक्तगुणाः परे ॥

मार्गणा यथा—

गतयः करणं कायो योगो वेदः क्रुधादयः ।
वेदनं संयमो दृष्टिर्लेश्या भव्यः सुदर्शनम् ॥
संज्ञी चाहारकः प्रोक्तास्ताश्चतुर्दश मार्गणाः ।
मिथ्यादृगादयो जीवा मार्गणासु सदादिभिः ॥

परमार्थतः प्रमत्तयोग एव हिंसेत्युपदिशति—

रागाद्यसङ्गतः प्राणव्यपरोपेप्यहिंसकः ।
स्यात्तदव्यपरोपेपि हिंस्रो रागादिसंश्रितः ॥ २३ ॥

रागादिभी-रागद्वेषमोहैरसङ्गतोऽपरिणतोऽहिंसको भवेत् । क्व सति ? प्राणव्यपरोपेपि । प्राणानामायुरादीनां व्यपरोपे वियोगकरणे । किं पुनरव्यपरोपे इत्यपिशब्दार्थः । रागादिसंगतस्तु हिंस्रो हिंसनशीलः

स्यात् । क सति ? तद्व्यपरोपेपि । तेषां प्राणानां वियोगाकरणेपि । उक्तं च—

मरदु व जियदु व जीवो अजदाचारस्स णिच्छिदा हिंसा ।
पयदस्स णत्थि बंधो हिंसामत्तेण समिदस्स ॥

ननु यद्येवं तर्हि प्रमत्ते योगो हिंसेत्येवास्तु, किं प्राणव्यपरोपणोपदेशेनेति चेन्न, तत्रापि भावलक्षणप्राणव्यपरोपणसद्भावात् । एतदेव समर्थयमानः प्राह—

**प्रमत्तो हि हिनस्ति स्वं प्रागात्माऽऽतङ्कतायनात् ।**
**परोनु म्रियतां मा वा रागाद्या ह्यरयोङ्गिनः ॥ २४ ॥**

हि यस्माद्धिनस्ति भावप्राणैर्वियोजयति । कोसौ ? आत्मा । किंविशिष्टः ? प्रमत्तः पञ्चदशप्रमादान्यतमपरिणतः । कम् ? स्वमात्मानम् । कस्मात् ? आतङ्कतायनाद् दुष्कर्मनिर्मायकत्वेन स्वस्य सद्यः पुरस्ताच्च व्याकुलत्वलक्षणदुःखसंतननात् । कथम् ? प्राक् परवधात्पूर्वम् । अनु पश्चादात्महिंसनादूर्ध्वं पुनः परो हन्तुमिष्टः प्राणी म्रियतां प्राणैर्वियुज्यतां मा वा म्रियताम् । तदुक्तम्—

स्वयमेवात्मनात्मानं हिनस्त्यात्मा प्रमादवान् ।
पूर्वं प्राण्यन्तराणां तु पश्चात्स्याद्वा न वा वधः ॥

कुत एतदित्याह—यतो भवन्ति । के ? रागाद्या हि रागद्वेषमोहा एव न परप्राणवधः । किं भवन्ति ? अरयः शत्रवस्तेषामेव दुःखैककारणकर्मबन्धनिमित्तत्वेनापकारकत्वात् । कस्य ? अङ्गिनो जीवस्य । तथा चोक्तम्—

न कर्मबहुलं जगन्न चलनात्मकं कर्म वा ।
न नैककरणानि वा न चिदचिद्वधो बन्धकृत् ॥
यदैक्यमुपयोगभूः समुपयाति रागादिभिः ।
स एव किल केवलं भवति बन्धहेतुर्नृणाम् ॥

यदि पुनः शुद्धपरिणामवतोपि जीवस्य स्वशरीरनिमित्तान्यप्राणिप्राणवियोगमात्रेण बन्धः स्यान्न कस्य चिन्मुक्तिः स्यात्, योगिनामपि वायुकायिकादिवधनिमित्तसद्भावात् । तथा चाभाणि—

जइ सुद्धस्स य बंधो होहिदि बहिरंगवत्थुजोएण।
णत्थि दु अहिंसगो णाम वाउकायादि वधहेदू॥

एतदेवाह—

तत्त्वज्ञानबलाद्रागद्वेषमोहानपोहतः।
समितस्य न बन्धः स्याद्गुप्तस्य तु विशेषतः॥ २५॥

न स्यात्। कोसौ? बन्धः कर्मोपश्लेषः। कस्य? समितस्य समितिषु वर्तमानस्य। गुप्तस्य तु गुप्तिपरिणतस्य बंधो न स्यात्। केन? विशेषतो विशेषेण। किं कुर्वतः? अपोहतो निवर्तयतः। कान्? रागद्वेषमोहान्। कस्मात्? तत्त्वज्ञानबलात्।

रागाद्युत्पत्त्यनुत्पत्ती हिंसाऽहिंसे इति जिनागमपरमरहस्यतया निश्चाययति—

परं जिनागमस्येदं रहस्यमवधार्यताम्।
हिंसा रागाद्युदुद्भूतिरहिंसा तदनुद्भवः॥ २६॥

अवधार्यतां निश्चितं चेतसि निवेश्यताम्। किं? इदम् वक्ष्यमाणम्। किंविशिष्टम्? परमुत्कृष्टं रहस्यमन्तस्तत्त्वम्। कस्य? जिनागमस्य। किमिदमित्याह—हिंसेत्यादि। भवति। कासौ? हिंसा। किम्? रागाद्युदुद्भूतिः। अहिंसा च भवति। किम्? तदनुद्भवो रागादीनामनुत्पत्तिः। उदुद्भूतिरित्यत्र "प्रोपोत्समां पादपूरणे" इत्यनेनोदो द्वित्वम्॥

अष्टोत्तरशतप्रकारहिंसाकारणनिरासादहिंसकः स्यादित्यनुशास्ति—

कषायोद्रेकतो योगैः कृतकारितसम्मतान्।
स्यात्संरम्भसमारम्भारम्भानुज्झन्नहिंसकः॥ २७॥

स्यात्? कोसौ? पुमान्। किंविशिष्टः? अहिंसकः। किं कुर्वन्? उज्झन् वर्जयन्। कान्? संरम्भसमारम्भारम्भान्। किंविशिष्टान्? कृतकारितसम्मतान्। कृताश्च कारिताश्च सम्मताश्चानुमताः। कैः? योगैर्मनोवाक्कायैः। कस्मात्? कषायोद्रेकतः क्रोधादीनामुदयात्। तत्र

प्राणव्यपरोपणादिषु प्रमादवतः प्रयत्नावेशः संरम्भः । इन्द्रियकषायाव्रतादिप्रवृत्तेः कारणमभिलाषो वा साध्याया हिंसादिक्रियायाः साधनानामभ्यासीकरणं समारम्भः । संचितहिंसाद्युपकरणस्याद्यः प्रक्रम आरम्भः । तत्र क्रोधोदयात्कायेन कृतः कारितोनुमतश्चेति त्रयः संरम्भाः । एवं त्रयो मानावेशात् त्रयो मायोद्रेकात् त्रयश्च लोभोद्भवात् । इति द्वादशसंरम्भाः । तद्वत्समारम्भा आरम्भाश्च द्वादश । इति सर्वे मिलिताः षट्त्रिंशत् । तथैव वाचापि ते षट्त्रिंशत् । तथा मनसापि ते षट्त्रिंशदेव । इति सर्वे मिलिता अष्टोत्तरशतजीवाधिकरणास्रवभेदा हिंसाकारणानि स्युः । तत्परिणतश्च हिंसक इत्युच्यते, आत्मनो भावप्राणानां परस्य च द्रव्यभावप्राणानां वियोजकत्वात् । तथा चोक्तम्—

**रत्तो वा दुट्ठो वा मूढो वा जं पउंजए पउगं ।**
**हिंसावि तत्थ जायदि तम्हा सो हिंसओ होइ ॥**

एवमनन्तानुबन्ध्यादिभिरपि विशिष्य क्रोधादीन् पृथग् व्याख्येयम् ।

भावहिंसानिमित्तभूतपरद्रव्यनिवृत्तिं परिणामविशुद्ध्यर्थमुपदेष्टुमाचष्टे—

**हिंसा यद्यपि पुंसः स्यान्न स्वल्पाप्यन्यवस्तुतः ।**
**तथापि हिंसाऽऽयतनाद्विरमेद्भावशुद्धये ॥ २८ ॥**

**यद्यपि पुंसो** जीवस्य **स्वल्पापि हिंसा न स्यात्** । कस्मात् ? **अन्यवस्तुतः** परद्रव्यात् । **तथापि विरमेन्निवर्तेत** मुमुक्षुः । कस्मात् ? **हिंसायतनाद्** भावहिंसानिमित्तान्मित्रशत्रुप्रभृतेः । कस्मै ? **भावशुद्धये** भावस्यात्मपरिणामस्यात्मनो मनसो वा शुद्धिर्मोहोदयसंपाद्यमानरागद्वेषकालुष्योच्छेदः तदर्थम् । तथा यथा जीवपरिणामो हिंसोपकरणभूतो जीवाधिकरणमास्रवभेदोऽष्टोत्तरशतसंख्यं तथाऽजीवपर्यायोप्यजीवाधिकरणं चतुर्भेदं स्यात् । ततस्तद्वत्ततोपि भावशुद्ध्यर्थं निवर्तेत । इत्यपि हिंसायतनाद्विरमेदित्यनेनैव सूचितं मन्तव्यम् । तद्यथा—

निर्वर्तनानिक्षेपसंयोगनिसर्गा द्विचतुर्द्वित्रिभेदाः क्रमादजीवाधिकरणमिष्यते । तत्र हिंसोपकरणतया निर्वर्त्यते इति निवर्तना । एवं निक्षिप्यते इति निक्षेपः । इत्यादि वेद्यम् । दुष्प्रयुक्तो देहः सच्छिद्रादीनि चोपकरणानीति

द्विविधा निर्वर्तना । तथा सहसानाभोगदुःप्रमृष्टाप्रत्यवेक्षितभेदाच्चतुर्धा निक्षेपः । तत्र पुस्तकाद्युपकरणशरीरतन्मलानि भयादिना शीघ्रं निक्षिप्यमाणानि षड्जीवबाधाधिकरणत्वात् सहसानिक्षेपः । असत्यामपि त्वरायां जीवाः सन्त्यत्र न सन्तीति वा निरूपणामन्तरेण निक्षिप्यमाणमुपकरणादिकमनाभोगनिक्षेपः । तदेव दुःप्रमृष्टं निक्षिप्यमाणं दुःप्रमृष्टनिक्षेपः । प्रमार्जनोत्तरकालं जीवाः सन्त्यत्र न सन्तीति वाऽप्रत्यवेक्षितं निक्षिप्यमाणमप्रत्यवेक्षितनिक्षेपः । तथोपकरणभक्तपानसंयोजनभेदाद् द्विधा संयोगः । तत्र शीतस्य पुस्तकादेरातपातितप्तेन पिच्छादिना प्रमार्जनं प्रच्छादनादिकरणमुपकरणसंयोजनम् । तथा संमूर्छनादिसंभवे पानं पानेन पानं भोजनेन भोजनं भोजनेन भोजनं पानेनेत्यादिसंयोजनं भक्तपानसंयोगः । तथा दुष्टमनोवाक्कायप्रवृत्तिभेदान्निसर्गस्त्रिधेति । तथा चोक्तम्—

सहसानाभोगितदुःप्रमार्जिताप्रेक्षितानि निक्षेपे ।
देहश्च दुःप्रयुक्तस्तथोपकरणं च निर्वृत्तिः ॥
संयोजनमुपकरणे पानाशनयोस्तथैव संयोगः ।
वचनमनस्तनवस्ता दुष्टा भेदा निसर्गस्य ॥

आत्मवत्परस्यापि प्राणव्यपरोपणमसह्यदुःखकारणमाकलयन् सर्वत्र समदर्शी सर्वथा तत्परिहरतीति स्थितार्थोपसंहारार्थमाह—

मोहादैक्यमवस्यतः स्ववपुषा तन्नाशमप्यात्मनो,
नाशं संक्लिशितस्य दुःखमतुलं नित्यस्य यद्द्रव्यतः ।
स्याद्भिन्नस्य ततो भवत्यसुभृतस्तद्घोरदुःखं स्वव,—
ज्जानन् प्राणवधं परस्य समधीः कुर्यादकार्यं कथम् २९

यद् यस्मात्कारणाद्भवति । किं तत् ? दुःखम् । किंविशिष्टम् ? अतुलमसमम् । कस्य ? असुभृतः प्राणिनः । किंविशिष्टस्य सतः ? संक्लिशितस्य देहद्वारप्रवृत्तव्याधिजरामरणादिभयादिना कलुषितचित्तस्य । किं कुर्वतः ? अवस्यतो निश्चिन्वतः । किं तत् ? ऐक्यमभेदम् । कथम् ? सह । केन ? स्ववपुषा स्वोपात्तशरीरेण सह । कस्मात् ? मोहात् आत्मदेहान्तरज्ञानाभावात् । देह एवाहमहमेव देह इति प्रतिपद्यमानस्येत्यर्थः ।

अत एव तन्नाशं स्ववपुःप्रलयमात्मनः स्वस्य नाशमप्यवस्यतः तथा नित्यस्याविनाशिनः । कस्मात् ? द्रव्यतो द्रव्यमपेक्ष्य । अर्थात्पर्यायतश्चानित्यस्य । तथा ततः स्ववपुषः स्यात्कथंचिद्भिन्नस्य । लक्षणभेदान्निजदेहात्पृथग्भूतस्याशक्यविवेचनत्वाच्चाभिन्नस्य । ये तु जीवदेहावत्यन्तं भिन्नौ मन्यन्ते तेषां देहविनाशेपि जीवविनाशाभावाद्धिंसानुपपत्तेः कुतस्तन्निवृत्त्या प्राणिरक्षाप्रधानो धर्मः सिध्येत् ? तदुक्तम्—

आत्मशरीरविभेदं वदन्ति ये सर्वथा गतविवेकाः ।
कायवधे हन्त कथं तेषां संजायते हिंसा ॥

ये च तयोरभेदैकान्तं मन्यन्ते तेषां कायविनाशे जीवस्यापि विनाशात्कथं परलोकार्थं धर्मानुष्ठानं शोभते ? तदप्युक्तम्—

जीववपुषोरभेदो येषामैकान्तिको मतः शास्त्रे ।
कायविनाशे तेषां जीवविनाशः कथं वार्यः ॥

ततो देहाद्भिन्नाभिन्न एवाहिंसालक्षणपरमधर्मसिद्ध्यर्थिभिरात्माभ्युपगन्तव्यः । तथात्मनः सर्वथा नित्यस्येव क्षणिकस्यापि हिंसा दुरुपपादा । इति नित्यानित्यात्मक एव जीवे हिंसासंभवात् तद्विरतिलक्षणधर्माचरणार्थिभिर्द्रव्यरूपतया नित्यः पर्यायरूपतया चानित्यः प्रमाणप्रसिद्धो जीवः प्रतिपत्तव्यः । तथा चोक्तम्—

जीवस्य हिंसा न भवेन्नित्यस्यापरिणामिनः ।
क्षणिकस्य स्वयं नाशात्कथं हिंसोपपद्यताम् ॥

तत् तस्मात्कथं केन प्रकारेण कुर्यान्मनोवाक्कायकृतकारितानुमननानां मध्ये ? न केनापि प्रकारेण कुर्यादित्यर्थः । कोसौ ? समधीः शत्रौ मित्रे च समानमनाः । कम् ? प्राणवधम् । कस्य ? परस्य परात्मनः । किंवत् ? स्ववत् स्वात्मन इव । किं कुर्वन् ? जानन् निश्चिन्वन् । कम् ? प्राणिवधम् । किंविशिष्टम् ? घोरदुःखं घोरमसह्यं दुःखं यस्मात्तम् । उक्तनीत्या स्वस्येव परस्यापि घोरदुःखकारणं प्राणव्यपरोपणं निश्चिन्वन्नित्यर्थः । पुनः किंविशिष्टम् ? अकार्यं यतः न हिंस्यात्सर्वभूतानीति शास्त्रे निषिद्धत्वान्न कर्तव्यम् । नित्यादिपक्षे तूक्तनीत्या कर्तुमशक्यं च यस्मात् । तथा चाहुः—

षड्जीवनिकायवधं यावज्जीवं मनोवचःकायैः।
कृतकारितानुमननैरुपयुक्तः परिहर सदा त्वम्॥

प्राणातिपातादिहामुत्र च घोरदुर्निवारमपायं दर्शयित्वा ततोत्यन्तं शिवार्थिनो निवृत्तिमुपदिशति—

कुष्टप्रष्ठैः करिष्यन्नपि कथमपि यं कर्तुमारभ्य चाप्त,-
भ्रंशोपि प्रायशोत्राप्यनुपरममुपद्रूयतेऽतीव रौद्रैः।
यं चक्राणोथ कुर्वन्विधुरमधरधीरेति यत्तत्कथास्तां,
कस्तं प्राणातिपातं स्पृशति शुभमतिः सोदरं दुर्गतीनाम्॥३०॥

कः शुभमतिः श्रेयोर्थी तं तथाभूतं प्राणातिपातं हिंसां स्पृशति? न कश्चिदनुतिष्ठतीत्यर्थः। किंविशिष्टम्? सोदरं बान्धवम्। कासाम्? दुर्गतीनां, हिंसकजीवेन नारकादिगतीनामवश्यभोग्यत्वात्। यं प्राणातिपातं करिष्यन् कर्तुमिच्छन्, किं पुनः कृतवान् कुर्वन्वेत्यपिशब्दार्थः। पुरुष उपद्रूयते पीड्यते। कैः? कुष्टप्रष्ठैः। कुष्टं त्वग्विकारः प्रष्ठमग्रेसरं येषां तैः। कुष्टजलोदरभगन्दरादिमहारोगैः। किंविशिष्टैः? अतीवरौद्रैरत्युग्रैः। उक्तं च—

वातव्याध्यश्मरीकुष्टमेहोदरभगन्दराः।
अर्शांसि ग्रहणीत्यष्टौ महारोगाः सुदुस्तराः॥

कथं कृत्वा? अनुपरमम्। नास्त्युपरम उपशमो यत्र, संततमित्यर्थः। क्व? अत्रापि अस्मिन्नपि जन्मनि। न केवलं यं करिष्यंस्तैः पीड्यते किन्तु यं कर्तुमारभ्य कथमपि केनापि प्रकारेणाप्तभ्रंशोपि प्राप्ततत्कारणान्तरायोपि च तैस्तादृग्भिः पीड्यते। कथम्? प्रायशः प्रायेण दैवादिवशात्तज्जन्मन्यपीड्यमानोपि जन्मान्तरेष्ववश्यमेव पीड्यते इत्यर्थः। यं पुनश्चक्राणः कृतवानथ कुर्वन्कुर्वाणो वाऽधरधीः कुमतिर्यद्विधुरं कृच्छ्रमेति गच्छति प्राप्नोति तत्कथा तस्य विधुरस्य कथा कथनमास्तां तिष्ठतु। तत्कथयितुमशक्यमित्यर्थः। ततो यावजीवं शिवार्थिना हिंसातो विरन्तव्यमिति विधौ पर्यवसन्नमेतत्प्रतिपत्तव्यम्॥

हिंसाया दुर्गतिदुःखैकफलत्वमुदाहरणेन प्रव्यक्तीकर्तुमाह—

**मध्ये मस्करजालि दण्डकवने संसाध्य विद्यां चिरात्,**
**कृष्टं शम्बुकुमारकेण सहसा तं सूर्यहासं दिवः ।**
**धृत्वायान्तमसिं बलाद्रभसया तां च्छिन्दता तच्छिर,-**
**श्छिन्नं यत्किल लक्ष्मणेन नरके ही तत्खरं भुज्यते ॥३१॥**

**ही** कष्टं **भुज्यते**ऽनुभूयते । किं तत् ? तच्छिरश्छेदनार्जितपापफलम् । क्व ? **नरके** निरये । कथं कृत्वा ? **खरं** तीक्ष्णमतिदुःसहमित्यर्थः । केन ? **लक्ष्मणेन** सौमित्रिणा । यत्किम् ? **यच्छिन्नं** खण्डितम् । किं तत् ? **तच्छिरः** । तस्य शम्बुकुमारकस्य शिरः शीर्षम् । केन ? **लक्ष्मणेन** । **किले**-त्यागमोक्तौ । किं कुर्वता ? **छिन्दता** तेनासिना खण्डयता । काम् ? **तां** मस्करजालिम् । कया ? **रभसया** अविमृश्यकारितया । किं कृत्वा ? **धृत्वा** गृहीत्वा । कम् ? **तं** प्रसिद्धं **सूर्यहासं** सूर्यहासाख्य**मसिं** खड्गम् । कस्मात् ? **बलात्** । कथम् ? **सहसा** झटित्युत्प्लुत्य । किं कुर्वन्तम् ? **आयान्त**मागच्छन्तम् । कस्मात् ? **दिव** आकाशात् । किंविशिष्टं संतम् ? **कृष्ट**माकृष्टमात्माभिमुखमाहूतम् । केन ? **शम्बुकुमारकेण** शूर्पणखा-पुत्रेण । किं कृत्वा ? **संसाध्य** सम्यग् विधिपूर्वकं साधयित्वा वशीकृत्य । काम् ? **विद्यां** तत्खड्गाधिदेवताम् । कस्मात् ? **चिरात्** षण्मासात् । क्व ? **मध्ये मस्कजालि** वंशजालिमध्ये । क्व वंशजालिः । **दण्डकवने** पञ्चवटीवने ।

हिंसायाः परिणतिरिवाविरतिरपि हिंसात्वात्तत्फलप्रदेति हिंसां न क-रोमीति स्वस्थंमन्यो भवान्मा भूदिति ज्ञानलवदुर्विदग्धं बोधयति—

**स्यान्न हिंस्यां न नो हिंस्यामित्येव स्यां सुखीति मा ।**
**अविरामोपि यद्वामो हिंसायाः परिणामवत् ॥ ३२ ॥**

भो सुखार्थिन्नात्मन्, **मा स्याद्** मा भूद्भवान् । कथम् ? **इति** । कि-मिति ? **स्यां** भवेयमहम् । किंविशिष्टः ? **सुखी** सुखातिशयभाक् । कथम् ? **इत्येवा**नेनैव परिणामेन । तमेवाह—**न हिंस्यां** हिंसां न कुर्यामहं, **न नो हिंस्यां** हिंसां न न कुर्यामहम् । **यद्य**स्माद्भवति । कोसौ ? **अविरामोपि** । कुतः ? **हिंसायाः** प्राणिनः प्राणान्न व्यपरोपयामीति संकल्पाकरणलक्षण-

मविरमणमपीत्यर्थः । किंविशिष्टः ? वामः प्रतिकूलः । दुःखकारीत्यर्थः । किंवत् ? परिणामवत् । हिंसायाः परिणमनवद् हिनस्मीति परिणतिर्यथा । उक्तं च—

हिंसाया अविरमणं वधपरिणामोपि भवति हिंसैव ।
तस्मात्प्रमत्तयोगात्प्राणव्यपरोपणं हिंसा ॥

हिंसाया अहिंसायाश्च परिपाक्या फलोद्रेकं दृष्टान्तेन प्रकटय्याऽहिंसापरिणत्यै स्वहितोद्यतान्नितान्तमुद्यमयति—

धनश्रियां विश्रुतदुःखपाका,—
माकर्ण्य हिंसां हितजागरूकाः ।
छेत्तुं विपत्तीर्मृगसेनवच्च,
श्रियं वरीतुं व्रतयन्त्वहिंसाम् ॥ ३३ ॥

व्रतयन्तु व्रतं कुर्वन्तु । के ? हितजागरूकाः स्वोपकारे जागरणशीलाः । काम् ? अहिंसाम् । अहिंसायां परिणमन्तामित्यर्थः । किं कर्तुम् ? छेत्तुं निवर्तयितुम् । काः ? विपत्तीर्विपदः । न केवलं, श्रियं च लक्ष्मीं वरीतुं संभक्तुम् । किंवत् ? मृगसेनवन्मृगसेनाख्यधीवरेण तुल्यम् । किं कृत्वा ? आकर्ण्य आप्तेभ्यः श्रुत्वा । काम् ? हिंसाम् । किंविशिष्टाम् ? विश्रुतदुःखपाकाम् । विश्रुतः ख्यातो दुःखपाको दुःखानुभवनं यस्याः । कस्याम् ? धनश्रियां धनश्रीसंज्ञिकायां कुटुम्बिकपत्न्याम् । एतत्कथाद्वयं संप्रदायादधिगन्तव्यम् ॥

वाङ्मनोगुप्तीर्यादाननिक्षेपणसमित्यालोकितपानभोजनभावनापञ्चकेन भाव्यमानमहिंसाव्रतं स्थिरीभूय परं माहात्म्यमासादयतीत्युपदिशति—

निगृह्णतो वाङ्मनसी यथाव,—
न्मार्गं चरिष्णोर्विधिवद्यथार्हम् ।
आदाननिक्षेपकृतोन्नपाने,
दृष्टे च भोक्तुः प्रतपत्यहिंसा ॥ ३४ ॥

व्रतपत्यऽव्याहतप्रभावा भवति मुमुक्षोरहिंसा। किं कुर्वतः ? निगृह्णतो निरुन्धतः। के ? वाङ्मनसी भाषाचेतसी। कथम् ? यथावत्सम्यक् संक्लेशरहितत्वेन सत्कारलोकमध्यप्रसिद्ध्याद्याकाङ्क्षात्यागेन च। एते वाग्गुप्तिमनोगुप्तिभावने। तथा चरिष्णोः साधुत्वेन पर्यटतः। कम् ? मार्गं पन्थानम्। कथम् ? विधिवच्छास्त्रोक्तविधानेन। एषा ईर्यासमितिभावना। तथाऽऽदाननिक्षेपकृतः। आदानं पुस्तकाद्युपकरणानां ग्रहणं, निक्षेपस्तेषामेव स्थापनम्। आदानं च निक्षेपश्च तौ करोतीत्यादाननिक्षेपकृत् तस्य। कथं कृत्वा ? यथार्हं यदसंयमपरिहारेणादातुं निक्षेप्तुं च योग्यं ज्ञानसंयमाद्युपकरणं, तदनतिक्रमेण। एषाऽऽदाननिक्षेपणसमितिभावना। तथा भोक्तुः साधु भुञ्जानस्य। के ? अन्नपाने। अन्नमोदनादि पानमुदकादि। अन्नं च पानं च ते। किंविशिष्टे ? दृष्टे कल्यत्वे न कल्यत्वेते वेति चक्षुषा निरूपिते। एषाऽऽलोकितपानभोजनभावना। एताः पञ्च॥

एतद्भावनावतां निजानुभावभरनिर्भरमहिंसामहाव्रतं दूरमारोहतीति प्रतिपादयितुमाह—

सम्यक्त्वप्रभुशक्तिसंपदमलज्ञानामृतांशुद्रुति,—
र्निःशेषव्रतरत्नखानिरखिलक्लेशाहिताक्ष्र्याहतिः।
आनन्दामृतसिन्धुरद्भुतगुणामर्त्यागभोगावनी,
श्रीलीलावसतिर्यशः प्रसवभूः प्रोदेत्यहिंसा सताम् ॥३५॥

सम्यक्त्वं प्रभुर्विजिगीषुरिव। तस्य शक्तिसंपत् शक्तित्रयी। अयमर्थो-यथा विजिगीषुः

मन्त्रशक्तिर्मतिबलं कोषदण्डबलं प्रभोः।
प्रभुशक्तिश्च विक्रान्तिबलमुत्साहशक्तिता॥

इति शक्तित्रयेण शत्रूनुन्मूलयति। एवं सम्यक्त्वं कर्मशत्रूनहिंसया अमलज्ञानं शुद्धबोधोऽमृतांशुश्चन्द्र इव जगदाल्हादकत्वात्। तस्य द्रुतिः स्रुतिर्निर्यासः। तथा चोक्तम्—

सर्वेषां समयानां हृदयं गर्भश्च सर्वशास्त्राणाम्।
व्रतगुणशीलादीनां पिण्डः सारोपि चाऽहिंसा॥

व्रतानि रत्नानीवाचिन्त्यप्रभावत्वात् । व्रतानि चरितानि रत्नानि च व्रतरत्नानि । निःशेषाणि समस्तानि च तानि व्रतरत्नानि च, तेषां खानिराकर उत्पत्तिहेतुत्वात् । क्लेशा दुःखानि अहयः सर्पा इव संक्लेशकारणत्वात् । अखिलाः सर्वे च ते क्लेशाहयश्चाखिलक्लेशाहयः । तेषां तार्क्ष्याहतिर्गरुडाघातः । यथा गरुडचंचुताडनेन सर्वे सर्पाः प्रलीयन्ते तथाऽहिंसया सर्वे क्लेशा इत्यर्थः । आनन्दः प्रमोदोऽमृतमिव सर्वैरिष्यमाणत्वात् । तस्य सिन्धुः समुद्रः प्रभवस्थानत्वात् । अद्भुताश्च ते गुणाश्चाद्भुतगुणाः । अमर्त्यानां देवानामगा वृक्षा अमर्त्यागाः कल्पवृक्षाः । अद्भुतगुणा अमर्त्यागा इव संकल्पितार्थसंपादकत्वात् । तेषां भोगावनी देवकुरुप्रमुखभोगभूमिः । यथासौ कल्पवृक्षैः संततं संयुक्ता तथाऽहिंसा जगच्चमत्कारकारिभिस्तपःसंयमादिभिर्गुणैरित्यर्थः । श्रीलीलावसतिर्लक्ष्म्या लीलागृहं निरातङ्कतया सुखावस्थानहेतुत्वात् । यशसः कीर्तेः प्रसवभूर्जन्मभूमिर्यशःप्रसवभूश्च । इत्येवमष्टविशेषणविशिष्टाऽहिंसा प्रोदेति प्रकर्षेणानन्यसामान्यतयोदेत्युल्लसति । केषाम् ? सतां साधूनाम् । इत्यहिंसामहाव्रतम् ॥

अथ द्वादशभिः पद्यैः सत्यव्रतं व्याचिकीर्षुरसत्यादीनां हिंसापर्यायत्वात् तद्विरतिरप्यहिंसाव्रतमेवेति ज्ञापयति—

आत्महिंसनहेतुत्वाद्धिंसैवासूनृताद्यपि ।
भेदेन तद्विरत्युक्तिः पुनरज्ञानुकम्पया ॥ ३६ ॥

भवति । किं तत् ? असूनृताद्यपि अनृतवचनादिकमपि । न केवलं प्राणव्यपरोपणमित्यपिशब्दार्थः । किं भवति ? हिंसैव, नार्थान्तरम् । कस्मात् ? आत्महिंसनहेतुत्वात् । आत्मनो हिंसनं शुद्धपरिणामोपमर्दः। स एव हेतुः कारणं यस्य तद्भावात् । प्रमत्तयोगैकहेतुकत्वादित्यर्थः । यद्येवं तर्हि हिंसाविरतेरर्थान्तरत्वेनानृतादिविरतिवचनमनर्थकं स्यादित्यत्राह— भेदेन हिंसाविरतेः पृथक्त्वेन पुनस्तद्विरत्युक्तिरसूनृतादिनिवृत्तिवचनं क्रियतेऽस्माभिः । कया ? अज्ञानुकम्पया मन्दमतयो मा मुह्यन्त्विति बुद्ध्या । उक्तं च—

आत्मपरिणामहिंसनहेतुत्वात्सर्वमेव हिंसैतत् ।
अनृतवचनादि केवलमुदाहृतं शिष्यबोधार्थम् ॥

सत्यव्रतस्वरूपं निरूपयन्नाह—

अनृताद्विरतिः सत्यव्रतं जगति पूजितम् ।
अनृतं त्वभिधानं स्याद्रागाद्यावेशतोऽसतः ॥ ३७ ॥

जगति लोके पूजितं पूज्यमानं सत्यव्रतं स्यात् । किम्? विरतिर्व्यावृत्तिः । कस्मात्? अनृतादसत्यवाग्योगादात्मपरिणामात् तस्यैव कर्मबन्धनिबन्धनत्वेन वस्तुवृत्त्या परिहार्यत्वात् तन्निमित्तकपौद्गलिकवचनस्य व्यवहारेणैव परिहार्यत्वसमर्थनात् । अनृतं तु स्यात् । किम्? अभिधानम् भाषणम् । कस्य? असतोऽशोभनस्य कर्मबन्धनिमित्तवचनस्येत्यर्थः । कस्मात्? रागाद्यावेशतो रागद्वेषमोहपरिणमनात् ॥

चतुःप्रकारमनृतं सोदाहरणं निरूप्य तत्परिहारं त्रिविधेन विधापयितुमार्याद्वयमाह—

नाकालेस्ति नृणां मृतिरिति सत्प्रतिषेधनं शिवेन कृतम् ।
क्ष्मादीत्यसदुद्भावनमुक्षा वाजीति विपरीतम् ॥ ३८ ॥
सावद्याप्रियगर्हितभेदात्त्रिविधं च निंद्यमित्यनृतम् ।
दोषोरगवल्मीकं त्यजेच्चतुर्धापि तत्त्रेधा ॥ ३९ ॥

( युग्मम् )

तदनृतं सत्प्रतिषेधनासदुद्भावनविपरीतनिन्द्यविकल्पाच्चतुर्धापि चतुर्विधमपि त्रेधा मनोवाक्कायैर्मुमुक्षुस्त्यजेत् । कुतः? दोषोरगवल्मीकं यतः दोषा वक्ष्यन्ते । दोषा उरगाः सर्पा इव बह्वपायत्वात् । तेषां वल्मीकं नाकुः प्रभवनिवासनिबन्धनत्वात् । कथं चतुर्धा? इत्येवं भवति । तावत् सत्प्रतिषेधनं नाम प्रथममनृतम् । कथम्? इत्येवम् । नास्ति । कासौ? मृतिर्मरणम् । केषाम्? नृणां चरमदेहवर्ज्यकर्मभूमिजमनुष्याणाम् । क? अकाले आयुर्भुक्तिक्षयकालादन्यदा । तदसत्, अकालेपि विषवेदनादिना मरणस्य दृश्यमानत्वात् । तदुक्तम्—

विसवेयणरत्तक्खय सत्थगहणाइसंकिलेसेहिँ ।
आहारोस्सासाणं णिरोहओ छिज्जए आऊ ॥

अन्ये त्वेवमाहुः—

मरणं प्राणिनां दृष्टमायुःपुण्योभयक्षयात् ।
तयोरप्यक्षयाद् दृष्टं विषमाऽपरिहारिणाम् ॥

तथा भवत्यसदुद्भावनं नाम द्वितीयमनृतम् । कथम् ? इत्येवं कृत-मुत्पादितम् । किं तत् ? क्ष्मादि क्षितिपर्वतवृक्षादिकम् । केन ? शिवेन महेश्वरेण । तदप्यसत्, प्रमाणबाधितत्वात् । न कदाचिदनीदृशं जगदित्यन्यै-रप्यभिधानाच्च । इतिः प्रकारार्थे । नास्ति सुराणामकाले मृत्युरित्यादि वेद्यम् । तथा विपरीतं नाम तृतीयमनृतं भवति । कथम् ? इति एवम् भवति । कोसौ ? उक्षा गौः । किम् ? वाजी घोटकः । तथा निन्द्यं नाम चतुर्थ-मनृतं भवति । किंविशिष्टम् ? त्रिविधं । कस्मात् ? सावद्याप्रियगर्हितभे-दात् । सावद्यं चाप्रियं च गर्हितं च, तैर्भेदस्तस्मात् ॥

चतुर्विधस्याप्यनृतस्य दोषानाह—

यद्विश्वव्यवहारविप्लवकरं यत्प्राणिघाताद्यघ,—
द्वारं यद्विषशस्त्रपावकतिरस्कारोद्धुराहंकृति ।
यन्म्लेच्छेष्वपि गर्हितं तदनृतं जल्पन्न चेद्रौरव–
प्रायाः पश्यति दुर्गतीः किमिति ही जिह्वाच्छिदाद्यान् कुधीः ४०

यत्सत्प्रतिषेधनाद्यनृतत्रयं भवति । किंविशिष्टम् ? विश्वेत्यादि । विश्वे लौकिकाः शास्त्रीयाश्च व्यवहाराः प्रवृत्तिनिवृत्तयो विश्वव्यवहाराः । विश्वेषां वा वर्णाश्रमाणां व्यवहाराः आचारा विश्वव्यवहाराः । तेषां विप्लवं ना-शमन्यथाभावं वा करोति यत्तदेवम् । तथा यत्सावद्याख्यमनृतं भवति । किंविशिष्टम् ? प्राणिघाताद्यघद्वारम् । प्राणिघात आदिर्येषां चौर्यमैथुना-दीनां तानि प्राणिघातादीनि कर्माणि । तेषामघानि पापानि । तेषां द्वारं प्रवेशमार्गः । तद्यथा—' पृथिवीं खन । स्नाहि शीतोदकेन । पचापू-पम् । प्रसूनमुच्चिनु । चोरोयम् ' इत्यादि । तथा यदप्रियाख्यमनृतं

भवति । किंविशिष्टम् ? विषेत्यादि । विषं च शस्त्रं च पावकश्चाग्निर्विषशस्त्रपावकाः । तेषां **तिरस्कारः** परिभवो निर्लोठनम् । तेनोद्धुरा उत्कटा **अहंकृति**रहंकारो यस्य तत्तथोक्तम् । मोहासह्यदुःखसंतापादिकार्यकारित्वेन विषादित्रयादतिरिक्तमित्यर्थः तथा—

> "पैशून्यहास्यगर्भं कर्कशमसमञ्जसं प्रलपितं च ।
> अन्यदपि यदुत्सूत्रं तत्सर्वं गर्हितं गदितम् ॥ "

इत्येवंविधं **यद्गर्हिता**ख्यमनृतं भवति । किंविशिष्टम् ? **गर्हितं** निन्दितम् । केषु मध्ये ? **म्लेच्छेष्वपि** म्लेच्छैरपि नाद्रियते । किमुतार्यैरित्यपिशब्दार्थः । म्लेच्छा हि सर्वधर्मबहिष्कृताः । तेपि यन्निन्दन्तीत्यर्थः । **तद् षड्विधमप्यनृतं जल्पन्** ब्रुवन् **कुधीः** कुमतिश्चेद्यदि **न पश्यति** नावलोकयति । काः ? **दुर्गती**र्नरकादिगतीः । किंविशिष्टाः ? **रौरवप्राया** रौरवोत्यन्तघोरो नरकविशेषः । स प्रायेण बाहुल्येन यासु ताः । तर्हि **ही** कष्टम् । **किम्** इति कुधीर्न पश्यति । कान् ? **जिह्वाच्छिदाद्यान्** । जिह्वायाश्छिदा छेदनमाद्या येषां विषाग्न्युदकाद्यसहनस्वजनावमाननमित्रविरक्तिसर्वस्वहरणाद्यपायानां तान् । किमितीति हीति च खेदातिशयसूचनार्थौ ।

अद्भुतानुभावभूयस्तया सूनृतवचसो नित्यसेव्यतामुपदिशति—

**विद्याकामगवीशकृत्करिमरिप्रातीप्यसर्पौषधं,**
**कीर्तिस्वस्तटिनी हिमाचलतटं शिष्टाब्दषण्डोष्णगुम् ।**
**वाग्देवीललनाविलासकमलं श्रीसिन्धुवेलाविधुं,**
**विश्वोद्धारचणं गृणन्तु निपुणाः शश्वद्वचः सूनृतम् ॥ ४१ ॥**

**गृणन्तु** भाषन्ताम् । के ? **निपुणाः** सूक्ष्मेक्षिणः । किं तत् ? **वचः** । किंविशिष्टम् ? **सूनृतम्** । कथम् ? **शश्व**न्नित्यम् । किंविशिष्टं तदित्याह— **विद्याकामगवीशकृत्करिं** । विधिना साधिता या सिध्यति सा विद्या कामगवी कामधेनुरिव, कामितार्थसंपादकत्वात् । तस्याः शकृत्करिं वत्सं वत्सेनेव सूनृतवचनस्य संयोगात्कामधेनोरिव विद्यायाः कामितार्थप्रदत्वात् । तदुक्तम्—

**सत्यं वदन्ति मुनयो मुनिभिर्विद्या विनिर्मिताः सर्वाः ।**
**म्लेच्छानामपि विद्याः सत्यभृतां सिद्धिमायान्ति ॥**

तथा अरीत्यादि । **अरिप्रातीप्यं** शत्रुकृतापकारः । स एव **सर्पो**ऽस्वास्थ्यहेतुत्वात् । **तत्रौषधं** चिकित्सितम् । तत्प्रतीकारकमित्यर्थः । तथा कीर्तीत्यादि । **कीर्ति**र्यशः **स्वस्तटिनी** आकाशगङ्गेवात्यन्तनिर्मलत्वादाह्लादकत्वाच्च । तस्या **हिमाचलतटं** हिमवत्प्रस्थः प्रभवप्रसरहेतुत्वात् । तथा **शिष्टाब्जषण्डोष्णगुम्** । शिष्टा विद्याविनीतमतयोऽब्जषण्डानि पद्मवनानीव लोकोपकारकत्वात् । तेषूष्णगुं भास्करं विकासहेतुत्वात् । उष्णा गावः किरणा यस्यासावुष्णगुः सूर्यः । तथा वाग्देवीत्यादि । वाचां देवी **वाग्देवी** सरस्वती । सा **ललना** नितम्बिनीव प्रीतिहेतुत्वात् । तस्या **विलासकमलं** क्रीडाम्भोजं रतिनिमित्तत्वात् । तथा **श्रीसिन्धुवेलाविधुम्** । श्रियो लक्ष्याः सिन्धुवेलायाः समुद्रपालिन्द्या इव विधुश्चन्द्रो विवृद्धिहेतुत्वात् । यत एवंविधषड्विशेषणविशिष्टमतो **विश्वोद्धारचणम्** । विश्वेषां जगतामुद्धारेण विपदुद्धरणेन प्रतीतम् । "तेन वित्तश्चुंचुचणौ" इति चणप्रत्ययः—

किं सूनृतमित्याह—

**सत्यं प्रियं हितं चाहुः सूनृतं सूनृतव्रताः ।**
**तत्सत्यमपि नो सत्यमप्रियं चाहितं च यत् ॥ ४२ ॥**

**सूनृतव्रताः** । सूनृतमेवास्माभिर्वक्तव्यमिति प्रतिपन्नाः । **सूनृतमाहुः** ब्रुवन्ति । किम् ? **सत्यं** सत्युत्पादव्ययध्रौव्यात्मन्यर्थे साधु कुशलं सत्सु वा साधुषु हितं वचः । अविसंवादीत्यर्थः । तथा **प्रियं** श्रोत्रहृदयाल्हादकम् । तथा **हितमुपकारकम्** । **तत्पुनः सत्यमपि** चोरोयमित्यादिवद्यथार्थमपि वचनं **नो सत्यं** स्यात् । यत्किम् ? **यदप्रियं चाहितं च** कर्कशादिवचसामपि मृषाभाषणदोषकारित्वाविशेषात् । तदुक्तम्—

**इह लोके परलोके येऽनृतवचनस्य वर्णिता दोषाः**
**कर्कशवचनादीनां त एव दोषा निबोद्धव्याः ॥**

साधुना सज्जनसौहित्याय समये वक्तव्यमित्यनुशास्ति—

**साधुरत्नाकरः प्रोद्यद्दयापीयूषनिर्भरः ।**
**समये सुमनस्तृप्त्यै वचनामृतमुद्गिरेत् ॥ ४३ ॥**

**उद्गिरे**दुदीरयेत् । कोसौ ? **साधुरत्नाकरः** । साधुः सिद्धिसाधनोद्यतो रत्नाकरः समुद्र इव गाम्भीर्यादिगुणयोगात् । किंविशिष्टः ? **प्रोद्यता** प्रोच्छलता **दयापीयूषे**णानुकम्पामृतेन **निर्भरो** निरन्तरपूर्णः । किमुद्गिरेत् ? **वचनामृतं** वाक्यपीयूषम् । कस्मै ? **सुमनस्तृप्त्यै** देवानामिव सज्जनानां तर्पणार्थम् । क्व ? **समये** प्रस्तावे प्रवचनविषये वा ।

मुमुक्षोर्मौनं स्वार्थाविरोधेन वक्तृत्वं चोपदिशति—

**मौनमेव सदा कुर्यादार्यः स्वार्थैकसिद्धये ।**
**स्वैकसाध्ये परार्थे वा ब्रूयात्स्वार्थाविरोधतः ॥ ४४ ॥**

**आर्यो** गुणैर्गुणवद्भिश्च गम्यमानो मुनिः **सदा मौनमेव कुर्यात्** । न ब्रूयादित्यर्थः । कस्मै ? **स्वार्थैकसिद्धये** स्वार्थस्यैकस्य केवलस्य परार्थनिरपेक्षस्य निष्पत्त्यर्थम् । परार्थाः खलु वाचः । पक्षान्तरमाह—**परार्थे** तु **स्वैकसाध्ये** स्वेनात्मनैकेन साध्ये साधयितुं शक्ये सत्यार्योपि **ब्रूयात्** । केन ? **स्वार्थाविरोधतः** स्वार्थस्यानुपघातेन । उक्तं च—

**मौनमेव हितं पुंसां शश्वत्सर्वार्थसिद्धये ।**
**वचो वातिप्रियं तथ्यं सर्वसत्त्वोपकारि यत् ॥**

तथा—

**धर्मनाशे क्रियाध्वंसे स्वसिद्धान्तार्थविप्लवे ।**
**अपृष्टैरपि वक्तव्यं तत्स्वरूपप्रकाशने ॥**

क्रोधलोभभीरुत्वहास्यप्रत्याख्यानान्यनुवीचिभाषणं चेति पञ्च भावयता सत्यव्रतमुच्चैरुद्द्योत्यमिति शिक्षार्थमाह—

**हत्वा हास्यं कफवल्लोभमपास्यामवद्भयं भित्त्वा ।**
**वातवदपोह्य कोपं पित्तवदनुसूत्रयेद्गिरं स्वस्थः ॥ ४५ ॥**

अनुसूत्रयेत् सूत्रानुसारेणाचक्षीत । कोसौ ? स्वस्थः परद्रव्यव्यासङ्ग-रहितो निर्व्याधिश्च । तल्लक्षणं यथा—

समदोषः समाग्निश्च समधातुमलक्रियः ।
प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते ॥

काम् ? गिरं वाचम् । किं कृत्वा ? हृत्वा निगृह्य । किं तत् ? हास्यं हसनक्रियाम् । किंवत् ? कफवत् श्लेष्माणमिव जाड्यमोहादिहेतुत्वात् । तथापास्य निराकृत्य । कम् ? लोभम् । किंवत् ? आमवदाममिवा-तिदुर्जयविकारत्वात् । आमलक्षणं यथा—

ऊष्मणोल्पबलत्वेन धातुमान्द्यमपाचितम् ।
दुष्टमामाशयगतं रसमामं प्रचक्षते ॥
अन्ये दोषेभ्य एवातिदुष्टेभ्योन्योन्यमूर्छनात् ।
कोद्रवेभ्यो विषस्येव वदन्त्यामस्य संभवम् ॥

तथा भित्त्वा विच्छिद्य । किं तत् ? भयम् । किं वत् ? वातवद्वात-मिव मनोविप्लवादिहेतुत्वात् । तथापोह्य निषिध्य । कम् ? कोपम् । किंवत् ? पित्तवत्पित्तमिव संतापभूयिष्ठत्वात् ।

सत्यमृषाभाषिणोः फलविशेषमाख्यानमुखेन ख्यापयन्नाह—

सत्यवादीह चामुत्र मोदते धनदेववत् ।
मृषावादी सधिक्कारं यात्यधो वसुराजवत् ॥ ४६ ॥

मोदते प्रह्लादते । कोसौ ? सत्यवादी । क ? इहामुत्र चेहलोके परलोके च । किं वत् ? धनदेववद् धनदेवेन तुल्यम् । मृषावादी पुनः सधिक्कारं सगर्हमधो याति । किंवत् ? वसुराजवद्वसुराजेन तुल्यम् । एतदपि कथाद्वयं संप्रदायाद्बोद्धव्यम् ।

“ जनान्तसंमतिन्यासनामरूपप्रतीतिषु ।
सत्यं संभावने भावे व्यवहारोपमानयोः ॥ ”

इति दशप्रकारं सत्यमुदाहरणद्वारेण प्रचिकटयिषुराह—

**सत्यं नाम्नि नरीश्वरो, जनपदे चोरोन्धसि, स्थापने**
**देवोक्षादिषु, दारयेदपि गिरिं शीर्षेण संभावने, ।**

**भावे प्रासु, पचौदनं व्यवहृतौ, दीर्घः प्रतीत्येति ना**
**पल्यं चोपमितौ सितः शशधरो रूपेम्बुजं सम्मतौ ॥ ४७ ॥**

इतिशब्द उदाहरणप्रदर्शनार्थो । दशस्वपि वाक्येषु पृथक् संबध्यते । तथाहि-स्यात् । किं तत् ? सत्यं तथ्यं वचः । क ? नाम्नि । नामविषयं नामसत्यमित्यर्थः । कथम् ? ( १ ) नरीश्वर इति, यथा नरि मनुष्यमात्रे ईश्वर ऐश्वर्याभावेपि व्यवहारार्थमीश्वर इति संज्ञाकरणम् । एवं सर्वत्र योज्यम् । ( २ ) अन्धसि भक्ते चोर इति व्यपदेशो जनपदसत्यं तत्र स्वार्थनियतत्वेन तस्य रूढत्वात् । ( ३ ) अक्षादिषु देवोयमिति न्यसनं स्थापने सत्यम् । स्थापनासत्यमित्यर्थः । अक्षः सामुद्रो द्वीन्द्रियकायविशेषः पाशको वा । आदिशब्देन कर्करादिग्रहः । ( ४ ) दारयेदपि गिरिं शीर्षेण अपि शिरसा पर्वतं भिन्द्यादिति संभावने सत्यं संभावनासत्यमित्यर्थः । वस्तुनि तथाऽप्रवृत्तेपि तथाभूतकार्ययोग्यभावदर्शनादेवमुच्यते । अन्ये पुनरस्य स्थाने संयोजनासत्यमाहुः । यथा चारित्रसारे-" धूपचूर्णवासनानुलेपनप्रघर्षादिषु पद्ममकरहंससर्वतोभद्रक्रौञ्चव्यूहादिषु वा चेतनेतरद्रव्याणां यथाभागविधानसन्निवेशाविर्भावकं यद्वचस्तत्संयोजनासत्यम् । " ( ५ ) भावे प्रास्विति छद्मस्थज्ञानस्य द्रव्ययाथात्म्यादर्शनेपि संयतस्य संयतासंयतस्य वा स्वगुणपरिपालनार्थं प्रासुकमिदमप्रासुकमित्यादि यद्वचस्तद्भावसत्यमित्यर्थः । प्रगता असवः प्राणा यस्मात् तत्प्रासु प्रासुकमित्यर्थः । निरीक्ष्य स्वप्रयताचारो भवत्येवमादिकं वा भावसत्यमऽहिंसालक्षणभावपालनाङ्गत्वात् । ( ६ ) पचेत्यादि । सिद्धेप्योदने लोकव्यवहारानुसरणात् तन्दुलान्पचेति वक्तव्ये ओदनं पचेति वचनं व्यवहारसत्यम् । ( ७ ) दीर्घ इत्यादि ना पुरुषो दीर्घोयमित्यापेक्षिकं वचः प्रतीत्य सत्यमित्यर्थः । प्रतीत्या सत्यं प्रतीतिविशिष्टं सत्यं प्रतीतिसत्यमिति वा व्याख्येयम् । ( ८ ) उपमितौ सत्यमुपमानसत्यं पल्यमिति पल्योपमं चन्द्रमुखी कान्तेत्यादि यथा । ( ९ ) रूपे सत्यं रूपसत्यं सितः शशधर इति, सतोपि चन्द्रस्य लाञ्छने कार्ष्ण्यस्याविवक्षितत्वात् । (१०) संमतौ लोकाविप्रतिपत्तौ सत्यं संमतिसत्यमम्बुजमिति । यथा पङ्काद्यनेककारणत्वेपि पद्मस्याम्बुनि जातमम्बुजमिति व्यपदेशः । इत्थं वा श्लोकाः—

देशेष्टस्थापनानामरूपापेक्षाजनोक्तिषु ।
संभावनोपमाभावेष्विति सत्यं दशात्मना ॥
ओदनोप्युच्यते चोरो राज्ञी देवीति संमता ।
दृषदप्युच्यते देवो दुर्विधोपीश्वराभिधः ॥
दृष्टाधरादिरागापि कृष्णकेश्यपि भारती ।
प्राचुर्याच्छ्वेतरूपस्य सर्वशुक्लेति सा स्तुता ॥
ह्रस्वापेक्षो भवेद्दीर्घः पच्यन्ते किल मण्डकाः ।
अपि मुष्ट्या पिनष्टीन्द्रो गिरीन्द्रमपि शक्तितः ॥
अतद्रूपापि चन्द्रास्या कामिन्युपमयोच्यते ।
चौरे दृष्टेप्यदृष्टोक्तिरित्यादि वदतां नृणाम् ॥
स्यान्मण्डलाद्यपेक्षायां सत्यं दशविधं वचः ।

पत्यं चेत्यत्र चशब्दोनुऽक्तसमुच्चयार्थः । तेनैतदपि संगृहीतं 'यत्तु नवधाऽसत्यमृषारूपमनुभयं वचस्तदपि मार्गाविरोधेन वदतां न सत्यव्रत-हानिरनृतनिवृत्त्यनतिवृत्तेरिति । तथा चोक्तम्—

सत्यमसत्यालीकव्यलीकदोषादिवर्ज्यमनवद्यम् ।
सूत्रानुसारि वदतो भाषासमितिर्भवेच्छुद्धा ॥

तद्यथा—

याचनी ज्ञापनी पृच्छानयनी संशयन्यपि ।
आह्वानीच्छानुकूला वाक् प्रत्याख्यान्यप्यनक्षरा ॥
असत्यमोषभाषेति नवधा बोधिता जिनैः ।
व्यक्ताव्यक्तमतिज्ञानं वक्तुः श्रोतुश्च यद्भवेत् ॥

अत्र विवरणश्लोकात्रयः—

त्वामहं याचयिष्यामि ज्ञापयिष्यामि किंचन ।
प्रष्टुमिच्छामि किंचित्त्वामानेष्यामि च किंचन ॥
बालः किमेष वक्तीति ब्रूत संदेग्धि मे मनः ।
आह्वयाम्येहि भो भिक्षो करोम्याज्ञां तव प्रभो ॥
किंचित्त्वां त्याजयिष्यामि हुंकरोत्यत्र गौः कुतः ।
याचन्यादिषु दृष्टान्ता इत्थमेते प्रदर्शिताः ॥

किंच, अहमयोग्यं न ब्रवीमीत्येतावता सत्यव्रतं पालितमिति मुमुक्षुणा नाश्वसनीयं यावता परेणोच्यमानमप्यसत्यवचनं शृण्वतोऽशुभपरिणामसंभवात्कर्मबन्धो महान्भवतीत्यसत्यस्य वचनमिव श्रवणमपि यत्नतः साधुना परिहार्यम्। तदुक्तम्—

तं[1]व्विवरीदं सच्चं कज्जे काले मिदं सविसए य।
भत्तादिकहाररहिदं भणाहि तं चेव य सुणाहि॥

इति सत्यमहाव्रतम्।

तथैकादशभिः पद्यैरचौर्यव्रतं व्याचिख्यासुः स्तेयदोषख्यापनपुरःसरं तत्परिहारमुपदेष्टुं तावदिदमाह—

**दौर्गत्याद्युग्रदुःखाग्रकारणं परदारणम्।**
**हेयं स्तेयं त्रिधा राद्धुमहिंसामिष्टदेवताम्॥ ४८॥**

**हेयं** त्याज्यं मुमुक्षुणा। किं तत्? **स्तेयं** स्तेनस्य चौरस्य कर्म। कथम्? **त्रिधा** मनोवाक्कायैः। किं कर्तुम्? **आराद्धु**माराधयितुम्। काम्? **अहिंसाम्**। किंविशिष्टाम्? **इष्टदेवताम्**। इष्टा अभिमता इष्टार्था वा देवता देवी। किंविशिष्टं स्तेयम्? **दौर्गत्याद्युग्रदुःखाग्रकारणं** यतः दौर्गत्यं नरकादिगतिर्दारिद्र्यं वा। दौर्गत्यमादिर्येषां वधबन्धाद्यपायानां ते दौर्गत्यादयः। तेषां त एव वा उग्रं रौद्रं दुःखं देहमनस्तापः। तस्याग्रकारणं प्रधानहेतुः। तदुक्तम्—

"वधबन्धयातनाश्च छायाघातं च परिभवं शोकम्।
स्वयमपि लभते चौरो मरणं सर्वस्वहरणं च॥"

इत्यादि। तथा **परदारणम्**। परस्य धनपतेः परमुत्कृष्टं वा दारणं विनाशनम्।

तदप्युक्तम्—

अर्थेपहृते पुरुषः प्रोन्मत्तो विगतचेतनो भवति।
म्रियते कृतहाकारो रिक्तं खलु जीवितं जन्तोः॥

---

१ तद्विपरीतं सत्यं कार्ये काले मितं स्वविषये च।
भक्तादिकथारहितं भण तच्चैव च शृणु॥

तथा—

जीवति सुखं धने सति बहुपुत्रकलत्रमित्रसंयुक्तः ।
धनमपहरता तेषां जीवितमप्यपहृतं भवति ॥

द्रविणापहारः प्राणिनां प्राणापहार इति दर्शयति—

त्रैलोक्येनाप्यविक्रेयानऽनुप्राणयतोऽङ्गिनाम् ।
प्राणान् रायोऽणकः प्रायो हरन् हरति निर्घृणः ॥४९॥

**हरति** मुष्णाति । कोसौ ? **अणको** निकृष्टः पुमान् । कान् ? **प्राणान्** जीवितम् । केषाम् ? **अङ्गिनाम्** । किंविशिष्टः ? **निर्घृणो** निष्करुणो यतः । कथम् ? **प्रायो** बाहुल्येन । किं कुर्वन् ? **हरन्** चोरयन् । कान् ? **रायो** धनानि । किं कुर्वतः ? **अनुप्राणयतोऽ**नुगतं वर्तयतः । कान् ? प्राणान् । किंविशिष्टान् ? **अविक्रेयान्** विक्रेतुमशक्यान् । केन ? **त्रैलोक्येनापि** । यदि कश्चिद्ब्रूते तुभ्यं त्रैलोक्यं ददामि यदि मे स्वप्राणान् ददासीति तथापि न कश्चित्स्वप्राणान्दातुमिच्छतीत्यर्थः । प्राय इति प्रगतपुण्यो वा प्रगतोऽयः पुण्यं यस्मात् । तदुक्तम्—

पापास्रवणद्वारं परधनहरणं वदन्ति परमेव ।
चौरः पापतरोसौ शौकनिकव्याधजारेभ्यः ॥

चौरस्य मातापित्रादयोपि सर्वत्र सर्वदा परिहारमेवेच्छन्तीत्याह—

दोषान्तरजुषं जातु मातापित्रादयो नरम् ।
संगृह्णन्ति न तु स्तेयमषीकृष्णमुखं क्वचित् ॥ ५० ॥

**संगृह्णन्ति** संगोपयन्ति । के ? **मातापित्रादयो** जननीजनकभ्रातृप्रभृतयः । कम् ? **नरम्** । किंविशिष्टम् ? **दोषान्तरजुषं** स्तेयादन्यस्यापराधस्य भक्तारम् । कथम् ? **जातु** कदाचित् ? **न तु** न पुनर्मातापित्रादयोपि **क्वचि**द्देशे काले च नरं संगृह्णन्ति । किंविशिष्टम् ? **स्तेयमषीकृष्णमुखं** चौर्यकजलरसकालवक्त्रम् । तथा चोक्तम्—

अन्यापराधबाधामनुभवतो भवति कोपि पक्षेपि ।
चौर्यापराधभाजो भवति न पक्षे निजोपि जनः ॥

अन्यस्मिन्नपराधे ददति जना वासमात्मनो गेहे ।
मातापि निजे सदने यच्छति वासं न चौरस्य ॥

चौरस्यातिदुःसहदुःखहेतुपातकबन्धं निबोधयति—

भोगस्वाददुराशयाऽर्थलहरीलुब्धोऽसमीक्ष्यैहिकीः,
स्वस्य स्वैः सममापदः कटुतराः स्वस्यैव चामुष्मिकीः ।
आरुह्यासमसाहसं परधनं मुष्णन्नघं तस्कर,—
स्तत्किंचिच्चिनुते वधान्तविपदो यस्य प्रसूनश्रियः॥५१॥

तस्करश्चौरस्तत्किंचिदनिर्वचनीयमघं पापं चिनुते बध्नाति। बधांतविपदो यस्य प्रसूनश्रियः पुष्पसंपदः । किं कुर्वन् ? परधनं मुष्णन्नपहरन् । किं कृत्वा ? आरुह्य चटित्वा । किं तत् ? असमसाहसमसाधारणं स्वजीवितावमाननेन कर्म । किं कृत्वा ? असमीक्ष्यानालोच्य । काः ? आपदो विनिपातान् । कस्य ? स्वस्यात्मनः । कथम् ? समं सह । कैः ? स्वैर्बन्धुभिः । किंविशिष्टाः ? ऐहिकीरिहलोकभवाः । न केवलं ता आमुष्मिकीश्च नरकादिभवाः । कस्य ? स्वस्यैवात्मन एव जनस्य स्वेषाम् । किंविशिष्टाः ? कटुतरा ऐहिकीभ्यः कटुभ्योतिशयेन कटूः । किंविशिष्टः सन् ? अर्थलहरीलुब्धः । अर्थस्य धनस्य लहरी युगपत्प्राचुर्यागमः । तत्र लुब्धो गृध्नुः । कया ? भोगस्वाददुराशया विषयस्वादनदुष्टाशया । वधो जीवितच्छेदोन्ते यासां ता बधान्ताः । ताश्च ता विपदश्च यातनादयः ।

स्तेयतन्निवृत्त्योः फलं दृष्टान्तमुखेनाचष्टे—

श्रुत्वा विपत्तीः श्रीभूतेस्तद्भवेन्यभवेष्वपि ।
स्तेयात्तद्व्रतयेन्माढिमारोढुं वारिषेणवत् ॥ ५२ ॥

व्रतयेन्निवर्तयेत्स्वहितैषी । किं तत् ? तत्स्तेयम् । किं कर्तुम् ? आरोढुं प्रकर्षेण प्राप्तुम् । काम् ? माढिं पूजाम् । किंवत् ? वारिषेणवत् । वारिषेणेन तुल्यम् । किं कृत्वा ? श्रुत्वाऽऽकर्ण्य । काः ? विपत्तीर्विपदः । कस्य ? श्रीभूतेः । कस्मात् ? स्तेयाच्चौर्यात् । क ? तद्भवे तस्मिन्नेव

जन्मनि । न केवलमन्यभवेष्वपि भवान्तरेषु च । एते अपि कथे संप्रदायादवधार्ये ।

भूयोपि स्तेयदोषान् प्रकाशयंस्तद्विरतिं द्रढयति—

**गुणविद्यायशःशर्मधर्ममर्माविधः सुधीः ।**
**अदत्तादानतो दूरे चरेत्सर्वत्र सर्वथा ॥ ५३ ॥**

**सुधीः** सुमतिः **सर्वत्र** देशे काले च **सर्वथा** सर्वेण प्रकारेण **दूरे चरेत्** । अपसरेदित्यर्थः । कस्माद् ? **अदत्तादानतः** परेणादत्तस्य तद्धनस्य ग्रहणात् । किंविशिष्टात् ? गुणेत्यादि । **गुणा**श्च कौलीन्यविनयादयो **विद्या**श्च **यश**श्च **शर्म** च **धर्म**श्च । तेषां **मर्माविधो** लक्षणया सद्यो विनाशनात् । मर्मणि हि विद्धे प्राणी सद्यो म्रियते यथा तथा स्तेये कृते गुणादिभिर्नरस्तत्क्षणे वियुज्यते इत्यर्थः ।

ज्ञानसंयमादिसाधनं विधिना दत्तं गृह्णीयादित्यनुशास्ति—

**वसतिविकृतिबर्हबृसीपुस्तककुण्डीपुरःसरं श्रमणैः ।**
**श्रामण्यसाधनमवग्रहविनाग्राह्यमिन्द्रादेः ॥ ५४ ॥**

**ग्राह्यं** स्वीकार्यम् । किं तत् ? **श्रामण्यसाधनम्** । श्रामण्यस्याध्ययनकायशुद्धिसंयमादेः साधनं सिद्ध्यङ्गम् । कैः ? **श्रमणै**स्तपस्विभिः । किंविशिष्टम् ? वसतीत्यादि । **वसतिः** प्रतिश्रयः । **विकृति**र्गोमयद्रवमृत्तिकादिः । **बर्ह** पिच्छम् । **बृसी** व्रतिनामासनम् । **कुण्डी** कमण्डलुः । वसतिश्च विकृतिश्च बर्ह च बृसी च पुस्तकश्च कुण्डी च । ताः **पुरःसरा** आद्या यस्य तृणास्तरणादेस्तत् तथोक्तम् । कस्माद्ग्राह्यम् ? **इन्द्रादे**र्देवेन्द्रनृपतिप्रमुखात् । केन ? **अवग्रहविधिना** स्वीकरणविधानेन ।

विधिवद्दत्तं गृहीत्वा यथोक्तं चरतः समीहितसिद्धिमभिधत्ते—

**शचीशधात्रीशगृहेशदेवतासधर्मणां धर्मकृतेस्ति वस्तु यत् ।**
**ततस्तदादाय यथागमं चरन्नऽचौर्यचुंचुः श्रियमेति शाश्वतीम्**

**शचीशः** इन्द्र इह हि किल पूर्वादिदिक्त्रयस्याधिपः सौधर्मेन्द्र उत्तरस्याश्चैशानेन्द्रः । **धात्रीशो** भूपतिः । **गृहेशो** वसतिस्वामी । **देवता** क्षेत्राधि-

ष्ठितो भूतादिः । सधर्माणः स्वयूथ्याः साधवः । शचीशश्च धात्रीशश्च गृहेशश्च देवता च सधर्माणश्च । तेषां संबन्धि यथास्वं तत्स्वामिकं यद्वस्तु धर्मकृते धर्मार्थमस्ति भवति तत्ततः शचीशादेरादाय गृहीत्वा यथागममागमानतिक्रमेण चरन्ननुष्ठानं कुर्वन् शाश्वतीमविनाशिनीं श्रियं लक्ष्मीमेति गच्छति साधुः । किंविशिष्टः ? अचौर्यचुञ्चुः स्तेयविरत्या प्रतीतो यतः ॥

शून्यागारविमोचितावासपरोपरोधाकरणभैक्ष्यशुद्धिसधर्माविसंवादलक्षणभावनापञ्चकेन स्थैर्यार्थमचौर्यव्रतं भावयेदित्युपदिशति—

शून्यं पदं विमोचितमुतावसेद्भैक्षशुद्धिमनु यस्येत् ।
न विसंवदेत्सधर्मभिरुपरुन्ध्यान्न परमप्यचौर्यपरः ॥५६॥

आवसेदधिवसेदचौर्यपरस्तृतीयव्रतनिष्ठः साधुः। किं तत् ? पदं स्थानम् । किंविशिष्टम् ? शून्यं निर्जनं गुहागेहादि । उत अथवा विमोचितं परचक्रादिनोद्वासितं पदमावसेत् । तथा यस्येत् प्रयतेत संयमी । कथम् । अनु लक्ष्यीकृत्य । काम् ? भैक्षशुद्धिम् । भिक्षाणां समूहो भिक्षाया आगतं वा भैक्षम् । तस्य शुद्धिः पिण्डशुद्ध्युक्तदोषपरिहारस्तां प्रति । तथा न विसंवदेदिदं तवेदं ममेति विसंवादं न कुर्यादार्यः । कथम् ? सह । कैः ? सधर्मभिः साधर्मिकैः । तथा नोपरुन्ध्यादभ्यर्थनया न संकोचयेदचौर्यपरः । कम् ? परं श्रावकादिम् ।

अस्तेयव्रतस्य भावनाः प्रकारान्तरेण व्याचष्टे—

योग्यं गृह्णन् स्वाम्यनुज्ञातमस्यन् ,
सक्तिं तत्र प्रत्तमप्यर्थवत्तत् ।
गृह्णन् भोज्येप्यस्तगर्धोपसङ्गः,
स्वाङ्गालोची स्यान्निरीहः परस्वे ॥ ५७ ॥

साधुः परस्वे परधने निरीहो निःस्पृहः स्यात् । किं कुर्वन् ? गृह्णन् स्वीकुर्वन् । किं तत् ? योग्यं ज्ञानाद्युपकरणम् । किंविशिष्टं सत् ? स्वाम्यनुज्ञातं तदधिपतिना गृहाणेत्यनुमतम् । एतेनाचारशास्त्रमार्गेण योग्ययाचनं

तत्स्वाम्यनुज्ञातात् ग्रहणं चेति भावनाद्वयं संगृहीतं बोद्धव्यम् । या तु गोचरादिषु गृहस्वाम्यननुज्ञातगृहप्रवेशवर्जनलक्षणा भावना स तत्रैवान्तर्भवत्यननुज्ञातानभ्युपगमाविशेषात् । तथा परस्वे निरीहः स्यात् । किं कुर्वन् ? **अस्यन्** क्षिपन् निराकुर्वन् । काम् ? **सक्तिम्** । क्व ? **तत्र** स्वाम्यनुज्ञया गृहीतेपि योग्ये परानुज्ञां संपाद्य गृहीतेप्यासक्तबुद्धिता इति । सैषा चतुर्थी तथा परस्वे निरीहः स्यात् । किं कुर्वन् ? **गृह्णन्** । किं तत् ? **तद्योग्यं** वस्तु । किंविशिष्टम् ? **अर्थवत्** सप्रयोजनम् । किंविशिष्टमपि ? **प्रत्तमपि** तत्स्वामिना प्रदातुमारब्धमपि । एतत्परिमाणमिदं भवता दातव्यमिति प्रयोजनमात्रपरिग्रहो न पुनर्दाता यावद्ददाति तावद्गृह्णामीति बुद्धिरित्यर्थः । सैषा पञ्चमी । तथा चोक्तम्—

उपादानं मतस्यैव मते चासक्तबुद्धिता ।
ग्राह्यस्यार्थकृतो लानमितरस्य तु वर्जनम् ॥
अप्रवेशोऽमतेऽगारे गृहिभिर्गोचरादिषु ।
तृतीये भावना योग्ययाज्ञा सूत्रानुसारतः ॥

पुनः प्रतिक्रमणशास्त्रोक्तं भावनापञ्चकं सूत्रयितुमाह—भोज्येपीत्यादि । तथा परस्वे निरीहः स्यात् । किंविशिष्टः सन् ? **अस्तगर्द्धो** निराकृतगृद्धिः । क्व ? **भोज्ये** भक्ते पाने च । एतेन भक्तसंतुष्टता पानसंतुष्टता चेति द्वे भावने संगृहीते । अपिशब्दाद्देहेप्यस्तगर्द्धः । देहेऽशुचित्वानित्यत्वादिभावनापर इत्यर्थः । सैषा तृतीया । तथा परस्वे निरीहः स्यात् । किंविशिष्टः सन् ? **अपसङ्गः** सङ्गादपेतः । सैषा परिग्रहनिवृत्तिलक्षणा चतुर्थी । तथा परस्वे निरीहः स्यात् । किंविशिष्टः सन् ? **स्वाङ्गालोची** आत्मानं देहं च भेदेनाध्यवस्यन् इदं शरीरादिकमात्मनो देहनमुपलेपः कर्मकृतं गुरुत्वं नोपकारकारकमिति देहनाख्या । सैषा पञ्चमी । एतदप्युक्तम्—

देहणं भावणं चावि उग्गहं च परिग्गहे ।
संतुट्ठो भत्तपाणेसु तदियं वदमस्सिदो ॥

एतेनैतदप्युक्तं भवति व्रतान्तरेपि शास्त्रान्तरोक्तान्यपि भावनान्तराणि चान्यानि । तत्राद्ये यथा—

मणगुत्तो वचिगुत्तो इरियाकायसंजुदो ।
एसणासमिदिसंजुत्तो पढमं वदमस्सिदो ॥

चतुर्थे यथा—

इत्थिकहा इत्थिसंसग्गी हस्सखेडपलोयणो ।
णियत्तो णियमंहिठिदो चउत्थं वदमस्सिदो ॥

अस्तेयव्रतदृढिमदूराधिरूढप्रौढमहिम्नां परमपदप्राप्तिमाशंसति—

**ते संतोषरसायनव्यसनिनो जीवन्तु यैः शुद्धचि,—**
**न्मात्रोन्मेषपराङ्मुखाऽखिलजगद्दौर्जन्यगर्जद्भुजम् ।**
**जित्वा लोभमनल्पकिल्बिषविषस्रोतः परस्वं शकृन्,**
**मन्वानैः स्वमहत्त्वलुप्तखमदं दासीक्रियन्ते श्रियः ॥ ५८ ॥**

**संतोषो** यावल्लब्धयोग्योपयोगेन सौहित्यम् । संतोषो **रसायनमिव** दीर्घायुरादिगुणहेतुत्वात् । तस्य **व्यसनं** सेवानिर्बन्धस्तद्वन्तः साधवस्ते **जीवन्तु** दयादमत्यागसमाधिलक्षणप्राणान् धारयन्तु । यैः किम् ? **यैर्दासीक्रियन्ते** अदास्यो दास्यकर्मकर्यो विधीयन्ते । काः ? **श्रियः** संपदः । कथं कृत्वा ? **स्वमहत्त्वलुप्तखमदम्** । स्वमहत्वेन निजमहिम्ना लुप्तः छिन्नः खमद आकाशदर्पो यत्र परधननिरीहा आकाशादपि महान्त इति भावः । किं कुर्वाणैः ? **मन्वानैर्मन्यमानैः** । किं तत् ? **परस्वं** परधनम् । किंविशिष्टम् ? **शकृत्** पुरीषम् । पुनः किंविशिष्टम् ? **अनल्पकिल्बिषविषस्रोतः** प्रचुरपातकगरलसरित्प्रवाहम् । किं कृत्वा ? **जित्वाऽभिभूय** । कम् ? **लोभं** गार्द्ध्यम् । किंविशिष्टम् ? शुद्धेत्यादि । **शुद्धचिन्मात्रे** सर्वविवर्तोत्तीर्णाचलचैतन्ये **उन्मेषः** साक्षात्करणप्रणिधानम् । तत्र **पराङ्मुखं** विमुखमशुद्धचिद्विवर्तवर्ति **अखिलजगत्** सर्वबहिरात्मप्राणिगणः । तत्र **दौर्जन्यमपकारकत्वम्** । तेन **गर्जन्**संरम्भभरनिर्भरं निध्वनन् **भुजो** बाहुर्यस्य । जगत्त्रयजेतारमित्यर्थः । इत्यचौर्यमहाव्रतम् ।

अथ पञ्चचत्वारिंशता पद्यैर्ब्रह्मचर्यव्रतं व्याचिकीर्षुस्तन्माहात्म्यव्यावर्णनेन प्ररोचनामुत्पाद्य तत्परिपालनाय मुमुक्षून् नित्यमुद्यमयति—

**प्रादुःषन्ति यतः फलन्ति च गुणाः सर्वेऽप्यखर्वौजसो**
**यत्प्रह्वीकुरुते चकास्ति च यतस्तद्ब्राह्ममुच्चैर्महः।**
**त्यक्त्वा स्त्रीविषयस्पृहादि दशधाऽब्रह्मामलं पालय,**
**स्त्रीवैराग्यनिमित्तपञ्चकपरस्तद्ब्रह्मचर्यं सदा ॥ ५९ ॥**

भो शिवार्थिन्, **तद्ब्रह्मचर्यं** वक्ष्यमाणलक्षणं चतुर्थं व्रतं **सदा** यावज्जीव**मऽमलं** निरतिचारं कृत्वा **पालय** रक्ष त्वम्। उदितोदितं कुर्वित्यर्थः। किंविशिष्टः सन्? **स्त्रीत्यादि।** **स्त्रीषु** मानुषीतिरश्चीदेवीषु तत्प्रतिमासु च **वैराग्यं** रिरंसानिग्रहः। तस्य **निमित्तानि** कारणानि कामदोषभावनादीनि वक्ष्यमाणानि। तेषां **पञ्चकं परं** प्रधानं ज्ञानापेक्षया मुख्यं यस्य स एवम्। किं कृत्वा? **त्यक्त्वा** व्रतयित्वा। किं तत्? **अब्रह्म।** बृंहन्त्यहिंसादीन्यस्मिन्निति ब्रह्म शुद्धस्वात्मानुभूतेः परिणतिः। ततोन्यद् अब्रह्म। मैथुनमिति यावत्। तत्र हिंसादयो दोषाः पुष्यन्ति। मैथुनासेवनप्रवणो हि स्थास्नुचरिष्णून् प्राणिनो हिनस्ति मृषावादमाचष्टेऽदत्तमादत्ते सचेतनमितरं च परिग्रहं गृह्णाति। कतिधा? **दशधा** दशप्रकारम्। कथं कृत्वा? **स्त्रीविषयस्पृहादि।** स्त्रीविषयाः स्त्रीगता रूपरसगन्धस्पर्शशब्दाः। तेषु स्पृहा अभिलाषः। सा आदिर्यस्य वस्तिमोक्षादेस्तत्। देवगुरुसधर्मसाक्षिकं ब्रह्मचर्यव्रतं स्वीकुर्त्येत्यर्थः। तत्किम्? **यतो**यस्मात्**प्रादुःषन्ति** प्रादुर्भवन्ति **फलन्ति च** स्वप्रयोजनसाधका भवन्ति। के? **सर्वे** सकला **गुणा** व्रतशीलादयः संयमविकल्पाः। तथा **यत्प्रह्वीकुरुते** नमयति। कान्? **अखर्वौजसः।** अखर्वमुन्नतमुदितोदितमोजस्तेज उत्साहो वा येषां तान् इन्द्राहमिन्द्रादीनपि किं पुनः प्रतीन्द्रचक्रवर्त्यादीनित्यपिशब्दार्थः। तथा **यतो** यस्माद्धेतोश्च**कास्ति** आत्मानं दर्शयति। किंतत्? तत्प्रसिद्धं **महः** तेजः स्वपरप्रकाशकं रूपम्। किंविशिष्टम्? **ब्राह्मं** ब्रह्मणो ज्ञानस्य शाब्दस्य केवलस्य चेदम्। किंविशिष्टम्? **उच्चैः** प्रकर्षप्राप्तम्। श्रुतकेवलित्वं केवलित्वं चेत्यर्थः।

ब्रह्मचर्यस्वरूपं निरूप्य तत्पालनपराणां परमानन्दप्रतिलम्भमभिधत्ते—

**या ब्रह्मणि स्वात्मनि शुद्धबुद्धे चर्या परद्रव्यमुचः प्रवृत्तिः।**
**तद्ब्रह्मचर्यं व्रतसार्वभौमं ये पान्ति ते यान्ति परं प्रमोदम् ६०**

ते ब्रह्मव्रतपालिनः **परं प्रमोदं** परमानन्दं **यान्ति** प्रतिलभन्ते । **ये** किम् ? **ये पान्ति** रक्षन्ति निरतिचारं कुर्वन्ति । किं तत् ? **तद्ब्रह्मचर्यम्** । किंविशिष्टम् ? **व्रतसार्वभौमम्** । सर्वभूमेरीश्वरः सार्वभौमश्चक्रवर्ती । व्रतानां सार्वभौम इव मुकुटबद्धानामिव तेषां तदायत्तवृत्तित्वात् । यत्किम् ? **या चर्या** । कोर्थः ? प्रवृत्तिरप्रतिहता परिणतिः । कस्य ? **परद्रव्यमुचः** स्वपरशरीरं त्यक्तवतः । क्व ? **ब्रह्मणि** । कोर्थः ? **स्वात्मनि** निजचिद्रूपे । किंविशिष्टे ? **शुद्धबुद्धे** दृष्टश्रुतानुभूतभोगाकाङ्क्षारूपनिदानबन्धादिसमस्तविभावरागादिमलनिर्मुक्तत्वाच्छुद्धे, युगपत्सकलपदार्थसाक्षात्कारसमर्थत्वाद्बुद्धे च । ब्रह्मणि चर्या ब्रह्मचर्यमिति हि नैरुक्ताः । 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति नपुंसकत्वम् । तथा चोक्तम्—

> निरस्तान्याङ्गरागस्य स्वदेहेपि विरागिणः ।
> जीवे ब्रह्मणि या चर्या ब्रह्मचर्यं तदीर्यते ॥

दशप्रकारब्रह्मचर्यसिद्ध्यर्थं दशधाऽब्रह्मप्रतिषेधाय प्रयुङ्क्ते—

**मा रूपादिरसं पिपास सुदृशां मा वस्तिमोक्षं कृथा,**
**वृष्यं स्त्रीशयनादिकं च भज मा मा दा वराङ्गे दृशम् ।**
**मा स्त्रीं सत्कुरु मा च संस्कुरु रतं वृत्तं स्मरस्मार्य मा,**
**वर्त्स्यन्मेच्छ जुषस्व मेष्टविषयान् द्विःपञ्चधा ब्रह्मणे ॥ ६१ ॥**

हे **आर्य**, द्वौ वारौ पंच **द्विःपञ्चधा** दशधा दशप्रकाराय **ब्रह्मणे** मैथुनविरतिव्रतायेदमिदं मा कार्षीरिति समुदायार्थः कथ्यते। अथ प्रत्येकं तदर्थः कथ्यते। भो मुमुक्षो, **मा पिपास** पातुमिच्छ त्वम्। कम्? **रूपादिरसम्**। रस्यतेस्वाद्यते इति रसो रसनेन्द्रियग्राह्यार्थः । रूपमादिर्यस्य रसादेः स रूपादी रूपरसगन्धस्पर्शशब्दग्रामः । स एव रसस्तम् । कासाम् ? **सुदृशां** कामिनीनाम् । चक्षुषा कामिनीनां मुखादिसौन्दर्यं, जिह्वया बिम्बोष्ठरसं, घ्राणेनोच्छ्वसितादि सुरभिगन्धं, त्वगिन्द्रियेण पीनस्तनादिस्पर्शं, श्रोत्रेण च गीतादिशब्दं परिभोक्तुं माभिलषेत्यर्थः । एवमुत्तरत्रापि बोध्यम् । तथा **मा कृथा** मा कुरु त्वम्। कम्? **बस्तिमोक्षं** लिङ्गविकारकरणम् । कस्मै ?

ब्रह्मणे। लिङ्गविकारकरणविरमणब्रह्मचर्यव्रतायेत्यर्थः। एवं सर्वत्र। तथा **मा भज** मा सेवस्व त्वम्। किं तत्? **वृष्यं** शुक्रवृद्धिकरं क्षीरमाषान्नादि। न केवलं, **स्त्रीशयनादिकं च**। कामिन्यङ्गस्पर्शवत् तत्संसक्तशय्यासनादिस्पर्शस्यापि कामिनां प्रीत्युत्पत्तिनिमित्तत्वात्। तथा **मा दा** मा देहि त्वम्। मा व्यापारयेत्यर्थः। काम्? **दृशं** चाक्षुषीं चैतसीं च दृष्टिम्। क? **वराङ्गे** भगे। तथा **स्त्रीं** नारीं **मा सत्कुरु** मा सन्मानय त्वम्। **मा च संस्कुरु** वस्त्रमाल्यादिभिर्मा भूषय त्वं स्त्रियम्। तथा **मा स्मर स्म** त्वम्। किं तत्? **रतं** मैथुनम्। किंविशिष्टम्? **वृत्तं** पूर्वानुभूतम्। तथा ताभिः सह मया क्रीडितमिति मा स्म चिन्तयेत्यर्थः। तथा **मा इच्छ** माभिलष त्वम्। किं तत्? रतम्। किंविशिष्टम्? **वर्त्स्यद्** भविष्यत्। दिव्यस्त्रीभिः सहेत्थमित्थं सुरतं करिष्याम्यहमिति मा काङ्क्षीरित्यर्थः। तथा **मा जुषस्व** मा सेवस्व त्वम्। कान्? **इष्टविषयान्** इच्छया विषयीकृतान् रूपादीन्॥

विषयवर्गस्य मनोविकारकारित्वं मुनिभिरपि दुर्निवारमिति परं तत्परिहारे विनेयं सज्जयति—

**यद्व्यद्धुं घुणवद्वज्रमीष्टे न विषयव्रजः।**
**मुनीनामपि दुष्प्रापं तन्मनस्तत्तमुत्सृज॥ ६२॥**

यन्मनो **व्यद्धुं** वेधितुं विकारयितुं **विषयव्रजो** रूपरसादीन्द्रियार्थग्रामो **न ईष्टे** न शक्नोति। क इव कम्? **घुणवद्वज्रं** कुलिशं काष्ठभक्षकीटको यथा। **तन्मन**श्चित्तं **दुष्प्रापं** दुर्लभं वर्तते। केषाम्? **मुनीनामपि** संयमिनाम्। किं पुनरितरजनानामित्यर्थः। मुनीनामित्यत्र शैषिकी षष्ठी। तथा च शिष्टप्रयोगः। "स्त्रीणां वश्यकरोपायो देवानामपि दुर्लभः।" इति। उपसंहारमाह—यत एवं ततस्मात्तं विषयव्रजमुत्सृज परिहर त्वम्॥

स्त्रीवैराग्यपञ्चकभावनया प्राप्तस्त्रीवैराग्यो ब्रह्मचर्यं वर्धयेति शिक्षयति—

**नित्यं कामाङ्गनासङ्गदोषाशौचानि भावयन्।**
**कृतार्यसङ्गतिः स्त्रीषु विरक्तो ब्रह्म बृंहय॥ ६३॥**

भोः साधो, बृंहय प्रकर्षं नय त्वम् । किं तत्? **ब्रह्म** ब्रह्मचर्यव्रतम् । किंविशिष्टः सन्? **स्त्रीषु विरक्तो** निवृत्ताभिलाषः । कथंभूतो भूत्वा? **कृतार्यसङ्गतिः** तपोज्ञानादिवृद्धैः सह विहितसंवासः । किं कुर्वन्? **नित्यं भावयन्** मुहुश्चिन्तयन् । कानि? **कामाङ्गनासङ्गदोषाशौचानि** । सङ्गः संसर्गः । प्रत्यासत्तेरङ्गनाया एव । अथवा कामाङ्गनाङ्गमासङ्गेति पठनीयम् । कामश्चाङ्गना च सङ्गश्चाङ्गनासंसर्गः । तेषां दोषा अपकारकधर्माः । कामाङ्गनासङ्गदोषाश्चाशौचं चाशुचित्वं तान्येवम् । तथाचोक्तम्—

**मातृस्वसृसुतातुल्यं दृष्ट्वा स्त्रीत्रिकरूपकम् ।**
**स्त्रीकथादिनिवृत्तिर्या ब्रह्म स्यात्तन्मतं सताम् ॥**

अष्टाभिः पद्यैः कामदोषान् व्याचिख्यासुः प्रथमं तावद्योन्यादिरिरंसायाः प्रवृत्तिनिमित्तकथनपुरस्सरं तीव्रदुःखकरत्वं वक्रभणित्या प्रकाशयति—

**वृष्यभोगोपयोगाभ्यां कुशीलोपासनादपि ।**
**पुंवेदोदीरणात्स्वस्थः कः स्यान्मैथुनसंज्ञया ॥ ६४ ॥**

**मिथुनस्य** स्त्रीपुंसयोः कर्म रूढिवशाद्रतिसुखार्थं चेष्टितं मैथुनम् । तत्र संज्ञा वाञ्छा **मैथुनसंज्ञा** । स्त्रीपुंसयोश्चारित्रमोहोदये सति रागविशेषाविष्टयोः परस्परस्पर्शनं प्रतीच्छेत्यर्थः । तथा स्त्रीपुरुषयोः पुरुषयोः स्त्रियोर्वा परस्परेणैकस्य पुंसः स्त्रिया वा यन्मैथुनाभिप्रायेण हस्ताद्यवयवसंघट्टनं तदप्यसावुपचारान्मैथुनार्थः सर्वपरिस्पन्दश्च संभोगश्रृङ्गार इति लोके । तथा चोक्तम्—

**अन्योन्यस्य सचित्तावनुभवतो नायकौ यदिद्धमुदौ ।**
**आलोकनवचनादि स सर्वः संभोगशृङ्गारः ॥**

तस्याश्चाहारादिसंज्ञावत्तीव्रदुःखहेतुत्वमनुभवसिद्धमागमसिद्धं च । तथा ह्यागमः—

**इहं जाहिं बाहिया वि य जीवा पावंति दारुणं दुक्खं ।**
**सेवंतावि य उभये ताओ चत्तारि सण्णाओ ॥**

---

१ इह याभिर्बाधिता अपि च जीवाः प्राप्नुवन्ति दारुणं दुःखम् ।
सेवमाना अपि च उभये ताश्चतस्रः संज्ञाः ॥

अपि च—

**परितप्यते विषीदति शोचति विलपति च खिद्यते कामी ।**
**नक्तंदिवं न निद्रां लभते ध्यायति च विमनस्कः ॥**

लोकेपि—

**उत्कण्ठा परितापो रणरणकं जागरस्तनोस्तनुता ।**
**फलमिदमहो मयाप्तं सुखाय मृगलोचनां दृष्ट्वा ॥**

अपि च—

**अंसणं चयंति दीहं ससंति विरहाणलेण उज्झंति ।**
**सिविणेवि मुणिंदसुहं ण लहंति णियंबिणीमूढा ॥**

एतत्सर्वं मनसि कृत्वेदमाह—**कः स्यात्** ? न कश्चित् । किंविशिष्टः ? **स्वस्थः** सुखी । सर्वोपि नित्यं दुःखमेवानुभवेदित्यर्थः । कया ? **मैथुनसंज्ञया** । किंविशिष्टया ? बहिरङ्गाद्वृष्यभोगादित्रयादन्तरङ्गाच्च पुंवेदोदीरणानिमित्तादुद्भूतया । उद्भूतयेति पदं सामर्थ्यलब्धमत्र योज्यम् । भोगो भोजनम् । उपयोगश्चक्षुरादिभिरनुभूयमानानां सेवनम् । भोगश्चोपयोगश्च भोगोपयोगौ । वृष्याणां कामवर्धनोद्दीपनानां भोगोपयोगौ **वृष्यभोगोपयोगौ,** ताभ्याम् । क्षीरशर्करादीनां भोजनेन रम्योद्यानादीनां च सेवनेनेत्यर्थः । कुशीलाः स्त्र्यादिव्यसनासक्ताः । तेषामुपासनं सेवनं तदधीनतया वृत्तिः **कुशीलोपासनं,** तस्मात् । **अपिः** समुच्चये भिन्नक्रमः । **पुंवेदोदीरणाच्चे**त्यर्थः । पुंसो वेदो योन्यादिरिरंसा संमोहोत्पादनिमित्तं चारित्रमोहकर्मविशेषः पुंवेदः । तस्योदीरणादुद्भवात् । पुंवेदग्रहणं चात्र पुंसो विनेयत्वेन प्रकृतत्वात् । तेन वेदसामान्यलाभात्स्त्रीनपुंसकवेदावपि व्याख्येयौ । तत्र मार्दवास्फुटत्वबहुमदनावेशनेत्रविभ्रमादिसुखपुंस्कामतादिः स्त्रीभाववेदः । तद्विपरीतः पुंभाववेदः । तदुभयमिश्रीभावो नपुंसकभाववेदः । तथा चागमः—

---

१ अशनं त्यजन्ति दीर्घं श्वसन्ति विरहानलेन दह्यन्ते ।
स्वप्नेपि मुनीन्द्रसुखं न लभन्ते नितम्बिनीमूढाः ॥

पणिदरसभोयणाए तस्सुवओगा कुसीलसेवाए ।
वेदस्सुदीरणाए मेहुणसण्णा हवे चउहिँ ॥

बहिरात्मप्राणिगणस्य कामदुःखाभिभवदुर्निवारतामनुशोचति—

संकल्पाण्डकजो द्विदोषरसनश्चिन्तारुषो गोचर,-
च्छिद्रो दर्पबृहद्रदो रतिमुखो ह्रीकञ्चुकोन्मोचकः ।
कोप्युद्यद्दशवेगदुःखगरलः कन्दर्पसर्पः समं,
ही दन्दष्टि हठद्विवेकगरुडक्रोडादपेतं जगत् ॥ ६५ ॥

इष्टाङ्गनादर्शनादिना तां प्रत्युत्कण्ठागर्भो मनोव्यापारः संकल्पः । यन्न-खत्वक्सदृशमुपात्तकाठिन्यं शुक्रशोणितपरिवरणं परिमण्डलं तदण्डम् । अण्ड-मेवाण्डकम् । संज्ञायां कः । संकल्प एवाण्डकं संकल्पाण्डकम् । तत्र जातः संकल्पाण्डकजः । द्वौ रागद्वेषाख्यौ दोषावेव रसने जिह्वे यस्य स द्विदो-षरसनः । इष्टाङ्गनागुणसमर्थनतद्दोषपरिहार्थो विचारश्चिन्ता । चिन्तैव रुषा रोषो यस्य स चिन्तारुषः । गोचरा रूपादिविषयाः । त एव छिद्राणि वल्मीकादिगतप्रवेशरन्ध्राणि यस्य स गोचरच्छिद्रः । दर्पो वीर्योद्रेकः बृहन्महान् रदो दन्तो बृहद्रदो दंष्ट्रा । सा चैकतालुगता । दर्प एव बृहद्रदो यस्यासौ दर्पबृहद्रदः । रतिर्मनसः प्रीत्यावस्थितिः । देशा-दिष्वनौत्सुक्यमिति यावत् । रतिरेव मुखं वक्त्रं यस्य स रतिमुखः । ह्रीर्लज्जा । ह्रीरेव कञ्चुको निर्मोको ह्रीकञ्चुकः । तस्योन्मोचको वियोजको ह्रीकञ्चुकोन्मोचकः । कोप्यपूर्वः । सप्तवेगविषो हि शास्त्रे सर्पः प्रसिद्धः । यदाह वाग्भटः—

" पूर्वे दर्वीकृतां वेगे दुष्टं श्यावीभवत्यसृक् ।
श्यावता तेन वक्त्रादौ सर्पन्तीव च कीटकाः ॥
द्वितीये ग्रन्थयो वेगे तृतीये मूर्धगौरवम् ।
दुर्गंधो दंशविक्लेदश्चतुर्थे ष्ठीवनं वमिः ॥

---

१ पुष्टिदरसभोजनेन तस्योपयोगेन कुशीलसेवया ।
वेदस्योदीरणया मैथुनसंज्ञा भवेच्चतुर्भिः ॥

संधिविश्लेषणं तन्द्रा पञ्चमे पर्वभेदनम् ।
दाहो हिध्मा च षष्ठे तु हृत्पीडा गात्रगौरवम् ॥
मूर्छा विपाकोऽतीसारः प्राप्य शुक्रं तु सप्तमे ।
स्कन्धपृष्ठकटीभङ्गः सर्वचेष्टानिवर्तनम् ॥ ”

इति । तदेवापूर्वत्वमुद्यद्दशेत्यादिना समर्थयते—दुःखमेव गरलं विषं दुःखगरलम् । उद्यन्तः प्रतिक्षणमारोहन्तो दश शोचनादयो वेगा यस्य तदुद्यद्दशवेगं दुःखगरलं यस्यासावुद्यद्दशवेगदुःखगरलः । एवंभूतः कन्दर्पसर्पः कामपन्नगो ही कष्टं दन्दष्टि गर्हितं दशति । गर्हा चात्र वृद्धेष्वप्यतिज्वलनादनौचित्यप्रवृत्ता । किं दन्दष्टि ? जगद् बहिरात्मप्राणिगणम् । कथं कृत्वा ? समं युगपत्सर्वं वा । यल्लोकः—

इच्छि सरासणु कुसुम सरु अंगु ण दीसइ जासु ।
हलितसु मयणमहाभडहु तिहुवणि कवणु ण दासु ॥

अपि च—

अनङ्गः पञ्चभिः पौष्पैर्विश्वं व्यजयतेषुभिः ।
इत्यसंभाव्यमेवैतद्विचित्रा वस्तुशक्तयः ॥

किंविशिष्टम् ? यतोऽपेतमपगतम् । कस्मात् ? हठद्विवेकगरुडक्रोडात् । विवेकः कामदोषादिविवेचनप्रणिधानम् । स एव गरुडस्तार्क्ष्यो विवेकगरुडः । हठन् देदीप्यमानो बलात्कारयुक्तो वा विवेकगरुडः । तस्य क्रोडं भुजद्वयान्तरालभागस्तस्मात् ।

कामस्य दश वेगान्सहेतुकानाह—

शुग्दिदृक्षायतोच्छ्वासज्वरदाहाशनारुचीः ।
समूर्छोन्मादमोहान्ताः कान्तामाप्नोत्यनाप्य ना ॥६६॥

आप्नोति लभते । कोसौ ? ना पुरुषः । काः ? शुगित्यादि दशावस्थाः । किं कृत्वा ? अनाप्य अलब्ध्वा । काम् ? कान्तामिष्टाङ्गनाम् । ( १ ) शुक् शोकः । ( २ ) दिदृक्षा द्रष्टुमिच्छा । ( ३ ) आयतोच्छ्वासो दीर्घमुच्छ्वसनम् । ( ४ ) ज्वरः संतापरूपो व्याधिः । ( ५ )

दाहः सर्वाङ्गीणः परितापः । ( ६ ) अशनारुचिरन्नानभिलाषः । ( ७ ) मूर्छा नष्टचेष्टता । उन्मादो मनोविभ्रमः । ( ९ ) मोहो वैचित्यम् । ( १० ) अन्तो नाशः । मरणमिति यावत् । आयतश्चासावुच्छ्वासश्चायतोच्छ्वासः । अशनस्यारुचिरशनारुचिः । शुक् च दिदृक्षा चायतोच्छ्वासश्च ज्वरश्च दाहश्चाशनारुचिश्चेत्येताः षट् । किंविशिष्टाः? समूर्छोन्मादमोहान्ताः । मूर्छा चोन्मादश्च मोहश्चान्तश्च मूर्छोन्मादमोहान्ताः । सह तैश्चतुर्भिर्वर्तमानाः शुगादयः षट् । ता एता दश दशा अभीष्टकामिनीमलब्ध्वा कामुकः प्राप्नोतीति संबन्धः । उक्तं च—

शोचति प्रथमे वेगे द्वितीये तां दिदृक्षते ।
तृतीये निःश्वसित्युच्चैश्चतुर्थे ढौकते ज्वरः ॥
पञ्चमे दह्यते गात्रं षष्ठे भक्तं न रोचते ।
प्रयाति सप्तमे मूर्छामुन्मत्तो जायतेऽष्टमे ॥
न वेत्ति नवमे किंचिन्म्रियते दशमेऽवशः ।
संकल्पस्य वशेनैव वेगास्तीव्रास्तथान्यथा ॥

लोके त्विमाः कामस्य दशावस्थाः—

आदावभिलाषः स्याच्चिन्ता तदनन्तरं ततः स्मरणम् ।
तदनु च गुणसंकीर्तनमुद्वेगोऽथ प्रलापश्च ॥
उन्मादस्तदनु ततो व्याधिर्जडता ततस्ततो मरणम् ।
इत्थमसंयुक्तानां रक्तानां दश दशा ज्ञेयाः ॥

कामार्तस्य किमप्यकृत्यं नास्तीति ज्ञापयति—

अविद्याशाचक्रप्रस्मरमनस्कारमरुता,
ज्वलत्युच्चैर्भोक्तुं स्मरशिखिनि कृत्स्नामिव चितम् ।
रिरंसुः स्त्रीपङ्के कृमिकुलकलङ्के विधुरितो,
नरस्तन्नास्त्यस्मिन्नहह सहसा यन्न कुरुते ॥ ६७ ॥

अहहेत्यद्भुते खेदे च । अस्मिन् लोके तन्नास्त्यकृत्यं नरः पुमान् सहसा रभसेन यन्न कुरुते । किं चिकीर्षुः ? रिरंसुः क्रीडितुमिच्छुः ।

क ? **स्त्रीपङ्के** योषित्कर्दमे । किंविशिष्टे ? **कृमिकुलकलङ्के** । कृमयो योनिजन्तवः । वात्स्यायनोप्याह—

रक्तजाः कृमयः सूक्ष्मा मृदुमध्याधिशक्तयः ।
जन्मवर्त्मसु कण्डूतिं जनयन्ति तथाविधाम् ॥

कृमीणां कुलं संघातः कृमिकुलम् । तदेव कलङ्को लाञ्छनं यस्य । किंविशिष्टः सन् ? तत्र रिरंसुः संपन्न इत्याह—**विधुरितो** विक्लवीभूतः । क सति ? **स्मरशिखिनि** कामाग्नौ । किंकुर्वति ? **उच्चैरतिशयेन ज्वलति** दीप्यमाने । किं कर्तुमिव ? **भोक्तुं** भक्षयितुमिव । काम् ? **चितं** चेतनाम् । किंविशिष्टाम् ? **कृत्स्नां** निःशेषाम् । केन ज्वलति ? अविद्येत्यादि । मनस्कारश्चित्तप्रणिधानम् । स एव मरुद्वायुर्मनस्कारमरुत् । **अविद्या** देहात्मनोरेकत्वप्रत्ययः । तत्प्रयुक्ता **आशा** भाविविषयाकाङ्क्षा । पक्षे नास्ति विद्या ज्ञानं यासु ता अविद्या अनिर्धारितविशेषाः । आशा दिशः । तासु **चक्रप्रसृमरः** । चक्रेण संघातेन संतानेन पक्षे मण्डलाकारेण प्रसृमरः प्रसरणशीलोऽविद्याशाचक्रप्रसृमरः । स चासौ **मनस्कारमरुच्च** । तेन हेतुना, देदीप्यमाने कामाग्नौ सत्याकुलीभूतः पुमान् कर्दम इव योषिति रन्तुमिच्छुः सर्वमकृत्यं रभसेन करोतीत्यर्थः ।

ग्राम्यसुखोत्सुकबुद्धेर्धनार्जनकर्मसाकल्यश्रमप्रगुणत्वमशेषयोषिदयन्त्रणान्तःकरणत्वं च व्याचष्टे—

आपातमृष्टपरिणामकटौ प्रणुन्नः,
किंपाकवन्निधुवने मदनग्रहेण ।
किं किं न कर्म हतशर्म धनाय कुर्यात्,
क क स्त्रियामपि जनो न मनो विकुर्यात् ॥ ६८ ॥

जनो लोकः किं किं **हतशर्म** नाशितसुखं **कर्म** कृष्यादिव्यापारं धनाय धनं लब्धुं **न कुर्यात्** ? सर्वमपि विदध्यादित्यर्थः । किंविशिष्टः सन् ? **प्रणुन्नः** प्रकर्षेण प्रेरितः । केन ? **मदनग्रहेण** । मदनः कन्दर्पो ग्रहो भूतादिरिव पारतन्त्र्यनिमित्तत्वात् । क प्रणुन्नः ? **निधुवने** मैथुने ।

किंविशिष्टे ? आपातेत्यादि । **आपाते** उपयोगोपक्रमे **मृष्टं** मधुरं सुखवदाभासनाद् आपातमृष्टं, **परिणामे** विपाके रसान्तरानुभवसमये **कटु** दुःखावहत्वाद्–आपातमृष्टपरिणामकटु तस्मिन् । किंवत् ? **किंपाकवत्** किंपाकफले यथा । उक्तं च—

**रम्यमापातमात्रेण परिणामेऽतिदारुणम् ।**
**किंपाकफलसंकाशं तत्कः सेवेत मैथुनम् ॥**

तथा क्व क्व कस्यां कस्यां मानुष्यां देव्यां तिरश्च्यां निर्जीवायां वा **स्त्रियां** तद्व्यक्तौ वा जनो न **विकुर्यात्** । किं तत् ? **मनः** । सर्वस्यां योषिति चित्तं दुरभिसंधि विदध्यादित्यर्थः । तदुक्तम्—

"अभिप्रवृद्धकामस्तन्नास्ति यन्न करोति । श्रूयते हि किल कामपरवशः प्रजापतिरात्मदुहितरि, हरिर्गोपवधूषु, हरः संतनुकलत्रे, सुरपतिर्गौतमभार्यायां, चन्द्रश्च बृहस्पतिपत्न्यां मनश्चकारेति ।

कामाग्नेरचिकित्स्यतामाचष्टे—

**ज्येष्ठज्योत्स्नेऽमले व्योम्नि मूले मध्यन्दिने जगत् ।**
**दहन् कथंचित्तिग्मांशुश्चिकित्स्यो न स्मरानलः ॥ ६९ ॥**

**कथंचित्** केनापि प्रकारेण शीतोदकादिसेचातिरेकेण **चिकित्स्यः** प्रतिकर्तुं शक्यः । दाहदानान्निवर्त्य इत्यर्थः । कोसौ ? **तिग्मांशुः** तीक्ष्णरश्मिस्तपनः । किं कुर्वन् ? **दहन्** दाहार्तं कुर्वन् । किं तत् ? **जगत्** जीवलोकम् । कदा ? **अमले** निरभ्रे **व्योम्नि** अभ्रेऽसति **ज्येष्ठज्योत्स्ने** ज्येष्ठमाससितपक्षे **मूले** मूलनक्षत्रे वर्तमाने **मध्यन्दिने** मध्याह्ने । स हि चण्डांशोरुत्कृष्टस्तपनसमयः । **न** तु कथंचिच्चिकित्स्यः । कोसौ ? **स्मरानलः** कामाग्निस्तस्य शीतोपचारेण प्रत्युत प्रदीप्यत्वात् । यल्लोके—

**हारो जलार्द्रवसनं नलिनीदलानि,**
**प्रालेयशीकरमुचस्तुहिनांशुभासः ।**
**यस्येन्धनानि सरसानि च चन्दनानि,**
**निर्वाणमेष्यति कथं स मनोभवाग्निः ॥**

अपि च—

चन्द्रः पतङ्गति भुजङ्गति हारवल्ली,—
स्रक् चन्दनं विषति मुर्मुरतीन्दुरेणुः ।
तस्याः कुमार भवतो विरहातुरायाः,
किं नाम ते कठिनचित्त निवेदयामि ॥

कामोद्रेकस्य तरसा समग्रगुणग्रामोपमर्दकत्वं निवेदयति—

**कुलशीलतपोविद्याविनयादिगुणोच्चयम् ।**
**दन्दह्यते स्मरो दीप्तः क्षणात्तृण्यामिवानलः ॥ ७० ॥**

**दन्दह्यते** गर्हितं दहति । गर्हा चात्र लौकिकालौकिकगुणग्रामयोरविशेषेण भस्मीकरणादवतरति । कोसौ ? **दीप्तो** ज्वलितः **स्मरः** कामः । कम् ? **कुलादिगुणग्रामम्** । कस्मात् ? **क्षणात्** क्षणमात्रात् । क इव काम् ? **अनलो**ग्निस्**तृण्यां** तृणसंहतिं यथा । **कुलं** संतानक्रमेणागतमाचरणम् । **शीलमाचारः** शौचं **तपः**करणान्तःकरणनियमानुष्ठानम् । **विद्या** ज्ञानम् । **विनय**स्तपःश्रुतादिवृद्धेषु नीचैराचरणम् । **आदि**शब्देन प्रतिभामेधास्मृतिवादित्ववाग्मित्वतेजस्वित्वारोग्यबलवीर्यलज्जादाक्षिण्यादयो गृह्यन्ते । कुलं च शीलं च तपश्च विद्या च विनयश्च । ते आदयो येषां ते कुलादयः । ते च ते **गुणा**श्चोपकारकधर्माः । तेषामुच्चयः संघातः ।

आसंसारप्रवृत्तमैथुनसंज्ञासमुद्भूताखिलदुःखानुभवधिक्काराग्रतः स्मरन्तन्निग्रहोपायमावेदयन्नाह—

**निःसंकल्पात्मसंवित्सुखरसशिखिनानेन नारीरिरंसा,—**
**संस्कारेणाद्ययावद्विगहमधिगतः किं किमस्मिन्न दुःखम् ।**
**तत्सद्यस्तत्प्रबोधच्छिदि सहजचिदानन्दनिष्पन्दसान्द्रे,**
**मज्जाम्यस्मिन्निजात्मन्ययमिति विधमेत्काममुत्पित्सुमेव ॥७१॥**

**विधमे**न्निगृह्णीयात्साधुः । कम् ? **कामम्** । किंविशिष्टम् ? **उत्पित्सुमेव** उत्पत्त्यभिमुखमेव, न तूद्भूतं, तथाभूतस्य तस्याशक्यप्रती कार-

त्वात् ' न कामासक्तस्यास्ति किंचिच्चिकित्सितम् ' इति वचनात् । कथं विधमेत्? इति अनेनोपायेन । धिग् निन्द्योहं, यतोऽस्मिन्संसारे किं किं दुःखं निगोदादियोनिसंभवं नाधिगतो न प्राप्तोहम् । सर्वं तन्मया भुक्तमित्यर्थः । केन हेतुना? अनेन प्रतीयमानेन नारीरिरंसासंस्कारेण स्त्रियां रन्तुमिच्छाभावनया । किंविशिष्टेन ? निरित्यादि । निःसंकल्पा अन्तर्जल्पसंपृक्तोत्प्रेक्षाजालान्निष्क्रान्ता आत्मसंवित् स्वात्मानुभूतिः । सैव तज्जं वा सुखं शर्म । तदेव रसः पारदः । तत्र शिखी ज्वलनस्तदुत्सारकत्वात् । कियन्तं कालम् ? अद्ययावद् वर्तमानसमयावधि । यत एवं तत्तस्मान्मज्जामि ब्रुडामि । कोसौ ? अयं स्वसंवेदनप्रत्यक्षेण प्रतीयमानोऽहम् । कस्मिन्? अस्मिन् स्वसंवेद्यमाने निजात्मनि स्वचिद्रूपे । किंविशिष्टे ? सद्यस्तत्प्रबोधच्छिदि सपदि नारीरिरंसासंस्कारप्राकट्यापनोदके । पुनः किंविशिष्टे ? सहजचिदानन्दनिष्यन्दसान्द्रे । चिद् ज्ञानम् । तदेवानन्दः । सहजो नैसर्गिकश्चासौ चिदानन्दश्च । तस्य निष्यन्दः पुनःपुनराविर्भावः । तेन सान्द्रे घने । इति कामदोषभावना ।

एवं कामदोषान्व्याख्यायेदानीं षड्भिः पद्यैः स्त्रीदोषान् व्याचिख्यासुस्तद्दोषज्ञातृत्वमुखेन पाण्डित्यप्रकाशनाय मुमुक्षुमभिमुखीकुर्वन्नाह—

**पत्यादीन् व्यसनार्णवे स्मरवशा या पातयत्यञ्जसा,**
**या रुष्टा न महत्त्वमस्यति परं प्राणानपि प्राणिनाम् ।**
**तुष्टाप्यत्र पिनष्ट्यमुत्र च नरं या चेष्टयन्तीष्टितो,**
**दोषज्ञो यदि तत्र योषिति सखे दोषज्ञ एवासि तत् ॥७२॥**

हे सखे मित्र, यद्यसि भवसि त्वम् । किंविशिष्टः ? दोषज्ञः । दोषानपकारकधर्माञ्जानानः । क ? तत्र तस्यां प्राङ्निर्दिष्टदोषायां योषिति स्त्रियाम् । तदसि त्वम् । किंविशिष्टः ? दोषज्ञ एव विद्वानेव । वस्तुषु हि यो दोषान् यथावस्थितान् जानाति स दोषज्ञो विद्वानिति प्रसिद्धः । तथा चाभिधानं " विद्वान् विपश्चिद् दोषज्ञः " इति । अहं तु मन्ये, सर्वदूष्यदोषान् जानानोपि यदि स्त्रीदोषान् न जानाति तदा न विद्वान् । यः पुनरन्यत्र दोषान् जानन्नजानन्नपि वा यदि स्त्रीदोषान् जानाति तदा

विद्वानेवेति। तत्र केत्याह—**या** योषित्**पातयति** प्रक्षिपति। कान्? **पत्यादीन्** भर्तृपुत्रपितृगुर्वादीन्। क? **व्यसनार्णवे** श्रेयःप्रत्यावर्तनसमुद्रे। किंविशिष्टा सती? **स्मरवशा**। स्मरे कामे वशः पारतंत्र्यं यस्याः। तथा **याऽसा** परमार्थेन न तु कैतवेन **रुष्टा** कुपिता सती **न परं** न केवलं **प्राणिनां महत्त्वं** माहात्म्यमस्यत्यपनुदति किंतु **प्राणानपि** जीवितमपि। तथा **या तुष्टापि** प्रीतापि सती **पिनष्टि** संचूर्णयति सर्वपुरुषार्थोपमर्द-करत्वात्। कम्? **नरं** पुरुषम्। क? **अत्र** इह लोकेऽ**मुत्र** च परलोके। किं कुर्वती? **चेष्टयन्ती** प्रवर्तयन्ती नरमेव। कस्मात्? **इष्टितः** स्वेच्छातः॥

स्त्रीणां निसर्गवञ्चकत्वेन दुःखैककारणत्वमुपदर्शयन् लोकस्य सततमुग्ध-त्वमुद्भावयति—

**लोकः किं नु विदग्धः किं विधिदग्धः स्त्रियं सुखाङ्गेषु।**
**यद्धुरि रेखयति मुहुर्विश्रम्भं कृन्ततीमपि निकृत्या॥ ७३॥**

**नु** अहो, **लोकः** पृथग्जनः **किं विदग्धो** व्यवहारचतुरः किं वा **विधि-दग्धो** वर्तते इति वितर्क्य पृच्छाम्यहम्। विधिना दैवेन दग्धो मतिभ्रष्टः कृतो विधिदग्धः। विधिर्विहिताचरणं, दग्धो भस्मीकृतोऽस्येति वा। कुत एतत्पृच्छ्यते इत्याह—**यद्**यस्माद्**रेखयति** रेखावतीं करोति गणयतीत्यर्थः। कोसौ? लोकः। काम्? **स्त्रियम्**। क? **धुरि**। केषु? **सुखाङ्गेषु** सुख-साधनेषु प्ररूप्यमाणेषु प्रथमं प्ररूपयतीत्यर्थः। किं कुर्वतीमपि? **कृन्त-तीमपि** छिन्दतीमपि। कम्? **विश्रम्भं** विश्वासम्। कया? **निकृत्या** वञ्चनया। कथम्? **मुहु**र्वारंवारम्॥

स्त्रीचरित्रं योगिनामपि दुर्लक्ष्यमिति लक्षयति—

**परं सूक्ष्ममपि ब्रह्म परं पश्यन्ति योगिनः।**
**न तु स्त्रीचरितं विश्वमतद्विद्यं कुतोन्यथा॥ ७४॥**

**पश्यन्ति** स्वसंवेदनप्रत्यक्षेणानुभवन्ति। के? **योगिनो**ष्टाङ्गयोगभाजो मुमुक्षवः। किं तत्? **ब्रह्म** ज्ञानम्। किंविशिष्टम्। **परं** परमात्मानमित्यर्थः। किंविशिष्टम्? **परमत्यर्थं सूक्ष्ममपि**। मनसोप्यगम्यमपीत्यर्थः। **न तु**

पश्यन्ति योगिनोपि । किं तत् ? **स्त्रीचरितम्** । अत्रोपपत्तिमाह—**अन्यथा** पश्यन्ति चेद्योगिनः स्त्रीचरितं तदा **कुतः** कस्माद्धेतोर्**विश्वं** जगद्वर्तते ? किंविशिष्टम् ? **अतद्विद्यं** स्त्रीचरितज्ञानशून्यं महर्षिपूर्वकत्वात्सर्वविद्यानाम् । श्लोकः—

**मायागेहं ससंदेहं नृशंसं बहुसाहसम् ।**
**कामान्धैः स्त्रीमनो लक्ष्यमलक्ष्यं योगिनामपि ॥**

स्त्रीणां दम्भादिदोषभूयिष्ठतया नरकमार्गाग्रेसरत्वं निवेदयन् दुर्दैवस्य तत्पथप्रस्थानसूत्रधारतां प्रत्याचष्टे—

**दोषा दम्भतमस्सु वैरगरलव्याली मृषोद्यातडिन्,—**
**मेघाली कलहाम्बुवाहपटलप्रावृड् वृषौजोज्वरः ।**
**कन्दर्पज्वररुद्रभालदृगसत्कर्मोर्मिमालानदी,**
**स्त्री श्वभ्राध्वपुरःसरी यदि नृणां दुर्दैव किं ताम्यसि ॥ ७५ ॥**

**दम्भतमस्सु** प्रतारणतिमिरेषु प्रसार्येषु **दोषा** रात्रिः । **वैरगरलव्याली** विद्वेषविषे उद्गार्ये भुजङ्गी । **मृषोद्यातडिन्मेघाली** मृषावादविद्युति चमत्कार्यायां कादम्बिनी । **कलहाम्बुवाहपटलप्रावृट्** युद्धमेघव्यूहे समुद्भाव्ये वर्षा । **वृषौजोज्वरः** । वृषो धर्मः स एव ओजः शुक्रान्तधातुपरमतेजः "ओजस्तु तेजो धातूनां शुक्रान्तानां परं स्मृतम्" इत्यभिधानात् । वृषौजसि संहार्ये ज्वरः । तदुक्तम्—

**ज्वरो रोगपतिः पाप्मा मृत्युरोजोऽशनोऽन्तकः ।**
**क्रोधो दक्षाध्वरध्वंसी रुद्रोर्ध्वनयनोद्भवः ॥**

**कन्दर्पज्वररुद्रभालदृक्** कामज्वरजन्ये त्रिलोचनतृतीयलोचनम् । **असत्कर्मोर्मिमालानदी** सावद्यकर्मतरङ्गपङ्क्तौ क्रियासमभिहारेण प्रवर्त्यायामापगा । एवंविधसप्तविशेषणविशिष्टा **स्त्री** यद्यस्ति । किंविशिष्टा ? **श्वभ्राध्वपुरःसरी** नरकमार्गे पुरोगमा । केषाम् ? **नृणां** पुंसाम् । तर्हि हे **दुर्दैव** दग्धविधे, **किं ताम्यसि** किमात्मानमायासयसि त्वं, तथाविधनार्यैव पुंसां नरके प्रवेशस्य सिद्धत्वात् ।

स्त्रीणां रागद्वेषयोः परां कोटिमादेष्टुमुपपत्तिं दर्शयति—

**व्यक्तं धात्रा भीरुसर्गावशेषौ रागद्वेषौ विश्वसर्गे विभक्तौ ।**
**यद्रक्ता स्वानप्यसून् व्येति पुंसे पुंसोपि स्त्री हन्त्यसून् द्राग्विरक्ता**

व्यक्तमहमेवं मन्ये, **विभक्तौ** विभागेनावस्थापितौ । कौ ? **रागद्वेषौ** प्रेमविरोधौ । केन ? **धात्रा** सृष्टिकृता । क्व ? **विश्वसर्गे** जगतः सृष्टौ । किंविशिष्टौ ? **भीरुसर्गावशेषौ** स्त्रीसृष्टेरुद्वृत्तौ । रागद्वेषमयीः स्त्रियः सृष्ट्वाऽवशिष्टाभ्यां रागद्वेषाभ्यां जगत् स्रष्टा युनक्तिस्मेत्यर्थः । यद्यस्माद् **व्येति** विलभते ददातीत्यर्थः । कासौ ? **स्त्री** । कान् ? **स्वान**ात्मीयानसूनपि प्राणानपि । किं पुनर्धनादिकमित्यपिशब्दार्थः । कस्मै ? **पुंसे** पुरुषाय । किंविशिष्टा सती ? **रक्ता** पुंसि बद्धानुरागा । **विरक्ता** सती पुनः स्त्री **पुंसोप्यसून्** हन्ति संहरति । कथम् ? **द्राग्** विरक्तिसमनन्तरमेव । उक्तं च—

दद्राति रागिणी प्राणान् हरति द्वेषिणी पुनः ।
रागो वा यदि वा द्वेषः कोपि लोकोत्तरः स्त्रियः ॥

सुचरितानां सदाचारविशुद्ध्यर्थं दृष्टान्तमुखेन स्त्रीचरित्रभावनामुपदिशति—

**रक्ता देवरतिं सरित्यवनिपं रक्ताऽक्षिपत्पङ्गुके,**
**कान्तं गोपवती द्रवन्तमवधीच्छित्त्वा सपत्नीशिरः ।**
**शूलस्थेन मलिम्लुचेन दलितं स्वोष्ठं किलाख्यत्पति,—**
**च्छिन्नं वीरवतीति चिन्त्यमबलावृत्तं सुवृत्तैः सदा ॥ ७७ ॥**

**सुवृत्तैः** सुचरितैर**बलावृत्तं** स्त्रीचरितं **सदा** नित्यं **चिन्त्यं** भावनीयम् । कथम् ? इति अनेन संप्रदायगम्यकथात्रयप्रकारेण । तथाहि । **अक्षिपत्** पातयति स्म । कासौ ? ( १ ) **रक्ता** रक्तासंज्ञिता राज्ञी । कम् ? **अवनिपं** राजानम् । किमाख्यम् ? **देवरतिं** देवरतिरिति संज्ञि-

तम् । क ? **सरिति** नद्याम् । किंविशिष्टा सती ? **रक्ता** आसक्ता । क, **पङ्गुके** कुत्सिते पादविकले पुंसि । तथाऽवधीज्जघान । कासौ ? (२) **गोपवती** । कम् ? **कान्तं** पतिम् । किं कुर्वन्तम् ? **द्रवन्तं** पलायमानम् । किं कृत्वाऽवधीत् ? **छित्वा** कर्तित्वा । किं तत् ? **सपत्नीशिरः** प्रतिस्त्रियाः शीर्षम् । तथा (३) **वीरवती स्वोष्ठं** निजमधरं **पतिच्छिन्नं** भर्त्रा खण्डित-**माख्यत्** कथयतिस्म । **किलेत्यागमोक्तौ** । किंविशिष्टम् सन्तं ? **दलितं** खण्डितम् । केन ? **शूलस्थेन** शूले तिष्ठता **मलिम्लुचेनाङ्गारकनाम्ना चौरेण** । इति स्त्रीदोषभावना ।

अथ त्रयोदशभिः पद्यैः स्त्रीसंसर्गदोषान् व्याख्यातुकामस्तासामुपपत्ति-पूर्वकं दूरपरिहार्यत्वमादावनुशास्ति—

**सिद्धिः काप्यजितेन्द्रियस्य किल न स्यादित्यनुष्ठीयते,**
**सुष्ठामुत्रिकसिद्धयेऽक्षविजयो दक्षैः स च स्याद्ध्रुवम् ।**
**चेतःसंयमनात्तपःश्रुतवतोप्येतच्च तावद्भवेद्,**
**यावत्पश्यति नाङ्गनामुखमिति त्याज्याः स्त्रियो दूरतः ॥ ७८ ॥**

**त्याज्याः** परिहार्या मुमुक्षुभिः । काः ? **स्त्रियः** । कस्मात् ? **दूरतः** । कुतो हेतोः **इति** यतः **कापि** काचिदैहिकी पारत्रिकी वा **सिद्धिरिष्टार्थ-**प्राप्तिर्न **स्यात्** । कस्य ? **अजितेन्द्रियस्या**वश्याक्षस्य । **किलेत्यागमोक्तौ** । तथा च नीत्यागमः—

"नाजितेन्द्रियस्य कापि कार्यसिद्धिरस्ति" इति ।

**इति हेतोरनुष्ठीयते** क्रियते । कोसौ ? **अक्षविजय**श्चक्षुरादीनां विशेषेण जयः । कैः ? **दक्षै**रामुत्रिकार्थसाधनोद्यतैः । कथम् ? **सुष्ठु** सुतराम् । कस्मै ? **आमुत्रिकसिद्धये** परलोकार्थसिद्ध्यर्थम् । **स** चाक्षविजयो **ध्रुवं** निश्चितं **स्यात्** । कस्मात् ? **चेतःसंयमना**न्मनोनिरोधात् । **एतच्च** चेतःसंयमनं **तावद्भवेत्** । कस्य ? **तपःश्रुतवतोपि** किं पुनस्तपःश्रुत-रहितस्य । यावत्किम् ? **यावन्न पश्यति** नालोकयति तपःश्रुतवानपि । किं तत् ? **अङ्गनामुखम्** । प्रशस्तमङ्गं यस्याः साऽङ्गना । तस्या वक्त्रम् ।

उपपत्तिमात्रार्थमङ्गनाग्रहणं, स्त्रीमात्रसंसर्गेपि सद्वृत्तविप्लवोपलम्भात्। अत एव त्याज्याः स्त्रिय इति सामान्येनोक्तम्। तथा चोक्तम्—

द्वयमेव तपःसिद्धौ बुधाः कारणमूचिरे।
यदनालोकनं स्त्रीणां यच्च संग्लापनं तनोः॥

कामिनीकटाक्षनिरीक्षणादिपरम्परया पुंसस्तन्मयत्वपरिणतिमावेदयति—

**सुभ्रूविभ्रमसंभ्रमो भ्रमयति स्वान्तं नृणां धूर्तवत्,**
**तस्माद्व्याधिभरादिवोपरमति व्रीडा ततः शाम्यति।**
**शङ्का वन्हिरिवोदकात्तत उदेत्यस्यां गुरोः स्वात्मवद्,**
**विश्वासः प्रणयस्ततो रतिरलं तस्मात्ततस्तल्लयः॥ ७९॥**

**भ्रमयति** अन्यथा वृत्तिं करोति व्याकुलयति वा। कोसौ? **सुभ्रूविभ्रमसंभ्रमः**। शोभने दर्शनमात्रान्मनोहरणक्षमे भ्रुवौ यस्याः सा सुभ्रूर्वराङ्गना। तस्या विभ्रमो रागोद्रेकाद् भ्रूपर्यन्तविक्षेपः। तत्र संभ्रमो निरीक्षणादरः। किम्? **स्वान्तं** मनः। केषाम्? **नृणां** पुंसाम्। किंवत्? **धूर्तवत्**। धत्तूरकोपयोगो यथा। **तस्मा**त्तज्जन्यस्वान्तभ्रमपरिणामा**दुपरमति** निवर्तते। कासौ? **व्रीडा** लज्जा। कस्मादिव? **व्याधिभरादिव** रोगोद्रेकतो यथा। **ततो** व्रीडोपरमणात् **शाम्यति** निर्वाति। कासौ? **शङ्का** भयं, "कामातुराणां न भयं न लज्जा" इत्यभिधानात्। क इव कस्मात्? **वह्निरिवोदका**दग्निर्यथा जलात्। **ततः** शङ्काशमना**दुदेति** उद्गच्छति। कोसौ? **विश्वासो** विश्रम्भः। कस्याम्? **अस्यां** सुभ्रुवि। कस्मात्केवेत्याह—**गुरो**रध्यात्मतत्त्वोपदेशकात् **स्वात्मव**न्निजात्मनि यथा। अस्यामित्याद्युत्तरत्रापि योज्यम्। **ततो** विश्वासोद्गमनाद्भवति। कोसौ? **प्रणयः** प्रेमपरिचयः। कस्याम्? अस्याम्। किंवत्? गुरोः स्वात्मवत्। तस्मात्प्रणयभावाद्भवति। कासौ? **रतिरस्यां** तद्वदेव। कथं कृत्वा? **अलं** पर्याप्तम्। **ततो** रतिपर्याप्तीभावाद्भवति। कोसौ? **तल्लयः**। तस्यां सुभ्रुवि गुरोः स्वात्मनीव लयः श्लेषः। समरसीभाव इत्यर्थः। उक्तं च—

लब्धायतिप्रगल्भा रतिकर्मणि पण्डिता विभुर्दक्षा।
आक्रान्तनायकमना निर्व्यूढविलासविस्तारा॥

सुरते निराकुलासौ द्रवतामिव याति नायकस्याङ्गे ।
न च तत्र विवेक्तुमलं कोयं काहं किमेतदिति ॥

अपि च—

समरसरसरंगु गमिण जिह रइया वज्झंति ।
समरसरसरंगुग्गमिण तिह जोइय सिज्झंति ॥

कामिनीकटाक्षनिरीक्षणस्यापातमात्ररमणीयत्वपरिणामात्यन्तदारुणत्वे वक्रभणित्युपपत्त्या प्रतिपादयति—

चक्षुस्तेजोमयमिति मतेप्यन्य एवाग्निरक्ष्णो,—
रेणाक्षीणां कथमितरथा तत्कटाक्षाः सुधावत् ।
लीढा दृग्भ्यां ध्रुवमपि चरद्विष्वगप्यप्यणीयः,
स्वान्तं पुंसां पविदहनवद्दग्धुमन्तर्ज्वलन्ति ॥ ८० ॥

वर्तते । कोसौ ? अग्निः । कयोः ? अक्ष्णोर्लोचनयोः । कासाम्? एणाक्षीणां कामिनीनाम् । किंविशिष्टः ? अन्य एव भासुररूपोष्णस्पर्शगुणयोगित्वसंयुक्तबाह्यस्थूलस्थिरमूर्तद्रव्यदाहित्वलक्षणादग्नेर्विलक्षण एव । क ? चक्षुस्तेजोमयमिति मतेपि । चक्षुस्तैजसं रश्मिवत्त्वात्प्रदीपवदिति वैशेषिक दर्शने । अपिशब्दादभ्युपगमसिद्धान्ताश्रयणेन विचार्यमाणे इति लक्षयति । इतरथा अन्यश्चेन्न स्यात्तदा कथमन्तर्ज्वलन्ति अध्यात्मं दीप्यन्ते । के ? तत्कटाक्षा एणाक्षीणामपाङ्गनिरीक्षणानि । किंवत् ? पविदहनवद्वज्राग्निवत् । किं कर्तुम् ? दग्धुं भस्मीकर्तुम् । किं तत् ? स्वान्तं मनः । केषाम् ? पुंसाम् । किंविशिष्टमपि ? ध्रुवमपि नित्यरूपतयाऽविकार्यमपि, तथा चरद्विष्वगपि समन्तादलातचक्रवद्भ्रमदपि । तथाप्यऽणीयः परमाणोरप्यतिशयेन सूक्ष्ममपि, योगिभिरपि दुर्लक्ष्यत्वात् । किंविशिष्टाः सन्तः? लीढा आस्वादिताः । काभ्याम् ? दृग्भ्यां चक्षुर्भ्याम् । किंवत् ? सुधावदमृतमिव ॥

कामिन्याः कटाक्षनिरीक्षणद्वारेण तत्क्षणान्नरहृदये स्वरूपाभिव्यक्तिकर्तृत्वशक्तिं विदग्धोक्त्या प्रकटयति—

**हृद्यभिव्यञ्जती सद्यः स्वं पुंसोऽपाङ्गवल्गितैः ।**
**सत्कार्यवादमाहत्य कान्ता सत्यापयत्यहो ॥ ८१ ॥**

**अहो** कष्टमाश्चर्यं वा, **सत्यापयति** सत्यं करोति । कासौ ? **कान्ता** प्रमदा । कम् ? **सत्कार्यवादम्** ।

**असदकरणादुपादानग्रहणात् सर्वसंभवाभावात् ।**
**शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्यम् ॥**

इति सांख्यमतम् । कथम् ? **आहत्य,** हठान्न प्रमाणबलात् । किं कुर्वती ? **अभिव्यञ्जती** आविर्भावयन्ती । कम् ? **स्वमात्मानम्** । क्व ? **हृदि** । कस्य ? **पुंसः** । कथम् ? **सद्यस्तत्क्षणात्** । प्रेक्षकजनस्य मनः स्वरूपध्यानाविष्टं कुर्वतीत्यर्थः । कैः ? **अपाङ्गवल्गितैर्नयनान्तपातैः** ॥

कामिनीकटाक्षनिरीक्षणपराणां युक्तायुक्तविवेचनशून्यतां प्रभूतभवानुबन्धिनीं वक्रभणित्योपपादयति—

**नूनं नृणां हृदि जवान्निपतन्नपाङ्गः,**
**स्त्रीणां विषं वमति किंचिदचिन्त्यशक्ति ।**
**नो चेत्कथं गलितसद्गुरुवाक्यमन्त्रा,**
**जन्मान्तरेष्वपि चकास्ति न चेतनाऽन्तः ॥ ८२ ॥**

**नूनमहमेवं मन्ये, वमत्युद्गिरति** । कोसौ ? **अपाङ्गो** नेत्रत्रिभागाञ्चलः । कासाम् ? **स्त्रीणाम्** । किं तत् ? **विषम्** किंविशिष्टम् ? **किंचिद्**लौकिकम् । पुनः किंविशिष्टम् ? **अचिन्त्यशक्ति** अतर्क्यसामर्थ्यं यतः । किं कुर्वन् ? **निपतन्** चक्षुर्द्वारेण प्रतिफलन् । क्व ? **नृणां हृदि** पुंसां चेतसि । कस्मात् ? **जवाद्**वेगात् । **नो चेत्** तथा यदि न भवति तर्हि **कथं न चकास्ति** न प्रकाशते । कासौ ? **चेतना** संवित् । कथम् ? **अन्तः** अध्यात्मम् । केषु ? **जन्मान्तरेष्वपि** न केवलं तद्भवेऽन्यभवेष्वपि । किंविशिष्टा सती ? **गलितसद्गुरुवाक्यमंत्रा** सद्गुरुवाक्यमेव मन्त्रो विषापहारक्षमाक्षरसमूहः गलितः प्रच्युतो भ्रष्टप्रभावत्वं गतो वा सद्गुरुवाक्यमन्त्रो यस्याः सैवम् ॥

संयमसेविनां चित्तं येन तेन निरीक्षणवचनादिप्रकारेणान्तर्निपत्य स्त्रिया विकार्यमाणं दुःखप्रतीकारं भवतीति भीत्युत्पादनमुखेन सुतरां तत्परिहारे तान् जागरयति—

**चित्रमेकगुणस्नेहमपि संयमिनां मनः।**
**यथातथा प्रविश्य स्त्री करोति स्वमयं क्षणात् ॥ ८३ ॥**

**चित्रमा**श्चर्यं वर्तते, **करोति स्त्री** । किं तत् ? **संयमिनां** संयमाराधकानां **मन**श्चित्तम् । किंविशिष्टम् ? **स्वमयं** स्वरूपात्मकम् । कस्मात् ? **क्षणाद्**चिरात् । किं कृत्वा ? **प्रविश्य** अन्तः संक्रम्य । कथम् ? **यथातथा** येन तेन प्रकारेण । किंविशिष्टमपि ? **एकगुणस्नेहमपि** । एक उत्कृष्टो गुणेषु सम्यग्दर्शनादिषु स्नेहोनुरागो यस्य तदेवम् । अथवा एकगुणे एकत्वे स्नेहो यस्य तत् । एकत्वरसिकमित्यर्थः । विरोधाभासपक्षे तु " न जघन्यगुणानाम् " इत्यभिधानादेकगुणस्नेहस्य केनापि सह बन्धो न स्यादिति द्रष्टव्यम् ॥

अल्पशोपि स्त्रीसंपर्कः संयतस्य स्वार्थभ्रंशं करोतीति शिक्षार्थमाह—

**कणिकामिव कर्कट्या गन्धमात्रमपि स्त्रियाः ।**
**स्वादुशुद्धां मुनेश्चित्तवृत्तिं व्यर्थीकरोत्यरम् ॥ ८४ ॥**

**व्यर्थीकरोति** । विगतो विरुद्धो वार्थः प्रयोजनं कर्मक्षपणं मण्डकाद्युत्पादश्च यस्याः सा व्यर्था । अव्यर्थां व्यर्थां करोति । किंतत् कर्तृ ? **गन्धमात्रमपि** अल्पमप्यालोकनस्पर्शनवचनादिकम् । पक्षे घ्राणग्राह्यो गुणो गन्धः । पक्षद्वयेप्यसावेव वा । कस्याः ? **स्त्रियाः** । काम् ? **चित्तवृत्तिं** मनःप्रवृत्तिम् । कस्य ? **मुनेः** । किंविशिष्टाम् ? **स्वादुशुद्धां** सानन्दवीतरागाम् । पक्षे मधुरशुभ्रां च । कथम् ? **अरं** क्षिप्रम् । कामिव ? **कणिकामिव** गोधूमचूर्णं यथा कर्कट्या एर्वारोर्गन्धमात्रमपि व्यर्थीकरोति तथा स्त्रिया अपि ।

स्त्रीसांगत्यदोषं दृष्टांतेन स्पष्टयन्नाह—

**सत्त्वं रेतश्छलात्पुंसां घृतवद् द्रवति द्रुतम् ।**
**विवेकः सूतवत्क्वापि याति योषाग्नियोगतः ॥ ८५ ॥**

**द्रवति** विलीयते । किं तत् ? **सत्त्वं** मनोगुणः । केषाम् ? **पुंसाम्** । कस्मात् ? **रेतश्छला**च्छुक्रव्याजात् । कस्मात् ? **योषाग्नियोगतो वह्नेरिव** स्त्रियाः संपर्कात् । किंवत् ? **घृतवद्** घृतेन तुल्यम् । कथम् ? **द्रुतं** झटिति । तथा **विवेको** युक्तायुक्तविवेचनज्ञानम् । **क्वापि** क्वचिदज्ञायमाने स्थाने **याति** गच्छति । किंवत् ? **सूतवत्** पारदेन तुल्यम् ॥

कामिनीचेष्टाविशेषो महामोहावेशं करोतीति वक्रभणित्या बोधयति—

**वैदग्धीमयनर्मवक्रिमचमत्कारक्षरत्स्वादिमाः,**
**सभ्रूलास्यरसाः स्मितद्युतिकिरो दूरे गिरः सुभ्रुवाम् ।**
**तच्छ्रोणिस्तनभारमन्थरगमोद्दामक्वणन्मेखला,—**
**मञ्जीराकुलितोपि मङ्क्षु निपतेन्मोहान्धकूपे न कः ॥ ८६ ॥**

वैदग्धीरसिकचेष्टा प्रकृता अनयोरिति वैदग्धीमयौ नर्म स्वैरिः वक्रिमा कौटिल्यम् । नर्म च वक्रिमा च नर्मवक्रिमाणौ । वैदग्धीमयौ च तौ नर्मवक्रिमाणौ च **वैदग्धीमयनर्मवक्रिमाणौ** । ताभ्यां **चमत्कारो** विस्मयावेशः । तेन च **क्षरन्निव** स्रवन्निव **स्वादिमा** माधुर्यं श्रोत्रहृदयाल्हादकत्वं यासां तास्तथोक्ताः । भ्रुवोर्लास्यं मसृणनृत्यं **भ्रूलास्यम्** । तस्य **रसः** । सह तेन वर्तमानाः । स्मितद्युतिमीषद्धसितकान्तिं किरन्ति विक्षिपन्तीतस्ततः प्रसारयन्तीति **स्मितद्युतिकिरः** । एवंभूताः **सुभ्रुवां** कामिनीनां **गिरो** वाचो **दूरे** विप्रकृष्टे तिष्ठन्तु । किमेताभिरत्यन्तमोक्षमार्गप्रतिबन्धिनीभिरत्रोक्ताभिरित्यर्थः । किं पुनरेवमन्यदत्र वक्तव्यमस्तीत्याह—**को न निपते**न्नियतं गच्छेत् । क ? **मोहान्धकूपे** । मोहस्तत्त्वानवबोधोऽन्धकूप इव दुःसहदुस्तरत्वात् । कथम् ? **मङ्क्षु** तत्क्षणे । किंविशिष्टोपि ? तदित्यादि । श्रोणिः कटी । स्तनौ कुचौ । श्रोणिश्च स्तनौ च श्रोणिस्तनम् । तासां सुभ्रुवां श्रोणिस्तनं **तच्छ्रोणिस्तनम्** । तस्य **भारो** गुरुत्वम् । तेन **मन्थरो** मन्दो **गमो** गमनम् । तेनोद्दाममुदारं क्वणन्ति रणझणत्कारं कुर्वन्ति **मेखलामञ्जीराणि** रशनानूपुराणि । **तैराकुलितो** विक्षिप्तमनाः किं पुनस्तादृशीभिस्तद्गीर्भिरित्यपिशब्दार्थः ॥

स्त्रीसंकथादोषं कथयति—

**सम्यग्योगाग्निना रागरसो भसीकृतोप्यहो ।**
**उज्जीवति पुनः साधोः स्त्रीवाक्सिद्धौषधीबलात् ॥८७॥**

**अहो** आश्चर्यं, **साधोः** सिद्धिं साधयतः पुंसः सम्बन्धी **रागरसो** राग एव रसः पारदः । **उज्जीवति** उत्कृष्टं प्राणान् धारयति । कथम्? **पुनः** । कस्मात्? **स्त्री**त्यादि । स्त्रियावाक् संलापः **स्त्रीवाक्** । सैव **सिद्धौषधी** रसोज्जीवनसमर्थौषधिः । तच्छक्तिवशात् । किंविशिष्टोपि? **भसीकृतोपि** दग्धोपि । केन? **सम्यग्योगाग्निना** समीचीनसमाधिना सम्यक् प्रयोग-वन्हिनेव ।

वरवर्णिनीपरिरम्भानुभावं भावयति—

**पश्चाद्बहिर्वरारोहादोःपाशेन तनीयसा ।**
**बध्यतेन्तः पुमान् पूर्वं मोहपाशेन भूयसा ॥ ८८ ॥**

पश्चान्मोहपाशबन्धनादूर्ध्वं **तनीयसा** तनुतरेण **वरारोहादोःपा-शेन**ोत्तमस्त्रीभुजरज्ज्वा **पुमान्** बहिः शरीरदेशे बध्यते नियंत्र्यते वरारो-हया आलिङ्ग्यते इत्यर्थः । वर उत्कृष्ट आरोहो नितम्बोस्या असौ वरारोहा । अन्तरध्यात्मं पुनः **पूर्वं** वरारोहादोःपाशबन्धनात्प्राक् **पुमान्** बध्यते । केन? **भूयसा** महता **मोहपाशेन** ॥

स्त्रीदृश्यादिदोषानुपसंगृह्णन्नाह—

**दृष्टिविषदृष्टिरिव दृक्कृत्यावत्संकथाग्निवत्सङ्गः ।**
**स्त्रीणामिति सूत्रं स्मर नामापि ग्रहवदिति च वक्तव्यम् ॥८९॥**

भोःसाधो, **स्मर** अध्येहि त्वम् । किं तत्? **सूत्रं** नानार्थसूचनप्रधानं वाक्यम् । कथम्? **इति** एवंभूतम् । भवति । कासौ? **दृग्** दृष्टिः । कासाम्? **स्त्रीणाम्** । केव? **दृष्टिविषदृष्टिरिव** सर्पविशेषचक्षुर्व्यापारो यथा सद्यः सत्त्वोपमर्दकत्वात् । तथा स्त्रीणां **संकथा** मिथो भाषणं भवति । किंवत्? **कृत्यावद्** विद्याविशेषसदृशी सहसा संयमप्राणहरत्वात् । तथा स्त्रीणां

सङ्गः शरीरस्पर्शो भवति। किंवत्? अग्निवत् संयमरत्नभस्मीकरणात्। न केवलमेवंविधं सूत्रं स्मर, किंतु वक्तव्यं च सूत्रातिरिक्तवचनं च स्मर त्वम्। कथम्? इति एवं—भवति। किं तत्? नामापि संज्ञापि स्त्रीणाम्। किं पुनर्दृष्ट्यादिकमित्यपिशब्दार्थः। किंवत्? ग्रहवद् भूतादिना तुल्यम्।

स्त्रीसंसर्गदोषानुपसंहरन्नाह—

**किं बहुना चित्रादिस्थापितरूपापि कथमपि नरस्य।**
**हृदि शाकिनीव तन्वी तनोति संक्रम्य वैकृतशतानि ॥ ९० ॥**

**किं बहुना।** अलं बहुवचनेनेत्यर्थः। यतस्तनोति स्फीतीकरोति। कासौ? **तन्वी** ललना। कानि? **वैकृतशतानि** बहून्विकारान्। कस्य? **नरस्य।** किं कृत्वा? **संक्रम्य** संचर्य। क्व? **हृदि।** केव? **शाकिनीव।** कथम्? **कथमपि** केनापि प्रज्ञापराधप्रकारेण। किंविशिष्टापि? **चित्रादिस्थापितरूपापि** चित्रपुस्तकाष्ठादिष्वारोपिताकारापि। किं पुनर्मुख्यरूपेत्यपिशब्दार्थः। वैकृतशतानि—

खंधो खंधो पभणइ लुंचइ सीसं ण याणए किंपि।
गयचेयणो हु विलवइ उड्ढं जोएइ अह ण जोएइ॥

इत्यादीनि मन्त्रमहोदधौ शाकिन्याः कथितानि। स्त्रियास्तु प्राक्प्रबन्धेन इति स्त्रीसंसर्गदोषभावना॥

अथैवं स्त्रीसङ्गदोषान् व्याख्यायेदानीं पञ्चभिर्वृत्तैस्तदशुचित्वं प्रपञ्चयिष्यन् सामान्यतस्तावत्केशपाशवक्त्राकृतीनामाहार्यरामणीयकसद्योविपर्याससंपादकत्वं मुमुक्षूणां निर्वेदनिदानत्वेन मुक्त्युद्योगानुगुणं स्यादित्यासूत्रयति—

**गोगर्भुद्भ्यजनैकवंशिकमुपस्कारोज्ज्वलं कैशिकं,**
**पादूकृद्गृहगन्धिमास्यमसकृत्ताम्बूलवासोत्कटम्।**
**मूर्तिश्चाजिनकृद्दृतिप्रतिकृतिः संस्काररम्या क्षणाद्,**
**व्यांजिष्यन्न नृणां यदि स्वममृते कस्तर्ह्युदस्थास्यत ॥ ९१ ॥**

**तर्हि** तदा **क उदस्थास्यत** उद्यममकरिष्यत्। क्व **अमृते** मोक्षवि-

षये। मोक्षार्थासु क्रियासु न कश्चित्प्रावर्तिष्यतेत्यर्थः। यदि किम्? **यदि न व्यांजिष्यत्** प्रकटमकरिष्यत्। किं तत् कर्तृ? **कैशिकं** केशसमूहः। किंविशिष्टम्? **उपस्कारोज्ज्वलमु**पस्कारेणाभ्यङ्गस्नानधूपनादिप्रतियत्नेनोज्ज्वलं दीप्तम्। कम्? **स्वमात्मानम्**। किंविशिष्टम्? गवित्यादि। गवामनड्वाहीनां गर्मुतो मक्षिकाः। तासां व्यजनं विक्षेपणं तालवृन्तं **गोगर्मुद्व्यजनम्**। तस्यैक**वंशिकं** सगोत्रं तेन समानं, जुगुप्सास्पदत्वात्। केषामग्रे? **नृणाम्**। नार्यश्च नरश्च नरस्तेषाम्। स्त्रीपुंसानामित्यर्थः। कस्मात्? **क्षणादचिरात्**। पुंसामग्रे स्वीयः स्त्रैणश्चोपस्कारोज्ज्वलः केशकलापः स्त्रीणां चाग्रे स्वीयः पौंस्नश्च स्वं गोगर्मुद्व्यजनैकवंशिकं यदि सपदि नाप्रकटयिष्यदित्यर्थः। एकः समानो वंशोन्वयोस्यास्तीति विगृह्य 'एकगोपूर्वाट्ठञ्नित्यम्' इति ठञ्। तथाऽऽसकृत् पुनःपुनस्ताम्बूलवासेनोत्कटमुल्बणं सद् **आस्यं** मुखं नृणामग्रे क्षणात्स्वं यदि न व्यांजिष्यत्। किंविशिष्टम्? **पादूकृद्गृहगन्धिम्**। पादूकृतश्चर्मकारस्य गृहस्येव गन्धो यस्य तमेवम्। अमृते कस्तर्ह्युदस्थास्यतेति संबन्धः। तथा **संस्काररम्या** स्नानानुलेपनादिना रमणीया सती **मूर्तिस्तनुर्**यदि नृणामग्रे क्षणादात्मानं न व्यांजिष्यत्। किंविशिष्टम्? **अजिनकृद्दृतिप्रतिकृतिम्**? अमृते कस्तर्ह्युदस्थास्यत। अजिनकृतश्चर्मकारस्य दृतीरज्यमाना खल्वा अजिनकृद्दृतिः। तस्याः प्रतिकृतिं प्रतिच्छन्दम्। तत्तुल्यमित्यर्थः॥

कामान्धस्य स्वोत्कर्षसंभावनं धिक्कुर्वन्नाह—

**कुचौ मांसग्रन्थी कनककलशावित्यभिसरन्,—**
**सुधास्यन्दीत्यङ्गव्रणमुखमुखक्लेदकलुषम्।**
**पिबन्नोष्ठं गच्छन्नपि रमणमित्यार्तवपथं,**
**भगं धिक् कामान्धः स्वमनु मनुते स्वःपतिमपि॥ ९२॥**

**धिग्** निन्द्यमिदं कामान्धकल्पनं, यतः **कामान्धो** मन्मथमूढो जनः **स्वःपतिमपी**न्द्रमपि किं पुनरितरजनं **मनुते** संभावयति। कथम्? **स्वमनु** आत्मनः सकाशाद्धीनम्। किंकुर्वन्? **अभिसरन्ना**लिङ्गन्। कौ? **मांसग्रन्थी** मांसग्रन्थ्याख्यगदाकारौ **कुचौ** स्तनौ। कथं कृत्वा? **कनक-**

कलशाविति । कठिनोन्नतपीनत्वगुणयोगात् काञ्चनकलशाविमाविति संप्रधार्य । पुनः किं कुर्वन् ? ओष्ठमधरं पिबन्नास्वादयन् । किंविशिष्टम् ? अङ्केत्यादि । अङ्कव्रणमिवाशुचिरूपत्वात् । तस्य मुखं निस्सरणद्वारं यन्मुखं वक्त्रम् । तस्य क्लेदेन काथेन कलुषं कश्मलम् । कथं कृत्वा पिबन् ? सुधास्यन्दीति । अमृतस्यन्दनशीलोयमिति समर्थ्य । पुनरपि किं कुर्वन् ? गच्छन्नुपभुञ्जानः । किं तत् ? भगं योनिरन्ध्रम् । किंविशिष्टम् ? आर्तवपथं रजोवाहि । कथं कृत्वा गच्छन् ? रमणमिति रमयतीति रमणमिदमिति श्रद्धाय । अपिः समुच्चये । स्त्रिया इति संबन्धिपदं सामर्थ्यलब्धं कुचोष्ठभगैः सह संबन्धनीयम् ॥

स्त्रीशरीरेनुरज्यन्त्यां दृश्यां झटिति तत्स्वरूपपरिज्ञानोन्मेष एव मोहापोहाय स्यादित्यावेदयति—

रेतःशोणितसंभवे बृहदणुस्रोतःप्रणालीगल—
द्गर्होद्गारमलोपलक्षितनिजान्तर्भागभाग्योदये ।
तन्वङ्गीवपुषीन्द्रजालवदलंभ्रान्तौ सजन्त्यां दृशि,
द्रागुन्मीलति तत्त्वदृग् यदि गले मोहस्य दत्तं पदम् ॥ ९३ ॥

यदि चेदुन्मीलत्युन्मिषति साधोः । कासौ ? तत्त्वदृक् स्वरूपपरिज्ञानम् । कथम् ? द्राक् तत्क्षण एव । कस्यां सत्याम् ? दृशि दृष्टौ । किं कुर्वत्याम् ? सजन्त्यामनुरज्यन्त्याम् । क्व ? तन्वङ्गीवपुषि अङ्गनाङ्गे । किंविशिष्टे ? अलंभ्रान्तौ । भ्रान्तये विपर्ययज्ञानायालं समर्थमलंभ्रान्ति, तस्मिन् । "तिकुप्रादयः"[1] इति समासः । किंवत् ? इन्द्रजालवद् इन्द्रजाले यथा । तत्त्वतः कीदृशे तस्मिन् ? रेतःशोणितसंभवे शुक्रार्तवजन्मनि । पुनः कीदृशे ? बृहदित्यादि । बृहत्स्रोतांसि नासिकागुदादिरन्ध्राणि अणुस्रोतांसि रोमकूपविवराणि । बृहन्ति चाणूनि च बृहदणूनि । तानि च तानि स्रोतांसि च बृहदणुस्रोतांसि । तान्येव प्रणाल्यो जलनिर्गममार्गाः । ताभ्यो गलन्तः स्रवन्तो गर्होद्गारा जुगुप्साया उद्भावकाः, अथवा गर्हा-

---

१ जैनेन्द्रसूत्रमिदम् ।

कारित्वाद्गर्हा जुगुप्साकारिण उद्गारा ऊर्ध्वं सशब्दा वातोद्गमा येषाम् । ते च ते मलाश्च श्लेष्मविण्मूत्रप्रस्वेदादयः । तैरुपलक्षितो ज्ञापितोऽनुभवमानीतो निजस्यात्मीयस्यान्तर्भागस्य मध्यदेशस्य भाग्योदयो विपरीतलक्षणया पुण्यविपाको येन तत्तथोक्तम् । तदा दत्तमारोपितम् । किं तत् ? पदं पादः । क्व ? गले ग्रीवायाम् । कस्य ? मोहस्याज्ञानस्य चारित्रमोहनीयस्य वा । मोहः साधुना तिरस्कृत इत्यर्थः ॥

स्त्रीशरीरस्य रम्याहारवस्त्रानुलेपनादिप्रयोगेणैव चारुत्वमाभासते इति प्रौढोक्त्या व्यञ्जयति—

वर्चःपाकचरुं जुगुप्स्यवसतिं प्रस्वेदधारागृहं,
बीभत्सैकविभावभावनिवहैर्निर्माय नारीवपुः ।
वेधा वेद्मि सरीसृजीति तदुपस्कारैकसारं जगत्,
को वा क्लेशमवैति शर्मणि रतः संप्रत्ययप्रत्यये ॥ ९४ ॥

वेद्मि अहमेवं जानामि—वेधाः स्रष्टा सरीसृजीति पुनः पुनः सृजति । किं तत् ? जगद् भोगोपभोगाङ्गप्रपञ्चम् । चराचरस्य जगतो रामाशरीररम्यतासंपादनद्वारेणैव कामिनां मनः परमनिर्वृत्तिनिमित्तत्वात् तदुपभोगस्यैव लोके परमपुरुषार्थतया प्रसिद्धत्वात् । यदाह भट्टरुद्रटः—

राज्ये सारं वसुधा वसुन्धरायां पुरं पुरे सौधम् ।
सौधे तल्पं तल्पे वराङ्गनानङ्गसर्वस्वम् ॥

किंविशिष्टं सरीसृजीति तत् ? तदुपस्कारैकसारम् । तस्य नारीवपुष उपस्कारो गुणान्तराधानं चारुत्वसौरभ्याद्यापादनम् । स एवैक उत्कृष्टः सारः फलं यस्य तेनैकेन वा सारं ग्राह्यं तदुपस्कारैकसारं, जगद्वेधाः सरीसृजति । किं कृत्वा ? निर्माय सृष्ट्वा । किं तत् ? नारीवपुः स्त्रीशरीरम् । कैः ? बीत्यादि । बीभत्सो जुगुप्साप्रभवो हृत्संकोचकृद्रसः विभावाः कारणानि भावाः पदार्था दोषधातुमलादयः । बीभत्सस्यैकस्य रसान्तरासंपृक्तस्य विभावा आलम्बनोद्दीपनत्वेन जनका बीभत्सैकविभावाः । ते च ते भावाश्च दोषादयः तेषां निवहाः संघातास्तैः । किंविशिष्टं सृष्ट्वा ? वर्च

इत्यादि विशेषणत्रयविशिष्टम् । वर्चःपाको भुक्ताहारकिट्टरूपतापरिणमनम् । वर्चःपाकार्था चरुः स्थाली **वर्चःपाकचरुः** । तथा **जुगुप्स्यवसतिम्** । जुगुप्स्यानां सूकाजनकानां मूत्रार्त्तवादीनां वसतिः स्थानम् । तथा **प्रस्वेदधारागृहम्** । प्रस्वेदस्य प्रकृष्टस्वेदजलस्य धारागृहं विगलज्जलायमानम् । **वा** अथवा **कः** **क्लेशमवैति** को दुःखं वेत्ति, न कश्चित् । किंविशिष्टः सन् ? **रत** आसक्तः । क्व ? **शर्मणि** सुखे । किंविशिष्टे ? **संप्रत्ययप्रत्यये** अतद्गुणे वस्तुनि तद्गुणत्वेनाभिनिवेशः संप्रत्ययः प्रत्ययः कारणं यस्य तदेवम् ॥

परमावद्ययोषिदुपस्थलालसस्य पृथग्जनस्य विषयव्यामुग्धबुद्धेर्दुःसहनरकदुःखोपभोगयोग्यताकरणोद्योगमनुशोचति—

**विष्यन्दिक्लेदविश्राम्भसि युवतिवपुःश्वभ्रभूभागभाजि**
**क्लेशाग्निक्लान्तजन्तुव्रजयुजि रुधिरोद्गारगर्होद्धुरायाम् ।**
**आघ्नूनो योनिनद्यां प्रकुपितकरणप्रेतवर्गोपसर्गैं,—**
**मूर्छालः स्वस्य बालः कथमनुगुणयेद्वै तरं वैतरण्याम् ॥ ९५ ॥**

कथमिति विस्मये खेदे वा । **वै** स्फुटम् । **कथमनुगुणयेद**नुकूलयेत् । कोसौ ? **बालो**ऽज्ञः । कम् ? **तरं** तरणम् । कस्याम् ? **वैतरण्यां** नरकनद्याम् । कस्य ? **स्वस्या**त्मानं वैतरणीप्रतरणयोग्यं कथं कुर्यादित्यर्थः । किंविशिष्टः सन् ? **आघ्नूनो** लम्पटः । कस्याम् ? **योनिनद्यां** भगतरङ्गिण्याम् । किंविशिष्टायाम् ? युवतीत्यादि । युवतिवपुस्तरुणीशरीरम् । तदेव श्वभ्रभूर्नरकभूमिः । तस्या भागो नियतदेशः । तं भजतीति **युवतिवपुःश्वभ्रभूभागभाक्**, तस्याम् । पुनः किंविशिष्टायाम् ? **विष्यन्दिक्लेदविश्राम्भसि** । क्लेदः कुथितावस्थं द्रवद्रव्यम् । विश्रमामगन्धि अम्भस्तोयं विश्राम्भः । क्लेद एव विश्राम्भः क्लेदविश्राम्भः । विष्यन्दि अभीक्ष्णं स्रवत् क्लेदविश्राम्भो यस्यां सैवम् । पुनरपि किंविशिष्टायाम् ? क्लेशेत्यादि । क्लेशा नानादुःखानि । त एवाग्नयो वन्हयः । तैः क्लान्ता ग्लानाः । ते च ते जन्तुव्रजाः प्राणिसंघाताश्च तान् युनक्ति आत्मना योजयतीति **क्लेशाग्नि-**

क्रान्तजन्तुव्रजयुक्; तस्याम् । पुनरपि किंविशिष्टायाम् ? रुधिरोद्गार-गर्होद्धुरायाम् । रुधिरस्य शोणितस्योद्गारो बहिर्निःसरणम् । तेन गर्हा जुगुप्सा । ततस्तया वा उद्धुरा उद्रिक्ता तस्यां । पुनः किंविशिष्टोसौ ? मूर्छालो मूर्छितः । कैः ? प्रेत्यादि । करणानि स्पर्शनादीन्द्रियाणि । तान्येव प्रेता नारकाः । तेषां वर्गः संघातः । प्रकुपितः स्वेष्टसाधनाय संरब्धः । स चासौ करणप्रेतवर्गश्च । तत्कृतैरुपसर्गैरुपप्लवैः । इति अशुचित्वभावना ॥

अथ पञ्चभिः पद्यैर्वृद्धसांगत्यविधानमभिधातुमनाः कुशलसातत्यकामस्य मुमुक्षोर्मोक्षमार्गनिर्वहणचणानां परिचरणमत्यन्तकरणीयतया प्रागुपक्षिपति—

स्वानूकाङ्कुशिताशयाः सुगुरुवाग्वृत्त्यस्तचेतःशयाः,
संसारार्तिबृहद्भयाः परहितव्यापारनित्योच्छ्रयाः ।
प्रत्यासन्नमहोदयाः समरसीभावानुभावोदयाः,
सेव्याः शश्वदिह त्वयादृतनयाः श्रेयःप्रबन्धेप्सया ॥ ९६ ॥

भोः साधो, आदृतनया अभ्युपगतनीतयो वृद्धाचार्यास्त्वया शश्वन्नित्यमिह ब्रह्मव्रते सेव्या आराध्याः । कया ? श्रेयःप्रबन्धेप्सया । श्रेयसश्चारित्रस्य कल्याणस्य वा प्रबन्धोऽव्युच्छित्तिः । तस्येप्सया वाञ्छया । किंविशिष्टाः ? स्वेत्यादिविशेषणषट्कविशिष्टाः । अनूकः कुलम् । तच्चेह पितृगुरुसंबन्धि । कुलीनो हि दुरपवादभयादकृत्यान्नितरां जुगुप्सते । स्वस्यात्मनोऽनूकः स्वानूकः । तेनाङ्कुशित उत्पथान्निरुद्ध आशयश्चित्तं यैर्येषां वा ते स्वानूकाङ्कुशिताशयाः । तथा सुगुरोः सम्यगुपदेष्टुर्वाग् वचनं सुगुरुवाक् । तत्र वृत्तिरवस्थितिः । तयाऽस्तः क्षिप्तश्चेतःशयः कामो यैर्येषां वा ते सुगुरुवाग्वृत्त्यस्तचेतःशयाः । यदाह—

यः करोति गुरुभाषितं मुदा संश्रये वसति वृद्धसंकुले ।
मुञ्चते तरुणलोकसंगतिं ब्रह्मचर्यममलं स रक्षति ॥

तथा संसारार्तिभ्यः संसृतिपीडाभ्यो बृहद्विपुलं भयं येषां ते संसारा-

र्तिवृहद्भयाः। तथा परहिते परोपकारे व्यापारः प्रवृत्तिः। तत्र नित्यमुच्छ्रय उत्सवो येषां ते **परहितव्यापारनित्योच्छ्रयाः**। तथा प्रत्यासन्नः कतिपयभवभावी महोदयो मोक्षो येषां ते **प्रत्यासन्नमहोदयाः**। तथा समरसीभावस्य शुद्धचिदानन्दानुभवस्यानुभावाः सद्योरागादिप्रक्षयजातिकारणवैरोपशमनोपसर्गनिवारणादयः तेषामुदय उत्कर्षो येषाम्। अथवा समरसीभावस्यानुभावः कार्यमुदयो बुद्धितपोविक्रियौषधिप्रभृतिलब्धिलक्षणोभ्युदयो येषां ते **समरसीभावानुभावोदयाः**॥

वृद्धेतरसांगत्ययोः फलविशेषमभिलपति—

**कालुष्यं पुंस्युदीर्णं जल इव कतकैः संगमाद्ध्येति वृद्धै-**
**रश्मक्षेपादिवासप्रशममपि लघूदेति तत्पिङ्गसङ्गात्।**
**वार्भिर्गन्धो मृदीवोद्भवति च युवभिस्तत्र लीनोपि योगाद्,**
**रागो द्राग्वृद्धसङ्गात्सरटवदुपलक्षेपतश्चैति शान्तिम्॥ ९७॥**

**व्येति** प्रशाम्यति। किं तत्? **कालुष्यं** द्वेषशोकभयादिसंक्लेशः। किंविशिष्टम्? **उदीर्णं** स्वनिमित्तसन्निधानादुद्भूतम्। क्व? **पुंसि** जीवे। कस्माद्व्येति? **सङ्गमात्** सांगत्यात्। कैः सह? **वृद्धैः**उदितोदितज्ञानसंयमादिगुणैः। कस्मिन्निव? **जले इव**। यथा जले कालुष्यं पङ्काविलत्वमुदीर्णं **कतकैः** कतकफलचूर्णैः सह संगमात्संयोगात्प्रशाम्यति तथा प्रकृतमपि। तथा तत्पुंस्युदीर्णं कालुष्यं वृद्धसंगमादात्तप्रशममपि प्रशान्तमपि सल्लघु शीघ्रमुदेत्युद्भवति। कस्मात्? **षिङ्गसंगाद्** विटसंसर्गात्। अत्र दृष्टांतमाह—यथा जले तत्पङ्काविलत्वलक्षणं कालुष्यमुदीर्णं कतकफलचूर्णसंयोगात्प्रशान्तमपि लघु क्षिप्रमश्मक्षेपादुपलप्रक्षेपादुदेत्येवं प्रस्तुतमपि। तथा **तत्र** पुंसि **लीनोप्य**नुद्भूतोपि **रागो द्राक्** शीघ्रमुद्भवति। कस्मात्? **युवभिः** पिङ्गैः सह **योगात्** संसर्गात्। दृष्टान्तमाह—यथा **मृदि** मृत्तिकायां लीनोपि **गन्धो वार्भि**र्जलैः सह योगाद् द्रागुद्भवति। तथा प्राकरणिकोपि। तथा **रागः** पुंस्युदीर्णोपि **शान्तिमेति** प्रशाम्यति। कस्मात्? **वृद्धसंगात्**। दृष्टान्तमाह—**सरटवत्**। सरटे

करकेटुके यथा रागो वर्णवैचित्र्यमुदीर्णमप्युपलक्षेपतः पाषाणप्रक्षेपात् क्षिप्रं प्रशाम्यति तथा प्राकरणिकोपि । ततः पिङ्गसांगत्यं त्यजद्भिर्ब्रह्मव्रतार्थिभिः सदा वृद्धसांगत्यं विधेयमिति तात्पर्यार्थोत्र बोद्धव्यः ॥

प्रायो यौवनस्यावश्यं विकारकारित्वप्रसिद्धेर्गुणातिशयशालिनोपि तरुणस्याश्रयणमविश्वास्यतया प्रकाशयन्नाह—

**अप्युद्यद्गुणरत्नराशिरुगपि स्वस्थः कुलीनोपि ना,**
**नव्येनाम्बुधिरिन्दुनेव वयसा संक्षोभ्यमाणः शनैः ।**
**आशाचक्रविवर्तिगर्जितजलाभोगः प्रवृत्त्यापगाः,**
**पुण्यात्माः प्रतिलोमयन्विधुरयत्यात्माश्रयान् प्रायशः॥१८॥**

उद्यती प्रतिक्षणमारोहन्ती गुणरत्नराशेर्ज्ञानसंयमादिगुणमणिगणस्य रुग् दीप्तिर्यस्य सोऽयमुद्यद्गुणरत्नराशिरुगपि । तथा स्वच्छोपि सुप्रसन्नोपि तथा कुलीनोपि महाकुलोपि पक्षे कौ भूमौ लीनः श्लिष्टोपि ना पुमान् विधुरयति श्रेयसो भ्रंशयति । कान् ? आत्माश्रयान् शिष्यादीन् मत्स्यादींश्च । कथम् ? प्रायशो बाहुल्येन । किं कुर्वन् ? प्रतिलोमयन् व्यावर्तयन् । उत्पथे चारिणीः कुर्वन्नित्यर्थः । काः ? प्रवृत्त्यापगाः । प्रवृत्तीर्मनोवाक्कायक्रिया आपगा इव गङ्गादिनदीरिव कलिमलक्षालनहेतुत्वात् श्रेयोर्थिभिरुपास्यमानत्वाच्च । किंविशिष्टाः ? पुण्यात्माः । पुण्यः पवित्र आत्मा स्वभावो यासां ताः पुण्यात्माः । "अनश्चबात्" इति डाप् । किंविशिष्टः सन् ? आशेत्यादि । आशाचक्रे प्रत्याशापरम्परायां विवर्ती विविधं वर्तमानो गर्जितानां सोत्सेकशब्दवतां जडानां मूढलोकानामा समन्ताद् भोग इष्टविषयोपयोगो यस्मात्स आशाचक्रविवर्तिगर्जितजलाभोगः । पक्षेदिग्मण्डलविचेष्टमानगर्जितयुक्तवारिविस्तारश्च । किं क्रियमाणोसावेवंविधो भवेदित्याह—संक्षोभ्यमाणः प्रकृतेश्चाल्यमानः । कथम् ? शनैर्मन्दं मन्दम् । केन ? वयसा । किंविशिष्टेन ? नव्येन तरुणेन यौवनेनेत्यर्थः । क इव केन ? अम्बुधिरिन्दुनेव समुद्रो यथा चन्द्रेण । यल्लोकः—

अवश्यं यौवनस्थेन क्लीबेनापि हि जन्तुना ।
विकारः खलु कर्तव्यो नाविकाराय यौवनम् ॥

अपि च—

यस्मिन्नजः प्रसरति स्खलितादिवोच्चै,—
रान्ध्यादिव प्रबलता तमसश्चकास्ति ।
सत्त्वं तिरोभवति भीतमिवाङ्गजाग्ने,—
स्तद्यौवनं विनयसज्जनसङ्गमेन ॥

तारुण्येप्यविकारिणं प्रणौति—

दुर्गेपि यौवनवने विहरन् विवेक,—
चिन्तामणिं स्फुटमहत्त्वमवाप्य धन्यः ।
चिन्तानुरूपगुणसंपदुरुप्रभावो,
वृद्धो भवत्यपलितोपि जगद्विनीत्या ॥ ९९ ॥

धन्यः सुकृती अपलितोपि जराविकाररहितोपि वृद्धो भवति । कया ? जगद्विनीत्या लोकानां शिक्षासंपादनेन । किं कृत्वा ? अवाप्य प्राप्य । कम् ? विवेकचिन्तामणिम् । विवेको युक्तायुक्तविचारचातुरी चिन्तामणिरिव चिन्तितार्थसंपादकत्वात् । किंविशिष्टम् ? स्फुटमहत्त्वम् । स्फुटं व्यक्तं महत्त्वं महिमा संयमसाधकत्वेन जगत्पूज्यत्वं यस्मात् । किं कुर्वन् ? विहरन् चेष्टमानः । क्व ? यौवनवने तारुण्यारण्ये । किंविशिष्टे ? दुर्गेपि । दुःखेन गम्यतेस्मिन्निति दुर्गम् । दुरतिक्रममित्यर्थः । कथंभूतो भूत्वा ? चिन्तेत्यादि । चिन्ताया मनःक्षोदस्यानुरूपया सदृश्या गुणसंपदा उरुर्महान् प्रभावोऽचिन्त्यशक्तिविशेषो यस्यासौ चिन्तानुरूपगुणसंपदुरु-प्रभावः ॥

असाधुसाधुसंकथाफलं लक्ष्यद्वारेण स्फुटयति—

सुशीलोपि कुशीलः स्याद्दुर्गोष्ठ्या चारुदत्तवत् ।
कुशीलोपि सुशीलः स्यात् सद्गोष्ठ्या मारिदत्तवत् ॥१००॥

**सुशीलोपि** सदाचारोपि नरः **कुशीलो** दुराचारः **स्यात्** । कया ? **दुर्गोष्ठ्या** दुष्टजनसंकथया। किंवत् ? **चारुदत्तवत्** चारुदत्ताख्यश्रेष्ठिना तुल्यम्। तथा **कुशीलोपि सुशीलः स्यात्**। कया ? **सद्गोष्ठ्या** सज्जनसंकथया। किंवत् ? **मारिदत्तवद्** मारिदत्ताख्यराजपुरराजेन तुल्यम्। एतत्कथे संप्रदायादधिगन्तव्ये ॥ इति वृद्धसंगतिविधानम्।

एवं स्त्रीवैराग्यपञ्चकोपचितं ब्रह्मचर्यव्रतं स्त्रीरागकथाश्रवणतन्मनोहराङ्गनिरीक्षणपूर्वरतानुस्मरणवृष्येष्टरसस्वशरीरसंस्कारपरिहारस्वभावभावनापञ्चकेन स्थैर्यमासादयेयदित्युपदेष्टुमिदमाचष्टे—

**रामारागकथाश्रुतौ श्रुतिपरिभ्रष्टोसि चेद्भ्रष्टदृक्,**
**तद्रम्याङ्गनिरीक्षणे भवसि चेत्तत्पूर्वभुक्तावसि।**
**निःसंज्ञो यदि वृष्यवाञ्छितरसास्वादेऽरसज्ञोसि चेत्,**
**संस्कारे स्वतनोः कुजोसि यदि तत्सिद्धोसि तुर्यव्रते ॥१०१॥**

भोः साधो, **चेदसि** त्वम्। किंविशिष्टः ? **श्रुतिपरिभ्रष्टो**ऽत्यन्तबधिरः। क्व ? **रामारागकथाश्रुतौ**। रामायां स्त्रियां रागो रतिस्तदर्था रामया रागेण वा क्रियमाणा कथा रामारागकथा। तस्याः श्रुतावाकर्णने। तथा **भवसि** चेत्त्वम्। किंविशिष्टः ? **भ्रष्टदृग्** अन्धः। क्व ? **तद्रम्याङ्गनिरीक्षणे** रामाया मनोहराणामङ्गानां मुखवक्षोजाद्यवयवानां निरीक्षणे अवलोकने। तथा **यद्यसि** त्वम्। किं विशिष्टः ? **निःसंज्ञो**ऽमनस्कः। अस्मर्त्तेत्यर्थः। क्व ? **तत्पूर्वभुक्तौ** रामायाः प्रागुपभोगे। तथा **चेदसि** त्वम**ऽरसज्ञो**[1] निर्जिह्वः। क्व ? **वृष्यवाञ्छितरसास्वादे**। वृष्याणां शुक्रवर्धनानां वाञ्छितानां चेष्टानां रसानां मधुरादिरसानामास्वादेऽभ्यासेन सेवने। तथा **यद्यसि** त्वम्। किंविशिष्टः ? **कुजो** वृक्षः। क्व ? **संस्कारे**ऽतिशयाधाने। कस्याः ? **स्वतनोः** स्वशरीरस्य। स्वशरीरसंस्कारपराङ्मुखो यदि भवसीत्यर्थः। तत्ततः **सिद्धोसि** प्रतीतोसि त्वम्। क्व ? **तुर्यव्रते**। निरूढप्रौढब्रह्मव्रतोसीत्यर्थः। अत्र पूर्वरतानुस्-

१ किंविशिष्ट इति प्रश्नवाक्यमत्रमावश्यकम्।

रणवृष्येष्टरसादिवर्जनस्य पुनरुपदेशो ब्रह्मचर्यपालनेत्यन्तं यत्नः कर्त्तव्य इति बोधयति सुदुःसाध्यत्वात्तस्य। तथा च पठन्ति—

अक्खाण[1] रसणी कम्माण मोहणी तह वयाण बंभं च।
गुत्तीण य मणगुत्ती चउरो दुक्खेण सिज्झंति॥

वृष्यद्रव्यसौहित्यप्रभावं भावयति—

**को न वाजीकृतां दृप्तः कंतुं कंदलयेद्यतः।**
**ऊर्ध्वमूलमधःशाखमृषयः पुरुषं विदुः॥ १०२॥**

**को न कंदलयेत्।** सर्वोऽप्युद्भावयेदित्यर्थः जिह्वेन्द्रियसंतर्पणप्रभवत्वात्कन्दर्पदर्पस्य। कं? **कंतुम्।** किंविशिष्टः सन्? **दृप्त** उद्राणः। केषाम्? **वाजीकृताम्।** अवाजिनं वाजिनं कुर्वन्तीति वाजीकृतो रेतोवृद्धिकराः क्षीराद्यर्थाः तेषां। **यतो** यस्मादृषयः **पुरुषं विदु**र्जानन्ति। किंविशिष्टम्? **ऊर्ध्वमूलम्।** ऊर्ध्वमुपरि मूलं जिह्वा कण्ठाद्यवयवस्तम्बो यस्य स एवम्। तथाऽधोगताः शाखा भुजाद्यवयवा यस्य **सोऽधःशाख**स्तम्।

पूर्वेऽपि भूयांसो मुक्तिपथप्रस्थायिनो ब्रह्मव्रतप्रमादभाजो लोके भूयांसमुपहासमुपगता इति दर्शयंस्तत्र सुतरां साधूनवधानपरान् विधातुमाह—

**दुर्धर्षोद्धतमोहशौल्किकतिरस्कारेण सद्माकराद्,**
**भृत्वा सद्गुणपण्यजातमयनं मुक्तेः पुरः प्रस्थिताः।**
**लोलाक्षीप्रतिसारकैर्मदवशैराक्षिप्य तां तां हठा,—**
**न्नीताः किन्न विडम्बनां यतिवराः चारित्रपूर्वाः क्षितौ॥१०३॥**

**किं न नीताः** प्रापिताः। के? ते **यतिवराः।** यो देहमात्रारामः सम्यग्विद्यानौलाभेन तृष्णासरित्तारणाय योगाय यतते स यतिः। यति-

१ अक्षाणां रसना कर्मणां मोहनीयं तथा व्रतानां ब्रह्म च। गुप्तीनां मनोगुप्तिश्चत्वारो दुःखेन सिध्यन्ति॥

षु वरा मुख्या यतिवराः । किंविशिष्टाः ? चारित्रपूर्वाः । चारित्रः पूर्व आद्यो येषां शकटकूर्चवाररुद्रादीनां ते चारित्रपूर्वाः । काम् ? **तां तां** शास्त्रलोकप्रसिद्धां **विडम्बनाम्**उपहासपदवीम् ? क ? **क्षितौ** पृथिव्याम् । कस्मात् ? **हठाद्** बलात्कारात् । कैः कर्तृभिः ? **लोलाक्षीप्रतिसारकैः** । लोलाक्ष्यः कामिन्यः प्रतिसारकाः शौल्किकभटा इव शौल्किकस्येव मोहस्य कार्यसमवायित्वात् । किंविशिष्टैः ? **मदवशैर्दर्पाविष्टैः** । किं कृत्वा ? **आक्षिप्य** सोल्लुण्ठं हठाद्व्यावर्त्य । किंविशिष्टाः सन्तः ? **प्रस्थिताः** । प्रस्थातुमारब्धाः । प्रचलिता इत्यर्थः । किं तत् ? **अयनं** मार्गम् । कस्याः ? **मुक्ते**र्निर्वृतेः । क ? **पुरः** पुरस्तात् । किं कृत्वा ? **भृत्वा** संगृह्य । किं तत् ? **सद्गुणपण्यजातम्** । सद्गुणाः सम्यग्दर्शनादयः पण्यानि विक्रेयद्रव्याणीव विशिष्टार्थलाभहेतुत्वात् । तेषां जातं संघातम् । कस्मात्प्रस्थिताः ? **सद्माकरात्** । सद्म गृहमाकर इव पण्यानामिव सद्गुणानामुत्पत्तिनिमित्तत्वात् । केन ? **दुरित्यादि** । शुवति शुलति वा सुखेन यात्यनेनेति शुल्कः प्रावेश्यनैष्कर्म्यद्रव्येभ्यो राजग्राह्यो भागः । शुल्के नियुक्तः शौल्किकः । मोहश्चारित्रमोहनीयं कर्म शौल्किक इवापायावद्यभूयिष्ठत्वात् **दुर्धर्षो**ऽभिभवितुमशक्य **उद्धत**स्तब्धः स चासौ **मोहशौल्किक**श्च । तस्य **तिरस्कारेण**—छलनोपक्रमेण । कथा संप्रदायाद्बोद्धा ॥ इति ब्रह्मचर्यमहाव्रतम् ।

अथाकिंचन्यव्रतमष्टचत्वारिंशता पद्यैर्व्यावर्णयितुमनास्तत्र शिवार्थिनः प्रोत्साहयितुं लोकोत्तरं तन्माहात्म्यमादावादिशति—

**मूर्छा मोहवशान्ममेदमहमस्येत्येवमावेशनं,**
**तां दुष्टग्रहवन्न मे किमपि नो कस्याप्यहं खल्विति ।**
**आकिंचन्यसुसिद्धमन्त्रसतताभ्यासेन धुन्वन्ति ये**
**ते शश्वत्प्रतपन्ति विश्वपतयश्चित्रं हि वृत्तं सताम् ॥ १०४ ॥**

**ते विश्वपतय**स्त्रैलोक्यनाथाः सन्तः **शश्वद**जस्रं **प्रतपन्ति** अव्याहततेजसो भवन्ति । ये किम् ? **ये धुन्वन्ति** निगृह्णन्ति । काम् ? **तां**

मूर्छाम् । केन ? **आकिंचन्यसुसिद्धमन्त्रसतताभ्यासेन** । नास्ति किंचन ममेत्यकिंचनः । अकिंचनस्य भाव आकिंचन्यं नैर्मम्यम् । यो गुरूपदेशानन्तरमेव स्वकर्म करोति स मन्त्रः सुसिद्धः । यदाहुः—

सिद्धः सिध्यति कालेन साध्यो होमजपादिना ।
सुसिद्धस्तत्क्षणादेव अरिं मूलान्निकृन्तति ॥

आकिंचन्यं सुसिद्धमन्त्र इवाव्याहतप्रभावत्वात् । तस्य सतताभ्यासेन नित्यभावनया । किंवत् ? **दुष्टग्रहवत्** ब्रह्मराक्षसादिग्रहमिव । कथमाकिंचन्यम् ? इति एवम् ।—**न** वर्तते । किं तत् ? **किमपि** किंचिद्बाह्यमाध्यात्मिकं वा वस्तु । कस्य ? **मे** मम । तथा **नो** वर्ते न भवाम्यहम् । कस्य ? **कस्यापि** बाह्यस्याध्यात्मिकस्य वा वस्तुनः । खलुशब्दान्न कोप्यन्योहं नाहमन्यः कश्चिदिति ग्राह्यम् । एवं भूतेनाकिंचन्येन नित्यं भावनाविषयेण सुसिद्धमन्त्रेण दुष्टग्रहमिव ये **तां** मूर्छां निगृह्णन्ति । या किम् ? या मूर्छा भवति । कथंभूता ? **आवेशनमावेशः** । कस्मात् ? **मोहवशात्** चारित्रमोहनीयकर्मविपाकपारतन्त्र्यात् । कथम् ? **ममेदमहमस्येत्येवम्** । इति शब्दः स्वरूपार्थः । तेन ममेदमिति स्वरूपमहमस्येत्येवं स्वरूपं च यदावेशनं सा मूर्छा । एवंशब्दः प्रकारार्थः तेनाहं याज्ञिकोहं परिव्राडहं राजाहं पुमानहं स्त्रीत्यादिमिथ्यात्वादिविवर्ताभिनिवेशा गृह्यन्ते उक्तं च—

या मूर्छा नामेयं विज्ञातव्यः परिग्रहोयमिति ।
मोहोदयादुदीर्णा मूर्छा तु ममत्वपरिणामः ॥

मोहवशादित्यत्राविशेषोक्तावपि मोहशब्देन लोभ एव गृह्यते तस्यैव परिग्रहसंज्ञाहेतुत्वप्रसिद्धेः । तथा ह्यागमः—

उवयरणदंसणेण य तस्सुवओगेण मुच्छिदाए य ।
लोहस्सुदीरणाए परिग्गहे जायदे सण्णा ॥

ननु चाकिंचनाश्च जगत्स्वामिनश्चेति व्याहतमेतदिति अत्र समर्थनमाह—**हि** यस्माद्भवति । किं तत् ? **वृत्तं** चरितम् । केषाम् ? **सतां** साधूनाम् । किंविशिष्टम् ? **चित्रमाश्चर्यम्** । अलौकिकमिति यावत् ॥

उभयपरिग्रहदोषख्यापनपुरःसरं श्रेयोर्थिनस्तत्परिहारमुपदिशति—

**शोध्योऽन्तर्न तुषेण तण्डुल इव ग्रन्थेन रुद्धो बहि,—**
**र्जीवस्तेन बहिर्भुवापि रहितो मूर्छामुपार्छन्विषम् ।**
**निर्मोकेण फणीव नार्हति गुणं दोषैरपि त्वेधते,**
**तद्ग्रन्थानबहिश्चतुर्दश बहिश्चोज्झेद्दश श्रेयसे ॥ १०५ ॥**

**न शोध्यः** । कोसौ ? **जीवः** । क ? **अन्तर**ध्यात्मं कर्ममलं त्याजयितुमशक्य इत्यर्थः । किंविशिष्टः सन् ? **रुद्ध** आसक्तिं नीतः । केन ? **ग्रन्थेन** । क ? **बहि**र्बाह्येन चेतनाचेतनेन परिग्रहेण स्वस्मिन् ममकारं कारिते इत्यर्थः । क इव ? **तण्डुल इव** यथा तण्डुलशाल्यादिकणोन्तर्मध्ये न शोध्यः कोण्डकं त्याजयितुमशक्यः । किंविशिष्टः सन् ? रुद्धश्छादितः । केन ? **तुषेण** । क ? बहिर्बाह्यदेशे । जीवोपीत्यर्थः । उक्तं च—

**शक्यो यथापनेतुं न कोण्डकस्तण्डुलस्य सतुषस्य ।**
**न तथा शक्यं जन्तोः कर्ममलं सङ्गसक्तस्य ॥**

एवं तर्हि बहिरङ्ग एव संगस्त्याज्यो, नान्तरङ्ग इत्याशङ्कायामिदमाह—**तेने**त्यादि । **नार्हति** । नाधिकरोति । न भजते इत्यर्थः । कोसौ ? जीवः । कम् ? **गुण**महिंसकत्वाभिगम्यत्वादिकम् । किं कुर्वन् ? **उपार्छ**न्नुपगच्छन् । काम् ? **मूर्छाम्** । किंविशिष्टोपि ? **रहितोपि** त्यक्तोपि । केन ? **तेन** ग्रन्थेन । किंविशिष्टेन ? **बहिर्भुवा** बाह्येन । **अपि तु** किंतु **एधते** वर्धते । कैः ? **दोषै**र्गुणविपर्ययैः । क इव ? **फणीव** । यथा सर्पो निर्मोकेण कञ्चुकेन रहितोपि विषं गरलमुपार्छन्नाश्रयन्गुणं नार्हति । किं तु दोषैर्वर्धते । एवं जीवोपि । यत एवं **तत्त**स्मादुज्झेत्साधुः । कान् ? **अबहिरभ्यन्तरान्** ग्रन्थान् । कति ? **चतुर्दश** । **बहिश्च** बाह्यान् **दश** त्यजेत् । कस्मै ? **श्रेयसे** चारित्रार्थं मोक्षार्थं वा । अभ्यन्तरा यथा—

**मिच्छत्तवेदरागा हस्सादीया य तहय छद्दोसा ।**
**चत्तारि तह कसाया चउद्दसाब्भंतरा गंथा ॥**

बाह्या यथा—

क्षेत्रं धान्यं धनं वास्तु कुप्यं शयनमासनम् ।
द्विपदाः पशवो भाण्डं बाह्या दश परिग्रहाः ॥

ते च कर्मबन्धननिबंधनमूर्छानिमित्तत्वात्त्याज्यतयोपदिष्टाः । यदत्राह—

मूर्छालक्षणकरणात् सुघटा व्याप्तिः परिग्रहत्वस्य ।
सग्रन्थो मूर्छावान् विनापि किल शेषसङ्गेभ्यः ॥
यद्येवं भवति तदा परिग्रहो न खलु कोपि बहिरङ्गः ।
भवति नितरां यतोसौ धत्ते मूर्छानिमित्तत्वम् ॥
एवमतिव्याप्तिः स्यात् परिग्रहस्येति चेद्भवेन्नैवम् ।
यस्मादकषायाणां कर्मग्रहणे न मूर्छास्ति ॥

सङ्गत्यागविधिमाह—

परिमुच्य करणगोचरमरीचिकामुज्झिताखिलारम्भः ।
त्याज्यं ग्रन्थमशेषं त्यक्त्वापरनिर्ममः स्वशर्म भजेत् ॥ १०६ ॥

भजेत् सेवेत साधुः । किं तत् ? स्वशर्म स्वोत्थं सुखम् । किंविशिष्टः सन् ? अपरनिर्ममः । अपरस्मिन् त्याज्याद्ग्रन्थादन्यस्मिन् त्यक्तुमशक्ये शरीरादौ । निर्ममो ममेदमितिसंकल्पनिष्क्रान्तः । उपलक्षणादिदमहम् अहमिदमिति च संकल्पमुक्तश्च । उक्तं च—

जीवाजीवणिबद्धा परिग्गहा जीवसंभवा चेव ।
तेसिं सक्कच्चाओ इयरम्हि य णिम्ममोऽसंगो ॥

मिथ्याज्ञानानुगम्यमानमोहावेशाद्धि जायमानौ ममकाराहंकाराचाऽऽविशन्नात्मा रागादिषु विवर्तते । तल्लक्षणं यथा—

शश्वदनात्मीयेषु स्वतनुप्रमुखेषु कर्मजनितेषु ।
आत्मीयाभिनिवेशो ममकारो मम यथा देहः ॥
ये कर्मकृता भावाः परमार्थनयेन चात्मनो भिन्नाः ।
तत्रात्माभिनिवेशोहंकारोहं यथा नृपतिः ॥

परद्रव्यग्रह एव च बन्धकारणम् । स्वद्रव्यसंवृतत्वमेव च मोक्षकारणम् । तथा चोक्तम्—

परद्रव्यग्रहं कुर्वन् बध्येतैवापराधवान् ।
बध्येतानपराधो न स्वद्रव्ये संवृतो यतिः ॥

अपि च—

भेदविज्ञानतः सिद्धाः सिद्धा ये किल केचन ।
तस्यैवाभावतो बद्धा बद्धा ये किल केचन ॥

किं कृत्वा अपरनिर्ममः सन् स्वशर्म भजेत्? त्यक्त्वा । कम्? ग्रन्थम् । किंविशिष्टम्? त्याज्यं त्यक्तुं शक्यं गृहगृहिण्यादिकम् । कथं कृत्वा? अशेषम् । बालाग्रमात्रमपि त्याज्यग्रन्थं स्वसंबन्धितया न धारयेदित्यर्थः । कथंभूतो भूत्वा? उज्झिताखिलारम्भस्त्यक्तसर्वसावद्यक्रियः । किं कृत्वा? परिमुच्य समंतादुत्सृज्य । काम्? करणगोचरमरीचिकाम् । करणगोचरा इन्द्रियार्था मरीचिका मृगतृष्णेव, जलबुद्ध्या मृगैरिव सुखबुद्ध्या लोकैरौत्सुक्यादभिगम्यमानत्वात् । अथवा करणैश्चक्षुरादीन्द्रियैः क्रियमाणा गोचरेषु रूपादिविषयेषु मरीचिका प्रतिनियतवृत्त्यात्मनो मनाक् प्रकाशः । करणग्रामं संयम्येत्यर्थः । अल्पा मरीचिः प्रकाशो मरीचिका । अल्पे कः ॥

धनधान्यादिग्रन्थग्रहाविष्टस्य मिथ्यात्वहास्यवेदरत्यरतिशोकभयजुगुप्सामानकोपमायालोभोद्भवपारतन्त्र्यं यत्र तत्र प्रवर्तमानमनुक्रमेण व्याकर्तुमाह—

**अद्धत्तेनर्थमर्थं हसमनवसरेप्येत्यऽगम्यामपीच्छ,—**
**त्यास्तेऽरम्येपि रम्येप्यहह न रमते दैष्टिकेप्येति शोकम् ।**
**यस्मात्तस्माद्बिभेति क्षिपति गुणवतोप्युद्धतिक्रोधदम्भा,—**
**नऽस्थानेपि प्रयुङ्क्ते ग्रसितुमपि जगद्वष्टि सङ्गग्रहार्तः ॥ १०७ ॥**

सङ्गे परिग्रहे ग्रहोभिनिवेशो ममकाराहंकारपरिणामः । सङ्गो ग्रहो भूतावेश इवेति वा सङ्गग्रहः । तेनर्तः पीडित आक्रान्तः सङ्गग्रहार्तः । एतदन्तदीपकत्वात्सर्ववाक्यार्थैः सह संबध्यते । तथाहि । श्रद्धत्तेऽभिनिविशते । कोसौ? सङ्गग्रहार्तः पुमान् । कम्? अनर्थम् । अर्यते गम्यते निश्चीयते हातुमुपादातुं चेत्यर्थः, प्रमाणेनोपदर्शितं हेयमुपादेयं च वस्तु ।

नार्थोऽनर्थः । **तमर्थं** श्रद्धत्ते अतत्त्वभूतं वस्तु तत्त्वभूतं रोचते । धनेश्वरादिच्छन्दानुवृत्तिवशादिति यथासंभवमुपस्कारः कार्यः । तथाच पठन्ति— ।

> हसति हसति स्वामिन्युच्चै रुदत्यतिरोदिति,
> गुणसमुदितं दोषापेतं प्रणिन्दति निन्दति ।
> कृतपरिकरं स्वेदोद्गारि प्रधावति धावति,
> धनलवपरिक्रीतं यन्त्रं प्रनृत्यति नृत्यति ॥

एष मिथ्यात्वाख्योभ्यन्तरपरिग्रहोनुभावमुखेन व्यञ्जितः । एवमुत्तरेपि यथास्वमूह्याः । ( २ ) तथा सङ्गग्रहार्त **एति** याति आलम्बते । कम् ? **हसं** हास्यम् । क्व ? **अनवसरे**ऽप्रस्तावे । किं पुनरवसरे इत्यपिशब्दार्थः । एष हास्याख्यग्रन्थानुभावः । ( ३ ) तथा सङ्गग्रहार्त **इच्छ**त्यभिलषति । काम् ? **अगम्यामपि** गुरुराजादिपत्नीमपि । यदि मां भजसि तदा तुभ्यमिदमिदं ददामीति तया प्रलोभ्यमानस्तदिष्टं साधयतीत्यर्थः । एष पुंवेदाख्य ग्रन्थानुभावो दर्शितः । ( ४–५ ) एवं स्त्रीनपुंसकवेदयोरपि यथायथमुन्नेयम् ( ६ ) तथा सङ्गग्रहार्त **आस्ते** तिष्ठति रतिं बध्नातीत्यर्थः। क्व ? **अरम्ये**ऽप्यप्रीतिकरे भिल्लपल्यादिस्थानेपि । एष रत्याख्यग्रन्थानुभावो भावः । (७) तथासौ **न रमते** । क्व ? **रम्येपि** राजधान्यादिस्थानेपि । अहहेत्यद्भुतं खेदं वा द्योतयितुं सर्वत्र यथास्वं योज्यम् । एषोऽरत्याख्यग्रन्थानुभावोधिगम्यः ( ८ ) तथासा**वेति** गच्छति । कम् ? **शोकं** शुचम् । क्व ? **दैष्टिकेपि** दैवप्रमाणके, दिष्टं दैवं प्रमाणमस्येति दैष्टिकम् । " नास्तिकास्तिकदैष्टिकाः " इति निपातनात् साधुः । एष शोकाख्यग्रन्थानुभावः । ( ९ ) तथासौ **बिभेति** भयमाविशति । कस्मात् ? **यस्मात्तस्माद्** यतस्ततो भयहेतोस्तदहेतोर्वा । एष भयाख्यग्रन्थानुभावः । ( १० ) तथासौ **क्षिपति** जुगुप्सते। कान् ? **गुणवतोपि** गुणिनः । किं पुनर्दोषयुक्तानित्यपिशब्दार्थः । एष जुगुप्साख्यग्रन्थानुभावः ( ११ ) तथासौ **प्रयुङ्क्ते** प्रयोजयति । कान् ? **उद्धतिक्रोधदम्भान्** स्तब्धताक्रूरताप्रतारकत्वानि । क्व ? **अस्थानेपि** गुर्वादिविषयेपि । एते मानक्रोधमायाख्यग्रन्थानामनुभावाः क्रमेण प्रणिधेयाः ( १४ ) किं बहुना, सङ्गग्रहार्तो **वष्टि** कामयते वाञ्छति । किं कर्तुम् ? **ग्रसितुम**त्तुं स्वोदरे प्रवेशयितुम् । किं तत् ? **जगदपि** विश्व-

मपि । किं पुनः कियदेव वस्त्वित्यपिशब्दार्थः । एष लोभाख्यग्रन्थानुभावो भावनीयः ।

एवमन्तरङ्गपरिग्रहानुभावं भावयित्वा चेतनेतरबाह्यपरिग्रहद्वयस्य दुस्त्यजत्वं तावदविशेषेणैवाभिधत्ते—

**प्राग्देहस्वग्रहात्मीकृतनियतिपरीपाकसंपादितैत,—**
**देहद्वारेण दारप्रभृतिभिरिमकैश्चामुकैश्चालयाद्यैः ।**
**लोकः केनापि बाह्यैरपि दृढमबहिस्तेन बन्धेन बद्धो**
**दुःखार्तश्छेत्तुमिच्छन् निबिडयतितरां यं विषादाम्बुवर्षैः ॥**

लोकः पृथग्जनः केनाप्यलौकिकेन तेन बन्धेन दृढं गाढं बद्ध आत्मना सह नियन्त्रितो वर्तते । क्व? अबहिरध्यात्मम् । कैः कर्तृभिः ? इमकैः कुत्सितैरेभिः प्रतीयमानैर्दारप्रभृतिभिः कलत्रादिभिरर्थैः । तथाऽमुकैः कुत्सितैरमीभिर्यथातथा प्रतीयमानैरालयाद्यैर्गृहादिभिरर्थैः । चशब्दौ परस्परसमुच्चये । उभयेपि युगपद्बध्नन्तीत्यर्थः । किं विशिष्टैरुभयैरपि ? बाह्यैरपि आत्मनः सकाशादत्यन्तं भिन्नैरपि। अपिशब्दो विस्मये । चित्रं, यद्बाह्या अप्यन्तर्बध्नन्तीत्यर्थः । केन ? प्रागित्यादि । प्राग्देहे पूर्वभवशरीरे यः स्वग्रह आत्मेत्यात्मीय इति वा निश्चयस्तेन । अनात्मा आत्मा कृता आत्मीकृता स्वीकृता बद्धा या नियतिर्नामकर्मविशेषः । तस्याः परीपाक उदयः तेन संपादितः संयोजितश्चासावेतद्देह इदं वर्तमानं शरीरं प्राग्देहस्वग्रहात्मीकृतनियतिपरीपाकसंपादितैतद्देहः । तस्य द्वारं स एव वा द्वारं तद्द्वारं, तेन । जीवो हि यादृशं भावयति तादृशमेवासादयति । तदुक्तम्—

**अविद्वान् पुद्गलद्रव्यं योभिनन्दति तस्य तत् ।**
**न जातु जन्तोः सामीप्यं चतुर्गतिषु मुञ्चति ॥**

भाविताश्चासंसारमात्मनात्मीयत्वेनात्मत्वेन च पुद्गलाः । तथा चोक्तम्—

**चिरं सुषुप्तास्तमसि मूढात्मानः कुयोनिषु ।**
**अनात्मीयात्मभूतेषु ममाहमिति जाग्रति ॥**

ततः पूर्वदेहं स्वत्वेनाध्यवस्यता जीवेन यत्पुद्गलविपाकि कर्मोपात्तं तद्विपाकसंपादितमिदं शरीरमपेक्ष्य वर्तमानैर्भार्यागृहादिभिरर्थैर्बहिरात्मजनो गाढमन्तस्तेन केनापि बन्धनेन बद्धो वर्तते । यं दुःखार्तस्तद्द्वारप्रवर्तमानदुःखाक्रान्तः सन् छेत्तुमपनेतुमिच्छन् वाञ्छन् निबिडयतितरामऽतिशयेन गाढं करोति । कैः ? विषादाम्बुवर्षैः । विषादा अम्बुवर्षाणि जलवृष्टय इव, बाह्यबन्धस्येवान्तर्बन्धस्य गाढीकरणसाधर्म्यात् । दृश्यते हि रज्ज्वादिबन्धो जलसेचनेनातिगाढीभवन् । अज्ञजनो हि दारादिद्वारायातदुःखैः पीड्यमानः कदाचित्तान् परिहर्तुमिच्छति तद्विच्छेदद्वारप्रवृत्तविषादं च गच्छति । ते न च पुनर्दुःखहेतुमसातवेदनीयं कर्म बहुतरं बध्नातीति भावः ॥ १०८ ॥

अथ षोडशभिः पद्यैश्चेतनबहिरङ्गसङ्गदोषान् प्रविभागेन वक्तुकामः पूर्वं तावद्गाढरागनिमित्तभूतत्वात् कलत्रस्य दोषान् वृत्तपञ्चकेनाचष्टे—

**वपुस्तादात्म्येक्षामुखरतिसुखोत्कः स्त्रियमरं,**
**परामप्यारोप्य श्रुतिवचनयुक्त्याऽऽत्मनि जडः ।**
**तदुच्छ्वासोच्छ्वासी तदसुखसुखासौख्यसुखभाक्,**
**कृतघ्नो मात्रादीनपि परिभवत्याः परधिया ॥ १०९ ॥**

आः संतापप्रकोपयोः । परिभवति तिरस्करोति । कोसौ ? जडो मूढजनः । कान् ? मात्रादीनपि जननीजनकादीन् प्रत्यासन्नतमान् । किं पुनरितरजनानित्यपिशब्दार्थः । कया ? परधिया विपक्षयबुद्ध्या । किंविशिष्टो यतः ? कृतघ्नः । कृतमुपकृतं मात्रादीनां हन्ति नामीभिर्मम किंचित्कृतं, स्वपुण्यैरहमेवमुद्गतोस्मीति । पुनः किंविशिष्टः ? तदुच्छ्वासोच्छ्वासी तस्याः स्त्रिया उच्छ्वासेनोच्छ्वसनशीलः । तदत्यन्तरक्त इत्यर्थः । पुनरपि किंविशिष्टः ? तदित्यादि । तस्याः स्त्रिया असुखसुखे दुःखशर्मणी तदसुखसुखे । तयोरसौख्यं सुखं च भजते तदसुखसुखासौख्यसुखभाक् । स्त्रिया दुःखे दुःखी तत्सुखे च सुखी भवन्नित्यर्थः । किं कृत्वा ? आरोप्य स्थापयित्वा । काम् ? स्त्रियम् । क्व ? आत्मनि स्वस्मिन् । कया ? श्रुति-

**वचनयुक्त्या** वेदवाक्ययोजनेन। विवाहकाले हि वैदिकमन्त्रेण स्त्रीपुंसयोरेकत्वं द्विजैरापाद्येत। किंविशिष्टामपि? **अरमत्यन्तं परामात्मनोर्थान्तरभूतामपि**। किंविशिष्टो यतः? **वपुरित्यादि**। वपुषा शरीरेण सह तादात्म्यमेकत्वं वपुस्तादात्म्यम्। तस्येक्षा दर्शनं वपुरेवाहमहमेव वपुरिति प्रत्ययो वपुस्तादात्म्येक्षा। तस्या मुखं द्वारं तन्मुखम्। तेन प्रवृत्तं रतिसुखं मैथुनशर्म। तत्रोत्क उत्सुको **वपुस्तादात्म्येक्षामुखरतिसुखोत्कः** ॥

एवं स्त्रीप्रसक्तस्य जनन्यादिपरिभवोत्पादनद्वारेण कृतघ्नत्वं प्रकाश्य साम्प्रतं मरणेनापि तामनुगच्छतस्तस्य दुरन्तदुर्गतिदुःखोपभोगं वक्तृवाग्भङ्ग्या व्यनक्ति—

**चिराय साधारणजन्मदुःखं पश्यन्परं दुःसहमात्मनोग्रे।**
**पृथग्जनः कर्तुमिवेह योग्यां मृत्यानुगच्छत्यपि जीवितेशाम्॥**

**अनुगच्छत्यपि** अनुवर्तते। कोसौ? **पृथग्जनः**। काम्? **जीवितेशां** वल्लभाम्। कया? **मृत्यापि** मरणेन। किं पुनरितरदुःखेनेत्यपिशब्दार्थः। तस्यां मृतायां स्वयं म्रियते इत्यर्थः। किं कर्तुमिव? **कर्तुमिव**। काम्? **योग्यामभ्यासं**। किं कुर्वन्? **पश्यन्नवलोकयन्**। किं तत्? **साधारणजन्मदुःखम्**।

"साहारणमाहारो साहारणमाणपाणगहणं च।
साहारणजीवाणं साहारणलक्खणं भणियं॥
जत्थेक्कु मरदि जीवो तत्थ दु मरणं हवे अणंताणं।
चक्कमइ जत्थ एक्को चक्कमणं तत्थणंताणं॥"

इत्यागमप्रसिद्धसाधारणलक्षणयोगान्निगोदजीवाः साधारणाङ्गा इत्यर्थः। साधारणेषु जन्म उत्पादः साधारणजन्म। तस्य दुःखम्। किंविशिष्टम्? **परमुत्कृष्टं, दुःसहं** सोढुमशक्यम्। कस्य? **आत्मनः** स्वस्य। क्व? **अग्रे** अनन्तरजन्मनि। कथम्? **चिराय** चिरकालम्॥ ११०॥

भार्यायाः संभोगविप्रलम्भशृङ्गाराभ्यां पुरुषार्थभ्रंशकत्वमुपलम्भयति—

**प्रक्षोभ्यालोकमात्रादपि रुजति नरं यानुरज्यानुवृत्त्या,**
**प्राणैः स्वार्थापकर्षं कृशयति बहुशस्तन्वती विप्रलम्भम्।**

**क्षेपावज्ञाशुगिच्छाविहतिविलपनाद्युग्रमन्तर्दुनोति,**
**प्राज्या गन्त्वा मिषादामिषमपि कुरुते सापि भार्याऽहहार्या ॥**

अहह अद्भुतं कष्टं वा, **सापि** तत्तादृग् दुःखहेतुरपि **भार्या** पत्नी भवति। किंविशिष्टा? **आर्या** अर्यते गम्यते गुणवत्तयाश्रियते इत्यार्या। कामान्धानां सेव्येत्यर्थः। अथवा अहेति खेदे। सापि भार्या भवति। किंविशिष्टा? **हार्या** अनुरञ्जनीया कामिनामित्यर्थः। तथा चोक्तम्—

**वाग्मी सामप्रवणश्चाटुभिराराधयेन्नरो नारीम्।**
**तत्कामिनां महीयो यस्माच्छृङ्गारसर्वस्वम् ॥**

या किम्? **या** भार्या **रुजति** संतापयति। कम्? **नरम्**। किं कृत्वा? **प्रक्षोभ्य** प्रकर्षेण चित्तचालं नीत्वा। कस्मात्? **आलोकमात्रादपि** स्वरूपदर्शनमात्रेणैव। पूर्वानुरागद्वारेण दुःखापादकत्वोक्तिरियम्। तल्लक्षणं यथा—

**स्त्रीपुंसयोर्नवालोकादेवोल्लसितरागयोः।**
**ज्ञेयः पूर्वानुरागोयमपूर्णस्पृहयोर्दशोः ॥**

विप्रलम्भभेदोयम्। यथाह—

**पूर्वानुरागमानात्मप्रवासकरुणात्मकः।**
**विप्रलम्भश्चतुर्धा स्यात् पूर्वपूर्वो ह्ययं गुरुः ॥**

तथा या भार्या नरं **कृशयति** कृशीकरोति। कैः? **प्राणै**र्बलेन्द्रियायुरुच्छ्वासलक्षणैः। किं कृत्वा? **अनुरंज्य** अनुरागं नीत्वा। कया? **अनुवृत्त्या** छन्दानुवर्तनेन। कथं कृत्वा? **स्वार्थापकर्षं** धर्मादिपुरुषार्थात्प्रच्याव्य। एतत्संभोगमुखेन बाधकत्वमुक्तम्। कामिन्यो हि रहसि यथारुचि कामुकाननुवृत्त्य यथेष्टं चेष्टयंति। तदुक्तम्—

**यद्यदेव रुरुचे रुचितेभ्यः सुभ्रुवो रहसि तत्तदकुर्वन्।**
**आनुकूलिकतया हि नराणामाक्षिपन्ति हृदयानि रमण्यः ॥**

तथा या भार्या नरं **बहुशः** प्रभूतं कृत्वा **अन्तर**ऽध्यात्मं **दुनो**त्युपतपति। किं कुर्वती? **तन्वती** दीर्घीकुर्वती। कम्? **विप्रलम्भं** प्रणयभङ्गे-

र्ष्याप्रभवमानशृङ्गारं प्रवासं च । किंविशिष्टम् ? क्षेपेत्यादि । क्षेपो धिक्कारोऽवज्ञाऽनादरः शुक् शोक इच्छाविहतिरिष्टविघातो विलपनं परिदेवनम् । क्षेपश्चावज्ञा च शुक् चेच्छाविहतिश्च विलपनं च । तान्यादयो येषामुत्कण्ठादीनां तानि क्षेपादीनि दुःखकारणानि । तैरुग्रमसह्यम् । तत्र विलपनं रामस्य यथा—

स्निग्धाः श्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना,
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः ।
कामं सन्तु दृढं कठोरहृदयो रामोस्मि सर्वं सहे,
वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव ॥

अपि च—

हारो नारोपितः कण्ठे स्पर्शविच्छेदभीरुणा ।
इदानीमन्तरे जाताः पर्वताः सरितो द्रुमाः ॥

एवमन्यदपि लक्ष्यं महाकविप्रबन्धेषु यथायथं द्रष्टव्यम् । तथा या भार्या नरं कुरुते । किंविशिष्टम् ? प्राज्यागन्त्वामिषादामिषमपि । आमिषं मांसमदन्त्यामिषादा राक्षसाः । प्राज्याः प्रचुरा आगन्तवः शत्रुप्रहारादयो दुःखप्रकाराः प्राज्यागन्तवः । त एवामिषादाः । तेषामामिषं ग्रासं विषयं वा ॥ १११ ॥

पूर्वानुरागादिशृङ्गारद्वारेण स्त्रीणां पुंस्पीडकत्वं यथाक्रमं दृष्टान्तेषु स्पष्टयन्नाह—

स्वासङ्गेन सुलोचना जयऽमघाम्भोधौ तथाऽवर्तयत्,
स्वं श्रीमत्यऽनु वज्रजङ्घमऽनयद्भोगालसं दुर्मृतिम् ।
मानासद्ग्रहविप्रयोगसमरानाचारशङ्कादिभिः,
सीताराममतापयत्क न पतिं हा साऽऽपदि द्रौपदी ॥ ११२ ॥

आवर्तयद् भ्रामयति स्म । कासौ ? सुलोचना अकम्पनराजाङ्गजा । कम् ? जयं मेघेश्वरम् । क ? अघाम्भोधौ । दुःखांहोव्यसनेष्वघम् । व्यसनार्णवे इत्यर्थः । केन ? स्वासङ्गेन स्वरूपासक्त्या । कथं कृत्वा ?

तथा तेनार्ककीर्तिमहाहवादिकरणप्रकारेण पूर्वानुरागविप्रलम्भद्वारेण । दुःखोत्पादकत्वकथनमिदम् । तथाऽनयत् प्रापयतिस्म । कासौ ? श्रीमती वज्रदन्तचक्रवर्तिपुत्री । कम् ? वज्रजङ्घं वज्रजङ्घाख्यं स्वपतिम् । काम् ? दुर्मृतिम् । केशवासनधूपधूमव्याकुलकण्ठतया दुष्टा मृतिर्मरणम् । किंविशिष्टं सन्तम् ? भोगालसं विषयैः कुशलेष्वसमाहितम् । कथम् ? स्वमनु आत्मना सह । द्वावपि कुशलेष्वनवहिताविल्यर्थः । एतत्संभोगमुखेन दुःखोत्पादकत्वाभिधानम् । एषा पूर्वा च कथा महापुराणाच्चिन्त्या । तथा सीता मैथिली रामं दाशरथिमतापयत् संतापयति स्म । कैः ? मानेत्यादि । मानः प्रणयभङ्गकलहः । असद्ग्रहो युध्यमानलक्ष्मणपराजयनिवारणाथ तं प्रति रामप्रेषणदुरभिनिवेशः । विप्रयोगो रावणकृतो विरहः । समरः संग्रामः । अनाचारशङ्का लङ्केश्वरोपभोगसंभावना । आदिशब्दाद्दिव्यशुद्ध्युत्तरकाले रामस्यापमाननं तपस्यतश्चोपसर्गकरणमित्यादिग्रहणम् । मानश्चासद्ग्रहश्च विप्रयोगश्च समरश्चानाचारशङ्का च । ताः पश्चादयो येषां तापनक्रियासाधनानां तानि तथोक्तानि । एतन्मानप्रवासविप्रलम्भमुखेन दुःखोत्पादकत्वप्रकाशनम् । तथा हा कष्टं, द्रौपदी पञ्चालराजपुत्री क्व कस्यां आपदि स्वयंवरामण्डपयुद्धादिव्यसनावर्ते पतिमर्जुनाख्यं स्वप्रियं न आस न चिक्षेप । सर्वस्यामापदि तथाविधायामपातयदित्यर्थः । अथवा सा प्रसिद्धा द्रौपदीति व्याख्येयम् । तत्रापातयदिति क्रियापदं सामर्थ्यलब्धं योज्यम् । यथा—

"यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा ।
यश्चैनं गंधमाल्याभ्यां सर्वस्य कटुरेव सः ॥"

इत्यत्र च्छिनत्ति सिञ्चति पूजयतीति पदानि । एतत्पूर्वानुरागप्रवासविप्रलम्भमुखेन दुःखोत्पादकत्वख्यापनम् । एषा कथा भारतात् पूर्वा च रामायणाच्चिन्त्या ।

वल्लभाया दूरक्षत्वशीलभङ्गसद्गुरुसङ्गान्तरायहेतुत्वपरलोकोद्योगप्रतिबन्धकत्वकथनद्वारेण मुमुक्षूणां प्रागेवापरिग्राह्यत्वं व्यनक्ति—

**तैरश्चोपि वधूं प्रदूषयति पुंयोगस्तथेति प्रिया,—**
**सामीप्याय तुजेप्यऽसूयति सदा तद्विप्लवे दूयते ।**

**तद्विप्रीतिभयान्न जातु सजति ज्यायोभिरिच्छन्नपि,**
**त्यक्तुं सद्म कुतोपि जीर्यतितरां तत्रैव तद्यन्त्रितः॥ ११३॥**

असूयति गुणेष्वपि दोषानारोपयति लोकः। कस्मै? तुजेपि पुत्रायापि। किं पुनरन्यस्मै। किंविशिष्टाय? प्रियासामीप्याय वल्लभासन्निहिताय। कुतो हेतोः? इति यतः प्रदूषयति प्रदुष्टां करोति। कोसौ? पुंयोगः पुंसा सह संबन्धः। काम्? वधूं स्त्रियम्। किंविशिष्टोपि? तैरश्चोपि। तिरश्चि भवस्तैरश्चः। किं पुनर्मानुषादिभवः। कथम्? तथा सत्यं तेन वा प्रभञ्जनचरितादिशास्त्रप्रसिद्धेन प्रकारेण। प्रभञ्जनचरिते हि राज्ञी मर्कटासक्ता श्रूयते। तथा तद्विप्लवे प्रियाशीलभङ्गे दृष्टे श्रुते वा सति सदा नित्यं दूयते परितप्यते लोकः। तथा जातु कदाचिन्न सजति सङ्गं न करोति लोकः। कैः सह? ज्यायोभिर्धर्माचार्यादिभिः। कस्मात्? तद्विप्रीतिभयात् प्रियाप्रेमभङ्गभीतेः। तथा जीर्यतितरां जराजर्जरो भवति लोकः। क्व? तत्रैव सद्मन्येव। किंविशिष्टः सन्? तद्यन्त्रितः प्रियानिगडितः। किं कुर्वन्नपि? इच्छन्नपि वाञ्छन्नपि। किं कर्तुम्? त्यक्तुं मोक्तुम्। किं तत्? सद्म गृहम्। कस्माद्धेतोः? कुतोपि पुत्रमरणादेरगाढकारणात्। एतेन मुमुक्षुभिः प्रागेव स्त्रीपरिग्रहो न कर्तव्य इति तात्पर्यार्थो विदग्धैर्बोद्धव्यः। उक्तं च—

प्रागेव शक्तोऽशक्तोऽन्त्ये त्यक्त्वा राज्यं विपन्मयम्।
धीरः समाधिना मृत्वा भवाम्भोधेः समुद्धरेत्॥

एवं स्त्रीरागान्धान् प्रदूष्य पुत्रमोहान्धान्दूषयन्नाह—

**यः पत्नीं गर्भभावात्प्रभृति विगुणयन्न्यक्करोति त्रिवर्गं,**
**प्रायो वपुः प्रतापं तरुणिमनि हिनस्त्याददानो धनं यः।**
**मूर्खः पापो विपद्वानुपकृतिकृपणो वा भवन् यश्च शल्य,—**
**त्यात्मा वै पुत्रनामास्ययमिति पशुभिर्युज्यते स्वेन सोपि ११४**

'१ पुत्रः सूनुरपत्यं स्यात् तुक् तोकं चात्मजः प्रजा' इति पुत्रनामानि नाममालायाम्।

**सोपि** तत्तादृगपराधप्रधानोपि पुत्रः **पशुभिर्गृहव्यवहारमूढैर्गृहिभिः** **स्वेनात्मना सह युज्यते** संबध्यते। स्वस्मादभेदेन दृश्यते इत्यर्थः। कथम्। **इति** इत्थम्। **अयमि**दन्तया प्रतीयमान**स्त्वमसि**। किमात्मा? **आत्मा** अहंतया प्रतीयमानो भावः। किंनामा? **पुत्रनामा**। पुत्र इति नाम यस्य स एवम्। नाम्नैव मत्तो भिन्नोसि, न स्वरूपेणेत्यर्थः। कथम्? **वै** स्फुटम्। तथाच जातकर्मणि पठन्ति—

**अङ्गादङ्गात्प्रभवसि हृदयादपि जायसे।**
**आत्मा वै पुत्रनामासि संजीव शरदः शतम्॥**

मनुस्त्विदमाह—

**पतिर्भार्यां संप्रविश्य गर्भो भूत्वेह जायते।**
**जायायास्तद्धि जायात्वं यदस्यां जायते पुनः॥**

यः किम्? **यो न्यक्करोति** ह्रासयति। कम्? **त्रिवर्गं** धर्मार्थकामान्। किं कुर्वन्? **विगुणयन्** सौष्ठवसौन्दर्यादिगुणरहितां विकूलां वा कुर्वन्। काम्? **पत्नीं** भार्याम्। कथम्? **प्रभृत्यारभ्य**। कस्मात्? **गर्भभावात्**। निगीर्णशुक्रार्तवो जीवो गर्भः। तदुक्तम्—

**शुद्धे शुक्रार्तवे सत्त्वः स्वकर्मक्लेशचोदितः।**
**गर्भः संपद्यते युक्तिवशादग्निरिवारणौ॥**

भवनं भावः स्वरूपस्वीकारः। गर्भस्य भावो गर्भभावस्तस्मात्। तथा **यः प्रायो** बाहुल्ये **तरुणिमनि** यौवने **वसुः पितुः प्रतापं** तेजो **हिनस्ति** हन्ति। किं कुर्वाणः? **आददानः** स्वीकुर्वन्। किं तत्? **धनं** ग्रामसुवर्णादि। तथा च पठन्ति—

**जाओ[1] हरइ कलत्तं वड्ढंतो वड्ढिमा हरइ।**
**अत्थं हरइ समत्थो पुत्तसमो वेरिओ णत्थि॥**

---

१ जातो हरति कलत्रं वर्धमानो वृद्धिम्।
अर्थं हरति समर्थः पुत्रसमो वैरिको नास्ति॥

तथा यः **शल्यति** शरीरान्तःप्रविष्टकाण्ड इवाचरति । किं कुर्वन् ? **भवन्** संपद्यमानः । किंविशिष्टः ? **मूर्खोऽज्ञः** । यल्लोकः—

अजातमृतमूर्खेभ्यो मृताजातौ सुतौ वरम् ।
यतस्तौ स्वल्पदुःखाय यावज्जीवं जडो भवेत् ॥

**पापो वा भवन्** ब्रह्महत्यापरदाराभिगमनादिपातकयुक्तः सन्, **विपद्वान्वा** व्याधिबन्दिग्रहादिविपत्तिपतितः, **उपकृतिकृपणो वा** असामर्थ्यादविवेकाद्वाऽनुपकारकः ।

पुत्रे सांसिद्धिकौपाधिकभ्रान्त्यपसारणेन परमार्थवर्त्मनि शिवार्थिनं स्थापयितुमाह—

**यो वामस्य विधेः प्रतिष्कशतयाऽऽस्कन्दन् पितॄञ्जीवतो,—**
**ऽप्युन्मथ्नाति स तर्पयिष्यति मृतान्पिण्डप्रदाद्यैः किल ।**
**इत्येषा जनुषान्धतार्य सहजाहार्याथ हार्या त्वया,**
**स्फार्यात्मैव ममात्मजः सुविधिनोद्धर्ता सदेत्येव दृक् ॥११५॥**

यः पुत्रः **पितॄन्** पितृपितामहादीन् **जीवतोपि** विद्यमानानपि **उन्मथ्नाति** शुद्धचैतन्यलक्षणैः प्राणैर्वियोजयति । किंकुर्वन् ? **आस्कन्दन्** दुष्कृतोदीरणतीव्रमोहोत्पादनद्वारेण कदर्थयन् । कया ? **प्रतिष्कशतया** सहकारिभावेन । कस्य ? **वामस्य विधेर्बाधकस्य** दैवस्य शास्त्राविरुद्धस्याचारस्य वा । पुत्रो ह्यविनीतो दुःखदानोन्मुखदुष्कृतस्योदीरणाया निमित्तं स्याद् । विनीतोपि स्वविषयमोहग्रहावेशनेन परलोकविरुद्धाचरणविधानस्य । **स** तथाभूतोपि पुत्रः **किल तर्पयिष्यति** प्रीणयिष्यति पितॄन् । किंविष्टान्? **मृतान्** प्रेतत्वमापन्नान् । कैः ? **पिण्डप्रदाद्यैः** पिण्डप्रदानजलतर्पणर्णशोधनादिभिः । प्रदानं प्रदा " आतश्चोपसर्गे " इत्यङ् । किलेत्यागमोक्तौ लोकोक्तौ वा **इत्येवंस्वरूपा एषा** वर्तमाना **जनुषान्धता** जात्यन्धत्वं हे **आर्य**, साधो **हार्या** अपनेतव्या । केन ? **त्वया** । कीदृशी ? **सहजा** नैसर्गिकी **आहार्याथ** दुरुपदेशादिजाता वा । तथा **स्फार्या** स्फुरन्ती कार्या त्वया । कासौ ? **दृग्** दृष्टिः । कीदृशी ? **इत्येव** इत्थंभूतैव वर्तते । कोसौ ?

आत्मैव । किंविशिष्टः ? आत्मजः पुत्रः । कस्य ? मम । किंविशिष्टो यतः ? सदा सर्वदा सुविधिना सम्यग्विहिताचरणेन उद्धर्ता संसारार्णवादुत्तारकः ।

पुत्रिकामूढात्मनां स्वार्थभ्रंशं सखेदमावेदयति—

**मात्रादीनामदृष्टद्रुघणहतिरिवाभाति यज्जन्मवार्ता**
**सौस्थ्यं यत्संप्रदाने क्वचिदपि न भवत्यन्वहं दुर्भगेव ।**
**या दुःशीलाऽफला वा स्खलति हृदि मृते विप्लुते वा धवेऽन्त,-**
**र्या दन्दग्धीह मुग्धा दुहितरि सुतवद् घ्नन्ति धिक् स्वार्थमन्धाः**

यस्या दुहितुर्जन्मवार्ता पुत्री जातेति जनश्रुतिराभात्याभासते । केव ? अदृष्टद्रुघणहतिरिवादृष्टमुद्गराघातो यथा । केषाम् ? मात्रादीनां जननीजनकादीनाम् । तथा यस्या दुहितुः संप्रदाने क्वचिदपि कुलशीलविद्यावित्तादिना तरतमभावेन चर्च्यमाने वरयितरि । न भवति । किं तत् ? सौस्थ्यम् । केषाम् ? मात्रादीनाम् । योग्यस्थानेस्माभिः स्वकन्या नियुज्यते इति सुस्थितं मात्रादीनां चित्तं न भवतीत्यर्थः । सम्यक् शास्त्रोक्तविधानेन प्रकर्षेण स्वजनवैमनस्यभावलक्षणेन दीयतेऽस्मै कन्येति संप्रदानमत्र वरयिता । तथा या दुःशीला दुराचारा अफला वा निरपत्या सती मात्रादीनां हृदि हृदये अन्वहमनुदिनं स्खलति शल्यति । केव ? दुर्भगेव । यथा भर्तुरनभिप्रेता सती पुत्री हृदये शल्यति तथा दुश्चारिणी निरपत्या वेत्यर्थः । तथा या दुहिता दन्दग्धि गर्हितं दहति । क ? अन्तरध्यात्मं मात्रादीनाम् । क सति ? धवे भर्तरि । किंविशिष्टे मृते लोकान्तरं गते, विप्लुते पुरुषार्थसाधनसामर्थ्यपरिभ्रष्टे दूरदेशान्तरं गते वा इहास्यामीदृशदुःखदाननिदानभूतायां दुहितरि पुत्र्यां मुग्धा मूढा ममत्वग्रहाविष्टाः सन्तोऽन्धास्तत्त्वमपश्यन्तः पुरुषाः स्वार्थं स्वेनात्मनार्थ्यमानं दुःखोच्छेदं सुखोपलम्भं वा घ्नन्ति प्रतिबध्नन्ति । कस्मिन्निव ? सुतवत् । यथा पुत्रे मुग्धास्तथा पुत्र्यामपीत्यर्थः । धिक् इति खेदे । कष्टमेतत् । अज्ञानविजृम्भितमित्यर्थः ॥ ११६ ॥

पितृमातृज्ञातीनामपकारकत्वं वक्रभणित्या निन्दन् दुष्कृतनिर्जरणहेतुत्वेनोपकारकत्वादरातीनभिनिन्दति—

**बीजं दुःखैकबीजे वपुषि भवति यस्तर्षसंताननतन्त्र,—**
**स्तस्यैवाधानरक्षाद्युपधिषु यतते तन्वती या च मायाम् ।**
**भद्रं ताभ्यां पितृभ्यां भवतु ममतया मद्यवद् घूर्णयद्भ्यः,**
**स्वान्तं स्वेभ्यस्तु बद्धोञ्जलिरयमरयः पापदारा वरं मे ११७**

**यः** पिता **तर्षसंतानतन्त्रः** तृष्णासातत्यवशः सन् **भवति** । किम् ? **बीजं** प्ररोहणकारणम् । क ? **वपुषि** शरीरे जन्ये पुंसाम् । किंविशिष्टे ? **दुःखैकबीजे** दुःखस्य प्रधानहेतौ, "सर्वापदां पदमिदं जननं जनानाम्" इति वचनात् । **या च** माता **यतते** प्रयत्नं करोति । केषु ? **तस्यैव** वपुष एव **आधानरक्षाद्युपधिषु** गर्भाधानपालनवर्धनाद्युपकरणेषु । किं कुर्वती ? **तन्वती** विस्तारयन्ती । काम् ? **मायां** संवृतिं मिथ्यामोहजालम् । **ताभ्यां** तादृगुपकारकाभ्यां **पितृभ्यां** पितृमातृभ्यां **भवतु** अस्तु । किं तत् ? **भद्रम्** । आशिषि चतुर्थी । पुनर्मातापितरौ मम मा संपद्येतामित्यर्थः । एवं तर्हि यथोक्तदोषाभावाज्ज्ञातयः संपद्यन्तामित्यत्राह—तुर्विशेषे । **अयं** प्रत्यक्षोऽ**ञ्जलिर्बद्धो** मया । केभ्यः ? **स्वेभ्यो** बन्धुभ्यः । किं कुर्वद्भ्यः ? **घूर्णयद्भ्यो** हिताहितविचारविलोपेन विक्लवं कुर्वद्भ्यः । किं तत् ? **स्वान्तं** मनः । कया ? **ममतया** इमे मदीया इति ममकारेण । किंवत् ? **मद्यवद्** मदिरातुल्यया । मातापितृभ्यां मनोमोहकत्वेनात्यन्तदुष्टान् बान्धवान् धिगित्यर्थः । स्वेभ्य इत्यत्र तादर्थ्यचतुर्थी । किं पुनरेवं भवतो भद्रं प्रतिभातमित्यत्राह—वरं भद्रं भवन्तु । के ? **अरयः** शत्रवः । कस्य ? **मे** मम । किंविशिष्टा यतः ? **पापदारा** अपकारकरणद्वारेण पातकान्यामोचयन्त इत्यर्थः । मुमुक्षोरात्मतत्त्वभावनोपदेशोऽयम् ।

पृथग्जनानां मित्रत्वमधर्मपरत्वादपवदति—

**अधर्मकर्मण्युपकारिणो ये प्रायो जनानां सुहृदो मतास्ते ।**
**स्वान्तर्बहिःसंततिकृष्णवर्त्मन्यरंस्त कृष्णे खलु धर्मपुत्रः ११८**

---

१ आत्मानुशासनवचनमिदम् ।

**ये अधर्मकर्मणि** पापक्रियायामुपकारिणो बलाधायकास्ते **जनानां** लोकानां **सुहृदो** मित्राणि **प्रायो** बाहुल्येन **मता** इष्टाः । अत्र समर्थनमाह—**खलु** यस्माद्**रंस्त** प्रीतिमकार्षीत् । कोसौ ? **धर्मपुत्रो** युधिष्ठिरः कस्मिन् ? **कृष्णे** विष्णौ । किंविशिष्टे ? **स्वेत्यादि** । अन्तश्च बहिश्चान्तर्बहिः । तत्र संतती अन्तर्बहिःसंतती । स्वस्य धर्मपुत्रात्मनोन्तर्बहिःसंतती स्वान्तर्बहिःसंतती । तयोः कृष्णवर्त्मा **स्वान्तर्बहिःसंततिकृष्णवर्त्मा तस्मिन्** । तत्र स्वान्तःसंततौ निजात्मनि कृष्णस्य पापस्य वर्त्म मार्गः प्राप्त्युपाय इत्यर्थः । कृष्णशब्देन च सांख्याः पापमाहुः । तथा हि तत्सूत्रं—

"प्रधानपरिणामः शुक्लं कृष्णं च कर्म" इति ।

तथा स्वबहिःसंततौ निजवंशे कृष्णवर्त्मा वह्निः कौरवसंहारकारकत्वात् । यः किल धर्मस्य सर्वपुरुषार्थमूलकारणस्यात्मजः स्यात् स कथं तत्तादृशं कृष्णं मित्रीकुर्यात् । अतोऽश्रद्धेयमेतत् प्राकृतजनस्य मैत्रकमित्युक्तिलेशेनात्र तात्पर्यार्थोनुरञ्जनीयः ।

ऐहिकार्थसहकारिणां मोहावहत्वात्त्याज्यत्वमुपदर्शयन्नामुत्रिकार्थसुहृदामधस्तनभूमिकायामेवानुसर्तव्यतामभिधत्ते—

**निश्छद्म मेद्यति विपद्यपि संपदीव,**
**यः सोपि मित्रमिह मोहयतीति हेयः ।**
**श्रेयः परत्र तु विबोधयतीति ताव-**
**च्छक्यो न यावदसितुं सकलोपि सङ्गः ॥ ११९ ॥**

**निश्छद्म** निर्व्याजं कृत्वा **यो मेद्यति** स्निह्यति । कस्याम् ? **विपद्यपि** विनिपातोपनिपातेपि । क्वेव ? **संपदीव** संपत्तौ सत्यां यथा । **हेय**स्त्याज्यः । कोसौ ? **सोपि** किं पुनस्तद्विपरीतः । मुमुक्षुभिरिति शेषः । किमाख्यो भवन् ? **मित्रं** सुहृत् । क्व ? **इह** अस्मिन् जन्मनि । कुतो हेतोः ? **मोहयतीति** मोहं नयति यतः । **तु**र्विशेषे । स पुनर्यथोक्तमित्रलक्षणः **श्रेय** आश्रयणीयो मुमुक्षुभिः । कस्मिन्विषये ? **परत्र** । कुतो हेतोः ? **विबोधयतीति** विशिष्टमात्मदेहान्तरज्ञानलक्षणं बोधं नयति यतः । किं सर्वदा ?

न इत्याह—**तावत्** तावन्तं कालम् । यावत्किम् ? **यावन्न शक्यः** । कोसौ ? **सङ्गः** । किंविशिष्टः । **सकलोपि** । किं कर्तुम् ? **असितुं त्यक्तुम्** ।

उक्तं च—

सङ्गः सर्वात्मना त्याज्यो मुनिभिर्मोक्तुमिच्छुभिः ।
स चेत् त्यक्तुं न शक्येत कार्यस्तर्ह्यात्मदर्शिभिः ॥

अपि च—

सङ्गः सर्वात्मना त्याज्यः स चेत् त्यक्तुं न शक्यते ।
स सद्भिः सह कर्तव्यः सन्तः सङ्गस्य भेषजम् ॥

अत्यन्तभक्तिमतोपि भृत्यस्याकृत्यप्रधानत्वादनुपादेयतां लक्षयति—

**योतिभक्ततयात्मेति कार्यिभिः कल्प्यतेङ्गवत् ।
सोप्यकृत्येग्रणीर्भृत्यः स्याद्रामस्याञ्जनेयवत् ॥ १२० ॥**

यः **कल्प्यते**ऽध्यवसीयते । कथम् ? **आत्मेति** अयमहमिति । कैः ? **कार्यिभिः** स्वार्थपरैः । कया ? **अतिभक्ततया** अत्यन्तानुरक्तभावेन । किंवत् ? **अङ्गवद्** यथा शरीरम् । ( कार्यिभिरिदमहमिति कल्प्यते । कया ? अतिभक्ततया अत्यन्तश्लिष्टभावेन । ) **सोपि भृत्यः** किं पुनरन्यः **स्यात्** । किंविशिष्टः ? **अग्रणीः** प्रधानः । क ? **अकृत्ये** हिंसादौ । किंवत् ? **रामस्याञ्जनेयवद्** दाशरथेर्हनूमानिव । एवं मुमुक्षुभिर्गुणवद्भृत्योपि न संग्राह्य इत्यवतिष्ठते । भृतिः कर्ममूल्यम् । भृतौ साधुर्भृत्यः । अञ्जनाया अपत्यमाञ्जनेयः ।

दासीदासस्य स्वीकारो मनस्तापाय स्यादित्याह—

**अतिसंस्तवधृष्टत्वादनिष्टे जाघटीति यत् ।
तद्दासीदासमृक्षीव कर्णात्ताः कस्य शान्तये ॥ १२१ ॥**

**यद् दासीदासं जाघटीति** भृशं पुनः पुनर्वा चेष्टते । क ? **अनिष्टे** भर्तुरनभिप्रेते कर्मणि । कस्मात् ? **अतिसंस्तवधृष्टत्वाद्** अत्यन्तपरिचयेन प्रगल्भत्वात् । **तत्कस्य शान्तये** अनिष्टनिवारणार्थं स्याद्, न

कस्यापि । केव ? कर्णात्ता कर्णगृहीता ऋक्षीव भल्लूकी यथा। तस्मात्तदपि न संग्राह्यमिति स्थितम्। दासः क्रयक्रीतः कर्मकरः ।

शिष्यशासनेपि क्वचित्क्वचित् क्रोधोद्भवं भावयति—

यः शिष्यते हितं शश्वदन्तेवासी सुपुत्रवत् ।
सोप्यन्तेवासिनं कोपं छोपयत्यन्तरान्तरा ॥ १२२ ॥

योन्तेवासी शिष्यः शिष्यते शिक्ष्यते गुरुभिः । किं तत् ? हितं श्रेयस्करं वस्तु। किंवत् ? सुपुत्रवत् सत्पुत्रेण तुल्यम्। कथम् ? शश्वद् अहोरात्रम्। सोपि छोपयति स्पर्शयति। कम् ? कोपं क्रोधम्। किंविशिष्टम् ? अन्तेवासिनं चण्डालं साधुजनानामस्पृश्यत्वात्। क्व ? अन्तरान्तरा मध्ये मध्ये विनयाग्रहणकाल इत्यर्थः। एतेन सोपि मुमुक्षूणामसंग्राह्य इति पर्यवस्यति ।

चतुष्पदपरिग्रहं प्रतिक्षिपति—

द्विपदैरप्यसत्सङ्गश्चेत् किं तर्हि चतुष्पदैः ।
तिक्तमप्यामसन्नाग्नेर्नायुष्यं किं पुनर्घृतम् ॥ १२३ ॥

चेद् यदि द्विपदैरपि मनुष्यादिभिः सह संगः संसर्गः स्यात् । कीदृशः ? असन् अप्रशस्तोऽपायभूयस्त्वात्। तर्हि किं स्यात्। कोसौ ? सङ्गः। कैः सह ? चतुष्पदैर्गजतुरगादिभिः। सुतरामप्रशस्तो भवेदित्यर्थः। समर्थनमाह—न स्यात्। किं तत् ? तिक्तमपि भूनिम्बनिम्बादिप्रायमौषधम्। कीदृशं ? आयुष्यं जीवनार्थम्। कस्य ? आमसन्नाग्नेः। आमेन दुष्टापक्वरसेन सन्नोऽभिभूतोग्निः कोष्ठो वह्निर्यस्य। स एवम्। किं पुनर्घृतमायुष्यं स्यात्। सुतरां न भवेदित्यर्थः। यस्य हि तिक्तद्रव्यं स्वभावादामस्य पाचकं स्वास्थ्याय न स्यात्तस्य कथं स्निग्धशीतत्वेनामवर्धनं सर्पिः पथ्यमिति भावः। तथा चोक्तम्—

तीव्रार्तिरपि नाजीर्णी पिबेच्छूलघ्नमौषधम् ।
आमसन्नोनलो नालं पक्तुं दोषौषधाशनम् ॥

अपि च—

सप्ताहादौषधं केचिदाहुरन्ये दशाहतः ।
केचिल्लध्वन्नभुक्तस्य योज्यमामोल्बणेन तु ॥

एतेन द्विपदसङ्गाच्चतुष्पदसङ्गस्य बहुतरापायत्वं समर्थितम् । पादद्वयोपेतो हि यद्यपकरोति तर्हि पादचतुष्टयोपेतस्तद्द्विगुणमपकुर्यादित्युक्तिलेशः ।

अचेतनसङ्गाच्चेतनसङ्गस्य बाधाकरतरत्वमाचष्टे—

**यौनमौखादिसंबन्धद्वारेणाविश्य मानसम् ।**
**यथा परिग्रहश्चित्वान् मथ्नाति न तथेतरः ॥ १२४ ॥**

**यथा मथ्नाति** व्यथयति । कोसौ ? **चित्वान्** चेतनावान् **परिग्रहः** । किं तत् ? **मानसं** मनः पुंसाम् । किं कृत्वा ? **आविश्य** गाढमाक्रम्य । केन ? **यौनेत्यादि** । योनेरागतो यौनः सोदर्यादिसंबन्धः । मुखादागतो मौखः शिष्यादिसंबन्धः । आदिशब्देन जन्यजनकत्वपोष्यपोषकत्वभोग्यभोक्तृभावादिसंबन्धा यथास्वमवसेयाः । यौनश्च मौखश्च यौनमौखौ । तावादी येषां ते यौनमौखादयः । ते च ते संबन्धाश्च । त एव द्वारं प्रवेशहेतुत्वात् । **न मथ्नाति** । कोसौ ? **इतरो**ऽचेतनः परिग्रहः । किं तत् ? मानसम् । कथम् ? **तथा** चेतनादचेतनोऽल्पं दुःखयतीत्यर्थः । तत एवास्य पश्चान्निर्देशः ।

अथ दशभिः पद्यैरचेतनपरिग्रहं दूषयितुकामः प्राक्तावत्तदधिष्ठानत्वाद्गृहस्य दोषानुद्भावयति—

**पञ्चशूनाद्गृहाच्छून्यं वरं संवेगिनां वनम् ।**
**पूर्वं हि लब्धलोपार्थमलब्धप्राप्तये परम् ॥ १२५ ॥**

**वरं** श्रेष्ठं भवति । किं तत् ? **वनम्** । किंविशिष्टम् ? **शून्यं** विविक्तम् । केषाम् ? **संवेगिनां** संसारभीरूणाम् । कस्मात् ? **गृहात्** । किंविशिष्टात् ? **पञ्चशूनात्** ।

"कण्डनी पेषणी चुल्ली उदकुम्भः प्रमार्जनी ।
पञ्च शूना गृहस्थस्य तेन मोक्षं न गच्छति ॥"

इत्येवं लक्षणाः पञ्च शूनाः प्राणिवधस्थानानि यस्मिन् । समर्थनमाह— हि यस्माद्भवति । किंतत् ? **पूर्वं** पञ्चशूनं गृहम् । किमर्थम् ? **लब्धलोपार्थं** लब्धस्य प्रक्रमात्संवेगस्य नाशनिमित्तम् । तथा भवति । किं तत् ? **परं** शून्यं वनम् । कस्यै ? **अलब्धप्राप्तये** । अलब्धं शुद्धात्मतत्त्वं कदाचिदप्यप्राप्तपूर्वकत्वात् । तस्य प्राप्त्यर्थम् ।

गृहकार्यव्यासक्तानां दुःखसातत्यमनुशोचति—

**विवेकशक्तिवैकल्याद्गृहद्वन्द्वनिषद्वरे ।**
**मग्नः सीदत्यहो लोकः शोकहर्षभ्रमाकुलः ॥ १२६ ॥**

**अहो** कष्टं, **सीदति** खिद्यते । कोसौ ? **लोकः** पृथग्जनः । किंविशिष्टः ? **मग्नो** ब्रुडितः । क्व ? **गृहद्वन्द्वनिषद्वरे** गृहव्यासङ्गकर्दमे । कस्मात् ? **विवेकशक्तिवैकल्यात्** । विवेको हिताहितविवेचनं विश्लेषणं च । तत्सामर्थ्यप्रतिबन्धात् । यथा पङ्के मग्नस्ततः पृथक्कर्तुमात्मानमशक्नुवन् दुःखायते तथा गृहव्यासङ्गे पतितो हिताहितं विवेक्तुमशक्नुवन् क्लिश्यते इत्यर्थः । पुनः किंविशिष्टः ? **शोकहर्षभ्रमाकुलः** । शोकश्च हर्षश्च शोकहर्षौ । तयोर्भ्रमः पर्यायेण वृत्तिः । शोके वर्त्तित्वा हर्षे वर्तनं हर्षे च वर्तित्वा शोके वर्तनमित्यर्थः । तेनाकुलोऽनवस्थितचित्तः । तदुक्तम्—

रतेररतिमायातः पुना रतिमुपागतः ।
तृतीयं पदमप्राप्य बालिशो बत सीदति ॥

भ्रमो भ्रान्तिर्वा । तत्राप्युक्तम्—

वासनामात्रमेवैतत् सुखं दुःखं च देहिनाम् ।
तथा ह्युद्वेजयन्त्येते भोगा रोगा इवापदि ॥

क्षेत्रपरिग्रहदोषमाह—

**क्षेत्रं क्षेत्रभृतां क्षेममाक्षैत्रज्ञ्यं मृषा न चेत् ।**
**अन्यथा दुर्गतेः पन्था बह्वारम्भानुबन्धनात् ॥ १२७ ॥**

भवति । किंतत् ? **क्षेत्रं** सस्याद्युत्पत्तिस्थानम् । किंविशिष्टम् ? **क्षेमं**

कल्याणमैहिकसुखसंपादकत्वात्। केषाम्? **क्षेत्रभृताम्**। क्षेत्रं शरीरं बिभ्रतीति क्षेत्रभृतस्तेषाम्। देहिनामित्यर्थः। **चेद्** यदि **न भवति**। किं तत्? **आक्षैत्रज्ञ्यं** नैरात्म्यं बौद्धकल्पितम्। किंविशिष्टम्? **मृषा** असत्यम्। जीवाभावो यदि सत्यमित्यर्थः। क्षेत्रं शरीरं जानाति चेतयते इति क्षेत्रज्ञ आत्मा। न क्षेत्रज्ञोऽक्षेत्रज्ञः। तस्य भाव आक्षैत्रज्ञ्यम्। "नञः शुचीश्वरक्षेत्रज्ञकुशलचपलनिपुणानाम्" इत्यनेनोभयपदवृद्धिः। अथवा ईषत् क्षेत्रज्ञ अक्षेत्रज्ञो गर्भादिमरणान्तस्थायी जीवश्चार्वाककल्पितः। शेषं पूर्ववत्। भवति। किं तत्? क्षेत्रम्। किंविशिष्टम्? **पन्था** मार्गः। कस्याः? **दुर्गतेर्नरका**दिगतेः। कथम्? **अन्यथा** आक्षैत्रज्ञ्यमसत्यमस्ति चेत्। जीवो यदि शश्वदस्तीति भावः। कस्मात्? **बह्वारम्भानुबन्धनाद्** बहूनामारम्भाणां षड्जीवनिकायघातानां कर्षणसेचननिदानादिपापकर्मणामनुबन्धनात् पुनः पुनः प्रवर्तनात्।

कुप्यादिपरिग्रहस्यौद्धत्याशानुबन्धनिबंधनत्वमभिधत्ते—

> **यः कुप्यधान्यशयनासनयानभाण्ड,—**
> **काण्डैकडम्बरितताण्डवकर्मकाण्डः।**
> **वैतण्डिको भवति पुण्यजनेश्वरेपि,**
> **तं मानसोर्मिजटिलोज्झति नोत्तराशा॥ १२८॥**

कुप्यं हेमरूप्यवर्जं धातुरथ वस्त्रादि द्रव्यं। यानं शिबिकाविमानादि। भाण्डं हिङ्गुमञ्जिष्ठादि। काण्डं समूहः। ताण्डवकर्मकाण्डं वैचित्र्यमत्र नेयम्। वैतण्डिक उपहासपरः। पुण्यजनेश्वरे कुबेरे शिष्टप्रधाने च मानसोर्मयश्चित्तविकल्पा दिव्यसरस्तरङ्गाश्च। उत्तराशा उत्कृष्टाकाङ्क्षा उदीची दिक् च।

**यः** पुरुषो **भवति**। किंविशिष्टः? **वैतण्डिकः**। क्व? **पुण्यजनेश्वरेपि**। किंविशिष्टः सन्? **कुप्ये**त्यादि। कुप्यं च धान्यं च शयनं चासनं च यानं च भाण्डं च कुप्यधान्यशयनासनयानभाण्डानि। तेषां काण्डानि संघाताः। तैरेकमुत्कृष्टं कृत्वा डम्बरितं विस्फारितं ताण्डवकर्मकाण्डं येन स तथोक्तः। कुप्यादिपरिग्रहचक्रैर्बहुधा नटित इत्यर्थः। अयमभिप्रायः—कुप्यादिद्रव्यसमृद्ध्या स्वस्मात्कुबेरमपि हीनं मन्यते। यश्च शश्वदुद्धतनृत्यवैचित्रीमभि-

नयति तं नटं शिष्टग्रामण्योप्युपहसन्तीति तं धनर्द्धिगर्वितं पुंमांसं नोज्झति न मुञ्चति । कासौ ? उत्तराशा । किंविशिष्टा ? मानसोर्मिजटिला नानाविकल्पजालानुबन्धिनी । परमप्रत्याशा तस्य भवतीत्यर्थः । तथा तं धनर्द्धितिरस्कृतधनाधिपतिं पुरुषमुत्तराशा उदीची दिग् नोज्झति । किंविशिष्टा ? मानसोर्मिजटिला दिव्यसरस्तरङ्गगवाक्षिता । कैलासेनापि सहोत्तरां दिशं स स्वीकर्तुमिच्छतीत्यर्थः ।

धनगृध्नोर्महापापप्रवृत्तिं प्रवक्ति—

**जन्तून् हन्त्याह मृषा चरति चुरां ग्राम्यधर्ममाद्रियते ।**
**खादत्यखाद्यमपि धिग् धनं धनायन् पिबत्यपेयमपि ॥ १२९ ॥**

धनं ग्रामसुवर्णादिकं धनायन्नभिकाङ्क्षन् पुरुष इदमिदं करोति । तथाहि । धनाभिकाङ्क्षी जन्तून्प्राणिनो हन्ति हिनस्ति, तथा मृषा असत्यमाह ब्रवीति, तथा चुरां चोरिकामाचरति करोति, तथा ग्राम्यधर्मं मैथुनमाद्रियतेऽभ्युपगच्छति; तथाऽखाद्यमपि काकमांसादिकं खादति भक्षति, तथाऽपेयमपि सुरादिकं वर्णकुलाद्यपेक्षया पाने निषिद्धमपि पिबति आस्वादयति । अत एव धिगित्यनेन क्षिपति धिग् धनगृध्नुमित्यर्थः ।

भूमिलुब्धस्यापायावद्ये दृष्टान्तेन स्पष्टयति—

**तत्तादृग्साम्राज्यश्रियं भजन्नपि महीलवं लिप्सुः ।**
**भरतोऽवरजेन जितो दुरभिनिविष्टः सतामिष्टः ॥ १३० ॥**

इष्टः । कोसौ ? भरतः प्रथमचक्री । केषाम् ? सताम् । किंविशिष्टः । दुरभिनिविष्टः । नीतिपथमनागतस्य पराभिभवपरिणामेन कार्यस्यारम्भो दुरभिनिवेशः । तमापन्नः । साधुभिरिष्यते इत्यर्थः । किंविशिष्टः सन् ? जितः परिभूतः । केन ? अवरजेन बाहुबलिकुमारेण । किं चिकीर्षुः ? लिप्सुर्लब्धुमिच्छुः । कम् ? महीलवं सुरम्याख्यदेशमात्रम् । किं कुर्वन्नपि ? भजन्नपि सेवमानोपि । काम् ? तत्तादृक्साम्राज्यश्रियं तां प्रसिद्धां तादृशीं लोकोत्तरां साम्राज्यश्रियं सकलचक्रवर्तित्वविभूतिम् ।

दैन्यभाषणनिर्घृणत्वकृपणत्वानवस्थितचित्तत्वदोषावहत्वेन धनानि जुगुप्सते—

**श्रीमैरेयजुषां पुरश्चटुपटुर्देहीति ही भाषते,**
**देहीत्युक्तिहतेषु मुञ्चति हहा नास्तीतिवाग्ह्रादिनीम्।**
**तीर्थेपि व्ययमात्मनो वधमभिप्रैतीतिकर्तव्यता,—**
**चिन्तां चान्वयते यदभ्यमितधीस्तेभ्यो धनेभ्यो नमः॥१३१॥**

भवति। किं तत्? **नमो** नमस्कारः। केभ्यः? **तेभ्यो धनेभ्यः**। तानि धनानि धिगित्यर्थः। **यदभ्यमितधीर्यै**रातङ्कितबुद्धिः पुरुष इदमिदं करोति। तथा हि—**यदभ्यमितधीर्भाषते** वदति। किं तत्? **देहीति**। किंविशिष्टः सन्? **चटुपटुश्चाटुकारचतुरः**। क? **पुरोऽग्रे**। केषाम्? **श्रीमैरेयजुषाम्**। श्रीर्लक्ष्मीर्मैरेयं मद्यमिव मदमोहादिजनकत्वात्। श्रीमैरेयं जुषन्ते सेवन्ते श्रीमैरेयजुषः। कथम्। **ही** कष्टम्। तथा यदभ्यमितधी**र्मुञ्चति** विसृजति। काम्? **नास्तीति वाग्ह्रादिनीम्**। नास्तीति वाग् ह्रादिनीं वज्रमिव याचकमनःप्रतिघातहेतुत्वात्। केषु? **देहीत्युक्तिहतेषु** देहीतिवचनेन नाशितेषु। यल्लोकः—

गतेर्भङ्गः स्वरो दीनो गात्रस्वेदो महद्भयम्।
मरणे यानि चिन्हानि तानि चिन्हानि याचने॥

**हहेति** कष्टम्। तथा यदभ्यमितधीर**भिप्रैति**। अभिमन्यते। कम्? **व्ययं** द्रव्यविनियोगम्। किंविशिष्टम्? **वधम्**। कस्य? **आत्मनः** स्वस्य। क? **तीर्थेपि** धर्मसमवायिनः कार्यसमवायिनश्च पुरुषास्तीर्थम्। तत्रापि, किं पुनरन्यत्र। तथा यदभ्यमितधी**रन्वयते**ऽविच्छिन्नं याति। काम्? **इतिकर्तव्यताचिन्ताम्**। इदमेवं मया कर्तव्यमिदं चैवमिति वितर्कणाम्।

धनस्यार्जनरक्षणादिना तीव्रदुःखकरत्वात्तत्प्राप्तिं प्रत्युद्यमं कृतिनां निराकुरुते—

**यत्पृक्तं कथमप्युपार्ज्य विधुराद्रक्षन्नरस्त्याजितः,**
**खे पक्षीव पलं तदर्थिभिरलं दुःखायते मृत्युवत्।**

**तल्लाभे गुणपुण्डरीकमिहिकावस्कन्दलोभोद्भव,—**
**प्रागल्भीपरमाणुतोलितजगत्युत्तिष्ठते कः सुधीः ॥ १३२ ॥**

**दुःखायते** दुःखमनुभवति **नरः** । कथम् ? **अलं** पर्याप्तम् । किंवत् ? **मृत्युवद्** मरणे यथा । किंविशिष्टः सन् ? **त्याजितो** मोचितः । किं तत् ? **यत्पृक्थं** धनम् । कैः ? **तदर्थिभिः** पृक्तमर्थयमानैः । क इव ? **पक्षीव** । यथा पक्षी शकुनिः **खे** आकाशे तदर्थिभिः पलार्थिभिः पक्ष्यन्तरैः **पलं** मांसं त्याजितो मृत्युवदलं दुःखायते । किं कुर्वन् ? **रक्षन्** त्रायमाणः पृक्तं पलमिव । कस्मात् । **विधुरादऽपायात्** । विधुरेण वा कृच्छ्रेण रक्षन् । किं कृत्वा ? **उपार्ज्य** स्वसात्कृत्य । कथम् ? **कथमपि** । महता कष्टेन । **तल्लाभे** तस्य पृक्तस्य प्राप्तौ **कः सुधीर्विचारचतुरचेता उत्तिष्ठते** उद्यमं करोति । न कश्चिदित्यर्थः । किंविशिष्टे ? **गुणेत्यादि** । गुणाः सम्यग्दर्शनादयः पुण्डरीकाणि श्वेतपद्मानीवाल्हादकत्वात् । गुणपुण्डरीकेषु मिहिकावस्कन्दस्तुषारप्रपातो यो लोभोद्भवश्चतुर्थकषायोदयः । तस्य प्रागल्भी प्रौढिर्निरङ्कुशप्रवृत्तिः । तया परमाणुतोलितं परमाणुना समानीकृतं जगत् स्थावरजङ्गमात्मा लोको येन स तथोक्तः ।

बहिरात्मनां धनार्जनभोजनोन्मादप्रवृत्तं निःशङ्कपापकरणं स्वच्छन्दमैथुनाचरणं च दूषयन्नाह—

**धनादन्नं तस्मादसव इति देहात्ममतयो,**
**मनुं मन्या लब्धुं धनमघमशङ्का विदधते ।**
**वृषस्यन्ति स्त्रीरप्यदयमशनोद्भिन्नमदना,**
**धनस्त्रीरागो वा ज्वलयति कुजानप्यमनसः ॥ १३३ ॥**

**विदधते** । कुर्वन्ति । के ? **देहात्ममतयः** । देहे आत्मेति मतिर्येषां ते । किं तत् ? **अघं** पापम् । किंविशिष्टाः सन्तः ? **अशङ्का** निर्भयाः । किं कर्तुम् ? **लब्धुं** प्राप्तुम् । किं तत् ? **धनं** द्रव्यम् । किंविशिष्टा यतः ? **मनुम्मन्या** लोकव्यवहारोपदेष्टारमात्मानं मन्यमानाः । कथम् ? **इति** । भवति । किं तत् ? **अन्नं** भोजनम् । कस्मात् ? **धनात्** । **तस्माच्चान्ना-**

न्द्रवन्ति । के ? **असवः** प्राणाः । इत्येवं मनुमिवात्मानं मन्यमानाः । तथा **वृषस्यन्ति** कामयन्ते देहात्ममतयः । काः ? **स्त्रीर्नारीः** । किंविशिष्टाः सन्तः ? **अशनोद्भिन्नमदना** वल्भनोद्गतकन्दर्पाः । कथं कृत्वा ? **अदयं** निष्ठुरम् । समर्थनमाह—**वा** अथवा **ज्वलयति** धनस्वीकारे नारीप्रवीचारे च संरम्भयति । कोसौ ? **धनस्त्रीरागो** धनेषु स्त्रीषु चाभिलाषः । कान् ? **कुजान्** वृक्षान् । किंविशिष्टान् ? **अमनसोपि** अमनस्कानपि । किं पुनः समनस्कान् मनुष्यादीन् । यन्नीतिः—

"अर्थेषूपभोगरहितास्तरवोपि साभिलाषाः किं पुनर्मनुष्याः" इति ।

दृश्यन्ते च मूलोपान्ते निखातं हिरण्यं जटाभिर्वेष्टयन्तः प्ररोहैश्चोपसर्पन्तो वृक्षाः । सुप्रसिद्ध एव चाशोकादीनां कामिनीविलासाभिलाषः । तथा च पठन्ति—

**सन्नूपुरालक्तकपादताडितो द्रुमोपि यासां विकसत्यचेतनः ।**
**तदङ्गसंस्पर्शरसद्रवीकृतो विलीयते यन्न नरस्तदद्भुतम् ॥**

अपि च—

**यासां सीमन्तिनीनां कुरबकतिलकाशोकमाकन्दवृक्षाः,**
**प्राप्योच्चैर्विक्रियन्ते ललितभुजलतालिङ्गनादीन्विलासान् ।**
**तासां पूर्णेन्दुगौरं मुखकमलमलं वीक्ष्य लीलालसाढ्यं**
**को योगी यस्तदानीं कलयति कुशलो मानसं निर्विकारम् ॥**

गृहादिमूर्छायाततद्रक्षणाद्युपचितस्य पातकस्यातिदुर्जरत्वं व्याहरति—

**तद्देहाद्युपधौ ममेदमिति संकल्पेन रक्षार्जना,—**
**संस्कारादिदुरीहितव्यतिकरे हिंसादिषु व्यासजन् ।**
**दुःखोद्गारभरेषु रागविधुरप्रज्ञः किमप्याहर,—**
**त्यंहो यत्प्रसरेपि जन्मदहने कष्टं चिराज्जीर्यति ॥ १३४ ॥**

गृही रागविधुरप्रज्ञो गृहादितृष्णाविक्लवमतिः सन् तत्किमप्यनिर्वचनीयमंहः पापमाहरति स्वसात्करोति । बध्नातीत्यर्थः । किं कुर्वन् ? व्या-

**सजन्** विविधमासक्तो भवन् । केषु ? **हिंसादिषु** प्राणातिपातादिकर्मसु किंविशिष्टेषु ? **दुःखोद्गारभरेषु** दुःखोद्गाराणां पीडोद्भवानां भरोतिशयो येषु तान्येवम् । क ? **रक्षेत्यादि** । रक्षा त्राणम् । अर्जना अलब्धलाभः । संस्कारो मण्डनम् । ते आदयो येषां संमार्जनसेचनलेपनादीनां तानि रक्षार्जनासंस्कारादीनि । तानि च तानि दुरीहितानि च दुश्चेष्टितानि । तेषां व्यतिकरः प्रघट्टकस्तस्मिन् । केन ? **ममेदमिति संकल्पेन** । क ? **गेहाद्युपधौ** गृहक्षेत्रादिपरिग्रहे । **यदंहः कष्टं जीर्यति** जरां याति एकदेशेन क्षीयते । क ? **जन्मदहने** संसाराग्नौ । किंविशिष्टे ? **प्रखरेपि** सुतीक्ष्णे किं पुनः खरे मन्दे वा । कस्मात् ? **चिरात्** दीर्घकालात् । घोरनरकादिदुःखानुभवेनैव विच्छिद्यते इत्यर्थः । अनाद्यविद्यानिबन्धनं चेतनाचेतनपदार्थेषु रागद्वेषप्रबन्धं विदधानस्य कर्मबन्धक्रियासमभिहारमनभिनन्दन्नाह—

**आसंसारमविद्यया चलसुखाभासानुबद्धाशया,**
**नित्यानन्दसुधामयस्वसमयस्पर्शच्छिदभ्याशया ।**
**इष्टानिष्टविकल्पजालजटिलेष्वर्थेषु विस्फारितः,**
**क्रामन् रत्यरती मुहुर्मुहुरहो बाबध्यते कर्मभिः ॥ १३५ ॥**

अहो कष्टं, **बाबध्यते** भृशं पुनः पुनर्वा बध्यते जीवः । कैः ? **कर्मभिर्**ज्ञानावरणादिभिः । किं कुर्वन् ? **क्रामन्** आश्रयन् । के ? **रत्यरती** रागद्वेषौ । कथम् ? **मुहुर्मुहुर्**वारं वारम् । किंविशिष्टः सन् ? **विस्फारितः** प्रयत्नावेशमापादितः । केषु ? **अर्थेषु** चेतनाचेतनपदार्थेषु । किंविशिष्टेषु ? **इष्टेत्यादि** । अयं मे इष्टोभिमतोऽयं चानिष्टोऽनभिमत इत्येवं विकल्पा मानसाध्यवसाया इष्टानिष्टविकल्पाः । तेषां जालं संघातः । तेन जटिला व्यतिकीर्णा इष्टानिष्टविकल्पजालजटिलास्तेषु । कया ? **अविद्यया** विपर्ययज्ञानेन । किंविशिष्टया ? **चलेत्यादि** । असुखं सुखवदाभासते सुखाभासम् । चलं क्षणिकम् । तच्च तत्सुखाभासम् च । तत्रानुबद्धा अनुसंहिता प्रबन्धेन योजिता आशा तृष्णा यया सा तथोक्ता । पुनः किंविशिष्टया ? **नित्येत्यादि** । नित्यानन्दसुधामयः सदा प्रमोदामृतप्रचुरः स्वसमयः शुद्ध-

चिद्रूपोपलम्भो नित्यानन्दसुधामयस्वसमयः । तस्य स्पर्शः किंचिदामर्शः । तमपि—च्छिनत्ति व्यपनयतीति तच्छित् अभ्यासः प्रत्यासत्तिः सामीप्यं यस्याः सा तथोक्ता । कथम् ? **आसंसारं** संसारात्प्रभृति । तथा चोक्तम्—

**कादाचित्को बन्धः क्रोधादेः कर्मणः सदा सङ्गात् ।**
**नातः क्वापि कदाचित् परिग्रहग्रहवतां सिद्धिः ॥**

तत्त्वविद्भिरप्यकाले मोहो दुर्जय इति चिन्तयति—

**महतामप्यहो मोहग्रहः कोप्यनवग्रहः ।**
**ग्राहयत्यस्वमस्वांश्च योऽहंममधिया हठात् ॥ १३६ ॥**

**अहो** आश्चर्यं वर्तते । कोसौ ? **मोहग्रहः** । मोहश्चारित्रमोहनीयं कर्म ग्रह इव विविधविकारकारित्वात् । किंविशिष्टः ? **कोप्य**निर्वचनीयो**ऽनवग्रहो** दुर्निवारश्चिरावेशो वा । केषाम् ? **महतामपि** गृहस्थावस्थतीर्थंकरादीनामपि । यः किम् ? **यो ग्राहयति** निश्चाययति । किं तत् ? **अस्वमस्वांश्च** । कया ? **अहंममधिया** अनात्मभूतं देहादिकमात्मबुद्ध्या, अनात्मीयभूतांश्च दारगृहादीन् ममबुद्ध्येति संबन्धः । कस्मात् ? **हठात्** । ते हि तत्त्वं जानन्तोपि मोहवशादन्यथा व्यवहरन्ति ।

अपकुर्वतोपि चारित्रमोहस्योच्छेदाय काललब्धावेव विदुषा यतितव्यमित्यनुशास्ति—

**दुःखानुबन्धैकपरानरातीन्,**
**समूलमुन्मूल्य परं प्रतप्स्यन् ।**
**को वा विना कालमरेः प्रहन्तुं,**
**धीरो व्यवस्यत्यपराध्यतोपि ॥ १३७ ॥**

**वे**त्यनुमतौ । **को धीरो** विद्वान् **व्यवस्यति** उत्सहते । किं कर्तुम् ? **प्रहन्तुं** निर्नाशयितुम् । कस्य ? **अरेः**श्चारित्रमोहस्य । कथम् ? **विना** । कम् ? **कालं** समयम् । किं कुर्वतोपि ? **अपराध्यतोपि** अपकुर्वतोपि । किं करिष्यन् ? **प्रतप्स्यन्** प्रतप्तुमिच्छन् । कथम् ? **परमु**त्कृष्टम् । अधृष्यप्रभावो भवितुमिच्छन्नित्यर्थः । किं कृत्वा ? **उन्मूल्य** उच्छिद्य । कान् ?

**अरातीन्** मिथ्यात्वादिशत्रून् । किंविशिष्टान् ? **दुःखानुबन्धैकपरान्** केवलदुःखानुवर्तनप्रधानान् । कथम् ? **समूलम्** । संवरसहभाविनीं निर्जरां कृत्वेत्यर्थः । दृश्यते च लोकेपि कालमलभमानोऽपकर्तरि साधु वर्ततेति मनसिकृत्य धीरः स्थिरप्रकृतिर्नायको नित्योपतापकांश्चौरवरटादीन् निःसंतानं नाशयित्वा प्रकृष्टं प्रतपुकामोपि अपराध्यन्तमपि प्रतिनायकं निहन्तुं समये व्यवस्यन् । इति श्लेषालंकारो विदग्धैः प्रतिपाद्यः ।

श्रियमुपार्ज्य सत्पात्रेषु विनियुञ्जानस्य सद्गृहिणस्तत्परित्यागेन मोक्षपथैकप्रस्थायित्वमभिष्टौति—

**पुण्याब्धेर्मथनात्कथंकथमपि प्राप्य श्रियं निर्विशन्,**
**वै कुण्ठो यदि दानवासनविधौ शण्ठोस्मि तत्सद्विधौ ।**
**इत्यर्थैरुपगृह्णता शिवपथे पान्थान्यथास्वं स्फुर,—**
**त्तादृग्वीर्यबलेन येन स परं गम्येत नम्येत सः ॥ १३८ ॥**

स यथोक्तसदाचरणो **नम्येत** नमस्क्रियेत श्रेयोर्थिभिः । येन किम् ? **येन गम्येत** आश्रीयेत । कोसौ ? **स** शिवपथः । कथम् ? **परमुच्चैः** । किंविशिष्टेन सता ? **स्फुरत्तादृग्वीर्यबलेन** । वीर्यं स्वाभाविकी शक्तिः । बलमाहारादिजन्म । स्फुरती कार्ये लसती तादृशी उच्चैः शिवपथाश्रयणयोग्ये वीर्यबले यस्य स तथोक्तः । किं कुर्वता ? **उपगृह्णता** उपकुर्वता । कान् ? **शिवपथे पान्थान्** मोक्षमार्गे नित्यं प्रस्थायिनः । कैः ? **अर्थैर्द्रव्यैः** । कथम् ? **यथास्वं** यथायथम् । कथं कृत्वा ? **इति** । किमिति **यदि** भवेयमहम् । किंविशिष्टः ? **वै** स्फुटं **कुण्ठो** मंदः । क्व ? **दानवासनविधौ** । दानेन वासनविधिरात्मनः संस्कारविधानं तस्मिन् । किं कुर्वन् ? **निर्विशन्** । अनुभवन् । काम् ? **श्रियं** लक्ष्मीम् । किं कृत्वा ? **प्राप्य** कस्मात् ? **मथनात्** । कस्य ? **पुण्याब्धेः** । समुद्रस्य विलोडनादिव पुराकृतसुकृतस्योदयप्रापणात् । कथम् ? **कथंकथमपि** महता कष्टेन । **तत्** ततोऽ**स्मि** भवाम्यहम् । किंविशिष्टः ? **शण्ठो** यत्नपरिभ्रष्टः क्व ? **सद्विधौ** साध्वाचरणे । ततो मया क्लेशपरम्परया वित्तमुपार्ज्य स्वयमुपभुञ्जानेन सत्पात्रेषु विनियोक्तव्यमिति निश्चिन्त्येत्यर्थः । उक्लिेशपक्षे त

वैकुण्ठो विष्णुः। सोपि समुद्रमथनाच्छ्रियं लब्ध्वा स्वयं भुञ्जानः। यदि दानवासनविधौ, दानं वान्ति गच्छन्तीति दानवास्त्यागशीलास्तेषामसनविधौ तिरस्कारकरणत्यागेन तान् जेतुं यदि वै स्फुटं कुण्ठः स्यात् तथा दानवानामसुराणां वासनविधौ क्षेपणकरणे यदि कुण्ठः स्यात् तदा सद्विधौ शण्ठः स्यात् इत्यादत्या व्याख्येयम्।

गृहं परित्यज्य तपस्यतो निर्विघ्नां मोक्षपथप्रवृत्तिं कथयति—

**प्रजाग्रद्वैराग्यः समयबलवल्गत्स्वसमयः,**
**सहिष्णुः सर्वोर्मीनपि सदसदर्थस्पृशि दृशि।**
**गृहं पापप्रायक्रियमिति तदुत्सृज्य मुदित,—**
**स्तपस्यन्निःशल्यः शिवपथमजस्रं विहरति॥ १३९॥**

**विहरति** आराधयति **अजस्रम**श्रांतं साधुः। कम्। **शिवपथं** रत्नत्रयम्। किं कुर्वन्? **तपस्यन्** बाह्यमाभ्यन्तरं च तपः कुर्वन्। किंविशिष्टः सन्? **निःशल्यो** मिथ्यात्वनिदानमायालक्षणशल्यत्रयनिष्क्रान्तः। पुनः किंविशिष्टः? **मुदितः** प्रीतः। किं कृत्वा? **उत्सृज्य** त्यक्त्वा। किं तत्? **तद्गृहम्**। कथं कृत्वा? **इति**। किमिति? भवति। किं तत्? **गृहम्**। किंविशिष्टम्? **पापप्रायक्रियम्**। पापं प्रायेण यासु ताः पापप्रायाः क्रियाः कर्माणि यस्मिन् तदेवम्। कस्यां सत्याम्? **दृशि** अन्तर्दृष्टौ। किंविशिष्टायाम्? **सदसदर्थस्पृश्यपि** प्रशस्ताप्रशस्तवस्तुपरामर्शिन्यामपि किं पुनरितरस्याम्। कथंभूतो भूत्वा? प्रेत्यादि। प्रकर्षेण लाभाद्यनर्थित्वलक्षणेन जाग्रत्स्फुरद्वैराग्यं वैतृष्ण्यं यस्य स **प्रजाग्रद्वैराग्यः**। तथा समयबलेन काललब्ध्या श्रुतज्ञानसामर्थ्येन च वल्गन् विजृम्भमाणः स्वसमयः स्वस्वरूपोपलम्भो यस्य स **समयबलवल्गत्स्वसमयः**। तथा **सहिष्णुः** साधुत्वेन सहमानः। कान्? **सर्वोर्मीन्** निशेषपरीषहान्।

बहिःसङ्गेषु देहस्य हेयतमत्वप्रतिपादनार्थमाह—

**शरीरं धर्मसंयुक्तं रक्षितव्यं प्रयत्नतः।**
**इत्याप्तवाचस्त्वग्देहस्त्याज्य एवेति तण्डुलः॥ १४०॥**

**रक्षितव्यं** रक्षणीयं मुमुक्षुणा । किं तत् ? **शरीरम्** । किंविशिष्टम् ? **धर्मसंयुक्तं** धर्मसाधकजीवाध्युषितम् । केन ? **प्रयत्नेन** परमादरेण । **इति** एवंरूपा शिक्षा भवति । किं ? **त्वक्**, तुषः शरीररक्षानिबन्धस्येष्टसिद्ध्यनुपयोगित्वात् । कस्यास्त्वक् ? **आप्तवाचः** प्रवचनस्य । **तण्डुलः** पुनर्भवत्याप्तवाचः । किम् ? **देहस्त्याज्य एवेति** शिक्षा । देहममत्वच्छेदिन एव परमार्थनिर्ग्रन्थत्वात् । तदुक्तम्—

**देहो बाहिरगंथो अण्णो अक्खाण विसयअहिलासो ।**
**तेसिं चाए खवओ परमट्ठें हवइ णिग्गंथो ॥**

कायक्लेशलालनयोर्गुणदोषौ भिक्षोरुपदिशन्नाह—

**योगाय कायमनुपालयतोपि युक्त्या,**
**क्लेश्यो ममत्वहतये तव सोपि शक्त्या ।**
**भिक्षोन्यथाक्षसुखजीवितरन्ध्रलाभात्,**
**तृष्णासरिद्विधुरयिष्यति सत्तपोद्रिम् ॥ १४१ ॥**

हे **भिक्षो** चारित्रगात्र, **क्लेश्यो** दम्यः । कोसौ ? **सोपि** कायः । अपिशब्दात्कषायश्च । योगार्थोपि काय इति वा । कस्य ? **तव** । त्वयेत्यर्थः । कया ? **युक्त्या** आगमोक्तविधानेन । **शक्त्या** च बलवीर्यानिगूहनेन । कस्यै ? **ममत्वहतये** ममकारनिराकरणाय । किं कुर्वतोपि तव ? **अनुपालयतोपि** संयमानुगतं रक्षतः । न परमुपेक्ष्यमाणस्येत्यपिशब्दार्थः । कम् ? **कायं** शरीरम् । कस्मै ? **योगाय** रत्नत्रयप्रणिधानाय । **अन्यथा** तथा न क्लेश्यश्चेत् तदा **विधुरयिष्यति** जर्जरीकरिष्यति । कासौ ? **तृष्णासरित्** । तृष्णा काङ्क्षा सरिन्नदीव, सत्तपसोऽद्रेरिव दुर्भेदस्य भेदनिमित्तत्वात् । कम् ? **सत्तपोद्रिम्** । सत्तपोद्रिः पर्वत इव, दुरारोहत्वात् । कस्मात् ? **अक्षसुखजीवितरन्ध्रलाभात्** । चक्षुरादीन्द्रियैरनुभूयमानादिष्टाङ्गनाद्यर्थाज्जायमानं सौख्यमक्षसुखम् । जीवितं प्राणाः । अक्षसुखं च जीवितं चाक्षसुखजीविते रन्ध्रे विवरे इव, तृष्णासरितः प्रवेशहेतुत्वात् अक्षसुखजीवितरन्ध्रयोर्लाभः प्राप्तिस्तस्मात् । विषयसुखाशया जीवित-

शया च देहलालनपरस्य तव सम्यक्तपःसंवरनिर्जरालक्षणस्वफलविकुर्वं भविष्यतीत्यर्थः ।

प्रतिपन्ननैःसङ्ग्यव्रतस्यापि देहस्नेहान्माहात्म्यक्षतिः स्यादिति शिक्षयति—

**नैर्ग्रन्थ्यव्रतमास्थितोपि वपुषि स्निह्यन्नसह्यव्यथा,—**
**भीरुर्जीवितवित्तलालसतया पञ्चत्वचेक्रीयितम् ।**
**याच्ञादैन्यमुपेत्य विश्वमहितां न्यक्कृत्य देवीं त्रपां,**
**निर्मानो धनिनिष्ण्य[1]संघटनयाऽस्पृश्यां विधत्ते गिरम् ॥१४२॥**

विधत्ते करोति । कोसौ ? **निर्मानो** महत्त्वान्निष्क्रान्तो भिक्षुः । काम् ? **गिरं** वाचम् । किंविशिष्टाम् ? **अस्पृश्यामनादेयाम्** । कया ? **धनिनिष्ण्यसंघटनया** । धनी आढ्यो निष्ण्योऽन्त्यज इव दयादाक्षिण्यरहितत्वात् । धनिनिष्ण्यस्य संघटना संपर्कस्तया । किंविशिष्टां गिरम् ? **विश्वमहितां** जगति पूजिताम् । किंकृत्वा ? **न्यक्कृत्य** अभिभूय । काम् ? **त्रपां** लज्जाम् । किंविशिष्टाम् ? **देवीं** महाप्रभावत्वात् । तदुक्तम्—

**लज्जां गुणौघजननीं जननीमिवार्या,—**
**मत्यन्तशुद्धहृदयामनुवर्तमानाः ।**
**तेजस्विनः सुखमसूनपि संत्यजन्ति,**
**सत्यस्थितिव्यसनिनो न पुनः प्रतिज्ञाम् ॥**

किं कृत्वा ? **उपेत्य** आलम्ब्य । किं तत् ? **याच्ञादैन्यं** प्रार्थनाकृतकार्पण्यम् । किंविशिष्टम् ? **पञ्चत्वचेक्रीयितं** लक्षणया मरणतुल्यम् । चेक्रीयितं हि व्याकरणप्रसिद्धो द्विर्वचनहेतुः प्रत्ययः । द्वितीयं मरणमित्यर्थः । कया ? **जीवितवित्तलालसतया** जीवितव्यद्रविणयोरत्यन्तलाम्पट्येन । किंविशिष्टः सन् एवंभूतो भवति ? **असह्यव्यथाभीरुः** सोढुमशक्येभ्यः परीषहदुःखेभ्यो भीलुकः । एवंभूतोपि कुतो भवति ? **स्निह्यन्** स्नेहं कुर्वन् । क्व ? **वपुषि** शरीरविषये । एवं तर्हि ग्रन्थग्रहाविष्टः सन् भविष्यतीत्यत्राह—**आस्थितोपि** गुरुदेवसधर्मसाक्षिकं प्रतिपन्नोपि । किं

[1] निष्ण्यः अन्त्यजस्य नाम ।

तत् ? **नैर्ग्रन्थ्यव्रतं** नैर्ग्रन्थ्यमेव व्रतं नैर्ग्रन्थ्यव्रतम् । सकलपरिग्रहपरित्यागलक्षणां विरतिमित्यर्थः ।

महासत्त्वस्य धर्मवीररसिकतया तत्सहायकाय पालनाय यथोक्तां भिक्षां प्रतिज्ञाय प्रमाद्यतः पर्यनुयोगार्थमाह—

**प्राचीं मार्ष्टुमिवापराधरचनां दृष्ट्वा स्वकार्ये वपुः,**
**सध्रीचीनमदोऽनुरोद्धुमधुना भिक्षां जिनोपक्रमम् ।**
**आश्रौषीर्यदि धर्मवीररसिकः साधो नियोगाद्गुरो,–**
**स्तत्तच्छिद्रचरौ न किं विनयसे रागापरागग्रहौ ॥ १४३ ॥**

हे **साधो** सिद्धिसाधनोद्यत **यद्याश्रौषीः** प्रतिज्ञातवांस्त्वम् । काम् ? **भिक्षाम्** । किंविशिष्टाम् ? **जिनोपक्रमं** तीर्थकरेण प्रथममारब्धाम् । जिनस्योपक्रमो जिनोपक्रमम् । " उपज्ञोपक्रमं तदाद्युक्तौ " इति नपुंसकत्वम् । कस्मात् **नियोगा**दाज्ञानुरोधात् । कस्य ? **गुरो**र्दीक्षकाचार्यस्य । किंविशिष्टः सन् ? **धर्मवीररसिकः** । विभावादिभिर्व्यक्त उत्साहाख्यः स्थायीभावो वीररसः । वीरश्चासौ रसश्चेति विग्रहः । धर्मविषयो वीररसो धर्मवीररसः । सोस्य प्रशस्तोस्तीति धर्मवीररसिकः । द्रव्यतोऽप्रमत्तसंयत इत्यर्थः । तल्लक्षणं यथा—

णट्ठासेसपमाओ वयगुणसीलोलिमंडिओ णाणी ।
अणुवसमगो अखवगो झाणणिलीणो हु अपमत्तो ॥

उक्तं च—

उत्साहात्मा वीरः स त्रेधा धर्मयुद्धदानेषु ।
विषयेषु भवति तस्मिन्नक्षोभो नायकः ख्यातः ॥

कदा ? **अधुना** निर्वेदारोहसमये । किं कर्तुम् ? **अनुरोद्धुं** स्वकार्यसहकारि यथा स्यात्तथा कर्तुम् । किं तत् ? **अदः** एतत् स्वकार्यसहकारित्वेन निश्चितं वपुः । किं कृत्वा ? **दृष्ट्वा** निश्चित्य । किं तत् ? **वपुः** शरीरम् । किंविशिष्टम् ? **सध्रीचीनं** सहायम् । क ? **स्वकार्ये** रत्नत्रयलक्षणे आत्मनः साध्ये । किं कर्तुम् ? **मार्ष्टुं** निराकर्तुम् । काम् ? **अपराधर-**

चनामपकारनिर्मिताम् । किंविशिष्टाम् ? **प्राचीं** प्राक् ग्रहस्थावस्थायां भवाम् । पूर्वं कृतामित्यर्थः । इवेत्युत्प्रेक्षायाम् । तल्लक्षणं यथा—

कल्पना काचिदौचित्याद्यत्रार्थस्य सतोऽन्यथा ।
द्योत्यते वादिभिः शब्दैरुत्प्रेक्षा सा स्मृता यथा ॥

यद्येवं भिक्षामाश्रौषीस्त्वं तत्ततः किं न **विनयसे** शमयसि त्वं । "कर्तृस्थे कर्मण्यमूर्तौ" इत्यात्मनेपदम् । कौ ? **रागापरागग्रहौ** रागद्वेषौ भूताविव । किंविशिष्टौ ? **तच्छिद्रचरौ** इदमनेन सुन्दरमसुन्दरं वा भोजनं मे दत्तमिति भिक्षाद्वारायातौ रागद्वेषौ । ग्रहपक्षे तु—च्छिद्रं प्रमादाचरणम् ।

देहात्मभेदभावनानिरुद्धविकल्पजालस्य साधोः शुद्धस्वात्मोपलम्भमभिनन्दति—

**नीरक्षीरवदेकतां कलयतोरप्यङ्गपुंसोरचि,-**
**च्चिद्भावाद्यदि भेद एव तदलंभिन्नेषु कोभिक्रमः ।**
**इत्यागृह्य परादपोह्य सकलोन्मीलद्विकल्पच्छिदा,—**
**स्वच्छेनास्वनितेन कोपि सुकृती स्वात्मानमास्तिघ्नुते ॥१४४॥**

**कोपि** प्रविरलः **सुकृती** जन्मान्तराभ्यस्तयोगार्जितपुण्योदयवर्ती **आस्तिघ्नुते** आस्कन्दति । अभेदेनानुभवतीत्यर्थः । कम् ? **स्वात्मानम्** । केन ? **आस्वनितेन** मनसा । किं विशिष्टेन ? सकलाः सर्वे उन्मीलन्त उन्मिषन्तो ये विकल्पाः अन्तर्जल्पसंपृक्तप्रत्यवमर्शाः । तेषां छिदा छेदः । तया स्वच्छेन सुप्रसन्नेन **सकलोन्मीलद्विकल्पच्छिदास्वच्छेन** । किं कृत्वा ? **अपोह्य** व्यावर्त्य । कम् ? प्रकृतत्वात् स्वात्मानमेव । कस्मात् ? **परात्** देहादेः । किं कृत्वा ? **आगृह्य** देहादेः स्वात्मानं पृथक्त्वेन दृढं प्रतिपद्य । कथम् ? **इति** । किमिति ? **यदि** वर्तते । कोसौ ? **भेद एव** पृथक्त्वमेव । कयोः ? **अङ्गपुंसोः** शरीरात्मनोः । कस्मात् ? **अचिच्चिद्भावात्** । शरीरस्याचेतनत्वादात्मनश्च चेतनत्वादित्यर्थः । जलानलवद्देहात्मनोर्भिन्नल-

क्षणलक्षितत्वेनावश्यं भिन्नावित्यर्थः । किं कुर्वतोः ? **कलयतोरपि** धारयतोरपि । काम् ? **एकतां** तादात्म्यम् । किंवत् ? **नीरक्षीरवत्**, जलदुग्धयोरिवैकलोलीभावं बिभ्रतोरपि लक्षणभेदाद्भेद एव चेत्तत् ततः को न कश्चिद्भवति । कोसौ ? **अभिद्भ्रमोऽभेदभ्रान्तिः** । केषु ? **अलंभिन्नेषु** अत्यन्तपृथग्भूतेषु दारगृहादिषु । दारगृहादिरर्थोऽहमेवाहं दारगृहादिरेवेत्यभेदप्रत्यय इत्यर्थः ।

इत्येवं भावनया समरसीभावसमुज्जृम्भितसहजज्योतिषो मोहविजयातिशयं प्रकाशयति—

**स्वार्थेभ्यो विरमय्य सुष्ठु करणग्रामं परेभ्यः पराक्,**
**कृत्वान्तःकरणं निरुध्य च चिदानन्दात्मनि स्वात्मनि ।**
**यस्तत्रैव निलीय नाभिसरति द्वैतान्धकारं पुन-**
**स्तस्योद्दाममऽसीम धाम कतमच्छिन्दत्तमः श्राम्यति ॥१४५॥**

कतमत् । किम् ? प्रकृष्टं तमश्चिरप्ररूढमज्ञानं **छिन्दत्** ध्वंसयत् **धाम** तेजः **श्राम्यति** क्षीणशक्तिकं भवति । न किमपि । सर्वमनाद्यविद्याविजृम्भितं निरस्यतीत्यर्थः । किंविशिष्टम् ? **उद्दामं** निष्प्रतिबन्धम् । पुनः किंविशिष्टम् ? **असीम** निरवधि । कस्य ? **तस्य** निष्पन्नयोगस्य योगिनः । यः किम् ? **यो नाभिसरति** नाभिमुखं गच्छति । किं तत् ? **द्वैतान्धकारम्** अयमहमयं पर इति विकल्पं ध्यानध्येयादिविकल्पं वा तम इव शुद्धात्मोपलम्भप्रतिबन्धकत्वात् । किं कृत्वा ? **निलीय** निभृतं श्लिष्ट्वा । क्व ? **तत्रैव** चिदानन्दात्मन्येवात्मनि ; किं कृत्वा ? **निरुध्य** एकाग्रं कृत्वा । किं तत् ? **अन्तःकरणं** मनः । क्व ? **स्वात्मनि** निजचिद्रूपे । किंविशिष्टे ? **चिदानन्दात्मनि** ज्ञानानन्दमये । किं कृत्वा ? **कृत्वा** विधाय अन्तःकरणम् । किंविशिष्टम् ? **पराक्** । पराञ्चतीति पराक् । पराङ्मुखम् । केभ्यः ? **परेभ्यः** शरीरादिभ्यः । किं कृत्वा ? **विरमय्य** व्यावर्त्य । कम् ? **करणग्राम**मिन्द्रियाणां समूहं । केभ्यः ? **स्वार्थेभ्यो** निजनिजविषयेभ्यः । कथम् ? **सुष्ठु** सुतराम् । **च** समुच्चये ।

शुद्धस्वात्मोपलम्भोन्मुखस्य योगकाष्ठासौष्ठवावाप्तिभवितव्यतानुभावभावनामनुभावयति—

**भावैर्वैभाविकैर्मे परिणतिमऽयतोऽनादिसंतानवृत्त्या,**
**कर्मण्यैरेकलोलीभवत उपगतैः पुद्गलैस्तत्त्वतः स्वम् ।**
**बुद्ध्वा श्रद्धाय साम्यं निरुपधि दधतो मुत्सुधाब्धावगाधे,**
**स्याच्चेल्लीलावगाहस्तदयमऽघशिखी किं ज्वलेद्दाह्यशून्यः १४६**

अयं स्वफलमुखेन प्रतीयमानोऽघशिखी पापाग्निः किं ज्वलेत् दीप्येत । न ज्वलेन्निर्वात्येवेत्यर्थः । किंविशिष्टो यतः ? दाह्यशून्यो दाह्येन मोहाद्याविष्टचिद्विवर्तेन तृणकाष्ठादिना च रहितः । कथम् ? तत्त्वतः । चेत्किम् ? चेद् यदि स्यात् । कोसौ ? लीलावगाहो लीलया अनायासेन प्लवनम् । कस्मिन् ? मुत्सुधाब्धौ आनन्दामृतसमुद्रे । किंविशिष्टे ? अगाधे गम्भीरे । कस्य ? मे मम आरब्धयोगस्य । किं कुर्वतः ? दधतो धारयतः । किं तत् ? साम्यं रागद्वेषयोरुपरमम् । किंविशिष्टम् ? निरुपधि निर्दम्भम् । किं कृत्वा ? बुद्ध्वा निश्चित्य श्रद्धाय चाभिनिविश्य । कम् ? स्वमात्मानम् । केन ? तत्त्वतो याथात्म्येन ? किं कुर्वतः पूर्वम् ? अयतो गच्छतः । काम् ? परिणतिं परिणामम् । कैः ? भावैः । किंविशिष्टैः ? वैभाविकैरौपाधिकैः । मोहरागद्वेषैरित्यर्थः । तथा एकलोलीभवतः कथंचित्तादात्म्यमापद्यमानस्य । कैः सह ? पुद्गलैः रूपिद्रव्यैः । किंविशिष्टैः ? कर्मण्यैर्ज्ञानावरणादिकर्मयोग्यैः । पुनः किंविशिष्टैः ? उपगतैः सदासन्निहितैः । कया ? अनादिसंतानवृत्त्या आसंसारसंतत्यनुपरमेण ।

समाधिमधिरुरुक्षोर्मुमुक्षोरन्तरात्मानुशिष्टिमुपदेष्टुमाचष्टे—

**अयमधिमदबाधो भात्यहंप्रत्ययो य,—**
**स्तमनु निरवबन्धं बद्धनिर्व्याजसख्यम् ।**
**पथि चरसि मनश्चेत्तर्हि तद्धाम हीर्षे,**
**भवदवविपदो दिङ्मूढमभ्येषि नो चेत् ॥ १४७ ॥**

**हे मनश्चित्त, योऽयं भाति** प्रतिभासते । कोसौ ? **अहंप्रत्ययो**ऽहंकारानुरक्तज्ञानम् । कथम् ? **अधिमद्** मय्यात्मन्यधिकृत्य । किंविशिष्टः ? **अबाधः** नास्ति बाधोऽन्यथाभावो यस्य विपरीतार्थोपस्थापकप्रमाणाभावाद् यत्र अहमित्यनुपचरितप्रत्ययः स आत्मेति वचनसद्भावाच्च । **तमनु** तेन सह **बद्धनिर्व्याजसख्यं** योजितनिश्छद्ममैत्रीकं **मनश्चेच्चरसि** प्रवर्तसे त्वम् । क ? **पथि** मार्गे । कथं कृत्वा ? **निरवबन्धमस्खलितम्** । तर्हि **हि स्फुटमीर्षे** गच्छसि त्वम् । किं तत् ? **तद्धाम** तद् वाचामगोचरतया स्वैकसंवेद्यतया वा प्रसिद्धं धाम स्थानम् । **नो चेदन्यथा** चरसि चेत्त्वं तदाऽभ्येषि अभिमुखं गच्छसि त्वम् । काः ? **भवदवविपदः** संसारदावाग्निविपत्तीः । किंविशिष्टं सत् ? **दिङ्मूढं** दिशि गुरूपदेशे मूढं व्यामुग्धम् । अन्योपि यथोक्तनीत्या यः पथि न संचरति स दिक्षु व्यामुग्धः सन् दवाग्निविपत्तीरभिगच्छतीत्युक्तिलेशः ।

एवमाकिंचन्यव्रतबद्धकक्षस्य भिक्षोः शिक्षामापाद्य पूर्वविभ्रमसंस्कारात् तत्र पुनः श्लथीभावावतारतिरस्काराय मनोज्ञामनोज्ञेन्द्रियविषयरागद्वेषवर्जनलक्षणपञ्चभावनाप्रयोगपुरःसरं प्रयत्नमावर्णयति—

**यश्चार्वचारुविषयेषु निषिद्ध्य राग,—**
**द्वेषौ निवृत्तिमधियन् मुहुरा निवर्त्यात् ।**
**ईर्त्ते निवर्त्यविरहादनिवृत्तिवृत्ति,**
**तद्धाम नौमि तमसङ्गमसङ्गसिंहम् ॥ १४८ ॥**

**नौमि** स्तौम्यहम् । कम् ? **तमसङ्गसिंहं** निर्ग्रन्थप्रधानम् । किंविशिष्टम् ? **असङ्गं** निरुपलेपं संततं वा नौमि । यः किम् ? य **ईर्त्ते** गच्छति । किं तत् ? **तद्धाम** । किंविशिष्टम् ? **अनिवृत्तिवृत्ति** निवृत्तिप्रवृत्तिरहितम् । कस्मात् ? **निवर्त्यविरहाद्** निवर्तनीयाभावात् । किं कुर्वन् ? **अधियन्** ध्यायन् । कथम् ? **मुहुः** पुनः पुनः । काम् ? **निवृत्तिम्** । कथम् ? **आ** । कस्मात् ? **निवर्त्यात्** । निवर्तनीयं बन्धं बन्धनिबन्धनं च यावदस्ति तावन्निवृत्तिं भावयन्नित्यर्थः । किं कृत्वा ? **निषिद्ध्य** । प्रतिषिद्ध्य । कौ ? **रागद्वेषौ** प्रीत्यप्रीती । केषु ? **चार्वचारुविषयेषु** । चारवश्चाचारवश्च चार्वचारवः । ते च

ते विषयाश्चेन्द्रियार्थास्तेषु । मनोज्ञामनोज्ञयोः स्पर्शयोः रसयोर्गन्धयो रूपयोः शब्दयोश्च रागद्वेषनिषेधं कुर्वेत्यर्थः । तथा चोक्तम्—

निवृत्तिं भावयेद्यावन्निवर्त्यं तदभावतः।
प्रवृत्तिर्न निवृत्तिश्च तदेव पदमव्ययम् ॥
रागद्वेषौ प्रवृत्तिः स्यान्निवृत्तिस्तन्निषेधनम् ।
तौ च बाह्यार्थसंबद्धौ तस्मात्तान् सुपरित्यजेत् ॥

इति परिग्रहपरित्यागमहाव्रतम् ।

इदानीं स्वस्वभावनासंपादितस्थैर्याणि व्रतानि साधूनां समीहितं साधयन्तीत्युपदेशार्थमाह—

**पञ्चभिः पञ्चभिः पञ्चाप्येतेऽहिंसादयो व्रताः ।**
**भावनाभिः स्थिरीभूताः सतां सन्तीष्टसिद्धिदाः ॥१४९॥**

एते प्रागुक्ताः पञ्चापि अहिंसादयो हिंसानृतस्तेयाब्रह्मपरिग्रहविरतिरूपा व्रताः सन्ति भवन्ति । किंविशिष्टाः ? इष्टसिद्धिदा अभिमतार्थसाधकाः । केषाम् ? सतां साधूनाम् । किंविशिष्टाः सन्तः ? स्थिरीभूता निश्चलतां प्राप्ताः । काभिः ? भावनाभिः । कतिभिः कतिभिः ? पञ्चभिः पञ्चभिः । ताश्च प्रतिव्रतं प्राग्दर्शिताः ।

उक्तलक्षणानां पञ्चानां व्रतानां महत्त्वसमर्थनपुरःसरं रात्रिभोजनविरमणलक्षणं षष्ठमणुव्रतं रक्षणार्थमुपदिशन्नुत्तरोत्तराभ्याससौष्ठवेन संपूर्णीकरणे सति निर्वाणलक्षणं फलमालक्षयति—

**पञ्चैतानि महाफलानि महतां मान्यानि विष्वग्विर,-**
**त्यात्मानीति महान्ति नक्तमशनोज्झाणुव्रताग्राणि ये ।**
**प्राणित्राणमुखप्रवृत्त्युपरमानुक्रान्तिपूर्णीभव,—**
**त्साम्याः शुद्धदृशो व्रतानि सकलीकुर्वन्ति निर्वान्ति ते १५०**

ते मुमुक्षवो निर्वान्ति जीवन्मुक्तिमधिगम्य परममुक्तिमासादयन्ति ।

अयोगचरमसमये एव चारित्रस्य संपूर्णीभावाद् योगानामचारित्रस्य व्यापकत्वात्। तथा चोक्तम्—

**सीलेसिं संपत्तो णिरुद्धणिस्सेसआसवो जीवो।**
**कम्मरयविप्पमुक्को गयजोगो केवली होइ॥**

अपि च—

**यस्य पुण्यं च पापं च निष्फलं गलति स्वयम्।**
**स योगी तस्य निर्वाणं न तस्य पुनरास्रवः॥**

ये किम्? ये **शुद्धदृशः** क्षायिकसम्यग्दृष्टयः सन्तः **सकलीकुर्वन्ति** सामायिकशिखरारोहणेन सूक्ष्मसाम्परायकाष्ठामधिष्ठाय यथाख्यातरूपतां नयन्ति। कानि? **एतानि पञ्च व्रतानि**। कथंभूता भूत्वा? **प्राणीत्यादि**। प्राणित्राणं मुखे आदौ यस्याः सा प्राणित्राणमुखा। सा चासौ प्रवृत्तिश्च प्राणित्राणमुखप्रवृत्तिः। अधस्तनभूमिकायां प्राणिरक्षणे सत्यभाषणे दत्तादाने ब्रह्मचरणे योग्यपरिग्रहस्वीकरणे च या प्रवृत्तिः तस्या उपरम उपरिमभूमिकायां व्यावर्तनम्। तस्यानुक्रान्त्याऽनुक्रमणेन गुणश्रेणिसंक्रमोपसर्पणेन पूर्णीभवत् संपूर्णतां गच्छत् साम्यं सर्वसावद्ययोगविरतिमात्रलक्षणं सामायिकचारित्रं येषां ते **प्राणित्राणमुखप्रवृत्त्युपरमानुक्रान्तिपूर्णीभवत्साम्याः**। किंविशिष्टानि व्रतानि? **महान्ति**। कुतो हेतोः? **इति** यतो भवन्त्येतानि व्रतानि। किंविशिष्टानि? **महाफलानि**। महदनन्तज्ञानादिलक्षणं फलं येषाम्। यतश्चैतानि भवन्ति। किंविशिष्टानि? **महतां मान्यानि** गणधरदेवादीनामनुष्ठेयतया सेव्यानि इन्द्रादीनां वा दृग्विशुद्धिविवृद्ध्यङ्गतया पूज्यानि। यतश्चैतानि भवन्ति। किंविशिष्टानि? **विश्वग्विरत्यात्मानि** स्थूलसूक्ष्मभेदसकलहिंसादिविरतिरूपाणि। अतो महान्ति। उक्तं च—

**आचरितानि महद्भिर्यच्च महान्तं प्रसाधयन्त्यर्थम्।**
**स्वयमपि महान्ति यस्मान्महाव्रतानीत्यतस्तानि॥**

अपि च—

**महत्त्वहेतोर्गुणिभिः श्रितानि महान्ति मत्वा त्रिदशैर्नतानि।**
**महासुखज्ञाननिबन्धनानि महाव्रतानीति सतां मतानि॥**

पुनः किंविशिष्टानि ? **नक्तमशनोज्झाणुव्रताग्राणि।** नक्तं रात्रावशनस्य चतुर्विधाहारस्योज्झा वर्जनम्। सैवाणुव्रतम्। तस्याश्चाणुव्रतत्वं रात्रावेव भोजननिवृत्तेर्दिवसे यथाकालं तत्प्रवृत्तिसंभवात्। तदग्रं प्रधानं येषां, रक्षार्थत्वात्। तदुक्तम्—

**तेसिं चेव वयाणं रक्खत्थं रायभोयणणियत्ती।**
**अट्ठ य पवयणमादाउ भावणाओ य सव्वाओ॥**

रात्रिभोजने हि मुनेर्हिंसादीनां प्राप्तिः। शङ्का चात्मविपत्तिश्च स्यात्। तदप्युक्तम्—

**तेसिं पंचण्हं पिय वयाणमावज्जणं च संकाओ।**
**आदविवत्ती अह विज्जरादिभत्तप्पसंगह्मि॥**

रात्रौ हि भिक्षार्थं पर्यटन् प्राणिनो हिनस्ति दुरालोकत्वात् दायकागमनमार्गं तस्यात्मनश्चावस्थानदेशमुच्छिष्टस्य निपातदेशमाहारं च योग्यमयोग्यं वा निरूपयितुं न शक्नोति कडच्छुकादिकं वा शोधयितुमतिसूक्ष्मत्रसानां दिवापि दुष्परिहारत्वात्। पादविभागिकामेषणासमित्यालोचनां सम्यगपरीक्षितविषयां कुर्वन् कथमिव सत्यव्रती स्यात्। सुप्तेन स्वामिभूतेनादत्तमप्याहारं गृह्णतोऽस्यादत्तादानमपि स्यात्। विद्विष्टा गोत्रिणो वैरिणो वा विशङ्किता रात्रौ मार्गादौ ब्रह्मचर्यं वास्य नाशयन्ति। दिवानीतं च संवृत्तौ निजभाजने धृतमाहारं रात्रौ भुञ्जानः सपरिग्रहश्च भवेत्। तथा मम हिंसादयः किं संवृत्ता नवेति शङ्का रात्रिभोजिनः स्यात्। स्थाणुसर्पकण्टकादिभिरुपघाताश्च।

मैत्रीप्रमोदकारुण्यमाध्यस्थ्यानि सत्त्वगुणाधिकक्लिश्यमानाविनयेषु यथाक्रमं भावयतः सर्वाण्यपि व्रतानि परं दार्ढ्यमासादयन्तीति तद्भावनाचतुष्टये मुक्तिकामान् नियोक्तुमभिधत्ते—

**मा भूत्कोपीह दुःखी भजतु जगदसद्धर्म शर्मेति मैत्रीं,**
**ज्यायो वृत्तेषु रज्यन्नयनमधिगुणेष्वेष्विवेति प्रमोदम्।**
**दुःखाद्रक्षेयमार्तान् कथमिति करुणां ब्राह्मि मामेहि शिक्षा,**
**काऽद्रव्येष्वित्युपेक्षामपि परमपदाभ्युद्यता भावयन्तु ॥१५१॥**

**भावयन्तु** वीर्यान्तरायचारित्रमोहक्षयोपशमे सत्यसकृत् प्रवर्तयन्तु। के ते ? **परमपदाभ्युद्यताः** परमपदायानन्तज्ञानादिचतुष्टयलक्षणायाभिमुखमुद्युक्ताः। काम् ? **मैत्रीम्**। मित्रस्य भावः कर्म वा मैत्री सत्त्वेषु दुःखानुत्पत्तिकाङ्क्षा कथं भावयन्तु ? **इति मा भूत्** मा जनिष्ट। कोसौ ? **कोपि** कश्चित् प्राणी। किंविशिष्टः ? **दुःखी** दुःखेन तत्कारणेन च पापेन युक्तः। क्व ? **इह** लोके। तथा च पठन्ति—

**शिवमस्तु सर्वजगतः परहितनिरता भवन्तु भूतगणाः।**
**दोषाः प्रयान्तु नाशं सर्वत्र सुखीभवतु लोकः॥**

तथा **भजतु** लभताम्। किं तत् ? **जगत्** विश्वम्। किं तत् ? **शर्म** सुखम्। किंविशिष्टम् ? **असद्धर्म** अविद्यमानव्याजम्। पारमार्थिकमित्यर्थः। तथा चोक्तम्—

**मा कार्षीत् कोपि पापानि मा च भूत्कोपि दुःखितः।**
**मुच्यतां जगदप्येषा मतिर्मैत्री निगद्यते॥**

तथा ते भावयन्तु। कम् ? **प्रमोदं** वदनप्रसादादिभिरभिव्यज्यमानमन्तर्भक्तिरागम्। कथम् ? **इति**। वर्तते। किं तत् ? **हृद्** मनः। किंविशिष्टम् ? **ज्यायः** प्रशस्यतरम्। किं कुर्वत् ? **रज्यद्** रागं गच्छत्। केषु ? **तेषु**। किंविशिष्टेषु ? **अधिगुणेषु** सम्यग्ज्ञानादिगुणोत्कृष्टेषु देशकालविप्रकृष्टेषु स्मृतिविषयेषु। किमिव केषु ? नयनमधिगुणेष्वेष्विव। यथा वर्तते। किं तत् ? **नयनं** चक्षुः। किंविशिष्टम् ? ज्यायः। किं कुर्वत् ? रज्यत्। केषु ? **एषु** पुरोवर्तिषु दृश्यमानेषु। किंविशिष्टेषु ? अधिगुणेषु गुणाधिकेषु। तथा चोक्तम्—

**अपास्ताशेषदोषाणां वस्तुतत्त्वावलोकिनाम्।**
**गुणेषु पक्षपातो यः स प्रमोदः प्रकीर्तितः॥**

तथा ते भावयन्तु। काम् ? **करुणां** दीनानुग्रहभावम्। कथम् ? **इति कथम् रक्षेयं** त्रायेयमहम्। कान् ? **आर्तान्** क्लिश्यमानान् प्राणिनः। कस्मात् ? **दुःखात्**। दुःखार्तानां दुःखं कथं निवारयेयमहमित्यर्थः। तथा चोक्तम्—

दीनेष्वार्तेषु भीतेषु याचमानेषु जीवितम् ।
प्रतीकारपरा बुद्धिः कारुण्यमभिधीयते ॥

तथा ते भावयन्तु । काम् ? उपेक्षां माध्यस्थ्यम् । अपि समुच्चये । कथम् ? इति । हे ब्राह्मि वाग्देवि एहि आगच्छ त्वम् । कम् ? मां साम्यभावनापरमात्मानम् । मा ब्रूहीत्यर्थः । का ? न कापि शिक्षा शिष्टिर्भवति । केषु ? अद्रव्येषु यत्र सद्भिराधीयमाना गुणाः संक्रामन्ति तद् द्रव्यम् । इत्येवंलक्षणशून्येषु । तत्त्वार्थश्रवणग्रहणाभ्यामसंपादितगुणेषु । तथा चोक्तम्—

क्रूरकर्मसु निःशङ्कं देवतागुरुनिन्दिषु ।
आत्मशंसिषु योपेक्षा तन्माध्यस्थ्यमुदीरितम् ॥

इमानि च मैत्र्यादिसूक्तान्यनुचिन्त्यानि ।

कायेन मनसा वाचा परा सर्वत्र देहिनि ।
अदुःखजननी वृत्तिर्मैत्री मैत्रीविदां मता ॥
तपोगुणाधिके पुंसि प्रश्रयाश्रयनिर्भरः ।
जायमानो मनोरागः प्रमोदो विदुषां मतः ॥
दीनाभ्युद्धरणे बुद्धिः कारुण्यं करुणात्मनाम् ।
हर्षामर्षोज्झिता वृत्तिर्माध्यस्थ्यं निर्गुणात्मनि ॥

यत्तु "हिंसादिष्विहामुत्रापायावद्यदर्शन" मिति, "दुःखमेव वा" इति सूत्रद्वयेन सर्वव्रतसाधारणं भावनान्तरमुच्यते तत् प्रतिव्रतं वाक्प्रबन्धेन प्रदर्शितमेव । अधुना—

" अव्रती व्रतमादाय व्रती ज्ञानपरायणः ।
परात्मबुद्धिसंपन्नः स्वयमेव परो भवेत् ॥ "

इति मोक्षमार्गविहरणमुररीकृत्य मैत्र्यादिभावनास्वाध्यायव्यवहारनिश्चयध्यानविधानफलप्रकाशनेन महाव्रतनिर्वाहपरांस्तदुपयोगाय जागरयितुमाह-

**मैत्र्याद्यभ्यसनात् प्रसद्य समयादावेद्य युक्त्याश्रितात्**
**यत्किंचिद्रुचितं चिरं समतया स्मृत्त्वातिसाम्योन्मुखम् ।**

**ध्यात्वार्हन्तमुतस्विदेकमितरेष्वत्यन्तशुद्धं मनः,**
**सिद्धं ध्यायदहंमहोमयमहो स्याद्यस्य सिद्धः स वै ॥ १५२ ॥**

अहो भो महाव्रतपालनोद्यता मुनयो, वै स्फुटं स साधुर्भवति । किंविशिष्टः ? सिद्धः शुद्धनिश्चयवादिनां निर्व्यूढमहाव्रतभरत्वेन प्रसिद्धः । तथा चोक्तम्—

स च मुक्तिहेतुरिद्धो ध्याने यस्मादवाप्यते द्विविधोपि ।
तस्मादभ्यस्यन्तु ध्यानं सुधियः सदाप्यपास्यालस्यम् ॥

अथवा स तथा शुद्धस्वरूपपरिणतो ध्याता वै निश्चयेन सिद्धो भावतः परममुक्तः स्यात् । तथा चोक्तम्—

परिणमते येनात्मा भावेन स तेन तन्मयो भवति ।
अर्हद्ध्यानाविष्टो भावार्हन् स्यात् स्वयं तस्मात् ॥

अपि च—

येन भावेन यद्रूपं ध्यायत्यात्मानमात्मवित् ।
तेन तन्मयतां याति सोपाधिः स्फटिको यथा ॥

यस्य किम् ? यस्य मनश्चित्तं स्यात् । किंविशिष्टम् ? अहंमहोमयमात्मतेजोरूपम् । उक्तं च—

लवणं व सलिलजोए झाणे चित्तं विलीयए जस्स ।
तस्स सुहासुहडहणो अप्पा अणलो पयासेइ ॥

किं कुर्वत् ? ध्यायत् एकाग्रतया चिन्तयत् । कम् ? सिद्धं परममुक्तम् । कथंभूतं भूत्वा ? अत्यन्तशुद्धं परमौदासीन्यपरिणतम् । किं कृत्वा ध्यात्वा एकाग्रत्वेन चिन्तयित्वा । कम् ? अर्हन्तं जीवन्मुक्तम् । उतस्वित् अथवा ध्यात्वा । कम् ? एकम् । केषु ? इतरेषु आचार्यादिषु त्रिषु मध्ये आचार्यमुपाध्यायं साधुं वा ध्यात्वेत्यर्थः । कथंभूतं भूत्वा ? अतिसाम्योन्मुखं परमौदासीन्यपरिणामप्रयत्नपरम् । उक्तं च—

सति हि ज्ञातरि ज्ञेयं ध्येयतां प्रतिपद्यते ।
ततो ज्ञानस्वरूपोयमात्मा ध्येयतमः स्मृतः ॥

तत्रापि तत्त्वतः पञ्च ध्यातव्याः परमेष्ठिनः।
चत्वारः सकलास्तेषु सिद्धस्वामी तु निष्कलः॥

किं कृत्वा? **स्मृत्वा** ध्यात्वा। किं तत्? **यत्किञ्चित्** अनियतं चेतनमचेतनं वा वस्तु। किंविशिष्टम्? **रुचितं** श्रद्धया विषयीकृतम्। कया? **समतया** रागद्वेषाविषयत्वेन। कियत्कालम्? **चिरं** परमौदासीन्ययोग्यतां यावत्। यदाह—

यत्रैवाहितधीः पुंसः श्रद्धा तत्रैव जायते।
यत्रैव जायते श्रद्धा चित्तं तत्रैव लीयते॥

अपि च—

किमत्र बहुनोक्तेन ज्ञात्वा श्रद्धाय तत्त्वतः।
ध्येयं समस्तमप्येतन्माध्यस्थ्यं तत्र बिभ्रता॥

किं कृत्वा? **आवेद्य** जीवादिध्येयवस्तु यथावस्थितत्वेन निर्णीय। कस्मात्? **समयात्** आगमात्। किंविशिष्टात्? **अश्रितात्** पूजितात्। अनुगृहीतादित्यर्थः। कया? **युक्त्या** संप्रदायाव्यवच्छेददृष्टेष्टाविरोधादिहेतुना। किं कृत्वा? **प्रसद्य** अप्रशस्तरागद्वेषादिरहितं भूत्वा। कस्मात्? **मैत्र्याद्यभ्यसनात्** सत्त्वगुणाधिकक्लिश्यमानाविनेयविषयमैत्रीप्रमोदकारुण्यमाध्यस्थ्यभावनात्। यदाह—

एता मुनिजनानन्दसुधास्यन्दैकचन्द्रिकाः।
ध्वस्तरागादिसंक्लेशा लोकाग्रपथदीपिकाः॥

इति महाव्रतप्रकरणम्।

एवं विशेषसामान्यभावनारात्रिभोजनवर्जनपरिकराणि व्रतान्यभिधाय सांप्रतं गुप्तिसमितीर्व्याख्यातुकामस्तासां प्रवचनमातृत्वोपपत्तिप्रतिपादनपूर्वकं व्रतोद्यतानामाराध्यत्वमुपदिशति—

अहिंसां पञ्चात्म व्रतमथ यताङ्गं जनयितुं,
सुवृत्तं पातुं वा विमलयितुमम्बाः श्रुतविदः।
विदुस्तिस्रो गुप्तीरपि च समितीः पञ्च तदिमाः,
श्रयन्त्विष्टायाष्टौ प्रवचनसवित्रीर्व्रतपराः॥ १५३॥

**श्रुतविद्** आगमज्ञा **विदुर्जा**नन्ति। काः? **तिस्र**स्त्रिसंख्या **गुप्तीः पञ्च समितीश्च**। **अपि** चेति समुच्चये। किंविशिष्टा विदुः? **अम्बाः** मातॄः। किं कर्तुम्? **जनयितुं** उत्पादयितुं **पातुं** पालयितुं, **विमलयितुं वा** शोधयितुम्। किं तत्? **सुवृत्तं** सम्यक्चारित्रम्। किम्? **वृतम्**। किंरूपम्? **अहिंसाम**हिंसारूपम्। अथ **पञ्चात्म** हिंसाविरत्यादिपञ्चकम्। किंविशिष्टमेतदुभयमपि सुवृत्तं? **यताङ्गं** यतस्य सावद्यविरतस्य योगाय वा यतमानस्याङ्गं शरीरं। यथा जनन्यः पुत्रशरीरं जनयन्ति पालयन्ति शोधयन्ति च तथा गुप्तिसमितयः सम्यक्चारित्रलक्षणं यतिगात्रमित्यर्थः। यत एवं **तत्** तस्मात् **श्रयन्तु** आराधयन्तु। के? **व्रतपरा** व्रतनिष्ठाः। काः? **इमा** गुप्तिसमितीः। किंविशिष्टाः? **प्रवचनसवित्रीः** प्रवचनस्य रत्नत्रयस्य मातॄः। कति? **अष्टौ**। कस्मै? **इष्टाय** अभिप्रेतार्थसिद्ध्यर्थम्।

गुप्तिसामान्यलक्षणमाह—

**गोप्तुं रत्नत्रयात्मानं स्वात्मानं प्रतिपक्षतः।**
**पापयोगान्निगृह्णीयाल्लोकपंक्त्यादिनिस्पृहः॥ १५४॥**

**निगृह्णीयाद्** दण्डयेत्। कोसौ? व्रतपरः। कान्? **पापयोगान्**। व्यवहारेण पापाः पापार्था निश्चयेन च शुभाशुभकर्मास्रवणकारणत्वान्निन्दिता योगा मनोवाक्कायव्यापारास्तान्। यदाह—

**वाक्कायचित्तजानेकसावद्यप्रतिषेधकम्।**
**त्रियोगरोधकं वा स्याद्यत् तद्गुप्तित्रयं मतम्॥**

किंविशिष्टः सन्? **लोकपङ्क्त्यादिनिस्पृहः**। लोकपङ्क्तौ लोकैः क्रियमाणायां पूजायाम्, आदि शब्दाल्लाभे ख्यातौ च निरीहः। एतेन 'सम्यग्योगनिग्रहो गुप्तिः' इत्यनुसूत्रितं प्रतिपत्तव्यम्। किं कर्तुमसौ तान्निगृह्णीयात्? **गोप्तुं** रक्षितुम्। कम्? **स्वात्मानम्**। किंविशिष्टम्? **रत्नत्रयात्मानं** सम्यग्दर्शनादिमयम्। कस्मात्? **प्रतिपक्षतो** मिथ्यादर्शनादित्रयात् कर्मबन्धनाद्वा।

दृष्टान्तेन गुप्तिप्रयोगाय जागरयति—

**प्राकारपरिखावप्रैः पुरवद्रत्नभासुरम्।**
**पायादपायादात्मानं मनोवाक्कायगुप्तिभिः॥ १५५॥**

पायात् रक्षेद्व्रती । कम् ? **आत्मानम्** । कस्मात् ? **अपायात्** रत्नत्रयभ्रंशनोपायात् । काभिः ? **मनोवाक्कायगुप्तिभिर्म**नोवाक्काययोगनिग्रहैः । किंविशिष्टम् ? **रत्नभासुरं** सम्यग्दर्शनादिभिः साधुत्वेन भासमानम् । किंवत् ? **पुरवत्** । यथा राजा रत्नैः स्वस्वजात्युत्कृष्टैरर्थैः साधुत्वेन भासमानं नगरं प्राकारपरिखावप्रैरपायादभ्युदयभ्रंशनोपायाद्रक्षति । प्राकारोऽन्तःशालः । परिखा खातिका । वप्रः खातिकाबहिर्धूलीप्राकारः । यदाह—

"वप्रः स्याद्धूलिकुट्टिमम्" इति ।

मनोगुप्त्यादीनां विशेषलक्षणान्याह—

**रागादित्यागरूपामुत समयसमभ्याससद्ध्यानभूतां,**
**चेतोगुप्तिं दुरुक्तित्यजनतनुमवाग्लक्षणां वोक्तिगुप्तिम् ।**
**कायोत्सर्गस्वभावां विशररतचुरापोहदेहामनीहा—**
**कायां वा कायगुप्तिं समदृगनुपतन्पाप्मना लिप्यते न ॥१५६॥**

**न लिप्यते** नोपदिह्यते । कोसौ ? **समदृक्** । समं सर्वं हेयमुपादेयं च तत्त्वेन पश्यन् जीवितमरणादौ वा समबुद्धिः साधुः । केन ? **पाप्मना** ज्ञानावरणादिकर्मणा । किं कुर्वन् ? **अनुपतन्** अधुगच्छन् । काम् ? **चेतोगुप्तिम्** । कीदृशीम् ? **रागादित्यागरूपां** रागद्वेषमोहापोहस्वभावाम् । **उत** अथवा **समयसमभ्याससद्ध्यानभूतां** समयसमभ्यासत्वं सद्ध्यानत्वं वा प्राप्ताम् । समय आगमः । स त्रेधा शब्दसमयोर्थसमयो ज्ञानसमयश्चेति । समयस्य सम्यग् विनयपरत्वेनाभ्यसनं समयसमभ्यासः । सद्ध्यानं धर्म्यं शुक्लं च । तथा चोक्तम्—

**विहाय सर्वसंकल्पान् रागद्वेषावलम्बितान् ।**
**स्वाधीनं कुर्वतश्चेतः समत्वे सुप्रतिष्ठितम् ॥**
**सिद्धान्तसूत्रविन्यासे शश्वत् प्रेरयतोथवा ।**
**भवत्यविकला नाम मनोगुप्तिर्मनीषिणः ॥**

तथा समदृक् पाप्मना न लिप्यते । किं कुर्वन् ? अनुपतन् । काम् ? उ-

क्तिगुप्तिं वाग्गुप्तिम्। कीदृशीम्? दुरुक्तित्यजनतनुं परुषवचनादिपरिहारशरीराम् अवाग्लक्षणां वा मौनरूपाम्। तथा चोक्तम्—

साधुसंवृतवाग्वृत्तेर्मौनारूढस्य वा मुनेः।
संज्ञादिपरिहारेण वाग्गुप्तिः स्यान्महामतेः॥

तथा समदृक् पाप्मना न लिप्यते। किं कुर्वन्? अनुपतन्। काम्? कायगुप्तिम्। कीदृशीम्? कायोत्सर्गस्वभावाम्। कायोत्सर्गो देहममत्वत्यागः स्वभावः स्वरूपं यस्याः सैवम्। अथवा विशररतचुरापोहदेहाम्। विशरो हिंसा। रतं मैथुनम्। चुरा चौर्यम्। ताभ्योऽपोहो व्यावृत्तिः। स एव देहः स्वरूपं यस्याः सैवम्। वा अथवा अनीहाकायां सर्वचेष्टानिवृत्तिरूपाम्। तदुक्तम्—

स्थिरीकृतशरीरस्य पर्यङ्कं संश्रितस्य वा।
परीषहप्रपातेपि कायगुप्तिर्मता मुनेः॥

अपि च—

कायक्रियानिवृत्तिः कायोत्सर्गः शरीरके गुप्तिः।
हिंसादिनिवृत्तिर्वा शरीरगुप्तिः समुद्दिष्टा॥

परमार्थत्रिगुप्तमनूद्य तस्यैव परमसंवरनिर्जरे भवत इत्युपदिशति—

**लुप्तयोगस्त्रिगुप्तोऽर्थात्तस्यैवापूर्वमण्वपि।**
**कर्मास्रवति नोपात्तं निष्फलं गलति स्वयम्॥ १५७॥**

भवति। कोसौ? **त्रिगुप्तो** गुप्तित्रयपरिणत आत्मा। कस्मात्? **अर्थात्** परमार्थतः। कीदृशः? **लुप्तयोगो** निरुद्धमनोवाक्कायव्यापारः। तिस्रो गुप्तयोऽतिशयेनास्य सन्तीति। "अर्शआदेरः"। यतो **नास्रवति** नागच्छति। किं तत्? **कर्म** कर्मयोग्यपुद्गलद्रव्यम्। किं विशिष्टम्? **अपूर्वं** नवम्। कियदपि? **अण्वपि** परमाणुमात्रमपि। कस्य? **तस्यैव** परमार्थत्रिगुप्तस्य। तथा **गलति** प्रच्यवते। किं तत्? कर्म। किंविशिष्टम्? **उपात्तं** पुराबद्धम्। कथं कृत्वा? **निष्फलं** स्वफलमदत्त्वैव। कथम्? **स्वयं** प्रयत्नमन्तरेणैव। कस्य? **तस्यैव**।

सिद्धयोगमहिमानमाश्चर्यं भावयति—

**अहो योगस्य माहात्म्यं यस्मिन् सिद्धेऽस्ततत्पथः।**
**पापान्मुक्तः पुमाँल्लब्धस्वात्मा नित्यं प्रमोदते ॥ १५८ ॥**

अहो आश्चर्यं वर्तते। किं तत्? **माहात्म्यम्**। कस्य? **योगस्य** ध्यानस्य। **यस्मिन्योगे सिद्धे** अप्रमत्तसंयतप्रथमसमयादारभ्याऽयोगकेवलिप्रथमसमये व्युपरतक्रियानिवर्त्तिलक्षणचतुर्थशुक्लध्यानरूपतया निष्पन्ने सति **पुमानऽस्ततत्पथः पापान्मुक्त**श्च भूत्वा **लब्धस्वात्मा** सन्नित्यं शश्वत् **प्रमोदते** परमानन्दमनुभवति। अस्तो निराकृतस्तत्पथः पापमार्गो येन सोऽस्ततत्पथः। परमसंवृत इत्यर्थः। पापं चात्र सकलं कर्म। लब्धः प्राप्तः स्वात्मा स्वस्वरूपं येन स लब्धस्वात्मा। परममुक्त इत्यर्थः संसाराभावे पुंसः स्वात्मलाभो मोक्ष इति वचनात्।

मनोगुप्तेरतीचारानाह—

**रागाद्यनुवृत्तिर्वा शब्दार्थज्ञानवैपरीत्यं वा।**
**दुष्प्रणिधानं वा स्यान्मलो यथास्वं मनोगुप्तेः ॥ १५९ ॥**

रागाद्यनुवृत्त्यादित्रयरूपो **मनोगुप्तेर्मलो**ऽतीचारो **यथास्वं** यथायथं **स्यात्**। तत्र **रागाद्यनुवृत्ती** रागद्वेषमोहानुगम्यमानात्मपरिणतिः। एतस्याश्चातीचारत्वं, मनोगुप्तौ सापेक्षत्वेनैकदेशभङ्गत्वात्। एवमुत्तरत्रापि चिन्त्यम्। स एष रागादित्यागरूपाया मनोगुप्तेरतीचारः। शब्देत्यादि। शब्दवैपरीत्यं शब्दशास्त्रविरोधित्वं विवक्षितार्थान्यथात्वप्रकाशकत्वं वा। अर्थः सामान्यविशेषात्माऽभिधेयं वस्तु। तस्य वैपरीत्यं सामान्यमात्रं विशेषमात्रं द्वयं वा स्वतन्त्रम्। अथवा जीवादीनां यथोक्तस्वरूपविपर्यासोर्थवैपरीत्यम्। ज्ञानवैपरीत्यं शब्दस्यार्थस्य तद्द्वयस्य वान्यथाभावेन प्रतिभासः। स एष समयसमभ्यासलक्षणाया मनोगुप्तेरतीचारः। दुष्प्रणिधानमार्तरौद्रे मनसोऽनर्पितत्वं वा। स एष सद्ध्यानरूपाया मनोगुप्तेरतीचारः।

वाग्गुप्तेरतीचारानाह—

**कार्कश्यादिगरोद्गारो गिरः सविकथादरः।**
**हुंकारादिक्रिया वा स्याद्वाग्गुप्तेस्तद्वदत्ययः ॥ १६० ॥**

स्यात् कोसौ ? अत्ययोतीचारः । कस्याः ? वाग्गुप्तेः । कथंभूतः ? कार्कश्यादीत्यादिना निर्दिष्टः । किं वत् ? तद्वत् मनोगुप्तिवत् । यथास्वमित्यर्थः । कार्कश्यादिः । कर्कशा परुषेत्यादिना भाषासमितौ वक्ष्यमाणो दशको वाग्दोषः । कार्कश्यादिर्गरः कृत्रिमविषमिव मोहसंतापादिहेतुत्वात् । तस्योद्गारः श्रोतृन्प्रत्युच्चारणम् । विकथा मार्गविरुद्धाः कथाः स्त्रीराजचौरभक्तविषयाः । तास्वादरः प्रकाशयितुमुद्यमः । सह विकथादरेण वर्तते इति सविकथादरः । सोयं द्वयोपि दुरुक्तित्यागरूपाया वाग्गुप्तेरतीचारः । हुंकार आदिर्येषां हस्तसंज्ञाखात्कारभ्रूचलनादीनां ते हुंकारादयः तेषां क्रिया प्रयोगो हुंकारादिक्रिया । एष मौनलक्षणाया वाग्गुप्तेरतीचारः ।

कायगुप्तेरतीचारानाह—

**कायोत्सर्गमलाः शरीरममतावृत्तिः शिवादीन्यथा,**
**भक्तुं तत्प्रतिमोन्मुखं स्थितिरथाकीर्णेङ्घ्रिणैकेन सा ।**
**जन्तुस्त्रीप्रतिमापरस्वबहुले देशे प्रमादेन वा,**
**सापध्यानमुताङ्गवृत्त्युपरतिः स्युः कायगुप्तेर्मलाः ॥ १६१ ।**

स्युर्भवेयुः । के ? मलाः । कस्याः ? कायगुप्तेः । किंरूपाः ? कायोत्सर्गेत्यादिना निर्दिष्टाः । तत्र कायोत्सर्गमला द्वात्रिंशदावश्यकाध्याये वक्ष्यमाणाः । तथा शरीरममतावृत्तिः शरीरमिदं मदीयमिति प्रवृत्तिस्तथा स्थितिः । कथम् ? तत्प्रतिमोन्मुखं शिवसुगतादिप्रतिबिम्बाभिमुखम् । किं कर्तुमिव ? भक्तुं यथा आराधयितुमिव । कान् ? शिवादीन् । अञ्जलिबन्धादिकं कृत्वा शिवादिप्रतिमाभिमुखमुर्ध्वी भूयावस्थानमित्यर्थः । तथा अथ अथवाऽऽकीर्णे जनसंकुले स्थाने सा स्थितिः । केन । अङ्घ्रिणा पादेन । किंविशिष्टेन ? एकेन । एते व्यस्ताः समस्ताश्च कायोत्सर्गस्वभावायाः कायगुप्तेरतीचाराः वा अथवा कायगुप्तेर्मलः स्यात् । किम् ? स्थितिः । केन ? प्रमादेन अयत्नाचरणेन । क ? देशे प्रदेशे । किंविशिष्टे ? जन्त्वित्यादि । जन्तवः प्राणिनः । स्त्रीप्रतिमाः स्त्रीणां काष्ठपुस्तादिनिर्मितप्रतिरूपकाणि । परस्वानि परधनानि । जन्तवश्च स्त्रीप्रतिमाश्च परस्वानि च जन्तुस्त्रीप्रतिमापरस्वानि । तानि बहुलानि प्रचुराणि यस्मिन् स एवम् । एष हिंसादि-

त्यागलक्षणायाः कायगुप्तेरतीचारः । उत अथवा कायगुप्तेर्मलः स्यात् । किम् ? **अङ्गवृत्त्युपरतिः** शरीरव्यापारनिवृत्तिः । कथं कृत्वा ? **सापध्यानम्** । देहेन हस्तादिना वा परीषहाद्यपनयनचिन्तनमत्रापध्यानम् । तेन सहितं यथा भवति । अयमचेष्टारूपायाः कायगुप्तेरतिचारः । इति गुप्तिप्रकरणम् ।

अथ चेष्टितुकामो मुनिः समितिपरः स्यादित्यनुशास्ति—

**गुप्तेः शिवपथदेव्या बहिष्कृतो व्यवहृतिप्रतीहार्या ।**
**भूयस्तद्भक्त्यवसरपरः श्रयेत्तत्सखीः शमी समितीः ॥ १६२ ॥**

**श्रयेत्** आश्रयेत् । कोसौ ? **शमी** यतिः । काः ? **समितिर्**वक्ष्यमाणलक्षणाः । किंविशिष्टाः ? **तत्सखीर्**गुप्तेरनुचरीः । किंविशिष्टः सन् ? **बहिष्कृतो** दूरीकृतः । कस्याः ? **गुप्तेः** । किं विशिष्टायाः ? **शिवपथदेव्या** मोक्षमार्गाधिदेवतायाः । कया ? **व्यवहृतिप्रतीहार्या** व्यवहृतिश्चेष्टा प्रतीहारीव विराधकदूरीकरणात् । तथा चोक्तम्—

**कर्मद्वारोपरमणरतस्य तिस्रस्तु गुप्तयः सन्ति ।**
**चेष्टाविष्टस्य मुनेर्निर्दिष्टाः समितयः पञ्च ॥**

पुनः किंविशिष्टः ? **भूयस्तद्भक्त्यवसरपरः** पुनर्गुप्त्याराधनप्रस्तावावहितश्च । अयमत्राभिप्रायो—यथा नायिकामाराधयितुकामस्य नायकस्यावसरमलभमानस्य तदनुकूलनार्थं तत्सखीनामाश्रयणं श्रेयस्तथा मुमुक्षोर्गुप्त्याराधनपरस्य । समितीनां सखीत्वं चासां नायिकाया इव गुप्तेः स्वभावाश्रयणात् । समितिषु हि गुप्तयो लभ्यन्ते, न तु गुप्तिषु समितयः ।

निरुक्तिगम्यं समितिसामान्यलक्षणं विशेषोद्देशसहितमाह—

**ईर्याभाषैषणादाननिक्षेपोत्सर्गलक्षणाः ।**
**वृत्तयः पञ्च सूत्रोक्तयुक्त्या समितयो मताः ॥ १६३ ॥**

**मताः** पूर्वाचार्याणामिष्टाः । काः । ? **समितयः** । कति ? **पञ्च** । कथंभूताः ? **वृत्तयः** प्रवृत्तयः । कया ? **सूत्रोक्तयुक्त्या** श्रुतनिरूपितक्रमेण ।

किंलक्षणाः ? ईर्येत्यादि । ईर्या गमनम् । भाषा वचनम् । एषणा भोजनम् । आदाननिक्षेपं संग्रहणस्थापनम् । उत्सर्गो विसर्जनम् । ईर्या च भाषा चैषणा चादाननिक्षेपं चोत्सर्गश्च । ते लक्षणानि स्वरूपाणि यासाम् । आदानं च निक्षेपश्चादाननिक्षेपमिति समाहारद्वन्द्वः । सम्यक् श्रुतनिरूपितक्रमेणेतिर्गतिर्वृत्तिः समितिरिति हि नैरुक्ताः ।

ईर्यासमितिलक्षणमाह—

**स्यादीर्यासमितिः श्रुतार्थविदुषो देशान्तरं प्रेप्सतः,**
**श्रेयःसाधनसिद्धये नियमिनः कामं जनैर्वाहिते ।**
**मार्गे कौक्कुटिकस्य भास्करकरस्पृष्टे दिवा गच्छतः,**
**कारुण्येन शनैः पदानि ददतः पातुं प्रयत्याङ्गिनः ॥ १६४ ॥**

स्यात् संपद्यते। कासौ ? **ईर्यासमितिः** । कस्य ? **नियमिनो** व्रतिनः । किं कुर्वतः ? **गच्छतः** संचरतः । क्व ? **मार्गे** पथि । किंविशिष्टे ? **वाहिते** विध्वस्ते । कैः ? **जनै**र्मनुष्यगजतुरगशकटादिभिः । कथम् ? **कामं** यथेष्टमत्यर्थं वा। पुनः किंविशिष्टे ? **भास्करकरस्पृष्टे** सूर्यरश्मिसंश्लिष्टे । कदा गच्छतः ? **दिवा,** न रात्रौ । किं कुर्वतः ? **ददतः** स्थापयतः । कानि ? **पदानि** पदान् । कथम् ? **शनै**र्मन्दं मन्दम् । कया ? **प्रयत्या** प्रयत्नेन । किं कर्तुम् ? **पातुं** रक्षितुम् । कान् ? **अङ्गिनः** प्राणिनः । केन ? **कारुण्येन** । किंविशिष्टस्य सतः? **श्रुतार्थविदुषः** प्रायश्चित्तादिसूत्रार्थं जानतः। तत्रोपयुक्तस्येत्यर्थः । पुनः किं चिकीर्षतः ? **प्रेप्सतः** प्राप्तुमिच्छतः । किं तत् ? **देशान्तरं** स्वाध्युषितस्थानादन्यत्स्थानम् । कस्मै ? **श्रेयःसाधनसिद्धये** । श्रेयसः साधनानां सम्यग्दर्शनादीनां तदङ्गानां चापूर्वचैत्यालयसदुपाध्यायधर्माचार्यादीनां सिद्धिः संप्राप्तिस्तदर्थम् । पुनः किंविशिष्टस्य ? **कौक्कुटिकस्य** कुक्कुटीं कुक्कुटीपातमात्रं देशं पश्यतः । पुरो युगमात्रदेशप्रेक्षिण इत्यर्थः । " लालाटिककौक्कुटिकौ " इति निपातनात्साधुः । उक्तं च—

**मग्गुज्जोउवओगालंबणसुद्धीहिं इरियदो मुणिणो ।**
**सुत्ताणुवीचिभणिया इरियासमिदी पवयणम्हि ॥**

श्लोकद्वयेन भाषासमितिलक्षणमाह—

कर्कशा परुषा कट्वी निष्ठुरा परकोपिनी ।
छेदङ्करा मध्यकृशातिमानिन्यनयङ्करा ॥ १६५ ॥
भूतहिंसाकरी चेति दुर्भाषां दशधा त्यजन् ।
हितं मितमसंदिग्धं स्याद्भाषासमितो वदन् ॥ १६६ ॥

( युग्मम् )

स्यात्साधुः । कीदृशः ? **भाषासमितः** । किं कुर्वन् ? कर्कशादिदशविधां दुर्भाषां दुष्टवाचां त्यजन् वर्जयन् हितं **मितमसंदिग्धं वदंश्च** । तत्र (१) **कर्कशा** संतापजननी--मूर्खस्त्वं, बलीवर्दस्त्वं, न किंचिज्जानासीत्यादिका । ( २ ) **परुषा** मर्मचालनी त्वमनेकदोषदुष्टोसीति । ( ३ ) **कट्वी** उद्वेगजननी-जातिहीनस्त्वं निर्धर्मस्त्वमिति। ( ४ ) **निष्ठुरा**–त्वां मारयिष्यामि, शिरस्ते कर्तयिष्यामीति । ( ५ ) **परकोपिनी**– किं ते तपः, प्रहसनशीलो निर्लज्जस्त्वमिति । ( ६ ) **छेदङ्करा** छेदकरी वीर्यशीलगुणानां निर्मूलविनाशकरी अथवाऽसद्भूतदोषोद्भावनी । ( ७ ) **मध्यकृषा** ईदृशी निष्ठुरा वाग् याऽस्थनां मध्यमपि कृष्यति तनू करोति । ( ८ ) **अतिमानिनी** आत्मनो महत्त्वख्यापनपरान्येषां निन्दापरा च । ( ९ ) **अनयङ्करा** शीलानां खण्डनकरी अन्योन्यसङ्गतानां वा विद्वेषकारिणी । ( १० ) **भूतहिंसाकरी** प्राणिनां प्राणवियोगकरी । हितं स्वपरोपकारकम् । मितं विवक्षितार्थोपयोगि । असंदिग्धं संशयानुत्पादकम् । भाषासमितिरस्यास्तीति ' अर्श आदि ' त्वात्प्रशंसायामप्रत्ययः ।

एषणासमितिलक्षणमाह—

विघ्नाङ्गारादिशङ्काप्रमुखपरिकरैरुद्गमोत्पाददोषैः,
प्रस्मार्यं वीरचर्यार्जितममलमधःकर्ममुग् भावशुद्धम् ।
स्वान्यानुग्राहि देहस्थितिपटु विधिवद्दत्तमन्यैश्च भक्त्या,
कालेन्नं मात्रयाश्नन् समितिमनुषजत्येषणायास्तपोभृत् ॥१६७॥

अन्तरादयोऽनन्तराध्याये व्याख्यास्यन्ते । **अनुषजति** अनुबध्नाति भजतीत्यर्थः । कोसौ ? **अधःकर्ममुक्** अधःकर्म सूनाङ्गिहिंसनं मुञ्चति त्यजतीत्यधःकर्ममुक् साधुः । काम् ? **समितिं** सम्यक्प्रवृत्तिम् । कस्याः ? **एषणायाः** । एषणासमितिं सेवते इत्यर्थः । किंकुर्वन् ? **अश्नन्** भुञ्जानः । किं तत् ? **विघ्नेत्यादिविशेषणविशिष्टमन्नम्** । अद्यते भुज्यते इत्यन्नं चतुर्विधाहारः । कया ? **मात्रया** प्रमाणेन । क ? **काले** । किंविशिष्टः सन् ? **तपोभृत्** इन्द्रियमनसोर्नियमानुष्ठानलक्षणं तपः पुष्णन् । किंविशिष्टमन्नम् ? **प्रस्मार्य** विस्मरणीयमविषयीकृतम् । त्यक्तमित्यर्थः । कैः ? **उद्गमोत्पाददोषैः** उत्पद्यमानेऽन्ने दातृप्रयोगमुखेणोद्गता उद्गमे दोषा उद्गमदोषा औद्देशिकादयः । उत्पादनमुत्पादः भोक्त्रा अन्नस्योत्पादना, उत्पादे दोषा उत्पाददोषा धात्र्यादयः । उद्गमश्चोत्पादश्चोद्गमोत्पादौ । उद्गमोत्पादयोर्दोषा उद्गमोत्पाददोषास्तैः । किंविशिष्टैः ? **विघ्नेत्यादि** । विघ्ना भुजिक्रियान्तरायाः । अङ्गार आदिर्येषां तेऽङ्गारादयो भुक्तिदोषाः शङ्का प्रमुखा आद्या येषां ते शङ्काप्रमुखा भोज्यदोषाः । विघ्नाश्चाङ्गारादयश्च शङ्काप्रमुखाश्च विघ्नाङ्गारादिशङ्काप्रमुखाः परिकरः परिवर्गो येषां ते विघ्नाङ्गारादिशङ्काप्रमुखपरिकरास्तैः । अन्तरायैरङ्गारादिभिः शङ्कादिभिरुद्गमदोषैरुत्पादनादोषैश्च वर्जितमित्यर्थः । पुनः किंविशिष्टम् ? **वीरचर्यार्जितं** वीरचर्यया अदीनवृत्त्या अर्जितमात्मसात्कृतम् । पुनरपि किंविशिष्टम् ? **अमलम्** । न विद्यन्ते मलाः पूयास्रादयो यस्मिन् । अधःकर्ममुगित्येतदन्नस्य वा विशेषणम् । अधःकर्माख्यं महादोषं मुञ्चति वर्जयतीत्यधःकर्ममुक् । पुनः किंविशिष्टम् ? **भावशुद्धम्** । भावेन भोक्तृपरिणामेन शुद्धमदूषितं भावो वा शुद्धो यस्मिन् । पुनरपि किंविशिष्टम् ? **स्वेत्यादि** । स्वो भोक्तुरात्मा । अन्यो दात्रादीनामात्मा । स्वश्चान्यश्च स्वान्यौ । स्वान्यावनुगृह्णात्युपकरोतीत्येवंशीलः स्वान्यानुग्राही । स चासौ देहश्च शरीरं स्वान्यानुग्राहिदेहः । तस्य स्थितिर्यावदायुरवस्थानम् । तत्र पटु समर्थम् । स्वपरोपकारिशरीरं वर्तयितुं क्षममित्यर्थः । पुनरपि किंविशिष्टम् ? **दत्तं** वितीर्णम् । कैः ? **अन्यैर्ब्राह्मणक्षत्रियवैश्यसच्छूद्रैः** स्वदातृगृहाद् वामतस्त्रिषु गृहेषु दक्षिणतश्च त्रिषु वर्तमानैः षड्भिः स्वप्रति-

ग्राहिणा च सप्तमेन । कया ? भक्तया निर्व्याजानुरागेण । कथम् ? विधिवत् प्रतिग्रहादिविधानेन । चः समुच्चये ।

आदाननिक्षेपसमितिं लक्षयति—

**सुदृष्टमृष्टं स्थिरमाददीत, स्थाने त्यजेत्तादृशि पुस्तकादि ।**
**कालेन भूयः कियतापि पश्येदादाननिक्षेपसमित्यपेक्षः ॥१६८**

**आददीत** गृह्णीयात् । कोसौ ? **आदाननिक्षेपसमित्यपेक्षः** । आदानं च निक्षेपश्चादाननिक्षेपम् । तस्य समितिः सम्यक्प्रवृत्तिरादाननिक्षेपसमितिः । तामपेक्षते यः स तथोक्तः । किं तत् ? **पुस्तकादि** । पुस्तक आदिर्यस्य फलककुण्डिकादिद्रव्यस्य तत् । किंविशिष्टम् ? **सुदृष्टमृष्टं** । सुदृष्टं पूर्वं चक्षुषा सम्यङ्निरूपितं सुमृष्टं पश्चात्पिच्छिकया प्रतिलेखितम् । कथं कृत्वा ? **स्थिरं** विश्रब्धम् । अनन्यचित्तमित्यर्थः । तथा **त्यजे**न्निक्षिपेदसौ किं तत् । पुस्तकादि । कथम्? **स्थिरम्** । क्व ? **स्थाने** । किंविशिष्टे ? **तादृशि** सुदृष्टमृष्टे । तथा **पश्येत्** निरीक्षेतासौ पुस्तकादि । केन ? **कालेन** । किंविशिष्टेन ? **कियतापि** संभावितसंमूर्छनयोग्यत्वेन । कथम् ? **भूयः** पुनः निक्षेपस्य पश्चात् । उक्तं च—

आदाणे णिक्खेवे पडिलेहिय चक्खुणा समासिज्जो ।
दव्वं च दव्वठाणं संयमसिद्धीइ सो भिक्खू ॥
सहसाणाभोइददुप्पमज्जियापच्चुवेक्खणा दोसा ।
परिहरमाणस्स भवे समिदी आदाणणिक्खेवा ॥

उत्सर्गसमितिं निर्देष्टुमाह—

**निर्जन्तौ कुशले विविक्तविपुले लोकोपरोधोज्झिते,**
**प्लुष्टे कृष्ट उतोषरे क्षितितले विष्ठादिकानुत्सृजन् ।**
**धुः प्रज्ञाश्रमणेन नक्तमभितो दृष्टे विभज्य त्रिधा,**
**सुस्पृष्टेप्यपहस्तकेन समितावुत्सर्ग उत्तिष्ठते ॥ १६९ ॥**

**उत्तिष्ठते** उत्सहते साधुः । कस्याम् ? **समितौ** । क्व विषये ? **उत्सर्गे** । उत्सर्गसमितौ यतते इत्यर्थः । किं कुर्वन् ? **उत्सृजन्** मुञ्चन् ।

कान् ? **विष्टादिकान्** पुरीषमूत्रमुखनासिकागतश्लेष्मकेशोत्पाटनवालसप्तमधातुपित्तच्छर्दितप्रमुखानर्थान् । क ? **क्षितितले** भूपृष्ठे न शिलादौ । किंविशिष्टे ? **निर्जन्तौ** द्वीन्द्रियादिजीववर्जिते हरिततृणादिरहिते च । **कुशले** वल्मीकाद्यातङ्ककारणमुक्तत्वात्प्रशस्ते । **विविक्तविपुले** विविक्ते अशुच्याद्यवस्कररहिते निर्जने च, विपुलेऽसङ्कटे । **लोकोपरोधोज्झिते** जनसंकोचमुक्ते । **प्लुष्टे** दवश्मशानाद्यग्निदग्धे । **कृष्टे** हलेनासकृद्विदारिते । **उत** अथवा **ऊषरे** क्षारमृत्तिके स्थण्डिले इत्यर्थः । कदा ? **द्युः** दिने । **नक्तं** रात्रौ पुनर्विष्टादिकानुत्सृजन् क्षितितले उत्सर्गसमितावुत्तिष्ठते । कीदृशे द्युः दिने ? **अभितः** समन्तात् **दृष्टे** निरीक्षिते । केन ? **प्रज्ञाश्रमणेन** वैयावृत्त्यादिकुशलेन साधुना विनयपरेण सर्वसंघप्रतिपालकेन वैराग्यपरेण जितेन्द्रियेण च । किं कृत्वा ? **विभज्य** अवच्छिद्य । कतिधा ? **त्रिधा** । इदमत्र तात्पर्यं—प्रज्ञाश्रमणेन सति सूर्ये रात्रौ साधूनां विण्मूत्राद्युत्सर्गार्थं त्रीणि स्थानानि द्रष्टव्यानि । तथाच सति प्रथमे कदाचिदशुद्धे द्वितीयं, द्वितीयेपि चाशुद्धे तृतीयं तेनुसरन्ति । पुनः किंविशिष्टे ? **सुस्पृष्टेपि** सम्यक्कृतस्पर्शे विष्टादीनुत्स्रष्टुकामेन । केन ? **अपहस्तकेन** विपरीतकरतलेन । उक्तं च—

वणदाहकिसिमसिकदेथं डीले अणुपरोधविच्छिण्णे ।<br>
अवगदजंतुविवित्ते उच्चारादी विसज्जिज्जो ॥<br>
उच्चारं पासवणं खेलं सिंघाणयादिजं दव्वं ।<br>
अच्चित्तभूमिदेसे पडिले हित्ता विसज्जिज्जो ॥

तथा—

रात्रौ च तत्त्यजेत्स्थाने प्रज्ञाश्रमणवीक्षिते ।<br>
कुर्वन् शङ्कानिरासायापहस्तस्पर्शनं मुनिः ॥<br>
द्वितीयाद्यं भवेत्तच्चेदशुद्धं साधुरिच्छति ।<br>
लघुत्वस्यावशे दोषो न दद्याद्गुरुकं यतेः ॥

निरतिचारसमितिपरस्य हिंसाद्यभावलक्षणं फलमाह—

**समितीः स्वरूपतो यतिराकारविशेषतोप्यनतिगच्छन् ।**<br>
**जीवाकुलेपि लोके चरन्न युज्येत हिंसाद्यैः ॥ १७० ॥**

**न युज्येत** न युक्तो भवेत् । कोसौ ? **यतिर्यत्नपरः** साधुः । कैः ?

**हिंसाद्यैः** । किं कुर्वन्? **चरन्** चेष्टमानः । क? **लोके** जगति । किंविशिष्टे? **जीवाकुलेपि** त्रसस्थावरप्राणिसंकुलेपि । पुनः किं कुर्वन् सन्? **अनतिगच्छन्** अतिचारगोचरा अकुर्वन् । काः? **समितीः** । कस्मात्? **स्वरूपतो** यथोक्तं लक्षणमाश्रित्य । न केवलम्, **आकारविशेषतोपि** यथोक्तं मार्गादिविशेषणमाश्रित्य ।

समितीनां माहात्म्यमनुवर्णयंस्तासां सदा सेव्यत्वमाह—

**पापेनान्यवधेपि पद्ममणुशोप्युद्नेव नो लिप्यते,**
**यद्युक्तो यदनादृतः परवधाभावेप्यलं वध्यते ।**
**यद्योगादधिरुह्य संयमपदं भान्ति व्रतानि द्वया,—**
**न्यप्युद्भान्ति च गुप्तयः समितयस्ता नित्यमित्याः सताम् १७१**

**इत्या** गम्याः । सेव्या इत्यर्थः । काः? **ताः समितयः** । केषाम्? **सतां** साधूनाम् । किं कदाचित्? नेत्याह—**नित्यं** सदा । गुप्तिकालादन्यदेत्यर्थः । यदादरानादराभ्यां किं स्यादित्याह—**यद्युक्तो** यासु समितिषु समाहितः साधुर्नो **लिप्यते** नोपश्लिष्यते । केन? **पापेन** । किंविशिष्टेन? **अणुशोपि** अल्पेनापि अल्पमपि वा । क सति? **अन्यवधेपि** दैवात्प्राण्यन्तराणां प्राणव्यपरोपणेपि संपन्ने सति । किमिव केन? **पद्ममिवोद्ना** । यथा न लिप्यते । किं तत्? पद्मं कमलम् । केन? उद्ना उदकेन । किंविशिष्टेन? अणुशोपि । "पादमासनिशाहृदययूषदोर्दन्तनासिकोदकासनशकृद्यकृदसृजां पन्मासनिश्हृद्यूषन्दोषन्दन्नस् उदन्नासन् शकन् यकन् असनो वा स्यादावऽघुटि" इत्यनेनोदकस्योदन् । उक्तं च—

**अजदाचारो समणो छस्सुवि काएसु बंधगोत्ति मदो ।**
**चरति जदं जदि णिच्चं कमलं व जले णिरुवलेवो ।**

तथा **यदनादृतो** यास्वयत्नपरो **वध्यते** । केन? पापेन । कथम्? **अलं** पर्याप्तम् । क? **परवधाभावेपि** । तथा **यद्योगाद्** याभिः समि-

---

१ अयताचारः श्रमणः षट्स्वपि कायेषु बन्धक इति मतः । चरति यतं यदि नित्यं कमलं वा जले निरुपलेपः ॥

तिभिः संबन्धात् **संयमपदं** संयमस्थानमधिरुह्य आरुह्य **भान्ति** दीप्यन्ते। कानि? **व्रतानि**। किंविशिष्टानि? **द्वयान्यपि** महान्त्यणूनि च। तथा चोक्तं वर्गणाखण्डस्य बन्धनाधिकारे—

**"संयमविरईणं को भेदोससमिदि महव्वयाणुव्वयाइं।**
**संयमो समिदीहिं विणा महव्वयाणुव्वयाइं विरदी॥** इति।

तथा **उद्भान्ति** चोद्भासन्ते। काः? **गुप्तयः**। कस्मात्। **यद्योगात्** समितिषु गुप्तिसद्भावस्य प्राग् व्याख्याततत्वात्। इति समितिप्रकरणम्।

इदानीं शीलस्य लक्षणं विशेषांश्चोपदिशन्नुपेयत्वमभिधत्ते—

**शीलं व्रतपरिरक्षणमुपैतु शुभयोगवृत्तिमितरहतिम्।**
**संज्ञाक्षविरतिरोधौ क्ष्मादियममलात्ययं क्षमादींश्च॥ १७२॥**

**उपैतु** स्वीकरोतु साधुः। किं तत्? **शीलम्**। किं रूपम्? **व्रतपरिरक्षणम्**। व्रतानि परिरक्ष्यन्ते परिपाल्यन्तेनेनेत्येवंस्वरूपम्। कतिभेदम्? शुभेत्यादिनोद्दिष्टाष्टादशसहस्रविशेषम्। तत्र **शुभयोगवृत्तिं** पुण्यादाननिमित्तमनोवाक्कायव्यापारपरिणतिं सर्वकर्मक्षयार्थां वा गुप्तित्रयीम्। **इतरहतिम्**। अशुभयोगनिराकृतित्रयीम्। **संज्ञाविरतिमाहार**भयमैथुनपरिग्रहाभिलाषनिवृत्तिचतुष्टयीम्। **अक्षरोधं** स्पर्शनरसनघ्राणचक्षुःश्रोत्रसंवरणं पञ्चतयम्। **क्ष्मादियममलात्ययम्**। तद्यथा—

**भूमिरापोऽनलो वायुः प्रत्येकानन्तकायिकाः।**
**द्विकत्रिकचतुःपञ्चेन्द्रिया दश धरादयः॥**

तेषु यमाः प्राणव्यपरोपणोपरमा विषयभेदाद्दश। तेषां मलात्ययः प्रत्येकमतीचारनिवृत्तिः। तं दशतयम्। **क्षमादीन्** उत्तमक्षमामार्दवार्जवशौचसत्यसंयमतपस्त्यागाकिंचन्यब्रह्मचर्याणि दश। तेषामन्योन्यं गुणनेऽष्टादशशीलसहस्राणि भवन्ति। तद्यथा—

---

१ संयमविरत्योः को भेदः? ससमिति महाव्रताणुव्रतानि। संयमः समितिभिर्विना महाव्रताणुव्रतानि विरतिः, इति।

शुभयोगवृत्तिभिस्तिसृभिरभ्यस्ता अशुभयोगनिवृत्तयस्तिस्रो नव शीलानि स्युः । तानि संज्ञाविरतिभिश्चतसृभिर्गुणितानि षट्त्रिंशत् स्युः । तानीन्द्रियरोधैः पञ्चभिस्ताडितान्यशीत्यधिकं शतं स्युः । तानि क्ष्मादियममलात्ययैर्दशभिर्हतान्यष्टादशशतानि स्युः । तान्येव पुनः क्षमादिभिर्दशभिः संगुणितान्यष्टादशसहस्राणि शीलानि स्युः । तथा चोक्तम्—

योगे करणसंज्ञाक्षे धरादौ धर्म एव च ।
अष्टादश सहस्राणि स्युः शीलानि मिथोबधे ॥
मनोगुप्ते मुनिश्रेष्ठे मनःकरणवर्जिते ।
आहारसंज्ञया मुक्ते स्पर्शनेन्द्रियसंवृते ॥
सधरासंयमे क्षान्तिसनाथे शीलमादिमम् ।
तिष्ठत्यविचलं शुद्धे तथा शेषेष्वपि क्रमः ॥

द्वितीयादीनि यथा–वाग्गुप्ते मुनिश्रेष्ठे इत्यादिनोच्चारणेन द्वितीयम् । एवं कायगुप्ते मुनिश्रेष्ठे इत्यादिना तृतीयम् । ततश्च मनोगुप्ते मुनिश्रेष्ठे वाक्करणवर्जिते[1] इत्यादिना चतुर्थम् । ततश्च वाग्गुप्ते मुनिश्रेष्ठे वाक्करणवर्जिते इत्यादिना पञ्चमम् । ततश्च कायगुप्ते मुनिश्रेष्ठे वाक्करणवर्जिते इत्यादिना षष्ठं शीलं ब्रूयात् ।

तिस्रो गुप्तीः पङ्क्त्याकारेण व्यवस्थाप्योर्ध्वं त्रीणि करणानि तथैव स्थाप्यानि ततश्चतस्रः संज्ञास्ततः पञ्चेन्द्रियाणि ततः पृथिव्यादयो दश ततश्च दश धर्माः । एवं संस्थाप्य पूर्वोक्तक्रमेण शेषाणि शीलानि वक्तव्यानि यावत्सर्वेऽक्षा अचलं स्थित्वा विशुद्धा भवन्ति तावदष्टादशशीलसहस्राण्यागच्छन्तीति ।

गुणानां लक्षणं सविशेषमाचक्षाणः सेव्यत्वमाह—

**गुणाः संयमवीकल्पाः शुद्धयः कायसंयमाः ।**
**सेव्या हिंसाकम्पितातिक्रमाद्यब्रह्मवर्जनाः ॥ १७३ ॥**

**सेव्या** असकृदभ्यसनीयाः साधुना । के ? **गुणाः** । किंलक्षणाः ? **संयमवीकल्पाः** संयमस्य वीकल्पा भेदाः । वीकल्पा इत्यत्र " घञ्यम-

१ वचःकरणवर्जिते इत्युक्ते पादः पूर्येत ।

नुष्ये प्राय" इति दीर्घत्वम् । कति भेदाः ? **शुद्धयः कायसंयमा हिंसादिवर्जना आकम्पितादिवर्जना अतिक्रमादिवर्जना अब्रह्मवर्जनाश्चेत्येतच्चतुरशीतिलक्षभेदभिन्नाः** । हिंसा चाकम्पितं चातिक्रमश्च ते आद्यो येषां ते हिंसाकम्पितातिक्रमादयः । आदिशब्दः प्रत्येकं संबध्यते हिंसादय आकम्पितादयोऽतिक्रमादयश्चेति । वर्जना त्यजनम् । तत्र शुद्धयः प्रायश्चित्तान्यालोचनप्रतिक्रमणतदुभयविवेकव्युत्सर्गतपश्छेदमूलपरिहारश्रद्धानाख्यानि दश । कायसंयमाः पूर्वोक्ताः पृथिवीकायिकादिसंयमभेदा दश ते चान्योन्यगुणिताः शतम् । हिंसेत्यादि—

हिंसानृतं तथा स्तेयं मैथुनं च परिग्रहः ।
क्रोधादयो जुगुप्सा च भयमप्यरतीरतिः ॥
मनोवाक्कायदुष्टत्वं मिथ्यात्वं सप्रमादकम् ।
पिशुनत्वं तथा ज्ञानमक्षाणां चाप्यनिग्रहः ॥

तेषां वर्जनास्त्यजनान्येकविंशतिः ।

आकम्पिय अणुमाणिय जं दिट्ठं बादरं च सुहुमं च ।
छण्णं सद्दाउलियं बहुजणमव्वत्ततस्सेवी ॥

तेषां त्यागा दश । अतिक्रमो व्यासङ्गात्संक्लेशाद्वा आगमोक्तकालादधिककाले आवश्यकादिकरणम् । व्यतिक्रमो विषयव्यासङ्गादिना हीनकाले क्रियाकरणम् । अतिचारः क्रियाकरणालसत्वम् । अनाचारो व्रतादीनामनाचरणं खण्डनं वा । तत्त्यागाश्चत्वारः । नास्ति ब्रह्म यासु ता अब्राह्मणः शीलविराधनाः । तद्यथा—

स्त्रीगोष्ठी वृष्यभुक्तिश्च गन्धमाल्यादिवासनम् ।
शयनासनमाकल्पः षष्ठं गन्धर्ववादितम् ॥
अर्थसंग्रहदुःशीलसङ्गती राजसेवनम् ।
रात्रौ संचरणं चेति दश शीलविराधनाः ॥

तद्वर्जना दश, तत्र चतुर्भिर्गुणिता एकविंशतिश्चतुरशीतिर्गुणाः स्युः । ते च शतेनाहताश्चतुरशीतिशतानि स्युः । ते चाब्रह्मकारणत्यागैर्दशभिरभ्यस्ताश्चतुरशीतिसहस्राणि स्युः । ते चाकम्पितादित्यागैर्दशभिराहताश्चत्वारिं-

शत्सहस्राभ्यधिकान्यष्टौ लक्षाणि स्युः । ते चालोचनादिप्रायश्चित्तभेदैर्दश-भिस्ताडिताश्चतुरशीतिलक्षसंख्या गुणाः स्युः । तथा चोक्तम्—

इगवीसचदुरसदिया दस दस दसगा य आणुपुव्वीए ।
हिंसादिक्कमकाया विराहणा लोचणासोही ॥

गुणोच्चारणविधानं यथा—

मुक्ते प्राणातिपातेन तथातिक्रमवर्जिते ।
पृथिव्याः पृथिवीजन्तोः पुनरारम्भसंयते ॥
निवृत्तवनितासङ्गे चाकम्प्यपरिवर्जिते ।
तथालोचनया शुद्धे गुण आद्यस्तथा परे ॥

द्वितीयादिगुणा यथा—हिंसाद्येकविंशतिं संस्थाप्य तदूर्ध्वमतिक्रमादयश्चत्वारः स्थाप्याः । तदुपरि पृथिव्यादिशतम् । तदूर्ध्वं स्त्रीसंसर्गादयो दश । ततश्चोर्ध्वमाकम्पितादयो दश । ततोऽप्यूर्ध्वमालोचनादयो दश । ततो 'मृषावादेन निर्मुक्ते ' इत्यादिनोच्चारणेन वाच्ये द्वितीयो गुणः । ततश्चादत्तादाननिर्मुक्त इत्यादिना तृतीयः । एवं तावदुच्चार्यं यावच्चतुरशीतिलक्षा गुणाः संपूर्णा उत्पन्ना भवन्तीति । इति शीलगुणप्रकरणम् ।

एवं सप्रपञ्चं सम्यक्चारित्रं व्याख्याय सांप्रतं तदुद्योतनाराधनां वृत्तत्रयेण व्याख्यातुकामस्तावदतिक्रमादिवर्जनार्थं मुमुक्षून् सज्जयति—

चित्क्षेत्रप्रभवं फलर्द्धिसुभगं चेतोगवः संयम,—
व्रीहिव्रातमिमं जिघत्सुरदमः सद्भिः समुत्सार्यताम् ।
नोचेच्छीलवृतिं विलंघ्य न परं क्षिप्रं यथेष्टं चरन्,
धुन्वन्नेनमयं विमोक्ष्यति फलैर्विष्वक् च तं भङ्क्ष्यति ॥१७४॥

सद्भिश्चारित्राराधनोद्यतैः साधुभिरदमोऽदान्तश्चेतोगवो मनोबलीवर्दः समुत्सार्यतां दूरीक्रियताम् । दान्तो विधीयतां निगृह्यतामिति यावत् । किं चिकीर्षुः ? जिघत्सुर्भक्षयितुमिच्छुः । कम् ? इममनन्तरोक्तं संयमव्रीहिव्रातम् संयमो व्रतधारणादिलक्षणः । यदाह—

व्रतदण्डकषायाक्षसमितीनां यथाक्रमम् ।
संयमो धारणं त्यागो निग्रहो विजयोऽवनम् ॥

व्रीहीणां शाल्यादिधान्यानां व्रातः संघातो व्रीहिव्रातः । संयमो व्रीहिव्रात इव; चित्क्षेत्रप्रभवत्वादिसाधर्म्यात् । किंविशिष्टम् ? **चित्क्षेत्रप्रभवम्** । स्वार्थौ चेतत्यचेतच्चेतिष्यतीति चित् स्वपरज्ञप्तिरूप आत्मा चित् क्षेत्रमिव व्रीहिव्रातस्येव संयमस्य प्ररोहणादिकरणत्वात् । चित्क्षेत्रे प्रभवो जन्म यस्य स एवम् । पुनः किंविशिष्टम् ? **फलर्द्धिसुभगम्** सद्वृत्ताराधनस्य फलभूता ऋद्धयः फलर्द्धयः सप्त बुद्ध्यतिशयादिलब्धयः । यदाहुः—

बुद्धितओविय लद्धी विउवणलद्धी तहेव ओसहिया ।
रसबलअक्खीणा वि य रिद्धीओ सत्त पण्णत्ता ॥

पक्षे सस्यसंपदः । फलर्द्धिभिः सुभगः प्रीतिकरः । एतेनातिक्रमो गम्यते । यदाह—

क्षतिं मनःशुद्धिविधेरतिक्रमं,
व्यतिक्रमं शीलवृतेर्विलङ्घनम् ।
प्रभोतिचारं विषयेषु वर्तनं,
वदन्त्यनाचारमिहातिसक्तताम् ॥

**नो चेच्चेतोगवो** यदि न दम्येत तदा **न परं** न केवलं **विमोक्ष्यति** विमुक्तं करिष्यति । वियोजयिष्यतीत्यर्थः । कोसौ ? **अयं चेतोगवः** । कम्? **एनं** संयमव्रीहिव्रातम् । कैः ? **फलैर्मुख्यानुषङ्गिकैः** स्वसाध्यैः सस्यैश्च । किं कुर्वन् ? **चरन्नुपभुञ्जानः** । किम् ? **यथेष्टं** यो य इष्टो विषयस्तं तम् । किं कृत्वा ? **विलङ्घ्य** उलङ्घयित्वा । काम् ? **शीलवृतिं,** वृतिर्वाटीव व्रीहिव्रातस्येव संयमस्य रक्षाहेतुत्वात् । कथम् **क्षिप्रं** शीघ्रम् । पुनः किंकुर्वन् ? **धुन्वन्** विध्वंसयन् । कम् ? एनम् । किं तर्हि ? **भङ्क्ष्यति च** मर्दयिष्यत्ययं चेतोगवः । कम् । **तं** संयमव्रीहिव्रातम् । कथम् **विष्वक्** समन्तात् । विलङ्घ्येत्यनेन व्यतिक्रमो लक्ष्यते, व्यतिक्रमं शीलवृतेर्विलङ्घनमिति वचनात् । यथेष्टमित्यादिनाऽतीचारो निश्चीयते, प्रभोतिचारं विषयेषु वर्तनमिति वचनात् । विष्वगित्यादिनाऽनाचारः प्रतीयते, वदन्त्यनाचारमिहातिसक्ततामिति वचनात् ।

चारित्रविनयं निर्दिशंस्तत्र प्रेरयति—

**सदसत्खार्थकोपादिप्रणिधानं त्यजन् यतिः ।**
**भजन्समितिगुप्तीश्च चारित्रविनयं चरेत् ॥ १७५ ॥**

**यतिश्चरेत्** साधयेत् । कम् ? **चारित्रविनयम्** व्रतान्येवात्र चारित्रम् । चारित्रविनयो निर्मलीकरणयत्नः । किं कुर्वन् ? **त्यजन्** वर्जयन् । किं तत् ? **सदित्यादि** । खानां स्पर्शनादीन्द्रियाणामर्था विषयाः स्पर्शादयः खार्थाः । सन्तः प्रशस्ता इष्टाः । असन्तोऽप्रशस्ता अनिष्टाः सन्तश्चासन्तश्च सदसन्तः । ते च ते खार्थाश्च सदसत्खार्थाः । कोप आदिर्येषां मानादिकषायहास्यादिनोकषायाणां ते कोपादयः । सदसत्खार्थाश्च कोपादयश्च सदसत्खार्थकोपादयः । तेषु प्रणिधानमिष्टानिष्टविषयेषु रागद्वेषविधानं क्रोधादिषु च परिणमनमित्यर्थः । न केवलं, **भजंश्च** सेवमानः । काः ? **समितिगुप्तीः** ।

ऐदंयुगीनधुर्यस्य श्रामण्यप्रतिपत्तिनियमानुवादपुरःसरं भावस्तवमाह—

**सर्वावद्यनिवृत्तिरूपमुपगुर्वादाय सामायिकं,**
**यश्छेदैर्विधिवद्व्रतादिभिरुपस्थाप्याऽन्यदन्वेत्यपि ।**
**वृत्तं बाह्य उतान्तरे कथमपि छेदेप्युपस्थापय,—**
**त्यैतिह्यानुगुणं धुरीणमिह नौम्यैदंयुगीनेषु तम् ॥ १७६ ॥**

**सर्वावद्यनिवृत्तिरूपं** सर्वसावद्ययोगप्रत्याख्यानलक्षण**मुपगुरु** दीक्षकाचार्यसमीपे **आदाय** सर्वसावद्ययोगप्रत्याख्यानलक्षणमेकं महाव्रतमधिरूढोस्मीति प्रतिपद्य **सामायिकं** समये एकत्वगमने भवम् । तदुक्तम्—

**क्रियते यदभेदेन व्रतानामधिरोहणम् ।**
**कषायस्थूलतालीढः स सामायिकसंयमः ॥**

**विधिवदि**त्यत्रापि योज्यम् । विधिवदादायेत्यर्थः । विधिर्यथा, श्रमणो भवितुमिच्छन् प्रथमं तावद्यथाजातरूपधरत्वस्य गमकं बहिरङ्गमन्तरङ्गं च लिङ्गं प्रथममेव गुरुणा परमेणार्हद्भट्टारकेन तदात्वे च दीक्षकाचार्येण तदादानविधानप्रतिपादकत्वेन व्यवहारतो दीयमानत्वाद्दत्तमादानक्रियया संभाव्य तन्मयो भवति । ततो भाव्यभावकभावप्रवृत्तेतरेतरसंवलनप्रत्यस्तमितस्वपर-

विभागत्वेन दत्तसर्वस्वमूलोत्तरपरमगुरून्नमस्क्रियया संभाव्य भावस्तववन्दनामयो भवति । ततः सर्वसावद्ययोगप्रत्याख्यानलक्षणैकमहाव्रतश्रवणात्मना श्रुतज्ञानेन समये भवन्तमात्मानं जानन्सामायिकमधिरोहति । ततः प्रतिक्रमणालोचनप्रत्याख्यानलक्षणक्रियाश्रवणात्मना श्रुतज्ञानेन त्रैकालिककर्मभ्यो विविच्यमानमात्मानं जानन्नतीतप्रत्युत्पन्नानुपस्थितकायवाङ्मनःकर्मविविक्तत्वमधिरोहति । ततः समस्तावद्यकर्मायतनं कायमुत्सृज्य यथाजातरूपं स्वरूपमेकमेकाग्र्येणालम्ब्यावतिष्ठमान उपस्थितो भवति । उपस्थितस्तु सर्वत्र समदृष्टत्वात्साक्षाच्छ्रमणो भवति ।

छेदैर्निर्विकल्पसामायिकसंयमविकल्पैर्व्रतादिभिः पञ्चभिर्महाव्रतैस्तत्परिकरभूतैस्तैश्च त्रयोविंशत्या समित्यादिभिर्मूलगुणैरुपस्थाप्य निर्विकल्पसामायिकसंयमादि—रूढत्वेनानभ्यस्तविकल्पत्वात्तेषु प्रमाद्यन्तमात्मानमारोप्य अन्यच्छेदोपस्थापनाख्यं वृत्तं चारित्रमन्वेति सामायिकादवतीर्णोऽनुवर्तते । केवलकल्याणमात्रार्थिनः कुण्डलवलयाङ्गुलीयादिपरिग्रहः किल श्रेयान्; न पुनः सर्वथा कल्याणाभाव एवेति संप्रधार्य विकल्पेनात्मानमुपस्थापयंश्छेदोपस्थापको भवतीत्यर्थः । तथा चोक्तं प्रवचनसारचूलिकायाम् ।

जहजादरूवजादं[1] उप्पाडिदकेसमंसुगं सुद्धं ।
रहिदं हिंसादीदो अप्पडिकम्मं हवदि लिङ्गं ॥

---

१ यथाजातरूपजातमुत्पाटितकेशश्मश्रुकं शुद्धम् ।
रहितं हिंसादितः अप्रतिकर्म भवति लिङ्गम् ॥
मूर्च्छारम्भवियुक्तं युक्तमुपयोगयोगशुद्धिभिः ।
लिङ्गं न परापेक्षमऽपुनर्भवकारणं जैनम् ॥
आदाय तच्च लिङ्गं गुरुणा परमेण तन्नमस्कृत्य ।
श्रुत्वा सव्रतं क्रियामुपस्थितो भवति स श्रमणः ॥
व्रतसमितीन्द्रियरोधो लोचावश्यकमचेलमस्नानम् ।
क्षितिशयनमदन्तधावनं स्थितिभोजनमेकभक्तं च ॥
एते खलु मूलगुणाः श्रमणानां जिनवरैः प्रज्ञप्ताः ।
तेषु प्रमत्तः श्रमणः छेदोपस्थापको भवति ॥

मुच्छारंभविजुत्तं जुत्तं उवजोगजोगसुद्धीहिं।
लिंगं ण परावेक्खं अपुणब्भवकारणं जोण्हं॥
आदाय तं च लिंगं गुरुणा परमेण तं णमंसित्ता।
सोच्चा सवदं किरियं उवट्ठिदो होदि सो समणो॥
वदसमिदिंदियरोधो लोचावस्सगमचेलमण्हाणं।
खिदिसयणमदंतवणं ठिदिभोयणमेयभत्तं च॥
एदे खलु मूलगुणा समणाणं जिणवरेहिं पण्णत्ता
तेसु पमत्तो समणो छेदोवट्ठावगो होदि॥

अपि न केवलं छेदोपस्थापनमेवान्वेति किन्तु कदाचित्पुनः सामायिकमधिरोहतीत्येवमर्थः बाह्ये चेष्टामात्रादिकृते द्रव्यहिंसारूपे अन्तरे उपयोगमात्रादिकृते भावहिंसारूपे कथमप्यज्ञानेन प्रमादेन वा प्रकारेण ऐतिह्यानुगुणमागमाविरोधेनेत्यर्थः। उक्तं च—

व्रतानां छेदनं कृत्वा यदात्मन्यधिरोपणम्।
शोधनं वा विलोपे तच्छेदोपस्थापनं मतम्॥

इहास्मिन् भरतक्षेत्रे ऐदंयुगीनेषु अस्मिन्युगे साधुषु। दुष्षमाकाले सिद्धिसाधकेष्वित्यर्थः तं सामायिकादवरुह्य छेदोपस्थापनमनुवर्तमानं पुनः सामायिके वर्तमानं च। अथ पदघटना,—नौमि स्तौम्यहम्। कम्? तम्। किंविशिष्टम्? धुरीणं धुर्यं प्रधानम्। केषु मध्ये? ऐदंयुगीनेषु। क्व? इह। यः किम्? योन्वेति। किं तत्? वृत्तम्। किंविशिष्टम्? अन्यत्। किं कृत्वा? उपस्थाप्य। कैः? छेदैः। किंविशिष्टैः? व्रतादिभिः। कथं? विधिवत्। किं कृत्वा? आदाय। किं तत्? वृत्तं। किमाख्यं? सामायिकं। किं लक्षणं? सर्वावद्यनिवृत्तिरूपं। क्व? उपगुरु। कथं? विधिवत्। अपि शब्दात् न केवलं छेदोपस्थापनमेव। योन्वेति कदाचित् पुनः सामायिकमपीत्यर्थः। तथा य उपस्थापयति च। किं तत्? वृत्तं प्रकृतत्वाच्छेदोपस्थापनाख्यम्। क्व सति? छेदे। किंविशिष्टे? बाह्ये उत अथवा अन्तरे। कथम्? कथमपि केनापि प्रकारेण। कथं कृत्वा? ऐतिह्यानुगुणम्। अपिश्चार्थे।

एवं चारित्रस्योद्द्योतनमभिधायेदानीं तदुद्यमनादिचतुष्टयाभिधानार्थमाह—

ज्ञेयज्ञातृतथाप्रतीत्यनुभवाकारैकदृग्बोधभाग्,
द्रष्टृज्ञातृनिजात्मवृत्तिवपुषं निष्पीय चर्यासुधाम् ।
पक्तुं बिभ्रदनाकुलं तदनुबन्धायैव कंचिद्विधिं,
कृत्वाप्यामृति यः पिबत्यधिकशस्तामेव देवः स वै ॥ १७७ ॥

ज्ञेयेत्यादि । ज्ञेयैर्बोध्यैर्हेयोपादेयतत्त्वैरुपलक्षितो ज्ञाता शुद्धचिद्रूप आत्मा ज्ञेयज्ञाता । अथवा ज्ञेयं च ज्ञाता च ज्ञेयज्ञातारौ । तत्र तथा यथोपदिष्टत्वेन प्रतीतिः प्रतिपत्तिरनुभवश्चानुभूतिर्ज्ञेयज्ञातृतथा—प्रतीत्यनुभवौ । ज्ञेयैरुपलक्षिते ज्ञातरि ज्ञेयज्ञात्रोर्वा तथा प्रतीति तथानुभूतीत्यर्थः । ज्ञेयज्ञातृतथाप्रतीत्यनुभवावाकारौ स्वरूपे ययोस्तौ तथोक्तौ । दृक् च बोधश्च दृग्बोधौ । एकौ मुख्यौ दृग्बोधौ तात्त्विकसम्यक्त्वज्ञाने । ज्ञेयज्ञातृतथाप्रतीत्यनुभवाकारौ च तावेकदृग्बोधौ च तौ ज्ञेयज्ञातृतथाप्रतीत्यनुभवाकारैकदृग्बोधौ । तौ भजति सेवते कथंचित्तादात्म्येनानुभवति यः स तथोक्तः । द्रष्टित्यादि । द्रष्टा ज्ञेयज्ञातृतथाप्रतीत्यात्मकतात्त्विकसम्यक्त्वपरिणतः । ज्ञाताज्ञेयज्ञातृतथानुभूत्यात्मकज्ञानपरिणतः । निजश्चासावात्मा निजात्मा स्वात्मा । द्रष्टा चासौ ज्ञाता च द्रष्टृज्ञाता । स चासौ निजात्मा च द्रष्टृज्ञातृनिजात्मा । तत्र वृत्तिरुत्पादव्ययध्रौव्यैकलक्षणमस्तित्वं द्रष्टृज्ञातृनिजात्मवृत्तिः । सैव वपुः स्वभावो यस्याः सा द्रष्टृज्ञातृनिजात्मवृत्तिवपुस्ताम् । उक्तं च—

जीवसहावं णाणं अप्पडिहददंसणं अणण्णमयं ।
चरियं च तेसु णियदं अत्थित्तमणिंदियं भणियं ॥

निष्पीय अतिशयेन पीत्वा । तदुपयुक्तो भूत्वेत्यर्थः । चर्या चारित्रं सुधा अमृतमिवाह्लादकत्वादजरामरत्वहेतुत्वाच्च, चर्यासुधा ताम् । एतेनोद्यवनं द्योत्यते । पक्तुं परिणमयितुं बिभ्रद् धारयन् । अनाकुलं

१ जीवस्वभावं ज्ञानमप्रतिहतदर्शनमनन्यमयम् ।
चर्या च तेषु नियतमऽस्तित्वमनिन्द्रियं भणितम् ॥

लाभपूजाख्यात्यपेक्षालक्षणक्षोभरहितम् । लोकेप्यमृताहारं भुक्त्वा परिणामं नेतुं यानादिक्षोभरहितत्वं बिभर्तीत्युक्तिलेशः । एतेन निर्वहणं प्रणीयते तदनुबन्धायैव तत्तादृक्चर्यासुधापानानुवर्तनार्थमेव कंचिदनियतं विधिं सूत्रोक्तं तीर्थगमनादिव्यवहारं कृत्वापि विधाय। किं पुनरकृत्वेत्यपिशब्दार्थः । आमृति मरणावधि । एतेन निस्तरणं भण्यते । पिबत्युपयुङ्क्ते । अधिकशोऽधिकमधिकं तामेव चर्यासुधाम् । एतेन साधनमभिधीयते । देवः दीव्यते स्तूयते इन्द्राद्यैरिति देवो महतामप्याराध्यः । स उद्यमनादिचारित्राराधनाचतुष्टयनिष्ठः । वै स्फुटं निश्चितम् । उक्तं च—

मान्यं ज्ञानं तपोहीनं ज्ञानहीनं तपो हितम् ।
द्वयं यस्य स देवः स्याद् द्विहीनो गणपूरणः ॥

सैषा चरणसिद्धिमूलशुद्धात्मद्रव्यसिद्धिप्रकाशना । यदाह—

द्रव्यस्य सिद्धिश्चरणस्य सिद्धौ द्रव्यस्य सिद्धौ चरणस्य सिद्धिः ।
बुद्ध्वेति कर्माविरताः परेपि द्रव्याविरुद्धं चरणं चरन्तु ॥

अथ समन्वयः क्रियते । भवति । कोसौ ? सः । कथंभूतः ? देवः । कथम् ? वै । यः किम् ? यः पिबति । काम् ? तामेव । कथम् ? अधिकशः । कियन्तं कालम् ? आमृति । किं कृत्वा ? कृत्वापि । कम् ? विधिम् । कथंभूतम् ? कंचित् । किमर्थम् ? तदनुबन्धायैव । किं कुर्वन् ? बिभ्रत् । काम् ? चर्यासुधाम् । कथंभूताम् ? दृष्टृज्ञातृनिजात्मवृत्तिवपुषम् । कथं कृत्वा ? अनाकुलम् । किं कर्तुम् ? पक्तुम् । किं कृत्वा ? निष्पीय । कथंभूतः सन् ? ज्ञेयज्ञातृतथाप्रतीत्यनुभवाकारैकदृग्बोधभाक् । इत्युद्योतनादिचरित्राराधनापञ्चकप्रकरणम् ।

अथातश्चतुःश्लोक्या चारित्रमाहात्म्यं स्तोतुकामः प्रथमं तावत् प्ररोचनार्थमानुषङ्गिकमभ्युदयलक्षणं मुख्यं च निर्वाणलक्षणं तत्फलमासूत्रयति—

सद्दृग्ज्ञप्त्यमृतं लिहन्नहरहर्भोगेषु तृष्णां दहन् ।
वृत्ते यत्नमथोपयोगमुपयन्निर्मायमूर्मीनयन् ।
तत्किंचित् पुरुषश्चिनोति सुकृतं यत्पाकमूर्छन्नव,—
प्रेमास्तत्र जगच्छ्रियश्चलदृशोपीर्ष्यन्ति मुक्तिश्रिये ॥ १७८ ॥

**चिनोति** संगृह्णाति । बध्नातीत्यर्थः । कोसौ ? **पुरुष** आत्मा । किं तत् ? **किंचित्सुकृतं** तत्किमपि पुण्यम् । यत्पाकेत्यादिना गत्वा संबन्धः कर्तव्यः । किं कुर्वन् ? **लिहन्** आस्वादयन् उपयुञ्जानः । किं तत् ? **सद्दृग्ज्ञप्त्यमृतं** सम्यग्दर्शनज्ञानपीयूषम् । तथा **रहन्** त्यजन् । काम् ? **तृष्णां** काङ्क्षाम् । केषु ? **भोगेषु** विषयेषु । कथम् ? **अहरहः** प्रत्यहम् । तथा **उपयन्** उपगच्छन् । कम् ? **यत्नमुद्यमम्** । क्व ? **वृत्ते** चारित्रे न केवलम्, **उपयोगमऽथानुष्ठानं** च । अथ चार्थे । एतेन चारित्रेन्त-र्भूतं तपो व्याख्यातं प्रतिपत्तव्यम् । यदाहुः—

> **चरणं हितं हि जो उज्जमो आउज्जणाय जा होइ ।**
> **सो चेव जिणेहिं तओ भणिओ असढं चरंतस्स ॥**

तथा **अयन्** अभिभवन् । कान् ? **उर्मीन्** क्षुदादिपरीषहान् । कथं कृत्वा ? **निर्मायं** निष्कपटम् । यदुदयेन किं स्यादित्याह—**ईर्ष्यन्ति** ईर्ष्यां कुर्वन्ति । स्त्रीत्वान्न सहन्ते इति भावः । काः ? **जगच्छ्रियस्त्रैलोक्य-**लक्ष्म्यः । कस्यै ? **मुक्तिश्रिये** मोक्षलक्ष्म्यै । किंविशिष्टायै ? **चलदृशोपि** कदाक्षान्मुञ्चन्त्यै निकटसंगमायै इत्यर्थः । किं पुनः सङ्गच्छमानायै इत्यपि-शब्दार्थः । क्व ? **तत्र** तथाविधचारित्राराधनानुरागसंचितसुकृते पुंरुषे । किं विशिष्टाः सत्यः ? **यत्पाकमूर्छन्नवप्रेमाः** । यस्य चारित्रभक्तिराग-संचितसुकृतस्य पाक उदयो यत्पाकः तेन मूर्छद्वर्धमानं नवं प्रत्यग्रं प्रेम स्नेहो यासां तास्तथोक्ताः । " ओं दुक्खे " इत्यनेन स्त्रियां डाप् । तत्रेति अत्रापि संबध्यते । तथा चोक्तम्—

> **संपज्जदि णिव्वाणं देवासुरमणुवरायविहवेहिं ।**
> **जीवस्स चरित्तादो दंसणणाणप्पहाणाओ ॥**

सम्यक्चरित्राराधनावष्टम्भात्पुरातनानिहापि क्षेत्रे निरपायपदप्राप्ता-नात्मनो भवापायसमुच्छेदं याचमानः प्राह—

**ते केनापि कृताऽऽजवंजवजयाः पुंस्पुङ्गवाः पान्तु मां,**
**तान्युत्पाद्य पुरात्र पञ्च यदि वा चत्वारि वृत्तानि यैः ।**

**मुक्तिश्रीपरिरम्भशुम्भदसमस्थामानुभावात्मना,**
**केनाप्येकतमेन वीतविपदि स्वात्माभिषिक्तः पदे ॥ १७९ ॥**

**पान्तु** संसारव्यसनात् त्रायन्ताम् । के ? ते **पुम्पुङ्गवाः** पुरुषोत्तमाः । कम् ? **माम्** । किंविशिष्टाः ? **कृताजवंजवजयाः** । आजवंजवः संसारः । आजवंजवस्य जयस्तिरस्कारो, नाश इति यावद्, आजवंजवजयः । कृत आजवंजवजयो यैस्ते । केन ? **केन** शुद्धनिश्चयनयादव्यपदेशेनैकेनैवात्मना । **अपि**शब्दादशुद्धनिश्चयनयेन पुना—रत्नत्रयेणापि । यैः किम् ? **यैरभिषिक्तः** प्रतिष्ठितः । कोसौ ? **स्वात्मा** । क्व ? **पदे** स्थाने । किंविशिष्टे ? **वीतविपदि** विगतविपत्तिके । केन कृत्वा ? **केनापि** अनिर्वचनीयेन **एकतमेन** परमोत्कृष्टेन । किंविशिष्टेन ? मुक्तीत्यादि । मुक्तिश्रियो जीवन्मुक्तिलक्ष्म्याः परिरम्भ आलिङ्गनम् । तेन शुम्भच्छोभमानमसममसाधारणं यत्स्थाम शक्तिस्तस्यानुभावो माहात्म्यम् । स एवात्मा स्वरूपं यस्य तेन **मुक्तिश्रीपरिरम्भशुम्भदसमस्थामानुभावात्मना** । किं कृत्वा ? **उत्पाद्य** जनयित्वा । कानि ? **तानि** प्रसिद्धानि सामायिकादीनि **वृत्तानि** चारित्राणि । कति ? **पञ्च** । क्व ? **अत्र** अस्मिन्भरतक्षेत्रे । कदा ? **पुरा** पूर्वयुगे । **यदि वा** अथवा तानि वृत्तानि चत्वार्युत्पाद्य, परिहारविशुद्धिसंयमस्य केषांचिदभावात् । तत्र सामयिकच्छेदोपस्थापनयोर्लक्षणं सर्वावद्येत्यादौ वर्णितम् । शेषत्रयस्य त्विदं यथा—

**त्रिंशद्वर्षवया वर्षपृथक्त्वे वा स्थितो जिनम् ।**
**यो गुप्तिसमित्यासक्तः पापं परिहरेत् सदा ॥**
**स पञ्चैकयमोधीतप्रत्याख्यानो विहारवान् ।**
**स्वाध्यायद्वयसंयुक्तो गव्यूत्यर्धाध्वगो मुनिः ।**
**मध्याह्नकृद्‌द्विगव्यूतिगच्छन्मन्दं दिनं प्रति ।**
**कृषीकृतकषायारिः स्यात् परीहारसंयमी ॥**
**सूक्ष्मलोभं विदन् जीवः क्षपकः शमकोपि वा ।**
**किंचिदूनो यथाख्यातात्स सूक्ष्मसांपरायकः ॥**
**सर्वकर्मप्रभौ मोहे शान्ते क्षीणेपि वा भवेत् ।**
**छद्मस्थो वीतरागो वा यथाख्यातयमी पुमान् ॥**

संयममन्तरेण कायक्लेशादितपोनुष्ठानं बन्धसहभाविनिर्जरानिबन्धनं स्यादिति सिद्ध्यर्थिभिरसावाराध्य इत्युपदिशति—

**तपस्यन् यं विनात्मानमुद्वेष्टयति वेष्टयन् ।**
**मन्थं नेत्रमिवाराध्यो धीरैः सिद्ध्यै ससंयमः ॥१८०॥**

**आराध्यः** सेव्यः । कोसौ ? **स संयमो** निश्चयेन रत्नत्रययौगपद्यप्रवृत्तैकाग्र्यलक्षणो, व्यवहारेण तु प्राणिरक्षणेन्द्रिययन्त्रणलक्षणः । कैः ? **धीरैर**क्षोभ्यप्रकृतिभिः । यं विना किं स्यादित्याह—**उद्वेष्टयति** कर्मभिर्मोचयति कोसौ ? पुरुषः । कम् ? **आत्मानम्** । किं कुर्वन् ? **वेष्टयन्** कर्मभिर्बध्नन् । किं कुर्वन् सन् ? **तपस्यन्** आतापनादिकायक्लेशलक्षणं तपः कुर्वन् । कथम् ? **विना** । कम् ? **यं** संयमं हिंसादिषु विषयेषु च प्रवृत्त्येत्यर्थः । किमिव ? **नेत्रमिव** यथा नेत्रमाकर्षणपाशो **मन्थं** विलोडनदण्डं वेष्टयन्नुद्वेष्टयति तथा जीवोप्यात्मानम् । बन्धसहभाविनीं निर्जरां करोतीत्यर्थः ।

तपस्यतोपि संयमं विनाऽपगतात्कर्मणो बहुतरस्योपादानं स्यादिति प्रदर्शयन् संयमाराधनां प्रति सुतरां साधूनुद्यमयितुं तत्फलं पूजातिशयसमग्रं त्रिजगदनुग्राहकत्वं तेषामुपदिशति—

**कुर्वन् येन विना तपोपि रजसा भूयो हृताद्भूयसा,**
**स्नानोत्तीर्ण इव द्विपः स्वमपधीरुद्धूलयत्युद्धुरः ।**
**यस्तं संयममिष्टदैवतमिवोपास्ते निरीहः सदा,**
**किं-कुर्वाणमरुद्गणः स जगतामेकं भवेन्मङ्गलम् ॥ १८१ ॥**

**उद्धूलयति** धूलिभिरुद्धूषयति । कोसौ ? **अपधीरपगतबुद्धिः** । कम् ? **स्वमात्मानम्** । किंविशिष्टो यतः ? **उद्धुरो** मदोद्रिक्तः । केन ? **रजसा** पापकर्मणा । किंविशिष्टेन ? **भूयसा** बहुतरेण । कस्मात् ? **हृतादपनीताद्** द्रव्यकर्मणाः । कथम् ? **भूयः** पुनः । किं कुर्वन् ? **कुर्वन्नाचरन्** । किं तत् ? **तपः** । कथम् ? **विना** । केन ? **येन** संयमेन । अपिर्विस्मये । क इव ? **स्नानोत्तीर्णो द्विप इव** । यथा हस्ती सरसि स्नात्वा बहिर्निर्गतो जलक्षालिततरेणोः सकाशाद्बहुतरेण रजसा रेणुनात्मानमुद्धूलयत्येवं प्रस्तुतोपि । उक्तं च—

सम्मायिट्ठिस्स वि अविरदस्स ण तओ महागुणो होइ ।
होदि क्खु हत्थिह्लाणं बुन्दच्छुदकम्मतत्तस्स ॥

तं संयमं यो निरीहो लाभादिनिरपेक्षः सन् सदा नित्यमुपास्ते सेवते । किमिव ? इष्टदैवतमिवाभिमतदेवतां यथा । स भवेत् । किम् ? मङ्गलं पापक्षपणपुण्यप्रदाननिमित्तम् । किंविशिष्टम् ? एकमुत्कृष्टम् । केषाम् ? जगतां बहिरात्मप्राणिनाम् । किंविशिष्टः सन् ? किं कुर्वाणमरुद्गणः किं करोमीत्यादेशप्रार्थनपरशक्रादिदेवनिकायः ॥ इति चारित्रमाहात्म्यव्यावर्णनप्रकरणम् ।

तपसश्चारित्रेन्तर्भावमुपपादयन्नाह—

कृतसुखपरिहारो वाहते यच्चरित्रे,
न सुखनिरतचित्तस्तेन बाह्यं तपः स्यात् ।
परिकर इह वृत्तोपक्रमेऽन्यत्तु पापं,
क्षिपत इति तदेवेत्यस्ति वृत्ते तपोऽन्तः ॥ १८२ ॥

अस्ति भवति । किं तत् ? तपः । क ? अन्तर्मध्ये । कस्मिन् ? वृत्ते चारित्रे । द्वितयमपि तपश्चारित्रेन्तर्भवतीत्यर्थः । कथम् ? इति अनेन प्रकारेण यद् यस्माद् वाहते प्रयतते । कोसौ ? कृतसुखपरिहारः पुरुषः । कृतः सुखस्य शरीरद्वारायातशर्मणः परिहारस्त्यागो येन स एवम् । क ? चरित्रे । न वाहते चरित्रे । किंविशिष्टः सन् ? सुखनिरतचित्तो देहसुखासक्तचेताः । तेन कारणेन बाह्यमनशनादि तपः स्यात् । किम् ? परिकरः परिकर्म । क ? इहास्मिन् वृत्तोपक्रमे । ज्ञात्वारम्भ उपक्रमः । वृत्तस्योपक्रमो वृत्तोपक्रमस्तस्मिन् । तदुक्तम्—

"बाहिरतवेण होइ खु सव्वासुहसीलदा परिच्चत्ता ।"

एवं तर्ह्यभ्यन्तरं तपश्चारित्रादनर्थांतरं भविष्यतीत्यारेकायामिदमाह—अन्यत्तु अभ्यन्तरं तपः पुनः स्यात् । किम् ? तदेव वृत्तमेव । कुतो हेतोः ? इति यतः क्षिपते उपात्तं विनाशयत्यपूर्वं निरुणद्धि च । किं

१ सम्यग्दृष्टेरपि अविरतस्य न तपो महागुणं भवति ।
भवति खलु हस्तिस्नानं ... ... ...तस्य ॥

तत्कर्तृ ? अभ्यन्तरं तपः । किं तत् ? पापम् । "तपसा निर्जरा च" इति वचनात् ।

उक्तमेवार्थं स्पष्टयन्नाह—

**त्यक्तसुखोऽनशनादिभिरुत्सहते वृत्त इत्यघं क्षिपति ।**
**प्रायश्चित्तादीत्यपि वृत्तेन्तर्भवति तप उभयम् ॥ १८३ ॥**

**अन्तर्भवति** । किं तत् ? **तपः** । किं विशिष्टम् ? **उभयं** बाह्यमभ्यन्तरं च । क्व ? **वृत्ते** । यत **उत्सहते** साधुः । कैः ? **अनशनादिभिः** । क्व ? **वृत्ते** । किं विशिष्टः सन् ? **त्यक्तसुखः** । यतश्च **क्षिपति** । किं तत् ? **प्रायश्चित्तादि** तपः कर्तृ । किं तद् ? **अघं** पापम् । **अपिः** समुच्चये । इति भद्रम् । ( ग्रन्थसंख्या २६१५ )

**यो धर्मामृतमुद्दधार सुमनस्तृप्त्यै जिनेन्द्रागम-**
**क्षीरोदं शिवधीर्निमथ्य जयतात् स श्रीमदाशाधरः ।**
**भव्यात्मा हरदेव इत्यभिधया ख्यातश्च नन्द्यादिमं,**
**टीकाशुक्तिमचीकरत् सुखमिमां तस्योपयोगाय यः ॥**

इत्याशाधरविरचितायां स्वोपज्ञधर्मामृतानगारधर्मटीकायां भव्यकुमुदचन्द्रिकासंज्ञिकायां सम्यक्चारित्राराधनीयश्चतुर्थोऽध्यायः ॥ ४ ॥

---



# अथ पञ्चमोऽध्यायः ॥ ५ ॥



अथैवं सम्यक्चारित्राराधनां व्याख्यायेदानीं विघ्नाङ्गारादीत्येषणासमितिसूत्राङ्गभूताम्—

**"उद्गमोत्पादनाहारसंयोगः सप्रमाणकः ।**
**अङ्गारधूमौ हेतुश्च पिण्डशुद्धिर्मताष्टधा ॥"**

इत्यष्टप्रकारां पिण्डशुद्धिमभिधातुकामः प्रथमं तावत् पिण्डस्य संक्षेपतो विधिनिषेधमुखेन योग्यायोग्यत्वे निर्दिशति—

**षट्चत्वारिंशता दोषैः पिण्डोऽधःकर्मणा मलैः ।**
**द्विसप्तैश्चोज्झितोऽविघ्नं योज्यस्त्याज्यस्तथार्थतः ॥ १ ॥**

**योज्य** उपयोक्तव्यः साधुना । साधोरुपयोक्तुं योग्य इत्यर्थः । "तृज्व्याश्चार्हे" इत्यनेनार्हे व्यः । एवं त्याज्य इत्यत्रापि । कोसौ ? **पिण्ड** आहारः । उपलक्षणादौषधाद्यपि । कस्मात् ? **अर्थतो** निमित्तं प्रयोजनं चाश्रित्य । न केवलं योज्यस्त्याज्य**स्तथा** वर्जनीयश्चार्थतः । कथं योज्यः ? **अविघ्नं** विघ्नानामन्तरायाणामभावे सत्यभावेन वा हेतुना । किंविशिष्टः सन् ? **उज्झितो** मुक्तः । कैः ? **दोषैः** । कतिभिः ? **षट्चत्वारिंशता** । तत्रोद्गमदोषाः षोडश, उत्पादनदोषाः षोडश, शङ्किताद्दिदोषा दश, अङ्गारधूमसंयोजनप्रमाणदोषाश्चत्वारश्चेति षट्चत्वारिंशत् । तथा**ऽधःकर्मणा** वक्ष्यमाणलक्षणेनोज्झितः पिण्डो योज्यः तथा **मलैः** पूयाश्रादिभिरुज्झितः पिण्डो योज्यः । कतिभिः ? **द्विसप्तैश्च**तुर्दशभिः द्विः सप्तेति विगृह्य "संख्याबाड्डोऽबहुगणात्" इति डः ।

उद्गमोत्पादनदोषाणां स्वरूपसंख्यानिश्चयार्थमाह—

**दातुः प्रयोगा यत्यर्थे भक्तादौ षोडशोद्गमाः ।**
**औद्देशिकाद्या धात्र्याद्याः षोडशोत्पादना यतेः ॥ २ ॥**

भवन्ति । के? **उद्गमा** उद्गमाख्या दोषाः प्राग्निर्दिष्टस्य दोषैरित्यस्य विभक्तिपरिणामेन संबन्धः । किमात्मानः ? **प्रयोगाः** अनुष्ठानविशेषाः ? कस्य ? **दातुर्दायकस्य** । कस्मिन्विषये ? **भक्तादौ** आहारौषधवसत्युपकरण-प्रमुखे देयवस्तुनि । किंविशिष्टे ? **यत्यर्थे** संयतनिमित्ते । कति ? **षोडश** किंविशिष्टास्ते ? **औद्देशिकाद्याः** संयतमुद्दिश्य भक्तादिकल्पनसंकल्प उद्देशः । उद्देशः प्रयोजनमस्येत्यौद्देशिकः । औद्देशिक आद्यो येषां साधका-दीनां त एवम् । तथा भवन्ति । के ? **उत्पादना** उत्पादनाख्या दोषाः किमात्मानः ? प्रयोगाः । कस्य ? **यतेः** । क्व विषये ? भक्तादौ, अर्थात्स्वार्थे । कति ? **षोडश** । किंविशिष्टास्ते ? **धात्र्याद्या** धात्री आद्या येषां दूतादीनां ते धात्र्याद्याः ।

अपरदोषोद्देशार्थमाह—

**शङ्किताद्या दशान्नेऽन्ये चत्वारोङ्गारपूर्वकाः ।**
**षट्चत्वारिंशदन्योऽधःकर्म सूनाङ्गिहिंसनम् ॥ ३ ॥**

भवन्ति । के ? **दोषाः** । क्व ? **अन्ने** । आहाराश्रिता दोषा इत्यर्थः । किंविशिष्टाः ? **शङ्किताद्याः** शङ्किता आद्या येषां पिहितादीनां त एवम् । कति ? **दश** । तथा भवन्ति । के ? **अन्ये** शङ्कितादिभोज्यदोषेभ्यो भिन्नाः। भुक्तिदोषा इत्यर्थः । किंविशिष्टाः? **अङ्गारपूर्वकाः** । अङ्गारः पूर्वो येषां धूमादीनां त एवम् । कति ? **चत्वारः** । एते मीलिताः षट्चत्वारिंशत् । भवति । कोसौ ? दोषः । किम् ? **अधःकर्म** अधःकर्माख्यः । किंविशिष्टः ? **षट्चत्वारिंशदन्यः** षट्चत्वारिंशतः पिण्डदोषेभ्योऽन्यो भिन्नोयं दोषो, महादोषत्वात् । किंरूपमधःकर्म ? **सूनाङ्गिहिंसनम्** । सूनाश्चुल्ली पेषणी कण्डनी संमार्जन्युदकुम्भश्चेति पञ्च हिंसास्थानानि । सूनाभिरङ्गिनां षड्जीव-निकायानां हिंसनं दुःखोत्पादनं मारणं वा । अथवा सूनाश्चाङ्गिहिंसनं चेति ग्राह्यम् । एतेन वसत्यादिनिर्माणसंस्कारादिनिमित्तमपि प्राणिपीडनमधः-कर्मैवेत्युक्तं भवति । अत एवाधोगतिनिमित्तं कर्माधःकर्मेत्यन्वर्थोऽपि घटते । तदेतदधःकर्म गृहस्थाश्रितो निकृष्टव्यापारः । अथवा सूनाभिरङ्गि-हिंसनं यत्रोत्पाद्यमाने भक्तादौ तदधःकर्मेत्युच्यते, कारणे कार्योपचारात् । तच्चात्मना कृतं परेण वा कारितं परेण कृतमात्मनानुमतं दूरतः संयतेन त्या-

ज्यम् । गार्हस्थ्यमेतद्धि वैयावृत्त्यादिविमुक्तमात्मभोजननिमित्तं यद्येतत्कुर्यात् तदा न श्रमणः, किंतु गृहस्थः स्यात् । उक्तं च—

छज्जीवणिकायाणं विराहणोद्दावणेहि णिप्पण्णं ।
आधाकम्मं णेयं सयपरकदमादसंपण्णं ॥

उद्गमोत्पादनानामन्वर्थतां दर्शयति—

**भक्ताद्युद्गच्छत्यपथ्यैर्यैर्यैरुत्पाद्यते च ते ।**
**दातृयत्योः क्रियाभेदा उद्गमोत्पादनाः क्रमात् ॥ ४ ॥**

भण्यन्ते ते । के ? **क्रियाभेदा** व्यापारविशेषाः । कयोः ? **दातृयत्यो**-र्दायकपात्रयोः । किमाख्याः ? **उद्गमोत्पादनाः** । कस्मात् ? **क्रमाद्** यथासंख्येन । यैः किम् ? यैर्दातृक्रियाभेदैः करणभूतैरुद्गच्छत्युत्पाद्यते । किं तत् ? **भक्तादि** आहारौषधादिद्रव्यम् । किंविशिष्टैः ? **अपथ्यैः** । पथो-नपेताः पथ्याः । न पथ्या अपथ्या मार्गविरोधिनस्तैः । रत्नत्रयोपघातिभिरि-त्यर्थः । उद्गच्छन्त्येभिरित्युद्गमाः । "पुंखौ घः प्रायेण" इति प्रायग्रहणाद्ध-लन्तादपि करणे घः । **यैश्च** यतिक्रियाभेदैः करणभूतैरुत्पाद्यते । किं तत् ? भक्तादि । किंविशिष्टैः ? अपथ्यैः । उत्पाद्यते भक्तादिकमपथ्यैरेभिरित्युत्पा-दना । "करणाधिकरणयोः" इति युट्, न त्वजन्तत्वात् "पुंखौ घः प्रायेण" इति घः, प्रायग्रहणादेव ।

उद्गमभेदानामुद्देशानुवादपुरःसरं दोषत्वं समर्थयितुं श्लोकद्वयमाह—

**उद्दिष्टं साधिकं पूति मिश्रं प्राभृतकं बलिः ।**
**न्यस्तं प्रादुष्कृतं क्रीतं प्रामित्यं परिवर्तितम् ॥ ५ ॥**
**निषिद्धाभिहृतोद्भिन्नाच्छेद्यारोहास्तथोद्गमाः ।**
**दोषा हिंसानादरान्यस्पर्शदैन्यादियोगतः ॥ ६ ॥ (युग्मम्)**

उद्दिष्टमौद्देशिकम् । प्रादुष्कृतं प्रादुष्कराख्यः । **उद्दिष्टाद्यो** यथोद्दिष्टाः षोडशो**द्गमा** उद्गमभेदा **दोषा** तथा भवन्ति । कस्मात् ? हिंसेत्यादि । अन्य-स्पर्शः पार्श्वस्थपाषण्डादिछुप्तम् । दैन्यं कार्पण्यम् । आदिशब्देन विरोधकारु-

ण्याकीर्त्यादिग्रहः । दैन्यमादिर्येषां ते दैन्यादयः । हिंसा चानादरश्चान्यस्पर्शश्च दैन्यादयश्च **हिंसानादरान्यस्पर्शदैन्यादयः** । **तैर्योगो** यथासंभवं संबन्धस्तस्माद्धेतोस्तं वाश्रित्य ।

यथोद्देशस्तथा निर्देश इत्यौद्देशिकं सामान्यविशेषाभ्यां निर्दिशति—

**तदौद्देशिकमन्नं यद्देवतादीनलिङ्गिनः ।**
**सर्वपाषण्डपार्श्वस्थसाधून् वोद्दिश्य साधितम् ॥ ७ ॥**

भण्यते । किं तत् ? **तदन्नं** भक्तमौषधाद्यपि च । किंविशिष्टम् ? **औद्देकम्** । यत्किम् ? **यत् साधितं** निष्पादितं दायकेन । किं कृत्वा ? **उद्दिश्य** निमित्तीकृत्य । कान् ? **देवतादीनलिङ्गिनः** । देवता नागयक्षादयः । दीनाः कृपणाः । लिङ्गिनो जैनदर्शनबहिर्भूतानुष्ठानाः पाषण्डाः । देवताश्च दीनाश्च लिङ्गिनश्च त एवं । **वा** अथवा तदौद्देशिकमन्नं भण्यते यत्साधितम् । किं कृत्वा ? उद्दिश्य । कान् ? **सर्वपाषण्डपार्श्वस्थसाधून्** । सर्वेऽविशेषेण गृहस्थपाषण्डादयः पाषण्डाः प्रागुक्तलक्षणाः । पार्श्वस्था अवसन्नादयः पञ्च । तल्लक्षणं यथा—

“ वृत्तेऽलसोऽवसन्नः पार्श्वस्थो मलिनपरद्दशोष्टेऽनिष्टे ।
संसक्तो मृगचरितः स्वकल्पिते प्रकटकुचरितस्तु कुशीलः ॥ ”

साधवो निर्ग्रन्थाः । सर्वे च पाषण्डाश्च पार्श्वस्थाश्च साधवश्च त एवम् । सर्वाद्युद्देशेन च कृतमन्नं क्रमेणोद्देशादिभेदाच्चतुर्धा भवति । तथा हि, यः कश्चिदायास्यति तस्मै सर्वस्मै दास्यामीति सामान्योद्देशेन साधितमुद्देश इत्युच्यते । एवं पाषण्डानुद्दिश्य साधितं समुद्देशः, पार्श्वस्थानादेशः, साधूंश्च समादेश इति ।

साधिकं द्विधा लक्षयति—

**स्याद्दोषोऽध्यधिरोधो यत्स्वपाके यतिदत्तये ।**
**प्रक्षेपस्तण्डुलादीनां रोधो वाऽऽपचनाद्यतेः ॥ ८ ॥**

**स्यात्** । कोसौ ? **दोषः** । किमाख्यः ? **अध्यधिरोधः** । साधिकस्य संज्ञान्तरमेतत् । यत्किम् ? **यद्दायकेन** क्रियते । कोसौ ? **प्रक्षेप** आवापः ।

केषाम्? **तण्डुलादीनाम्**। तण्डुला आदयो येषां मुद्गादीनां त एवम्। क? **स्वपाके** स्वस्य दातुरात्मनो निमित्तं पच्यमाने तण्डुलादिधान्ये जले वाधिश्रिते, पच्यते इति पाकः। स्वस्मै पाकः स्वपाकस्तस्मिन्। कस्यै? **यतिदत्तये**। अद्य संयतं भोजयिष्यामीति संकल्पेनेत्यर्थः। दानं दत्तिः। यतये दत्तिर्यतिदत्तिस्तस्यै। प्रकारान्तरेण तमेव लक्षयितुमाह—**वा** शब्दः पक्षान्तरसूचने। स्याद्वाऽध्यधिरोधाख्यो दोषः। यत्किम्? यत्क्रियते। कोसौ? **रोधः** पूजाधर्मप्रश्नादिव्याजेनावस्थापनम्। कस्य? **यतेः**। कियत्कालम्? **आपचनात्** पाकान्तं यावत्।

अप्रासुकमिश्रणपूतिकर्मकल्पनाभ्यां द्विविधं पूतिमाह—

**पूति प्रासु यदप्रासुमिश्रं योज्यमिदंकृतम्।**
**नेदं वा यावदार्येभ्यो नादायीति च कल्पितम्॥ ९॥**

तद्द्रव्यं **पूति** पूतिदोषदुष्टं भण्यते। यत्किम्? **यदप्रासुमिश्रं** स्वरूपेण प्रासुकमपि सदप्रासुमिश्रमप्रासुकशबलम्। अयमाद्योऽप्रासुकमिश्रणाख्यः पूतिभेदः। अथ द्वितीयः पूतिकर्मकल्पनाख्यस्तद्भेदो लक्ष्यते। तच्च पूति भण्यते। यत्किम्? **यत्कल्पितमुत्प्रेक्षितम्**। कथम्? **इति**। किमिति? तावन्न **योज्यम्**। किं तत्? **इदंकृतमनेन** चुल्ल्यादिनास्मिन्वा चुल्यादौ कृतं साधितमिदंकृतं वस्तु **इदं वा** भोजनगन्धादिकम्। यावत् किम्? **यावन्नादायि** न दत्तमिदंकृतमिदं वा वस्तु। केभ्यः? **आर्येभ्यः** साधुभ्यः। तथाहि, अस्यां चुल्यां भोजनादिकं निष्पाद्य यावत्साधुभ्यो न दत्तं तावदात्मन्यन्यत्र वा नोपयोक्तव्यमिति। पूतिकर्मकल्पनाप्रभव एकः पूतिदोषः। एवमुदूखलदर्वीपात्रशिलास्वपि कल्पनया चत्वारोन्येभ्यूह्या। उक्तं च—

**मिश्रमप्रासुना प्रासु द्रव्यं पूतिकमिष्यते।**
**चुल्लिकोदूखलं दर्वीपात्रगन्धौ च पञ्चधा॥**

गन्धोत्र शिला इदं वेत्याचारटीकामतसंग्रहार्थमुक्तम्। तथा हि—"यावदिदं भोजनं गन्धो वा ऋषिभ्यो नादायि न तावदात्मन्यन्यत्र वा कल्पते"। उक्तं च—

अप्पासुएण मिस्सं पासुयदव्वं तु पूतिकम्मं तु।
चुल्लीउखलीदव्वीभायणगंधीति पंचविहं ॥

मिश्रदोषं लक्षयति—

पाषण्डिभिर्गृहस्थैश्च सह दातुं प्रकल्पितम्।
यतिभ्यः प्रासुकं सिद्धमप्यन्नं मिश्रमिष्यते ॥ १० ॥

**इष्यते** सूरिभिः। किम् ? **अन्नम्**। किंविशिष्टम् ? **प्रासुकम**चित्तं कृत्वा **सिद्धं** निष्पन्नम**पि**। किमिष्यते ? **मिश्रम्**। किंविशिष्टं सत् ? **प्रकल्पितम्**। किं कर्तुम् ? **दातुम्**। केभ्यः ? **यतिभ्यः**। कथम् ? **सह**। कैः ? **पाषण्डिभिर्गृहस्थैश्च** पाषण्डिगृहस्थैः सहितेभ्यः संयतेभ्यः। इदं दास्यामीति सज्जीकृतमित्यर्थः।

कालहानिवृद्धिभ्यां द्वैविध्यमालम्बमानं स्थूलं सूक्ष्मं च प्राभृतकं सूचयति—

यद्दिनादौ दिनांशे वा यत्र देयं स्थितं हि तत्।
प्राग्दीयमानं पश्चाद्वा ततः प्राभृतकं मतम् ॥ ११ ॥

**मतमिष्टम्**। किं तत् ? **तत्प्राभृतकम्**। किं क्रियमाणम्। **दीयमानम्**। कथम् ? **प्राक्** पूर्वम्। कस्मात् ? **ततो** दिनादेर्दिनांशाद्वा। न केवलं प्राक्, **पश्चाद्वा**। यत्किम् ? **यत्स्थित**मागमे व्यवस्थितम्। कथं कृत्वा ? **देयम्**। क्व ? **यत्रास्मिन् दिनादौ** दिने पक्षे मासे वर्षे वा। न केवलं, **दिनांशे वा** पूर्वाह्णादौ। कथम् ? **हि** नियमेन।

तथा हि–यच्छुक्लाष्टम्यां देयमिति स्थितं तदपकृष्य शुक्लपञ्चम्यां यद्दीयते यच्च चैत्रस्य सिते पक्षे देयमिति स्थितं तदपकृष्य कृष्णे यद्दीयते, इत्यादि। तत्सर्वं कालहानिकृतं बादरं प्राभृतकं भण्यते। ततः यच्छुक्लपञ्चम्यां देयमिति स्थितं तदुत्कृष्य शुक्लाष्टम्यां यद्दीयते। यच्च चैत्रस्य कृष्णे पक्षे देयमिति

१—अप्रासुकेन मिश्रं प्रासुकद्रव्यं तु पूतिकर्म तु।
चुल्लीउदूखलीदर्वीभाजनगन्धीति पंचविधम् ॥

स्थितं तदुत्कृष्य शुक्ले यद्दीयते, इत्यादि। तत्सर्वं कालवृद्धिकृतं बादरं प्राभृतकमुच्यते। तथा यन्मध्याह्ने देयमिति स्थितं तदपकृष्य पूर्वाह्ने यद्दीयते। यच्चापराह्ने देयमिति स्थितं तदपकृष्य मध्याह्ने यद्दीयते, इत्यादि तत्सर्वं कालहानिकृतं सूक्ष्मं प्राभृतकं कथ्यते। तथा यत्पूर्वाह्ने देयमिति स्थितं तदुत्कृष्य मध्याह्नादौ यद्दीयते तत्सर्वं कालवृद्धिकृतं सूक्ष्मं प्राभृतकमिष्यते। तथा चोक्तम्—

**द्वेधा प्राभृतकं स्थूलं सूक्ष्मं तदुभयं द्विधा।**
**अवसर्पस्तथोत्सर्पः कालहान्यतिरेकतः॥**
**परिवृत्त्या दिनादीनां द्विविधं बादरं मतम्।**
**दिनस्याद्यन्तमध्यानां द्वेधा सूक्ष्मं विपर्ययात्॥**

बलिं न्यस्तं च लक्षयति;—

**यक्षादिबलिशेषोऽर्चासावद्यं वा यतौ बलिः।**
**न्यस्तं क्षिप्त्वा पाकपात्रात्पात्र्यादौ स्थापितं क्वचित्॥१२॥**

**यक्षादिबलिशेषो** यक्षनागमातृकाकुलदेवतापित्राद्यर्थं यः कृतो बलिरुपहारः। तस्य शेषो दत्तावशिष्टोंशो यतौ संयते प्रयुज्यमानो बलिरुच्यते। वा अथवा **अर्चासावद्यं** चन्दनोद्गालनादिकं यतौ यतिनिमित्तम्। बलिरुच्यते **पाकपात्रादुद्धृत्य पात्र्यादौ क्षिप्त्वा** प्रक्षिप्य **क्वचित्**स्वगृहे परगृहे वा **स्थापितं** स्थापनिकायां धृतमन्नं **न्यस्तमुच्यते**। पात्रिः पात्रविशेषः। आदिः पात्रान्तरग्रहणार्थः। न्यस्तं हि स्थापकादन्येन दीयमानं विरोधादिकं कुर्यादिति दुष्टम्।

प्रादुष्कारं क्रीतं च निर्दिशति—

**पात्रादेः संक्रमः साधौ कटाद्याविष्क्रियाऽऽगते।**
**प्रादुष्कारः स्वान्यगोऽर्थविद्याद्यैः क्रीतमाहृतम्॥ १३ ॥**

**साधौ** संयते **आगते** गृहमायाते सति **पात्रादेः संक्रमो** भोजनभाजनादीनामन्यस्थानादन्यस्थाने नयनं संक्रमाख्यः **प्रादुष्कारो** दोषः स्यात्। **कटाद्याविष्क्रिया** तु कटकपाटकाण्डपटाद्यपनयनं भाजना-

दीनां भस्मादिनोदकादिना वा निर्मार्जनं प्रदीपज्वालनादिकं च प्रकाशाख्योऽयं प्रादुष्कारो दोषः स्यात् । एवं च संक्रमः प्रकाशश्चेति द्विविधः प्रादुष्कारो बोध्यः । उक्तं च—

संक्रमश्च प्रकाशश्च प्रादुष्कारो द्विधा मतः ।
एकोत्र भाजनादीनां कटादिविषयोऽपरः ॥

स्वेत्यादि । स्वस्यात्मनः सचित्तद्रव्यैर्वृषभादिभिरचित्तद्रव्यैर्वा सुवर्णादिभिर्भावैर्वा प्रज्ञप्त्यादिविद्याचेटकादिमन्त्रलक्षणैः अन्यस्य वा परस्य तैरुभयैर्द्रव्यभावैर्यथासंभवमाहृतं संयते भिक्षायां प्रविष्टे तान् दत्वा नीतं यद्भोज्यद्रव्यं तत्क्रीतमिति दोषः । कारुण्यदोषदर्शनाद् गौरुपलक्षणाद्वृषभादिचेतनद्रव्यमर्थः सुवर्णादिरचेतनद्रव्यं, विद्याप्रज्ञप्त्यादिर्भावः । आद्यशब्दाच्चेटकमन्त्रादयश्च । गौश्चार्थश्च विद्याद्याश्च गोर्थविद्याद्याः । स्वान्ययोः स्वपरयोर्गोर्थविद्याद्याः स्वान्यगोर्थविद्याद्यास्तैः । स्वस्य परस्य च गवादिचेतनद्रव्यैः सुवर्णाद्यचेतनद्रव्यैः प्रज्ञप्त्यादिविद्याख्यैश्चेटकमन्त्रादिभिश्च भावैरित्यर्थः । उक्तं च—

क्रीतं तु द्विविधं द्रव्यं भावः स्वकपरं द्विधा ।
सच्चित्तादिभवो द्रव्यं भावो विद्यादिकं तथा ॥

प्रामित्यपरिवर्तितयोः स्वरूपमाह—

उद्धारानीतमन्नादि प्रामित्यं वृद्ध्यवृद्धिमत् ।
व्रीह्यन्नाद्येन शाल्यन्नाद्युपात्तं परिवर्तितम् ॥ १४ ॥

भण्यते । किम् ? प्रामित्यम् । यत्किम् ? यदन्नादि । किंविशिष्टम् ? उद्धारानीतमृणं कृत्वा गृहीतम् । तच्च किंविशिष्टम् ? वृद्ध्यवृद्धिमत् । वृद्धिश्चावृद्धिश्च वृद्ध्यवृद्धी । ते अस्यास्मिन्वा स्तः । सवृद्धिकमवृद्धिकं चेत्यर्थः । उक्तं च—

भक्तादिकमृणं यच्च तत्प्रामित्यमुदाहृतम् ।
तत्पुनर्द्विविधं प्रोक्तं सवृद्धिकमथेतरत् ॥

प्रमीयते स्म प्रमितम् । प्रमितमेव प्रामित्यम् । चातुर्वर्ण्यादिभ्यः स्वार्थे

ध्यण् । दोषत्वं चास्य दातुः क्लेशायासधरणादिकदर्थनकरणात् । तत्परिवर्तितं स्यात् । यत्किम् ? यच्छाल्यन्नादि शाल्योदनमुद्गादि । किंविशिष्टम् ? उपात्तं साधुभ्यो दास्यामीति गृहीतम् । केन ? व्रीह्यन्नाद्येन षष्टिकभक्तमाषादिना । उक्तं च—

व्रीहिभक्तादिभिः शालिभक्ताद्यं स्वीकृतं हि यत् ।
संयतानां प्रदानाय तत्परीवर्तमिष्यते ॥

दोषत्वं चास्य दातुः क्लेशसंक्लेशकरणात् ।

निषिद्धं सभेदप्रभेदमाह—

निषिद्धमीश्वरं भर्त्रा व्यक्ताव्यक्तोभयात्मना ।
वारितं दानमन्येन तन्मन्येन त्वनीश्वरम् ॥ १५ ॥

भण्यते । किं तत् ? दानं दीयमानमोदनादिकम् । किंविशिष्टम् ? निषिद्धम् । किमाख्यम् ? ईश्वरम् ईश्वरनिषिद्धमित्यर्थः । यत्किम् ? यद्वारितं प्रतिषिद्धम् । केन ? भर्त्रा प्रभुणा । किंविशिष्टेन ? व्यक्ताव्यक्तोभयात्मना । व्यक्तः प्रेक्षापूर्वकारी वा वृद्धो वाऽसारक्षो वा । आरक्षा मन्त्र्यादयः । सहारक्षैर्वर्तते इति सारक्षः स्वामी । न सारक्षोऽसारक्षः । स्वतन्त्र इत्यर्थः । अव्यक्तोऽप्रेक्षापूर्वकारी वा बालो वा सारक्षो वा । उभयो व्यक्ताव्यक्तरूपः । व्यक्तश्चाव्यक्तश्चोभयश्च व्यक्ताव्यक्तोभयाः । व्यक्ताव्यक्तोभया आत्मानो रूपाणि यस्य स व्यक्ताव्यक्तोभयात्मा, तेन । व्यक्तरूपेणाव्यक्तरूपेण व्यक्ताव्यक्तरूपेण च स्वामिना वारितं दानमीश्वराख्यं निषिद्धं त्रिधा स्यात् । व्यक्तेश्वरनिषिद्धमव्यक्तेश्वरनिषिद्धं व्यक्ताव्यक्तेश्वरनिषिद्धं चेति । तथा भण्यते । किं तत् ? दानम् । किंविशिष्टम् ? निषिद्धम् । किमाख्यम् ? अनीश्वरम् । अनीश्वरनिषिद्धमित्यर्थः । यत्किम् ? यद्वारितम् । केन ? अन्येन । भर्तुरपरेणामात्यादिना । किंविशिष्टेन ? तन्मन्येन भर्तारमात्मानं मन्यमानेन । पुनः किंविशिष्टेन ? व्यक्ताव्यक्तोभयात्मना । तुर्विशेषे । तद्यथा—निषिद्धाख्यो दोषस्तावदीश्वरोऽनीश्वरश्चेति द्वेधा । तत्राप्याद्यस्त्रेधा । व्यक्तेश्वरेण वारितं दानं यदा साधुर्गृह्णाति तदा व्यक्तेश्वरो नाम दोषः ।

यदाऽव्यक्तेश्वरेण वारितं गृह्णाति तदाऽव्यक्तेश्वरो नाम। यदैकेन दानपतिना व्यक्तेन द्वितीयेन चाव्यक्तेन च वारितं गृह्णाति तदा व्यक्ताव्यक्तेश्वरो नाम तृतीय ईश्वराख्यनिषिद्धभेदस्य भेदः स्यात्। एवमनीश्वरेपि व्याख्येयम्। यच्चैकेन दीयतेऽन्येन च निषिद्धत्वेनेष्यते वा तदपि गृह्यमाणं दोषाय स्याद् विरोधापायाद्यनुषङ्गाविशेषात्। यत्पुनः,—

"अणिसिट्ठं पुण दुविहं ईसरमहणीसरं च दुवियप्पं।
पढमेस्सरसारक्खं वत्तावत्तं च संघाडं॥" इति।

अस्याचारटीकायां बहुधा व्याख्यातम्। तदत्रैव कुशलैः सुबुद्ध्याव-तारयितुं शक्यते इति न सूत्रविरोधः शङ्क्यः।

अभिहृतदोषं व्याचष्टे—

**त्रीन् सप्त वा गृहान् पङ्क्त्या स्थितान्मुक्त्वान्यतोऽखिलात्।**
**देशादयोग्यमायातमन्नाद्यभिहृतं यतेः॥ १६॥**

भण्यते। किं तत्? **अभिहृतम्**। यत्किम्? **यदायातमागतम्**। किं तत्? **अन्नादि** भक्तौषधादि। कस्मात्? **देशात्**। किंविशिष्टात्? **अन्यत** उक्तविपरीतगृहलक्षणात् स्वपरग्रामदेशलक्षणाच्च। किं कृत्वा? **मुक्त्वा** वर्जयित्वा। कान्? **गृहान्**। किंविशिष्टान्? **स्थितान्** व्यवस्थि-तान्। कया? **पङ्क्त्या** श्रेण्या। कति? **त्रीन्सप्त वा**। किंविशिष्टादन्यतो देशात्? **अखिलात्**। सर्वस्मात्। किंविशिष्टं यतः? **अयोग्यम्**। कस्य? **यतेः**। अभिहृतं हि द्विविधं, देशाभिहृतं सर्वाभिहृतं च। देशाभिहृतं पुन-र्द्वेधा आदृतमनादृतं च। सर्वाभिहृतं तु चतुर्धा; स्वग्रामादागतं, परग्रामा-दागतं, स्वदेशादागतं, परदेशादागतं चेति। यत्र ग्रामे स्थीयते स स्व-ग्रामः। तत्र पूर्वपाटकादपरपाटकेऽपरपाटकाच्च पूर्वपाटके भोजनादेर्नयनं स्वग्रामाभिहृतं, प्रचुरेर्यापथदोषदर्शनात्। एवं शेषमप्यूह्यम्। तथा चोक्तम्—

देशतः सर्वतो वापि ज्ञेयं त्वभिहृतं द्विधा।
आदृतानादृतत्वेन स्याद्देशाभिहृतं द्विधा॥

ऋजुवृत्त्या त्रिसप्तभ्यः प्राप्तं वेश्मभ्य आहृतम् ।
ततः परत आनीतं विपरीतमनाहृतम् ॥
स्वपरग्रामदेशेषु चतुर्धाभिहृतं परम् ।
प्राक्पश्चात्पाटकानां च तेषामप्येवमादिशेत् ॥

उद्भिन्नाच्छेद्यदोषयोः स्वरूपं निरूपयति—

**पिहितं लाञ्छितं वाज्यगुडाद्युद्घाट्य दीयते ।**
**यत्तदुद्भिन्नमाच्छेद्यं देयं राजादिभीषितैः ॥ १७ ॥**

तदुद्भिन्नं भण्यते यत्किंचिद्दीयते दायकैः साधुभ्यः । किं तत् ? **आज्य-गुडादि** घृतगुडखण्डखर्जूरादि । किं कृत्वा ? उद्घाट्य अपावृत्य । किंविशिष्टं सत् ? **पिहितं** पिधानेन कर्दमलाक्षादिना संवृतम् । **वा** अथवा **लाञ्छितं** नामबिम्बादिना मुद्रितम् । दोषत्वं चात्र पिपीलिकादिप्रवेशदर्शनात् यत्तु **राजादिभीषितै**र्नृपामात्यादिभिर्भयं नीतैः कुटुम्बिकै**र्देयं** संयतेभ्यो भोजनं दीयते **तदाच्छेद्य**मिति भण्यते । यदा हि संयतानां भिक्षा-श्रमं दृष्ट्वा राजा तत्तुल्यो वा चौरादिर्वा कुटुम्बिकान् यदि संयताना-मागतानां भिक्षादानं न करिष्यथ तदा युष्माकं द्रव्यमपहरिष्यामो ग्रामाद्वा निर्वासयिष्याम इति भीषयित्वा दापयति तदा दीयमानमाच्छेद्यनामा दोषः स्यात् । उक्तं च—

संयतश्रममालोक्य भीषयित्वा प्रदापितम् ।
राजचौरादिभिर्यत्तदाच्छेद्यमिति कीर्तितम् ॥

मालारोहणदोषमाह—

**निश्रेण्यादिभिरारुह्य मालमादाय दीयते ।**
**यद्द्रव्यं संयतेभ्यस्तन्मालारोहणमिष्यते ॥ १८ ॥**

**इष्यते** सूरिभिस्तत् । किम् ? **मालारोहणम्** । यत्किम् ? **यद्दीयते द्रव्यं** भक्तादि । केभ्यः ? **संयतेभ्यः** । किं कृत्वा ? **आदाय** गृहीत्वा मालात् । किं कृत्वा ? **आरुह्य** चटित्वा । किं तत् ? **मालं** गृहोर्ध्वभागम् ।

कैः ? **निश्रेण्यादिभिर्निश्रेणीसोपानादिभिः** । दोषत्वं चात्र दातुरपायदर्शनात् । इत्युद्गमदोषप्रकरणम् ॥

एवमुद्गमदोषान् व्याख्याय सांप्रतमुत्पादनदोषान्व्याख्यातुमुद्दिशति—

**उत्पादनास्तु धात्री दूतनिमित्ते वनीपकाजीवौ ।**
**क्रोधाद्याः प्रागनुनुतिवैद्यकविद्याश्च मन्त्रचूर्णवशाः ॥ १९ ॥**

धात्र्यादयो यथोद्देशं वक्ष्यन्ते । तुर्विशेषे । दूतश्च निमित्तं च **दूतनिमित्ते** द्वे । वनीपकवचनं चाजीवश्च **वनीपकाजीवौ** । वनीपकशब्देनात्र वनीपकवचनं गृह्यते । तथा च वक्ष्यति, " वनीपकोक्तिः " इति । **क्रोधाद्याः** क्रोधमानमायालोभाश्चत्वारः । प्रागनुनुती पूर्वस्तवनं पश्चात्स्तवनं च । प्राक् चानु च प्रागनु । प्रागनु च ते नुती च प्रागनुनुती । वैद्यकं चिकित्सितम् । प्रागनुनुती च वैद्यकं च विद्या च **प्रागनुनुतिवैद्यकविद्याः** । एतेपि चत्वारः । वशो वशीकरणं मन्त्रश्च चूर्णश्च वशश्च **मन्त्रचूर्णवशास्त्रयः** । **उत्पादना** भण्यन्ते । के ते ? **धात्री** दूतो निमित्तं वनीपकवचनमाऽऽजीवः क्रोधो मानो माया लोभः पूर्वस्तवनं पश्चात् स्तवनं वैद्यकं विद्या मन्त्रश्चूर्णो वशश्चेति षोडश ।

पञ्चविधं धात्रीदोषमाह—

**मार्जनक्रीडनस्तन्यपानस्वापनमण्डनम् ।**
**बाले प्रयोक्तुर्यत्प्रीतो दत्ते दोषः स धात्रिका ॥ २० ॥**

**स दोषो धात्रिका** धात्रीसंज्ञा भण्यते । यत्किम् ? **यद्दत्ते** प्रयच्छति गृही । किंविशिष्टः सन् ? **प्रीतो**ऽनुरक्तः । कस्य ? **प्रयोक्तुः** स्वयंकर्तुः कारयितुरुपदेष्टुर्वा यत्यादेः । किं तत् ? **मार्जनेत्यादि** । क्व ? **बाले** डिम्भे । मार्जनं च क्रीडनं च स्तन्यपानं च स्वापनं च मण्डनं चेति समाहारद्वन्द्वः । प्रयुङ्क्ते साधुत्वेनेति प्रयोक्ता । "न क्रीतलोकखार्थातृनाम्" इति षष्ठीप्रतिषेधान्मार्जनेत्यादौ कर्मणि द्वितीया । एवं च पञ्चधात्वं धातृदोषस्य सूत्रितं बोद्धव्यम् । पञ्चधा हि धात्री मार्जनमंडनखेलास्वापनक्षीराम्बुधात्रिभेदात् । मार्जनादिभिश्च कर्मभिर्बाले प्रयुक्तैर्भोजनादिकमुत्पाद्य भजतो

मार्जनधाव्यादिसंज्ञो दोषः पञ्चधा स्यात् । दोषत्वं चात्र स्वाध्यायविनाशमार्गदूषणादिदोषदर्शनात् । उक्तं च—

स्नानभूषापयःक्रीडामातृधात्रीप्रभेदतः ।
पञ्चधा धात्रिकाकार्यादुत्पादो धात्रिकामलः ॥

दूतनिमित्तदोषौ व्याकरोति—

**दूतोऽशनादेरादानं संदेशनयनादिना ।**
**तोषिताद्दातुरष्टाङ्गनिमित्तेन निमित्तकम् ॥ २१ ॥**

**दूतो** दूताख्यो दोषो भण्यते । यत्किम् ? **यदादानम्** ग्रहणं साधोः । कस्य ? **अशनादे**र्भोजनौषधादेः । कस्मात् ? **दातु**र्दायकात् । किंविशिष्टात् ? **तोषितात्** तुष्टिं नीतात् । केन ? **संदेशनयनादिना** । संदेशस्य वाचिकस्य संबन्धिवचनस्य नयनं स्थानान्तरप्रापणं संदेशनयनम् । तद् आदिर्यस्य लेखनयनादेः कर्मणस्तदेवम् । उक्तं च—

जलस्थलनभःस्वान्यग्रामस्वपरदेशतः ।
संबन्धिवचसो नीतिर्दूतदोषो भवेदसौ ॥

दोषत्वं चास्य दूतकर्मशासनदूषणात् । तथा **निमित्तकं** निमित्तसंज्ञा दोषः स्यात् । यत्किम् ? यदादानमशनादेः संयतस्य । कस्मात् ? दातुः । किंविशिष्टात् ? तोषितात् । केन ? **अष्टाङ्गनिमित्तेन** व्यञ्जनादिदर्शनपूर्वकशुभाशुभज्ञानेन । तत्र व्यञ्जनं मशकतिलकादिकम् । अङ्गं करचरणादिकम् । स्वरः शब्दः । छिन्नं खड्गादिप्रहारो वस्त्रादिच्छेदो वा । भौमं भूमिविभागः । अन्तरिक्षमादित्यग्रहाद्युदयास्तमनं । लक्षणम् नन्दिकावर्तः पद्मचक्रादिकम् । स्वप्नः सुप्तस्य हस्तिविमानमहिषारोहणादिदर्शनम् । भूमिगर्जनदिग्दाहादेरत्रैवान्तर्भावः । उक्तं च—

लाञ्छनाङ्गस्वरं छिन्नं भौमं चैव नभोगतम् ।
लक्षणं स्वपनश्चेति निमित्तं त्वष्टधा भवेत् ॥

अष्टौ व्यञ्जनादिदर्शनान्यङ्गानि साधनानि यस्य तदष्टाङ्गम् ? तच्च तन्निमित्तं च भाविशुभाशुभज्ञानमष्टाङ्गनिमित्तम् । दोषत्वं चात्र रसास्वादनदैन्यादिदोषदर्शनात् ।

वनीपवचनाजीवदोषौ लक्षयति—

**दातुः पुण्यं श्वादिदानादस्त्येवेत्यनुवृत्तिवाक् ।**
**वनीपकोक्तिराजीवो वृत्तिः शिल्पकुलादिना ॥ २२ ॥**

वनीपकस्य याचकस्योक्तिर्वचनं **वनीपकोक्तिर्**वनीपकवचनं नाम दोषः स्यात् । या किम् ? या **अनुवृत्तिवाग**ऽनुवर्तनवचनम् । कथम् ? इति—**अस्त्येव** भवत्येव । किं तत् ? **पुण्यं** सुकृतम् । कस्य ? **दातुः** । कस्मात् ? **श्वादिदानात्** । श्वा शुनक आदिर्येषां काकादीनां ते श्वादयः । तेभ्यो दानं वितरणम् । इदमत्र तात्पर्यं, शुनककाककुष्टाद्यार्तमध्याह्नकालागतमांसाद्यासक्तद्विजदीक्षोपजीविपार्श्वस्थतापसादिश्रमणच्छात्रादिभ्यो दत्ते पुण्यमस्ति नवेति दानपतिना पृष्टे सति, अस्त्येवेत्यनुकूलवचनं भोजनाद्यर्थं वनीपकवचनं नाम दोषो दीनत्वादिदोषदर्शनात् । उक्तं च—

साण-किविण-तिहिमाहण-पासत्थिय-सवण-काग-दाणादि ।
पुण्णं णवेति पुट्ठे पुण्णं ति य वणिवयं वयणं ॥

**आजीवो** नाम दोषः स्यात् । यत्किम् ? या **वृत्तिः** । केन ? **शिल्पकुलादिना** । हस्तविज्ञानकुलजात्यैश्वर्यतपोनुष्ठानान्यात्मनो निर्दिश्य जीवनकरणमित्यर्थः । उक्तं च—

आजीवास्तप ऐश्वर्यं शिल्पं जातिस्तथा कुलम् ।
तैस्तूत्पादनमाजीव एष दोषः प्रकथ्यते ॥

दोषत्वं चात्र वीर्यागूहनदीनत्वादिदोषदर्शनात् । हस्तिकल्यादिनगरजाताख्यानप्रकाशनमुखेनक्रोधादिसंज्ञांश्चतुरोदोषानाह—

**क्रोधादिबलाददतश्चत्वारस्तदभिधा मुनेर्दोषाः।**
**पुरहस्तिकल्यवेन्नातटकासीरासीयनवत् स्युः ॥ २३ ॥**

---

१ याचनार्थे "वनीपको याचनकः" इत्यमरः ।

२ श्वान-कुष्टतृष्ण-ब्राह्मण-पार्श्वस्थ-श्रमण-काकदानादि ।
पुण्यं नवेति पृष्टे पुण्यमिति च वनीपकं वचनम् ॥

स्युर्भवेयुः । के ? **दोषाः** । कति ? **चत्वारः** । किं नामानः ? **तदभिधाः** क्रोधमानमायालोभनामानः । कस्य । **मुनेः** साधोः । किं कुर्वतः ? **अदतो** भुञ्जानस्य । कस्मात् ? **क्रोधादिबलात्** क्रोधं मानं मायां लोभं वावष्टभ्य । किं वत् ? **पुरेत्यादि** । हस्तिकल्पं च वेन्नातटं च कासी च रासीयनं च हस्तिकल्पवेन्नातटकासीरासीयनानि । पुराणि च तानि हस्तिकल्यादीनि च । तेष्विव तद्वत् तत्र हस्तिकल्पनगरे क्रोधबलेन भुक्तवतो मुनेः क्रोधाख्यो दोषः संपन्नः । वेन्नातटनगरे मानबलेन मानाख्यो वाराणसीनगरे मायाबलेन मायाख्यो रासीयननगरे लोभबलेन लोभाख्यश्च । कथास्तूत्प्रेक्ष्यवाच्याः । दोषत्वं चैषां प्रतीतमेव ।

पूर्वसंस्तवपश्चात्संस्तवदोषावाह—

**स्तुत्वा दानपतिं दानं स्मरयित्वा च गृह्णतः ।**
**गृहीत्वा स्तुवतश्च स्तः प्राक्पश्चात्संस्तवौ क्रमात् ॥ २४ ॥**

स्तो भवतः । कौ ? दोषौ । किमाख्यौ ? **प्राक्पश्चात्संस्तवौ** पूर्वसंस्तवः पश्चात्संस्तवश्चेति द्वौ । कस्मात् ? **क्रमात्** । किं कुर्वतः ? **गृह्णतो** भक्तादिकमाददानस्य साधोः । किं कृत्वा ? **स्तुत्वा** । कम् ? **दानपतिम्** । त्वं दानपतिः । तव कीर्तिर्जगद्व्यापिनी । इत्यादि कीर्तनं दानपतेः कृत्वा । न केवलं, **दानं स्मरयित्वा च** । 'त्वं पूर्वं महादानपतिः इदानीं किमिति कृत्वा विस्मृत' इति संबोध्य । सोयं पूर्वसंस्तवाख्यो दोषः । तथा **स्तुवतश्च** । किं कृत्वा ? **गृहीत्वा** भोजनादिकमादाय । सोयं पश्चात्संस्तवाख्यो दोषः । दोषत्वं चात्र नग्नाचार्यकर्तव्यकार्पण्यादिदोषदर्शनात् ।

चिकित्साविद्यामन्त्रांस्त्रीन्दोषानाह—

**चिकित्सा रुक्प्रतीकाराद्विद्यामाहात्म्यदानतः ।**
**विद्या मन्त्रश्च तद्दानमाहात्म्याभ्यां मलोश्नतः ॥ २५ ॥**

**चिकित्सा** चिकित्साख्यो **मलो** दोषः स्यात्साधोः । किं कुर्वतः ? **अश्नतो**

भुञ्जानस्य। कस्मात् ? **रुक्प्रतीकारात्** कायाद्यष्टाङ्गचिकित्साशास्त्रबलेन ज्वरादिव्याधिग्रहादीन्निराकृत्य, तन्निराकरणमुपदिश्य च। उक्तं च—

**रसायनविषक्षाराः कौमाराङ्गचिकित्सिते।**
**चिकित्सा दोष एषोस्ति भूतं शल्यं शिराष्टधा॥**

शिरेति शालाक्यम्। दोषत्वं चात्र सावद्यादिदोषदर्शनात्। तथा **विद्या** विद्याख्यो मलः स्यात्। किं कुर्वतः ? अश्नतः। काभ्याम् ? **विद्यामाहात्म्यदानतः** आकाशगामिन्यादिविद्यायाः प्रभावेण प्रदानेन वा। तदुक्तम्—

**विद्यासाधितसिद्धा स्यादुत्पादस्तत्प्रधानतः।**
**तस्या माहात्म्यतो वापि विद्यादोषो भवेदसौ॥**

माहात्म्यं च दानं च माहात्म्यदाने। विद्याया माहात्म्यदाने, विद्यामाहात्म्यदाने ताभ्यां ततः। किं च, तुभ्यमहं विद्यामिमां दास्यामीत्याशाप्रदानेन च भुक्त्युत्पादेपि स एव दोषः। तथा चोक्तम्—

**विज्जा[1] साधिदसिद्धा तिस्से आसापदाणकरणेहिँ।**
**तिस्से माहप्पेण य विज्जाद्दोसो दु उप्पादो॥**

तथा **मन्त्रो** मन्त्राख्यो मलः स्यात्। किं कुर्वतः ? अश्नतः। काभ्याम् ? **तद्दानमाहात्म्याभ्यां** तस्य मन्त्रस्य सर्पादिविषापहर्तुर्दानेन माहात्म्येन वा। अत्रापि मन्त्राशाप्रदानेनेत्यपि व्याख्येयम्। दोषत्वं चात्र लोकप्रतारणजिह्वागृद्ध्यादिदोषदर्शनात्।

प्रकारान्तरेण तावेवाह—

**विद्या साधितसिद्धा स्यान्मन्त्रः पठितसिद्धकः।**
**ताभ्यां चाहूय तौ दोषौ स्तोश्नतो भुक्तिदेवताः॥ २६॥**

**स्यात्**। कासौ ? **विद्या**। किंविशिष्टा ? **साधितसिद्धा** पूर्वं साधिता

---

१—विद्या साधितसिद्धा तस्या आशाप्रदानकरणैः।
तस्या माहात्म्येन च विद्यादोषस्तु उत्पादः॥

जपहोमादिनाध्यासिता पश्चात्सिद्धा वशीभूता साधितसिद्धा। तथा **मन्त्र**-स्यात्। किंविशिष्टः? **पठितसिद्धकः** पूर्वं पठितो गुरुमुखादधीतः पश्चात्सिद्धः स्वकार्यकारी संपन्नः पठितसिद्धः। ततः स्वार्थे कः। **ताभ्यां च** **विद्यामन्त्राभ्यां भुक्तिदेवता** आहारप्रदव्यन्तरादिदेवानाहूय आमन्त्र्य तत्साधितमश्नतो भुञ्जानस्य साधोस्तौ विद्यामन्त्राख्यौ **दोषौ स्तो** भवतः। उक्तं च—

**विद्यामन्त्रैः समाहूय यद्दानपतिदेवताः।**
**साधितः स भवेद्दोषो विद्यामन्त्रसमाश्रयः॥**

चूर्णमूलकर्मदोषावाह—

## दोषो भोजनजननं भूषाञ्जनचूर्णयोजनाच्चूर्णः।
## स्यान्मूलकर्म चावशवशीकृतिवियुक्तयोजनाभ्यां तत्॥२७॥

**चूर्णः** चूर्णाख्यो **दोषः स्यात्**। यत्किम्?। **यद्भोजनजननम्**-आहारोत्पादनं साधोः। कस्मात्? **भूषाञ्जनचूर्णयोजनात्** शरीरशोभालंकरणाद्यर्थां द्रव्यरजो भूषाचूर्णः। तदेव च नेत्रनैर्मल्यार्थमञ्जनचूर्णः। भूषा चाञ्जनं च भूषाञ्जने। भूषाञ्जनार्थौ चूर्णौ भूषाञ्जनचूर्णौ। तयोर्योजनं तदर्थिनः संपादनम्। दोषत्वं चात्र जीविकादिक्रियया जीवनात्। तथा **मूलकर्माख्यो** दोषः स्यात्। यत्किम्? यद्भोजनजननम्। काभ्याम्? **अवशवशीकृतिवियुक्तयोजनाभ्याम्**। अवशस्य अस्वाधीनस्य वशीकृतिः स्वाधीनीकरणमऽवशवशीकृतिः। वियुक्तानां विघटितानां स्त्रीपुरुषाणां योजनं मेलकरणं वियुक्तयोजनम्। अवशवशीकृतिश्च वियुक्तयोजनं चावशवशीकृतिवियुक्तयोजने, ताभ्याम्। दोषत्वं चात्र पूर्वत्र जीविकादिक्रियया जीवनात्, परत्र च लज्जाद्याभोगस्वीकरणात्॥ इत्युत्पादनादोषप्रकरणम्।

एवमुत्पादनदोषान् व्याख्यायेदानीमशनदोषोद्देशार्थमाह—

## शङ्कितपिहितम्रक्षितनिक्षिप्तच्छोटितापरिणताख्याः।
## दश साधारणदायकलिप्तविमिश्रैः सहेत्यशनदोषाः॥२८॥

भवन्ति? के? **अशनदोषाः**। अश्यते इत्यशनं भोज्यम्। अशनस्

दोषा अशनदोषाः । कति ? **दश** । कथम् ? **साधारणदायकलिप्तविमिश्रैः सह शङ्कितपिहितम्रक्षितनिक्षिप्तच्छोटितापरिणताख्या इति** । शङ्कितं च पिहितं च म्रक्षितं च निक्षिप्तं च–च्छोटितं चापरिणतं च तान्याख्या नामानि येषां त एवम् षट् । साधारणश्च दायकश्च लिप्तं च विमिश्रं च तान्येवं चत्वारि ।

शङ्कितादीनां लक्षणानि वक्तुकामः प्रथमं तावच्छङ्कितपिहितदोषौ लक्षयति—

**संदिग्धं किमिदं भोज्यमुक्तं नो वेति शङ्कितम् ।**
**पिहितं देयमप्रासु गुरु प्रास्वपनीय वा ॥ २९ ॥**

**शंकितं** नामाशनदोषः स्यात् । यत्किम् ? यत् **संदिग्धं** संशयितं भोज्यद्रव्यं स्यात् । कथम् ? इति—**इदं वस्तु किमुक्त**मागमे प्रतिपादितम् । किंविशिष्टम् ? **भोज्यं** भोजनार्हम् । **नो वा** नोक्तं वा । यच्च किमयमाहारोऽधःकर्मणा निष्पन्न उत नेत्यादिशङ्कां कृत्वा भुज्यते सोपि शङ्कितदोष एव । तथा **पिहितं** नाम दोषः स्यात् । यत्किम् ? **यद्देयं** दीयते भोज्यं द्रव्यं संयताय । किं कृत्वा ? **अपनीय** अपसार्य । किं तत् ? **अप्रासु** सचित्तं पिधानद्रव्यम् । अथवा प्रासु अचित्तं पिधानद्रव्यमपनीय । किंविशिष्टम् ? **गुरु** भारिकम् । उक्तं च—

**पिहितं यत्सचित्तेन गुर्वचित्तेन वापि यत् ।**
**तत् त्यक्त्वैव च यद्देयं बोद्धव्यं पिहितं हि तत् ॥**

म्रक्षितनिक्षिप्तदोषौ लक्षयति—

**म्रक्षितं स्निग्धहस्ताद्यैर्दत्तं निक्षिप्तमाहितम् ।**
**सचित्तक्ष्माग्निवार्बीजहरितेषु त्रसेषु च ॥ ३० ॥**

**म्रक्षितं** नाम दोषः स्यात् । यत्किम् ? यद्दत्तं दायकेन संयताय वितीर्णम् । कैः ? **स्निग्धहस्ताद्यैः** स्निग्धेन घृततैलाद्याक्तेन हस्तेन, भाजनेन कडच्छुकेन वा । दोषत्वं चात्र संमूर्छनादिसूक्ष्मदोषदर्शनात् । तथा **निक्षिप्तं** नाम दोषः स्यात् । यत्किम् ? यद्भोज्यद्रव्यं दीयते । किंविशिष्टं सत् ?

आहितमुपरि स्थापितम्। केषु? सचित्तेत्यादि। क्ष्मा पृथ्वी। अग्निस्तेजः। वार्जलम्। बीजं प्ररोहणशक्तियुक्तं गोधूमादि। हरितमम्लानावस्थं पर्णतृणादि। क्ष्मा चाग्निश्च वाश्च बीजं च हरितं च। क्ष्मादीनि सचित्तानि सजीवानि अप्रासुकयुक्तानि वा कायरूपाणि। सचित्तानि च तानि क्ष्मादीनि च तेषु पञ्चसु षष्ठेषु च त्रसेषु द्वित्रिचतुःपञ्चेन्द्रियजीवेषु। उक्तं च—

सचित्तपुढवि आऊ तेऊ हरिदं च बीज तसजीवा[1]।
जं तेसिमुवरि ठविदं णिक्खित्तं होदि छब्भेयम्॥

छोटितदोषमाह—

भुज्यते बहुपातं यत्करक्षेप्यथवा करात्।
गलद्भित्त्वा करौ त्यक्त्वाऽनिष्टं वा छोटितं च तत्॥ ३१॥

यद्बहुपातं प्रचुरमन्नं पातयित्वा अन्यत्, अर्थादल्पं संयतेन भुज्यते। अथवा करक्षेपि गलत्परिवेषकेण हस्ते प्रक्षिप्यमाणं तक्राद्यैः परिस्रवद्भुज्यते। यद्वा कराद्गलत्स्वहस्तात् तक्राद्यैः परिस्रवद्भुज्यते। यद्वा भित्त्वा करौ हस्तपुटं पृथक्कृत्य भुज्यते। यद्वा त्यक्त्वानिष्टमनभिरुचितमुज्झित्वा इष्टं भुज्यते तत्पञ्चप्रकारमपि छोटितमित्युच्यते।

अपरिणतदोषमाह—

तुषचणतिलतण्डुलजलमुष्णजलं च स्ववर्णगन्धरसैः।
अरहितमपरमपीदृशमपरिणतं तन्न मुनिभिरुपयोज्यम्॥३२॥

तुषप्रक्षालनं चणकप्रक्षालनं तिलप्रक्षालनं तण्डुलप्रक्षालनं वा यज्जलं यच्चोष्णजलं तप्तं भूत्वा शीतमुदकं स्ववर्णगन्धरसैररहितमपरित्यक्तम्, अन्यदपीदृशं हरीतकीचूर्णादिना अविध्वस्तं स्ववर्णादिकं त्यक्त्वा वर्णाद्यन्तरमप्राप्तं यज्जलं तदपरिणतं भण्यते। तच्च मुनिभिः संयतैर्नोपयोज्यम्

---

१—सचित्तपृथिवी आपस्तेजो हरितं च बीजं त्रसजीवाः।
यत्तेषामुपरि स्थापितं निक्षिप्तं भवति षड्भेदम्॥

त्याज्यमित्यर्थः। तुषजलादीनि परिणतान्येव ग्राह्याणीति भावः। उक्तं च—

> तिलतंडुलउसिणोदय चणोदयतुसोदयं अविद्धत्थं[1]।
> अण्णं तहाविहं वा अपरिणदं णेव गिण्हिज्जो॥

अपि च—

> तिलादिजलमुष्णं च तोयमन्यच्च तादृशम्।
> कराद्यऽताडितं नैव ग्रहीतव्यं मुमुक्षुभिः॥

साधारणदोषमाह—

**यद्दातुं संभ्रमाद्वस्त्राद्याकृष्यान्नादि दीयते।**
**असमीक्ष्य तदादानं दोषः साधारणोऽशने॥ ३३॥**

**अशने साधारणो** नाम **दोषः** स्यात्। किम्? **तदादानं** तस्य ग्रहणम्। यत्किम्? **यद्दीयते** दायकेन। किं तत्? **अन्नादि** भक्तौषधादि। किं कृत्वा? **असमीक्ष्य** सम्यगपर्यालोच्य। किं कृत्वा? **आकृष्य** आहृत्य। किं तत्? **वस्त्रादि** वस्त्रकटपात्रादि। कस्मात्? **संभ्रमात्** संक्षोभाद् भयादादराद्वा। किं कर्तुम्? **दातुं** दास्यामीत्यभिप्रायेण। उक्तं च—

> संभ्रमाहरणं कृत्वाऽऽदातुं पात्रादिवस्तुनः।
> असमीक्ष्यैव यद्देयं दोषः साधारणः स तु॥

दायकदोषमाह—

**मलिनीगर्भिणीलिङ्गिन्यादिनार्या नरेण च।**
**शवादिनापि क्लीबेन दत्तं दायकदोषभाक्॥ ३४॥**

भवति। किं तत्? अन्नादि। किंविशिष्टम्? **दायकदोषभाक्**। दायकाश्रयं दोषं भजत्याश्रयति यत्तदेवम्। किंविशिष्टं सत्? **दत्तम्**। कया? **मलिनीगर्भिणीलिङ्गिन्यादिनार्या**। न केवलं, **नरेण च** किंविशिष्टेन?

---

[1]–तिलतण्डुलोष्णोदकं चणोदकं तुषोदकमऽविध्वस्तम्।
अन्यत्तथाविधं वा अपरिणतं नैव ग्रह्येत॥

शवादिना । न केवलं, क्लीबेनापि नपुंसकेन । मलिनी रजस्वला । गर्भिणी गुरुभारा । शवो मृतकं श्मशाने प्रक्षिप्यागतो मृतकसूतकयुक्तो वा । आदिशब्दाद्व्याधितादिः । उक्तं च—

सूती शौण्डी तथा रोगी शवः षण्ढः पिशाचवान् ।
पतितोच्चारनग्नाश्च रक्ता वेश्या च लिङ्गिनी ॥
वान्ताऽभ्यक्ताङ्गिका चातिबाला वृद्धा च गर्भिणी ।
अदंत्यन्धा निषण्णा च नीचोच्चस्था च सान्तरा ॥
फूत्कारं ज्वालनं चैव सारणं छादनं तथा ।
विध्यापनाग्निकार्यं च कृत्वा निश्च्यावघट्टने ॥
लेपनं मार्जनं त्यक्त्वा स्तनलग्नं शिशुं तथा ।
दीयमानेपि दानेस्ति दोषो दायकगोचरः ॥

सूती बालप्रसाधिका । शौण्डी मद्यपानलम्पटा । पिशाचवान् वाताद्युपहतः पिशाचगृहीतो वा पतितो मूर्छागतः । उच्चारः उच्चारमूत्रादीन्कृत्वाऽऽगतः । नग्न एकवस्त्रो वस्त्रहीनो वा । रक्ता रुधिरसहिता । लिङ्गिनी आर्यिका अथवा पञ्चश्रमणिकारक्तपटिकादयः । वान्ता छर्दिं कृत्वाऽऽगता । अभ्यक्ताङ्गिका अङ्गाभ्यञ्जनकारिणी अभ्यक्तशरीरा वा । अदन्ती यत्किञ्चिद्भक्षयन्ती । निषण्णा उपविष्टा । नीचोच्चस्था नीचे उच्चे वा प्रदेशे स्थिता । सान्तरा कुड्यादिभिर्व्यवहिता । फूत्कारं संधुक्षणम् । ज्वालनं मुखवातेनान्येन वाग्निकाष्ठादीनां प्रदीपनम् । सारणं काष्ठादीनामुत्कर्षणम् । छादनं भस्मादिनाग्नेः प्रच्छादनम् । विध्यापनं जलादिना निर्वापणम् । अग्निकार्यमग्नेरितस्ततः करणम् । निश्च्यावः काष्ठादिपरित्यागः । घट्टनमग्नेरुपरि कुम्भ्यादिचालनम् । लेपनं गोमयकर्दमादिना कुड्यादेरुपदेहः । मार्जनं स्नानादिकं कर्म । कृत्वेति संबन्धः । शौण्डी रोगीत्यादिषु लिङ्गमतन्त्रम् । तेन शौण्डो रोगिणीत्यादि ज्ञेयम् ।

लिप्तदोषमाह—

यद्गैरिकादिनाऽऽमेन शाकेन सलिलेन वा ।
आर्द्रेण पाणिना देयं तल्लिप्तं भाजनेन वा ॥ ३५ ॥

**तल्लिप्तं** नाम **दोषः** स्यात् । यत्किम् ? **यद्देयं** दीयतेऽन्नादि । केन ? **पाणिना** हस्तेन । किंविशिष्टेन ? **आर्द्रेण** । केन ? **गैरिकादिना** गैरिकखटिकादिद्रवेण **वा** **आमेन** अपक्वतण्डुलादिपिष्टेन **शाकेन वा** हरितकेन **सलिलेन** वा जलेन । न केवलं गैरिकाद्यन्यतमार्द्रेण पाणिना भाजनेन वा पात्रेण तथाविधेन । उक्तं च—

**गेरुयहरिदालेण व सेढियमण्णो सिलामपिट्ठेण ।**
**सपवालयगुल्लेणव देयं करभाजणे लित्तं ॥**

मिश्रदोषमाह—

**पृथ्व्याऽप्रासुकयाऽद्भिश्च बीजेन हरितेन यत् ।**
**मिश्रं जीवत्त्रसैश्चान्नं महादोषः स मिश्रकः ॥ ३६ ॥**

**स मिश्रको** मिश्रसंज्ञो **महादोषः** स्यात्, सर्वथा वर्जनीयत्वात् । यत्किम् ? **यदन्नं** दीयते संयताय । किंविशिष्टम् ? **मिश्रं** व्यतिकीर्णम् । कया ? **पृथ्व्या** मृत्तिकया । किंविशिष्टया ? **अप्रासुकया** सचित्तया तथा**ऽद्भिश्चा**प्रासुकाभिस्तथा **बीजेन** यवगोधूमादिना तथा **हरितेन** पत्रपुष्पफलादिना तथा **जीवत्त्रसै**र्जीवद्भिर्द्वीन्द्रियादिजीवैः । उक्तं च—

**सजीवा पृथिवी तोयं नीलं बीजं तथा त्रसः ।**
**अमीभिः पञ्चभिर्मिश्र आहारो मिश्र इष्यते ॥**

इत्यशनदोषप्रकरणम् ।

एवमशनदोषान् व्याख्याय भुक्तिदोषांश्चतुरो व्याख्यातुकामः पूर्वमङ्गारादींस्त्रींल्लक्षयति—

**गृद्ध्याङ्गारोऽश्नतो धूमो निन्दयोष्णहिमादि च ।**
**मिथो विरुद्धं संयोज्य दोषः संयोजनाह्वयः ॥ ३७ ॥**

**अङ्गाराख्यो** भुक्तिदोषः स्यात् । कस्य ? साधोः । किं कुर्वतः ?

१—गैरिकहरितालेन च ... ... ... ... पिष्टेन ।
सप्रवालगुल्मने च देयं करभाजने लिप्तम् ॥

अश्नतो भुञ्जानस्य । कया ? **गृद्ध्या** 'सुष्ठु रोच्यमिदमिष्टम् मे यद्यन्यदपि लभेयं तदा भद्रकं भवेत् ।' इत्याहारेऽतिलाम्पट्येन । तथा **धूमो** नाम भुक्तिदोषः स्यात् । किं कुर्वतः ? अश्नतः । कया ? **निन्दया** विरूपकमेतदनिष्टं ममेति जुगुप्सया । तथा **संयोजनाह्वयो** भुक्तिदोषः स्यात् । किं कुर्वतः ? अश्नतः । किं कृत्वा ? **संयोज्य** आत्मना मीलयित्वा । किं तत् ? **मिथोन्योन्यं विरुद्धं** । किंविशिष्टम् ? **उष्णहिमादि** उष्णं शीतेन शीतं चोष्णेन । आदिशब्दाद्रूक्षं स्निग्धेन स्निग्धं च रूक्षेणेत्यादि । तथा आयुर्वेदोक्तं विरुद्धमन्नं पयसा सह सर्वं फलं तथेत्याद्यपि । उक्तं च—

> **उक्तः संयोजनादोषः स्वयं भक्तादियोजनात् ।**
> **आहारोतिप्रमाणोस्ति प्रमाणगतदूषणम् ॥**

आहारमात्रं निर्दिश्यातिमात्रसंज्ञादोषमाह—

> **सव्यञ्जनाशनेन द्वौ पानेनैकमंशमुदरस्य ।**
> **भृत्वाऽभृतस्तुरीयो मात्रा तदतिक्रमः प्रमाणमलः ॥ ३८॥**

स्यात् । कासौ ? **मात्रा** भोजनस्येति शेषः । यत्किम् ? यत्क्रियते । कोसौ ? **तुरीय**श्चतुर्थः कुक्षिभागः । किंविशिष्टः ? **अभृतो**ऽपूर्णः । रिक्तो ध्रियते इत्यर्थः । किं कृत्वा ? **भृत्वा** पूरयित्वा । कौ ? **द्वा**वंशौ । कस्य ? **उदरस्य** । केन ? **सव्यञ्जनाशनेन** । व्यञ्जनं सूपशालनादि । सह व्यञ्जनेन वर्तते इति सव्यञ्जनम् । तच्च तदशनं च भक्तमण्डकादि । तथा **एकमंशं** भागमुदरस्य कुक्षेः भृत्वा । केन ? **पानेन** द्रवद्रव्येणोदकादिना उक्तं च—

> **अन्नेन कुक्षेर्द्वावंशौ पानेनैकं प्रपूरयेत् ।**
> **आश्रमं पवनादीनां चतुर्थमवशेषयेत् ॥**

**तदतिक्रमो** मात्रातिक्रमः **प्रमाणमलः** प्रमाणाख्यो भुक्तिदोषः स्यात् । दोषत्वं चात्र स्वाध्यायावश्यकक्षतिनिद्रालस्याद्युद्भवज्वरादिव्याधिसंभवदर्शनात् । इति भुक्तिदोषप्रकरणम् ।

एवं पिण्डदोषान् षट्चत्वारिंशतं प्रकाश्य तन्मलांश्चतुर्दश दर्शयति—

**पूयास्रपलास्थ्यजिनं नखः कचमृतविकलत्रिके कन्दः ।**
**बीजं मूलफले कणकुण्डौ च मलाश्चतुर्दशान्नगताः ॥ ३९ ॥**

भवन्ति । के ? **पूयादयश्चतुर्दश मलाः** । किंविशिष्टाः सन्तः ? **अन्नगता** आहारसंपृक्ताः तत्र पूयं व्रणक्लेदः अपक्वरुधिरमिति यावत् । अस्रं रुधिरम् । पलं मांसम् । अस्थि कीकसम् । अजिनं चर्म । **नखः** कररुहः । कचः केशो रोम च मृतविकलत्रिकं निर्जीवद्वित्रिचतुरिन्द्रियत्रयम् । कचश्च मृतविकलत्रिकं च **कचमृतविकलत्रिके** । **कन्दः** सूरणादिः । **बीजं** प्ररोहयोग्यं यवादिकमित्याचारटीकायां । अङ्कुरितमिति तु तट्टिप्पनके । मूलं मूलकार्द्रकादि फलं बदरिकादि । मूलं च फलं च **मूलफले** । कणो यवगोधूमादीनां बहिरवयव इत्याचारटीकायाम् । तण्डुलादीति तु तट्टिप्पनके कुण्डः शाल्यादीनामभ्यन्तरसूक्ष्मावयव इत्याचारटीकायाम् बाह्ये पक्वोऽभ्यन्तरे वाऽपक्व इति तु तट्टिप्पनके । एते चाष्टविधपिण्डशुद्धावपठिता इति पृथगुक्ताः । उक्तं च—

**णहरोमजंतु अत्थी कणकुण्ड य पूयचम्मरुहिरमंसाणि ।**
**वीयफलकन्दमूला छिण्णमला चउदसा होंति ॥**

पूयादिमलानां महन्मध्याल्पदोषत्वख्यापनार्थमाह—

**पूयादिदोषे त्यक्त्वापि तदन्नं विधिवच्चरेत् ।**
**प्रायश्चित्तं नखे किञ्चित् केशादौ त्वन्नमुत्सृजेत् ॥ ४० ॥**

**चरेद**नुतिष्ठेत् साधुः । किं तत् ? **प्रायश्चित्तम्** । किंवत् ? **विधिवत्** प्रायश्चित्तशास्त्रोक्तविधानेन । किं कृत्वा ? **त्यक्त्वापि** मुक्त्वापि । किं तत् ? **तदन्नं** पूयादिदोषदुष्टमशनम् । क्व सति ? **पूयादिदोषे** पूयास्रपलास्थ्यजिनकृते भुज्यमानान्नस्य दुष्टत्वे अयं हि महादोषः । तथा चरेत्साधुः । किं तत् ? प्रायश्चित्तम् । कियत् ? **किंचिद्** अल्पम् । किं कृत्वा ? त्यक्त्वापि । किं तत् ? तदन्नं नखदोषदुष्टमशनम् । क्व सति ? **नखे** ।

अन्नगते इत्यनुवृत्त्या योज्यम् । अयं हि मध्यमदोषः । तथा उत्सृजेत्साधुः । किं तत् ? अन्नम् । क सति ? केशादौ केशमृतविकलत्रिकेऽन्नगते । तुर्विशेषे । न प्रायश्चित्तं चरेदल्पदोषत्वादित्यर्थः ।

कन्दादिषट्कस्याहारात्पृथक्करणतत्त्यागकरणत्वविधिमाह—

कन्दादिषट्कं त्यागार्हमित्यन्नाद्विभजेन्मुनिः ।
न शक्यते विभक्तुं चेत् त्यज्यतां तर्हि भोजनम् ॥ ४१ ॥

विभजेत् कथमप्यन्ने संसक्तं ततः पृथक्कुर्यात् । कोसौ ? मुनिः । किं तत् ? कन्दादिषट्कम् । कुतः ? त्यागार्हमिति परिहारयोग्यं यतः । चेद्यदि पुनर्न शक्यते । किं तत् ? कन्दादिषट्कम् । किं कर्तुम् ? विभक्तुमन्नात् पृथक्कर्तुम् । तर्हि त्यज्यतां मुच्यतां मुनिना । किं तत् ? भोजनम् । इति मलप्रकरणम् ।

अथ द्वात्रिंशतमन्तरायान् व्याख्यातुमुपक्षिपति—

प्रायोन्तरायाः काकाद्याः सिद्धभक्तेरनन्तरम् ।
द्वात्रिंशद्व्याकृताः प्राच्यैः प्रामाण्या व्यवहारतः ॥ ४२ ॥

व्याकृता व्याख्याता न सूत्रिताः के ? अन्तरायाः । किंविशिष्टाः ? काकाद्याः । कति ? द्वात्रिंशत् । कैः ? प्राच्यैष्टीकाकारादिभिः । कथं कृत्वा ? अनन्तरम् । कस्याः ? सिद्धभक्तेः सिद्धभक्तेरुच्चारितायाः पश्चादिति भावः । कथम् ? प्रायः एतेनाभोज्यगृहप्रवेशादेः सिद्धभक्तेः प्रागप्यन्तरायत्वं भवतीति बोधयति । तथा द्वात्रिंशतोतिरिक्ता अप्यन्तराया यथाम्नायं भवन्तीति च । उक्तं च मूलाचारटीकायां स्थितिभोजनप्रकरणे—

" न चैतेऽन्तरायाः सिद्धभक्तावकृतायां गृह्यन्ते सर्वदैव भोजनाभावः स्यात् । न चैवं, यस्मात्सिद्धभक्तिं यावन्न करोति तावदुपविश्य पुनरुत्थाय भुङ्क्ते । मांसादीन् दृष्ट्वा च रोदनादिश्रवणेन चोच्चारादींश्च कृत्वा भुङ्क्ते । न च तत्र काकादिपिण्डहरणं संभवतीति । "

कथं पुनरेवमनुवर्तनीया इत्याह—प्रामाण्याः प्रमाणीकर्तव्याः । के ?

अन्तरायाः संयतैः । कस्मात् ? व्यवहारतो वृद्धपरम्परायातं देशादिव्यवहारमाश्रित्य ।

काकाख्यलक्षणमाह—

काकश्वादिविडुत्सर्गो भोक्तुमन्यत्र यात्यधः ।
यतौ स्थिते वा काकाख्यो भोजनत्यागकारणम् ॥ ४३ ॥

काकाख्योऽन्तरायः स्यात् । किंविशिष्टः ? भोजनत्यागकारणं भुक्तिपरिहारहेतुः । किंरूपः ? काकश्वादिविडुत्सर्गः । काकश्च श्वा च शुनकः काकश्वानौ । तावादी येषां श्येनमार्जारादीनां ते काकश्वादयः । तेषां विशो विष्टाया उत्सर्गः काकशुनकश्येनमार्जारादिविष्टापरिपतनमित्यर्थः । क्व सति ? यतौ संयते । किं कुर्वति ? याति कुतश्चिन्निमित्ताद्गच्छति सति । क्व ? अन्यत्र सिद्धभक्त्युच्चारणस्थानादन्यस्मिन् स्थाने । किं कर्तुम् ? भोक्तुं भोजनं कर्तुम् । क्व ? अधः काकश्वादेरधस्तात् स्थिते वा भोक्तुमुद्भीभूते ।

अमेध्यच्छर्दिरोधननाम्नस्त्रीनन्तरायानाह—

लेपोऽमेध्येन पादादेरमेध्यं छर्दिरात्मना ।
छर्दनं रोधनं तु स्यान्मा भुङ्क्ष्वेति निषेधनम् ॥ ४४ ॥

भोजनत्यागकारणमित्यादिदीपकत्वात्सर्वत्र संबन्धनीयम् । अमेध्यं नामान्तरायो भोजनत्यागकरणं स्यात् । यः किम् ? यो लेप उपदेहः कस्य ? पादादेश्चरणजङ्घाजान्वादेः । कस्य ? साधोः स्थानान्तरं गच्छतः स्थितस्य वा । केन ? अमेध्येनाशुभेन पुरीषादिद्रव्येण । तथा छर्दिर्नामान्तरायः स्यात् । किं तत् ? छर्दनं कुतश्चिन्निमित्ताद्वमनं साधोः । केन ? आत्मनाऽपरेण । तथा रोधनं नामान्तरायः स्यात् । किं ? रोधनं धरणकादिना भोजननिवारणम् । कथम् ? मा भुङ्क्ष्वेति अद्य भोजनं मा कार्षीस्त्वमिति ।

रुधिराश्रुपातजान्वधःपरामर्शाख्यांस्त्रीन् श्लोकद्वयेनाह—

रुधिरं स्वान्यदेहाभ्यां वहतश्चतुरङ्गुलम् ।
उपलम्भोऽस्रपूयादेरश्रुपातः शुचात्मनः ॥ ४५ ॥

पातोश्रूणां मृतेन्यस्य क्वापि वाक्रन्दतः श्रुतिः ।
स्याज्जान्वधःपरामर्शः स्पर्शो हस्तेन जान्वधः ॥ ४६ ॥
( युग्मम् )

रुधिरं नामान्तरायः स्यात् । यः किम् ? य उपलम्भो दर्शनं साधोः स्यात् । कस्य ? अस्रपूयादे-रुधिरपूयरसिकादेः । किं कुर्वतः ? वहतः स्रुतिरूपेणाधोगच्छतः । काभ्याम् ? स्वान्यदेहाभ्यां स्वशरीरात्परशरीराद्वा । कथं कृत्वा ? चतुरङ्गुलम् चत्वार्यङ्गुलानि यावत् । ततो न्यूनवहने नास्त्यन्तरायः । तथाश्रुपातो नामान्तरायः स्यात् । यः किम् ? यः पातः । केषाम् ? अश्रूणाम् वाष्पाणां । कस्य ? आत्मनः स्वस्य । कया ? शुचा शोकेन न धूमादिना । प्रकारांतरेण तमेवाह—सोप्यश्रुपातो नामांतरायः स्यात् । या किम् ? या श्रुतिः आकर्णनं कस्य ? अन्यस्य सन्निकृष्टस्य पुंसः स्त्रिया वा । किं कुर्वतः ? आक्रन्दत उच्चैरुदतः । क्व सति ? क्वापि क्वचित्स्वसंबन्धिनि । किंविशिष्टे ? मृते । तथा जान्वधःपरामर्शो नामान्तरायः स्यात् । यः किम् ? यः साधुना सिद्धभक्त्यनन्तरं क्रियते । कोसौ ? स्पर्शः स्पर्शनम् । केन ? हस्तेन । क्व । जान्वधः स्वजानुनोऽधस्तात् ।

जानूपरिव्यतिक्रमनाभ्यधोनिर्गमनप्रत्याख्यातसेवनजन्तुवधनाम्नश्चतुरः श्लोकद्वयेनाह—

जानुदघ्नतिरश्चीनकाष्ठाद्युपरिलङ्घनम् ।
जानुव्यतिक्रमः कृत्वा निर्गमो नाभ्यधः शिरः ॥ ४७ ॥
नाभ्यधोनिर्गमः प्रत्याख्यातसेवोज्झिताशनम् ।
स्वस्याग्रेन्येन पञ्चाक्षघातो जन्तुवधो भवेत् ॥ ४८ ॥
( युग्मम् )

जानुव्यतिक्रमो जानूपरिव्यतिक्रमो नामान्तरायः स्यात् । किम् ? जानुदघ्नतिरश्चीनकाष्ठाद्युपरिलङ्घनम् । जानुदघ्नं जानुमात्रं तिर-

श्चीनमर्गलादिरूपेण तिर्यक् स्थापितं यत्काष्ठादि दारुपाषाणादि । तस्योपरि लङ्घनमुल्लङ्घ्य गमनम् । तथा नाभ्यधोनिर्गमो नामान्तरायः स्यात् । यत्किम् ? यन्निर्गमो निर्गमनं क्रियते साधुना । किं कृत्वा ? कृत्वा । किं तत् ? शिरो मस्तकम् । क्व ? नाभ्यधः स्वनाभेरधस्तात् । तथा प्रत्याख्यातसेवा नामान्तरायः स्यात् । यत्किम् ? यदुज्झिताशनं क्रियते साधुना । उज्झितस्य देवगुरुसाक्षिकं प्रत्याख्यातस्य वस्तुनोऽशनं खादनम् । तथा जन्तुवधो नामान्तरायो भवेत् । यः किम् ? यः पञ्चाक्षघातः पञ्चाक्षस्य मूषिकादेर्हननं क्रियते । केन ? अन्येन मार्जारादिना । क्व ? अग्रे । कस्य ? स्वस्य यतेरात्मनः ।

काकादिपिण्डहरणं पाणिपिंडपतनं पाणिजन्तुवधनं मांसादिदर्शनमुपसर्गं पादान्तरपञ्चेन्द्रियगमनं च षट् त्रिभिः श्लोकैराह—

**काकादिपिण्डहरणं काकगृध्राादिना करात् ।**
**पिण्डस्य हरणे ग्रासमात्रपातेऽश्नतः करात् ॥ ४९ ॥**
**स्यात्पाणिपिण्डपतनं पाणिजन्तुवधः करे ।**
**स्वयमेत्य मृते जीवे मांसमद्यादिदर्शने ॥ ५० ॥**
**मांसादिदर्शनं देवाद्युपसर्गे तदाह्वयः ।**
**पादान्तरेण पञ्चाक्षगमे तन्नामकोऽश्नतः ॥ ५१ ॥ (त्रिकम्)**

काकादिपिण्डहरणं नामान्तरायः साधोः स्यात् । क्व सति ? हरणेऽपनयने । कस्य ? पिण्डस्य भोज्यद्रव्यस्य । केन ? काकगृध्रादिना । कस्मात् ? करात् हस्तात् । किं कुर्वतः ? अश्नतो भुञ्जानस्य साधोः तथा पाणिपिण्डपतनं नामान्तरायः स्यात् । क्व सति ? ग्रासमात्र पाते ग्रासमात्रस्य पतने । कस्मात् ? करात् । कस्य ? अश्नतः । तथ पाणिजन्तुवधो नामान्तरायः स्यात् । क्व सति ? जीवे प्राणिनि । किंविशिष्टे ? मृते । क्व ? करे हस्तेऽश्नतः । किं कृत्वा ? एत्य आगत्य । कथम् स्वयं परप्रयोगं विना । तथा मांसादिदर्शनं नामान्तरायः स्यात् । क्व सति न्मांसमद्यादिदर्शनेऽश्नतः साधोः । तथा तदाह्वयो देवाद्युपसर्गनामान्त

रायः स्यात्। क्व सति? **देवाद्युपसर्गे** देवमनुष्यतिरश्चामन्यतमेन क्रियमाणे उत्पाते साधोः। तथा **तन्नामकः** पादान्तरपञ्चेन्द्रियागमनाख्योन्तरायः स्यात्। क्व सति? **पञ्चाक्षगमे** पञ्चेन्द्रियस्य गमने। केन? **पादान्तरेण** चरणयोरंतरालेन। कस्य? अश्नतः।

भाजनसंपातमुच्चारं च द्वावाह—

**भूमौ भाजनसंपाते पारिवेषिकहस्ततः।**
**तदाख्यो विघ्न उच्चारो विष्ठायाः स्वस्य निर्गमे॥ ५२॥**

**तदाख्यो** भाजनसंपातो नाम विघ्नोन्तरायः स्यात्। क्व सति? **भाजनसंपाते** भाजनस्य करकादेः पतने। क्व? **भूमौ**। कस्मात्? **पारिवेषिकहस्ततः** पारिवेषिकस्य यतिहस्तपुटे जलादि प्रक्षेप्तुः करात्। तथा **उच्चारो** नामान्तरायः स्यात्। क्व सति? **निर्गमे** गुदाद्बहिर्निःसरणे। कस्याः? **विष्ठायाः** पुरीषस्य। कस्य? **स्वस्यात्मनः**।

प्रस्रवणमभोज्यगृहप्रवेशनं च द्वावाह—

**मूत्राख्यो मूत्रशुक्रादेश्चाण्डालादिनिकेतने।**
**प्रवेशो भ्रमतो भिक्षोरभोज्यगृहवेशनम्॥ ५३॥**

स्वस्य निर्गम इति वर्तते। **मूत्राख्योन्तरायः** स्यात्। क्व सति? निर्गमे। कस्य? **मूत्रशुक्रादेः**। कस्य? स्वस्य। आदिशब्दादश्मर्यादेश्च। अथाभोज्यगृहवेशनमऽभोज्यगृहप्रवेशनं नामान्तरायः स्यात्। किम्? **प्रवेशः**। कस्य? **भिक्षोर्यतेः**। किं कुर्वतः? **भ्रमतो** भिक्षार्थं पर्यटतः। क्व? **चांडालादिनिकेतने** चांडालश्वपचवरुटादीनामस्पृश्यानां गृहे।

पतनमुपवेशनं संदंशं च त्रीनाह—

**भूमौ मूर्छादिना पाते पतनाख्यो निषद्यया।**
**उपवेशनसंज्ञोसौ संदंशः श्वादिदंशने॥ ५४॥**

**असौ पतनाख्योन्तरायः** स्यात्। क्व सति? **पाते** पतने साधोः। क्व? **भूमौ**। केन? **मूर्छादिना**। आदिशब्दाद् भ्रमक्लमादिना। तथासा-

वुपवेशनसंज्ञः स्यात् । कया ? **निषद्यया** भूमावुपवेशनेन । तथा **संदंशो** नामान्तरायः स्यात् । क्व सति ? **श्वादिदंशने** मण्डलिबिडालादिना दंशकरणे ।

भूमिसंस्पर्शं निष्ठीवनमुदरक्रिमिनिर्गमनमदत्तग्रहणं च चतुरः श्लोकद्वयेनाह—

**भूस्पर्शः पाणिना भूमेः स्पर्शे निष्ठीवनाह्वयः ।**
**स्वेन क्षेपे कफादेः स्यादुदरक्रिमिनिर्गमः ॥ ५५ ॥**
**उभयद्वारतः कुक्षिक्रिमिनिर्गमने सति ।**
**स्वयमेव ग्रहेऽन्नादेरदत्तग्रहणाह्वयः ॥ ५६ ॥ युग्मम् ।**

**भूस्पर्शो** नामान्तरायः स्यात् । क्व सति ? **पाणिना** हस्तेन भूमेः स्पर्शे कृते सति । तथा **निष्ठीवनाह्वयः** स्यात् । क्व सति ? **कफादेः** श्लेष्मथूत्कादेः **क्षेपे** निरसने कृते सति । केन ? **स्वेना**त्मना, न काशादिवशतः । तथा **उदरक्रिमिनिर्गमो** नामान्तरायः स्यात् । क्व सति ? **कुक्षिक्रिमिनिर्गमने सति** । केन ? **उभयद्वारत** ऊर्ध्वमार्गेणाधोमार्गेण वा । उभयं च तद्द्वारं च, तेन । तथा **अदत्तग्रहणाह्वयः** स्यात् । क्व सति ? **ग्रहे** आदाने । कस्य ? **अन्नादे**र्भक्तपानौषधादेः । केन ? **स्वयमेव** दातृप्रयोगं विना ॥

प्रहारं ग्रामदाहं पादग्रहणं करग्रहणं च चतुरः श्लोकद्वयेनाह—

**प्रहारोऽस्यादिना स्वस्य प्रहारे निकटस्य वा ।**
**ग्रामदाहोऽग्निना दाहे ग्रामस्योद्धृत्य कस्यचित् ॥ ५७ ॥**
**पादेन ग्रहणे पादग्रहणं पाणिना पुनः ।**
**हस्तग्रहणमादाने भुक्तिविघ्नोऽन्तिमो मुनेः ॥ ५८ ॥**

**( युग्मम् )**

**प्रहारो** नाम **मुनेर्भुक्तिविघ्नो** भुजिक्रियान्तरायः स्यात् । क्व सति ? **प्रहारे** प्रहरणे कृते सति । केन ? **अस्यादिना** खड्गकुन्तादिना । कस्य ?

स्वस्यात्मनो निकटस्य वा प्रत्यासन्नस्य यस्य कस्यचित्। तथा ग्रामदाहो नाम भुक्तिविघ्नः स्यात्। क सति? अग्निना दाहे ग्रामस्य स्वाध्यासितग्रामे दह्यमाने सति। तथा पादग्रहणं नाम भुक्तिविघ्नः स्यात्। क सति? पादेन ग्रहणे सति मुनेः। कस्य? कस्यचिद्दल सुवर्णादेः। किं कृत्वा? उद्धृत्य भूम्यादेरुत्क्षिप्य। तथा हस्तग्रहणं नाम भुक्तिविघ्नोन्तिमो द्वात्रिंशः स्यात्। क सति? आदाने ग्रहणे मुनेः। केन? पाणिना हस्तेनोद्धृत्य कस्यचित्। अथ सुखस्मृत्यर्थमुद्देशगाथा लिख्यन्ते—

कागागिद्धाछद्दीरोधणरुधिरं च अस्सुवादं च।
जण्हूहेट्ठापरिसं जण्हुवरि वदिक्कमो चेव॥
णाहिअहोणिग्गमणं पच्चक्खिदसेवणा य जंतुवहो।
कागादिपिंडहरणं पाणीदो पिंडपडणं च॥
पाणीये जंतुवहो मंसादीदंसणे य उवसग्गे।
पादंतरपंचिंदिय संपादो भायणाणं च॥
उच्चारं पस्सवणं अभोज्जगिहपवेसणं तहा पडणं।
उववेसण संदंसो भूमी संफासणिट्ठिवणं॥
उदरक्किमिणिग्गमणं अदत्तगहणं पहारगामदाहो य।
पादेण किंचिगहणं करेण वा जच्च भूमीदो।
एदे अण्णे बहुगा कारणभूदा अभोजणस्सेह।
भीहण लोयदुगुच्छण संजमणिव्वेदणट्ठं च॥

आर्याद्वयेन शेषं संगृह्णन्नाह—

तद्वच्चण्डालादिस्पर्शः कलहः प्रियप्रधानमृती।
भीतिर्लोकजुगुप्सा सधर्मसंन्यासपतनं च॥ ५९॥
सहसोपद्रवभवनं स्वभुक्तिभवने स्वमौनभङ्गश्च।
संयमनिर्वेदावपि बहवोऽनशनस्य हेतवोन्येपि॥ ६०॥

(युग्मम्)

भवन्ति । के ? **हेतवः** कारणानि । कस्य ? **अनशनस्य** भोजनवर्जनस्य । कियन्तः ? **बहव** इयन्त इत्यनवधारिताः । किंविशिष्टाः ? **अन्येपि** अनुक्ता अपि । किंवत् ? **तद्वत्** काकादिभिस्तुल्यम् । तानेव दिङ्मात्रेण दर्शयति । चाण्डालादिस्पर्श इत्यादि । **चाण्डालादिस्पर्शश्चा**ण्डालश्वपचादिच्छुप्तिः । **कलहो** युद्धम् । **प्रियप्रधानमृती** इष्टमरणं मुख्यमरणं च । **भीतिर्थं**ल्किंचिद्भयं पापभयं वा । **लोकजुगुप्सा** जनगर्हा । **सधर्मसंन्यासपतनं** साधर्मिकस्य संन्यासेन मरणम् । **सहसोपद्रवभवनं स्वभुक्तिभवने** । सहसा झटित्याकस्मिकं, स्वभुक्तिभवने आत्मनो भुक्तिक्रियागृहे, उपद्रवभवनं यस्य कस्यचिदुपसर्गस्य प्रादुर्भावः । **स्वमौनभङ्गः** स्वस्यात्मनो भुजिक्रियायामवश्यकरणीयस्य मौनस्य भङ्गोऽज्ञानात्प्रमादाद्वा भञ्जनम् । **संयमः**[1] प्राणिरक्षार्थमिन्द्रियदमनार्थं च स्वस्य संयमनम् **निर्वेदो**[2] भवाङ्गभोगवैराग्यम् ॥ इत्यन्तरायप्रकरणम् ।

तथाहारकरणकारणान्याह—

**क्षुच्छमं संयमं स्वान्यवैयावृत्त्यमसुस्थितिम् ।**
**वाञ्छन्नावश्यकं ज्ञानध्यानादींश्चाहरेन्मुनिः ॥ ६१ ॥**

**मुनिराहरेद्** भुञ्जीत । किं कुर्वन् ? क्षुच्छमादीन्वाञ्छन् **क्षुच्छमं** क्षुद्वेदनोपशमम् । **स्वान्यवैयावृत्त्यं** स्वपरयोरापत्प्रतीकारम् । **असुस्थितिं** प्राणधारणम् । **ज्ञानं** स्वाध्यायम् आदिशब्देन क्षमादयो गृह्यंते[3] ।

उक्तं च—

**वेयणवेज्जावच्चे**[4] **किरियुट्ठाणे य संजमट्ठाए ।**
**तवपाणधम्मचिंता कुज्जा एदेहिं आहारं ॥**

---

१—२ एतत्पदद्वयं मूले समस्यमानावुक्तौ । ३ अत्र श्लोके मूलोक्ता बहवः शब्दा न गृहीताः ।

४—वेदनावैयावृत्त्ये क्रियां वा ।
तपःप्राणधर्मचिन्ता कुर्यादेतैराहारम् ।

दयाक्षमादयो बुभुक्षार्तस्य न स्युरित्युपदिशति—

**बुभुक्षाग्लपिताक्षाणां प्राणिरक्षा कुतस्तनी ।**
**क्षमादयः क्षुधार्तानां शंक्याश्चापि तपस्विनाम् ॥ ६२ ॥**

**कुतस्तनी** कस्मादागता भवति। कासौ ? **प्राणिरक्षा** । केषाम् ? **बुभुक्षाग्लपिताक्षाणां** क्षुधानिःशक्तीकृतहृषीकाणाम् । तथा **शङ्क्याश्च** संदेह्या भवन्ति । के ? **क्षमादयः** । केषाम् ? **तपस्विनामपि** चिरभावितपसामपि । किंविशिष्टानाम् ? **क्षुधार्तानां** क्षुत्पीडितानाम् ।

क्षुधाग्लानेन वैयावृत्त्यं दुष्करमाहारत्राणाश्च प्राणा योगिनामपीत्युपदिशति—

**क्षुत्पीतवीर्येण परः स्ववदार्तो दुरुद्धरः ।**
**प्राणाश्चाहारशरणा योगकाष्ठाजुषामपि ॥ ६३ ॥**

भवति। कोसौ ? **परः** । किं विशिष्टः ? **दुरुद्धर** उद्धर्तुमशक्यः । केन ? **क्षुत्पीतवीर्येण** क्षुधानाशितशक्तिना पुंसा । किंविशिष्टः सन् ? **आर्तो** दुःखातुरः । किंवत् ? **स्ववत्** आत्मा यथा । **प्राणाश्च** भवन्ति । किंविशिष्टाः ? **आहारशरणाः** । आहारः शरणमर्तिहरणं येषां त एवम् । केषाम् ? **योगकाष्ठाजुषामपि** । योगस्य यमनियमासनप्राणायामप्रत्याहारधारणध्यानसमाधिभिरष्टाङ्गस्य काष्ठामुत्कर्षं जुषन्ते सेवन्ते त एवम् । घटमानयोगानामपि, किं पुनरारब्धयोगानामयोगानां चेत्यपि शब्दार्थः ।

भोजनत्यजननिमित्तान्याह—

**आतङ्क उपसर्गे ब्रह्मचर्यस्य गुप्तये ।**
**कायकार्श्यतपःप्राणिदयाद्यर्थं च नाहरेत् ॥ ६४ ॥**

**नाहरेन्न** भुञ्जीत संयतः । क्व सति ? **आतङ्के** आकस्मिकोत्थितव्याधौ मारणान्तिकपीडायाम् । तथोपसर्गे देवादिकृतोपप्लवे । तथा नाहरेत् । कस्यै ? **गुप्तये** सुष्ठु निर्मलीकरणार्थम् । कस्य ? **ब्रह्मचर्यस्य**।

न केवलं, कायकार्श्यतपः प्राणिदयाद्यर्थं च। आदिशब्देन श्रामण्यानुवृत्तिसमाधिमरणादिपरिग्रहः।

स्वास्थ्यार्थं सर्वैषणादिभिः समीक्ष्य वृत्तिं कल्पयेदित्युपदिशति—

द्रव्यं क्षेत्रं बलं कालं भावं वीर्यं समीक्ष्य च।
स्वास्थ्याय वर्ततां सर्वविद्धशुद्धाशनैः सुधीः॥ ६५॥

सुधीः प्रेक्षापूर्वकारी साधुर्वर्ततां वृत्तिं कल्पयेत्। कैः? सर्वविद्धशुद्धाशनैः सर्वाशनेन विद्धाशनेन शुद्धाशनेन चेत्यर्थः। चशब्दादसर्वादित्रयेण च। किं कृत्वा? समीक्ष्य सम्यगालोच्य। किं किम्? द्रव्यमित्यादिषट्कम्। कस्मै? स्वास्थ्याय आरोग्यार्थं स्वात्मन्यवस्थानार्थं च। तत्र द्रव्यमाहारादि। क्षेत्रं भूम्येकदेशो जाङ्गलादि। तल्लक्षणं यथा—

देशोल्पवारिद्रुनगो जाङ्गलः स्वल्परोगदः।
अनूपो विपरीतोऽस्मात्समः साधारणः स्मृतः॥
जाङ्गलं वातभूयिष्ठमनूपं तु कफोल्बणम्।
साधारणं सममलं त्रिधा भूदेशमादिशेत्॥

बलमन्नादिजं स्वाङ्गसामर्थ्यम्। कालो हेमन्तादिऋतुषट्कम्। तच्चर्या यथा—

शरद्वसन्तयो-रूक्षं शीतं घर्मघनान्तयोः।
अन्नपानं समासेन विपरीतमतोन्यदा॥

तथा—

शीते वर्षासु चाद्यांस्त्रीन्वसन्तेऽन्त्यान् रसान्भजेत्।
स्वादुं निदाघे शरदि स्वादुतिक्तकषायकान्॥
रसाः स्वाद्वम्ललवणतिक्तोषणकषायकाः।
षड्द्रव्यमाश्रितास्ते च यथापूर्वं बलावहाः॥

भावः श्रद्धोत्साहादिः। वीर्यं संहननम् नैसर्गिकशक्तिरित्यर्थः। सर्वाशनमेषणासमितिशुद्धं भोजनम्। विद्धाशनं गुडतैलघृतदधिदुग्धशालनादिरहितं सौवीरशुक्ततक्रादिसमन्वितम्। शुद्धाशनं पाकादवतीर्णरूपं मनागप्यन्यथा न कृतम्। उक्तं च—

**सव्वेसणं च विद्देसणं च सुद्धेषणं च ते कमसो।**
**एसणसमिदिविसुद्धं णिव्वियडमऽवंजणं जाणे॥**

अत्र प्रत्येकं च शब्दोऽसर्वैषणमविद्वेषणमशुद्धैषणं चेत्यर्थः । कदाचिद्धि तादृगपि योग्यं कदाचिच्चायोग्यमिति टीकाव्याख्यानसंग्रहार्थं समीक्ष्य चेत्ययं चशब्दार्थः । इति हेतुप्रकरणम् ।

विधिप्रयुक्तभोजनात्स्वपरोपकारं दर्शयन्नाह—

**यत्प्रत्तं गृहिणात्मने कृतमपेतैकाक्षजीवं त्रसै,—**
**र्निर्जीवैरपि वर्जितं तदशनाद्यात्मार्थसिद्ध्यै यतिः ।**
**युञ्जन्नुद्धरति स्वमेव न परं किं तर्हि सम्यग्दृशं,**
**दातारं द्युशिवश्रिया च सचते भोगैश्च मिथ्यादृशम् ॥६६॥**

न परं न केवलं **यतिः** संयतः **स्वमेवा**त्मानमे**वोद्धरति** संसारसागरान्निस्सारयति । किं कुर्वन् ? **युञ्जन्** उपयुञ्जानः । किं तत् ? **तदशनादि** भक्तौषधादि । कस्यै ? **आत्मार्थसिद्ध्यै** आत्मार्थस्य सुखस्य दुःखनिवृत्तेश्च संप्राप्त्यर्थम् । **किं तर्हि** करोति ? **सचते** संबध्नाति । तद्योग्यं करोतीत्यर्थः । कोसौ ? यतिः । कम् ? **दातारं** दायकम् । किं विशिष्टम् । **सम्यग्दृशं** विशुद्धसम्यक्त्वम् । कया ? **द्युशिवश्रिया** स्वर्गापवर्गलक्ष्म्या । तथा **मिथ्यादृशं** दातारं **भोगै**रिष्टविषयै**श्च सचते** । तत्किम् ? **यत्प्रत्तं** प्रकर्षेण प्रतिग्रहादिनवपुण्यलक्षणेन दत्तम् । नवपुण्यानि यथा—

**[2]पडिगहमुच्चट्ठाणं पादोदयमच्चणं च पणमं च ।**
**मणवयणकायसुद्धी एसणसुद्धी य णवविहं पुण्णं ॥**

केन ? **गृहिणा** नित्यनैमित्तिकानुष्ठानस्थेन गृहस्थेन ब्राह्मणाद्यन्यतमेन, न शिल्प्यादिना । तदुक्तम्—

---

१—सर्वैषणं च विद्वैषणं च शुद्धैषणं च तानि क्रमशः ।
एषणसमितिविशुद्धं निर्विकृतमव्यंजनं जानीहि ॥

२—प्रतिग्रहमुच्चस्थानं पादोदकमर्चनं च प्रणामं च ।
मनोवचनकायशुद्धीरेषणशुद्धिं च नवविधं पुण्यम् ॥

शिल्पकारुकवाक्पण्यशंफलीपतितादिषु ।
देहस्थितिं न कुर्वीत लिङ्गिलिङ्गोपजीविषु ॥
दीक्षायोग्यास्त्रयो वर्णाश्चत्वारश्च विधोचिताः ।
मनोवाक्कायधर्माय मताः सर्वेऽपि जन्तवः ॥

किंविशिष्टं सत् ? कृतं साधितम् । कस्मै ? आत्मने आत्मार्थम् । पुनः किंविशिष्टम् ? अपेतैकाक्षजीवमेकेन्द्रियप्राणिरहितम् । पुनरपि किंविशिष्टम् ? वर्जितं त्यक्तम् । कैः ? त्रसैर्द्वीन्द्रियादिजीवैः । किंविशिष्टैः ? निर्जीवैरपि मृतैर्जीवद्भिश्च ।

द्रव्यभावशुद्ध्योरन्तरमाह—

द्रव्यतः शुद्धमप्यन्नं भावाशुद्ध्या प्रदुष्यते ।
भावो ह्यशुद्धो बन्धाय शुद्धो मोक्षाय निश्चितः ॥ ६७ ॥

प्रदुष्यते प्रकर्षेण दुष्टं क्रियते । किं तत् ? अन्नम् । कया ? भावाशुद्ध्या मदर्थं साधुकृतमिदमिति परिणामदुष्ट्या । किंविशिष्टमपि ? द्रव्यतः शुद्धमपि । प्रासुकशुद्धमपीत्यर्थः । उक्तं च—

प्रगता असवो यस्मादन्नं तद्द्रव्यतो भवेत् ।
प्रासुकं किं तु तत्स्वस्मै न शुद्धं विहितं मतम् ॥

हि यस्मान्निश्चितो निर्णीतः । कोसौ ? भावः परिणामः । किंविशिष्टः ? अशुद्धो रागद्वेषमोहरूपः । कस्मै ? बन्धाय कर्मबन्धार्थम् । शुद्धश्च भावो निश्चितः । कस्मै ? मोक्षाय ।

परार्थकृतस्यान्नस्य भोक्तुरदुष्टत्वं दृष्टान्तेन दृढयन्नाह—

योक्ताऽधःकर्मिको दुष्येन्नात्र भोक्ता विपर्ययात् ।
मत्स्या हि मत्स्यमदने जले माद्यन्ति न प्लवाः ॥ ६८ ॥

दुष्येद् दोषैरुपलिप्येत् । कोसौ ? योक्ता अन्नादेर्दाता । किंविशिष्टो यतः ? अधःकर्मिकोऽधःकर्मणि प्रवृत्तः । हेतुनिर्देशोऽयम् । न दुष्येत् । कोसौ ? भोक्ता संयतः । कस्मात् ? विपर्ययात् । अधःकर्मरहितत्वादि-

त्यर्थः । क ? अत्रास्मिन् प्रकरणे । हि यस्माद् माद्यन्ति विह्वलीभवन्ति । के ? मत्स्याः । क ? जले । किंविशिष्टे ? मत्स्यमदने मत्स्या माद्यन्त्यनेनेति मत्स्यमदनम् । योगविशेषवशान्मत्स्यानां मदहेतुत्वं प्राप्ते इत्यर्थः । न माद्यन्ति । के ? प्लवा मण्डूकाः । क ? मत्स्यमदने जले । उक्तं च—

मत्स्यार्थं प्रकृते योगे यथा माद्यन्ति मत्स्यकाः ।
न मण्डूकास्तथा शुद्धः परार्थं प्रकृते यतिः ॥
अधःकर्मप्रवृत्तः सन् प्रासुद्रव्येपि बन्धकः ।
अधःकर्मण्यसौ शुद्धो यतिः शुद्धं गवेषयेत् ॥

अपि च—

आधाकम्मपरिणदो पासुगदव्वेवि बंधगो भणिदो ।
सुद्धं गवेसमाणो आधाकम्मेवि सो सुद्धो ॥

एतेनाधःकर्मसुग्भावशुद्धमित्यपि व्याख्यातम् ।

शुद्धाहाराहितसामर्थ्योद्द्योतितसिद्ध्युत्साहांस्त्रिकालविषयान् मुमुक्षूनात्मनः सिद्धिं प्रार्थयमानः प्राह—

विदधति नवकोटीशुद्धभक्ताद्युपाजे,—
कृतनिजवपुषो ये सिद्धये सज्ञमोजः ।
विदधतु मम भूता भाविनस्ते भवन्तो,—
ष्यसमशमसमृद्धाः साधवः सिद्धिमद्धा ॥ ६९ ॥

विदधतु कुर्वंतु । के ? ते साधवः । काम् ? सिद्धिं स्वात्मोपलब्धिम् । कस्य ? मम । कथम् ? अद्धा झटिति । किंविशिष्टाः ? भूता अतीता, भाविनोऽनागता, भवन्तोपि वर्तमानाश्च । किंविशिष्टा एते त्रयोपि ? असमशमसमृद्धा असाधारणोपशमसम्पन्नाः । ये किम् ? ये विदधति कुर्वन्ति । किं तत् ? ओज उत्साहम् । किं विशिष्टम् ? सज्ञं साक्षात्क्षमम् कस्यै ? सिद्धये । किंविशिष्टाः सन्तः ? नवेत्यादि । नव कोट्यो मनोवाक्कायैः प्रत्येकं कृतकारितानुमतानि । तच्छुद्धं तद्रहितमित्यर्थः । आर्षे त्वेवम्—

दातुर्विशुद्धता देयं पात्रं च प्रपुनाति सा ।
शुद्धिर्देयस्य दातारं पुनीते पात्रमप्यदः ॥
पात्रस्य शुद्धिर्दातारं देयं चैव पुनात्यतः ।
नवकोटिविशुद्धं तद्दानं भूरिफलोदयम् ॥

नवकोटिभिः शुद्धेन भक्तादिना उपार्जेकृतानि बलाधानयुक्तानि कृतानि निजवपूंषि निजशरीराणि यैस्ते **नवकोटीशुद्धभक्ताद्युपार्जेकृतनिजवपुषः।** निजान्यात्मोपकारकारकाणि सिद्ध्यनुकूलानि। तनुसुहृद इति वा पाठः । तत्र, तनुः शरीरमेव सुहृन्मित्रमनुकूलकारणत्वात् तनुसुहृत् नवकोटीशुद्धभक्ताद्युपार्जेकृतस्तनुसुहृद्यैस्त एवमिति व्याख्येयम् । इति भद्रम् ।

( ग्रन्थसंख्या ६०९ )

यो धर्मामृतमुद्दधार सुमनस्तृप्त्यै जिनेन्द्रागम,—
क्षीरोदं शिवधीर्निमथ्य जयतात्स श्रीमदाशाधरः ।
भव्यात्मा हरदेव इत्यभिधया ख्यातश्च नन्द्यादिमं,
टीकाशुक्तिमचीकरत्सुखमिमां तस्योपयोगाय यः ॥

इत्याशाधरविरचितायां स्वोपज्ञधर्मामृतानगारधर्मटीकायां
भव्यकुमुदचन्द्रिकासंज्ञायां पिण्डशुद्धिविधानीयो
नाम पञ्चमोऽध्यायः ॥ ५ ॥



# अथ षष्ठोऽध्यायः ॥ ६ ॥



अथैवमुक्तलक्षणरत्नत्रयात्मनि मुक्तिवर्त्मनि महोद्योगमनुबद्धुमनसां तापत्रयोच्छेदार्थिनां साधूनां सम्यक्तपआराधनोपक्रमविधिमभिधत्ते—

**दृग्वज्रद्रोण्युपघ्नेऽद्भुतविभववृषद्वीपदीप्रे स्फुटानु,—**
**प्रेक्षातीर्थे सुगुप्तिव्रतसमितिवसुभ्राजि बोधाब्जराजि ।**
**मग्नोन्मग्नोर्मिरत्नत्रयमहिमभरव्यक्तिदृप्तेऽभियुक्ता,**
**मज्जन्त्विच्छानिरोधामृतवपुषि तपस्तोयधौ तापशान्त्यै ॥१॥**

**मज्जन्तु** ब्रुडन्तु स्नान्तु वा । के ते ? **अभियुक्ता** नित्योद्योगाः साधवः । क ? **तपस्तोयधौ** । रत्नत्रयाविर्भावार्थमिच्छानिरोधस्तपः । तपस्तोयधिः समुद्र इव, दुरवगाहत्वात् । किंविशिष्टे ? **इच्छानिरोधामृतवपुषि** । इच्छा मोहनीयकर्मजनितवाञ्छा । इच्छाया निरोधो निवारणं निग्रहश्च इच्छानिरोधः । इच्छानिरोधोऽमृतमिव तापशान्तिहेतुत्वात् अमृतं चात्र पीयूषं पीयूषतुल्यजलं वा । इच्छानिरोधामृतं वपुः शरीरं यस्य तत्तथोक्तम् । कस्यै ? **तापशान्त्यै** मानसिकवाचनिककायिकानां सहजशारीरागन्तूनां वा दुःखानामुच्छेदार्थम् । किंविशिष्टे ? **दृग्वज्रद्रोण्युपघ्ने** । वज्रद्रोणी वज्रमयं नावाकारं समुद्राधिकरणम् । दृक् सम्यक्त्वं वज्रद्रोणीव समुद्रस्येव तपसो बलवदधिष्ठानत्वात् । दृग्वज्रद्रोणी उपघ्न आश्रयो यस्य स एवम् । तथाऽ**द्भुतविभववृषद्वीपदीप्रे** । वृषा उत्तमक्षमादयो दशधर्मा द्वीपा अन्तरीपाणि । अद्भुतो विस्मयकरो विभवो विभूतिर्येषु तेऽद्भुतविभवाः । वृषा द्वीपा इव, देवानामिव मुमुक्षूणां नित्यसेव्यत्वात् । अद्भुतविभवाश्च ते वृषद्वीपाश्चाद्भुतविभववृषद्वीपाः । तैर्दीप्रे दीपनशीले । तथा **स्फुटानुप्रेक्षातीर्थे** । अनुप्रेक्षा अनित्यादिभावनाः । तीर्थानि प्रवेशघट्टाः । अनुप्रेक्षास्तीर्थानीव, तोयधेरिव तपसोऽन्तःप्रवेशहेतुत्वात् । स्फुटानि प्रकटानि अनुप्रेक्षातीर्थानि यस्य स एवम् । तथा **सुगुप्तिव्रतसमितिवसुभ्राजि** । गुप्त-

यश्च व्रतानि च समितयश्च गुप्तिव्रतसमितयो वसूनि वज्रमुक्ताफलादिरत्नानीव परमाल्हादहेतुत्वात् । शोभनानि गुप्तिव्रतसमितिवसूनि सुगुप्तिव्रतसमितिवसूनि । तैर्भ्राजते तद्भ्राट् तस्मिन् । तथा **बोधाब्जराजि** । बोधो ज्ञानमब्जश्चन्द्र इव, जगदाल्हादकत्वात्। बोधाब्जेन राजते बोधाब्जराट्, तस्मिन् । तथा **मग्नोन्मग्नोर्मिरत्नत्रयमहिमभरव्यक्तिदृप्ते** मग्ना धृतिभावनावष्टम्भात्तिरोभूताः स्वकार्यकरणाक्षमा उन्मग्नोर्मय उद्भूतपरीषहा यत्र तन्मग्नोन्मग्नोर्मि तपः । पक्षे मग्नाः केचिन्निमीलिताः केचिच्चोन्मग्ना उन्मीलिता ऊर्मयस्तरङ्गा यत्र स मग्नोन्मग्नोर्मिस्तोयधिः । तथा रत्नत्रयमहिमभरः । रत्नत्रयस्य महिमा यत्रासौ रत्नत्रयमहिमा रत्नत्रयपरिणत आत्मा । तस्य भरो घातिकर्मक्षपणयोगापहारोघातिकर्मक्षपणसमर्थः शक्त्यतिशयस्तपःपक्षे । तोयधिपक्षे तु "जातौ जातौ यदुत्कृष्टं तत्तद्रत्नमिहोच्यते" इति, रत्नानामैरावतकौस्तुभपारिजातानां त्रयं रत्नत्रयम् । तस्य महिमा माहात्म्यम् । तस्य भरोऽतिशयो रत्नत्रयमहिमभरः । रत्नत्रयमहिमभरस्य व्यक्तिराविर्भावः । तया दृप्तो गर्वितः संभावितात्मोत्कर्षः । मग्नोन्मग्नोर्मिश्चासौ रत्नत्रयमहिमभरव्यक्तिदृप्तश्च मग्नोन्मग्नोर्मिरत्नत्रयमहिमभरव्यक्तिदृप्तस्तस्मिन् ॥

दशलक्षणं धर्मं व्याचष्टे—

**क्रूरक्रोधाद्युद्भवाङ्गप्रसङ्गेप्यादत्तेऽद्धा यन्निरीहः क्षमादीन् ।**
**शुद्धज्ञानानन्दसिद्ध्यै दशात्मा ख्यातः सम्यग्विश्वविद्भिः स धर्मः**

**ख्यातः** कथितः । कोसौ ? **स धर्मः** । किंलक्षणः । **दशात्मा** दश आत्मानो रूपाणि यस्य । कथम् ? **सम्यग**ऽविपरीतम् । कैः ? **विश्वविद्भिः** सर्वज्ञैः । कस्यै ? **शुद्धज्ञानानन्दसिद्ध्यै** निरावरणबोधप्रमोदसंप्राप्त्यर्थम् । यत्किम् ? **यदादत्ते** स्वीकरोति । कोसौ ? साधुः । कान् ? **क्षमादीन्** । क्रोधोत्पत्तिनिमित्तानां सन्निधानेपि कालुष्योपरमः क्षमा । क्षमा आदिर्येषां मार्दवादीनामात्मपरिणामानां त एवम् । कथंभूतः सन् ? **निरीहो** लाभादिनिरपेक्षः । क्व सति ? क्रूरेत्यादि । क्रूरा दुःखदा दुर्निवारा वा क्रोधादयः । तेषामुद्भव उद्भूतिः । तस्याङ्गानि कारणानि । तेषां प्रसङ्ग उपनिपातस्तस्मिन् **क्रूरक्रोधाद्युद्भवाङ्गप्रसङ्गेपि** । कथम् ? **अद्धा** व्यक्तं झटिति वा ॥

कषायाणामपायभूयस्त्वातिदुर्जयत्वप्रकाशतपुरस्सरं जेयत्वमुपदर्श्य तद्विजये परं स्वास्थ्यमावेदयति—

**जीवन्तः कणशोपि तत्किमपि ये घ्नन्ति स्वनिघ्नं मह,—**
**स्ते सद्भिः कृतविश्वजीवविजया जेयाः कषायद्विषः ।**
**यन्निर्मूलनकर्मठेषु बलवत्कर्मारिसंघाश्चिता,—**
**मासंसारनिरूढबंधविधुरा नोत्क्राथयन्ते पुनः ॥ ३ ॥**

**जेया** जेतव्याः । के ते ? **कषायद्विषः** क्रोधादिशत्रवः । कैः ? **सद्भिः** साधुभिः । किंविशिष्टाः ? **कृतविश्वजीवविजयाः** । कृतो विश्वेषां सर्वेषां जीवानां विजयोऽभिभवो यैस्त एवम् । ते के ? **ये घ्नन्ति** नाशयन्ति । किं तत् ? **तत्** किमप्यनिर्वचनीयं **मह**स्तेजः । किंविशिष्टम् ? **स्वनिघ्नं** स्वाधीनम् । किं कुर्वन्तः सन्तः ? **जीवन्तः** प्राणन्तः । कियत् ? **कणशोपि** किं पुनर्बहुशः । तथा **नोत्क्राथयन्ते** न हिंसन्ति । के ? **बलवत्कर्मारिसंघाः** बलवतां समर्थानां कर्मारीणां ज्ञानावरणादिशत्रूणां संघाः संघाताः । केषाम् । **चितां** चेतनानाम् । कर्मणि षष्ठी । किंविशिष्टाः ? **आसंसारनिरूढबन्धविधुराः** संसारात्प्रभृति निर्वाहितपारतन्त्र्यदुःखाः । कथम् ? **पुन**र्भूयः । केषु ? **यन्निर्मूलनकर्मठेषु** येषां कषायद्विषां निर्मूलने निःशेषक्षपणे कर्मठाः कर्मशूरा यन्निर्मूलनकर्मठास्तेषु पुरुषेषु ॥ **पीठिका** ।

अथ कोपस्यानर्थैकफलत्वं प्रकाश्य तज्जयोपायमाह—

**कोपः कोप्यग्निदन्तर्बहिरपि बहुधा निर्दहन् देहभाजः,**
**कोपः कोप्यन्धकारः सह दृशमुभयीं धीमतामप्युपघ्नन् ।**
**कोपः कोपि ग्रहोऽस्तत्रपमुपजनयन् जन्मजन्माभ्यपायां,—**
**स्तत्कोपं लोप्तुमाप्तश्रुतिरसलहरी सेव्यतां क्षान्तिदेवी ॥ ४ ॥**

वर्तते । कोसौ ? **कोपः** । किंविशिष्टः ? **कोप्यपूर्वोग्निः** । किं कुर्वन् ? **निर्दहन्** निष्प्रतीकारं भस्मीकुर्वन् माहात्म्योच्छेदात् । कान् ? **देहभाजः** शरीरिणः । क्व ? **अन्तरध्यात्मम्** । न केवलं, **बहिरपि** चक्षुरादौ च ।

कथम् ? **बहुधा** बहुभिः प्रकारैः । अन्तस्तत्त्वस्यापि निर्दाहकत्वात् कोपस्यापूर्वाग्नित्वम् । तथा **कोपः** कोऽप्यपूर्वोऽन्धकारस्तमः । किं कुर्वन् ? **उपघ्नन्** । प्रतिबध्नन् । काम् ? **दृशं** दृष्टिम् । किंविशिष्टाम् ? **उभयीं** चाक्षुषीं मानसीं च । कथम् ? **सह** युगपत् । केषाम् ? **धीमतामपि** बुद्धिमतां, किं पुनरबुद्धीनाम्। अन्तर्दृष्टेरप्युपघातकत्वात्कोपस्यापूर्वतमस्त्वम्। तथा **कोपः** कोऽप्यपूर्वो **ग्रहो** भूतः । किं कुर्वन् ? **उपजनयन्** निर्वर्तयन् । कान् ? **अपायान्** विनिपातान् । कथम् ? **अभि** । किम् ? **जन्मजन्म** भवेभवे । वीप्सायामभेः कर्मप्रवचनीयत्वात्तद्योगे द्वितीया । कथं कृत्वा ? **अस्तत्रपं** तिरस्कृतलज्जम् । भवान्तरेष्वप्यपायहेतुत्वात्कोपस्यापूर्वग्रहत्वम् । यत एवं **तत्** तस्मात्**सेव्यता**माराध्यतां मुमुक्षुभिः । कासौ ? **क्षान्तिदेवी** क्षमादेवता । किंविशिष्टा ? **आप्तश्रुतिरसलहरी** । यो यत्रावञ्चकः स तत्राप्तः । आप्ताच्छ्रुतिः श्रवणं यस्य स आप्तश्रुतिः परमागमः । तस्य रसोऽर्थो ज्ञानं च, पक्षे जलम् । तस्य लहरी वेलोद्गतिः परमागमार्थज्ञानयोर्जलस्येवोल्लासहेतुत्वात् । किं कर्तुम् ? **लोप्तुं** छेत्तुम् । कम् ? **कोपम्** ॥

उत्तमक्षमाया माहात्म्यं स्तोतुमाह—

**यः क्षाम्यति क्षमोऽप्याशु प्रतिकर्तुं कृतागसः ।**
**कृत्तागसं तमिच्छन्ति क्षान्तिपीयूषसंजुषः ॥ ५ ॥**

**इच्छन्ति** वाञ्छन्ति । के ? **क्षान्तिपीयूषसंजुषः** क्षमामृतं सम्यक्सेवमानाः साधवः । कम् ? **तं** पुरुषम् । किंविशिष्टम् ? **कृत्तागसं** छिन्नपापम् । यः किम् ? **यः क्षाम्यति** क्षमां करोति । किंविशिष्टोपि ? **क्षमोपि** समर्थोऽपि । किं कर्तुम् ? **प्रतिकर्तुं** प्रतिविधातुम् । कान् ? **कृतागसः** कृतापराधान् । कथम् ? **आशु** सद्यः ॥

क्षमाभावनाविधिमाह—

**प्राग्वास्मिन्वा विराध्यन्निममहमबुधः किल्बिषं यद्बबन्ध,**
**क्रूरं तत्पारतन्त्र्याद् ध्रुवमयमधुना मां शपन्काममाघ्नन् ।**
**निघ्नन्वा केन वार्यः प्रशमपरिणतस्याथवावश्यभोग्यं,**
**भोक्तुं मेद्यैव योग्यं तदिति वितनुतां सर्वथार्यस्तितिक्षाम् ६॥**

वितनुतां स्फीतीकरोतु भावयत्वित्यर्थः । कोसौ ? आर्यः साधुः । काम् ? तितिक्षां क्षमाम् । कथम् ? सर्वथा मनसा वाचा कायेन च । कथम् ? इति । किमिति ? यद्बबन्ध बद्धवानहमबुधोऽज्ञः । किं तत् ? किल्विषं पापम् । किंविशिष्टम् ? क्रूरमवश्यभोग्यकटुफलत्वादत्युग्रम् । किं कुर्वन् ? विराध्यन्नपकुर्वन् । कम् ? इममपकर्तारम् क्व ? प्राक् वा पूर्वभवेऽस्मिन्वा इहभवे । बबन्धेत्यत्रपापबन्धनस्य प्रयोक्तुरक्षाविषयत्वात्परोक्षम् । तस्मादयमपकर्ता अधुना संप्रति केन वार्यो निषेद्धुं शक्यः । न केनापीत्यर्थः । किं कुर्वन् ? शपन् आक्रोशन् शपथिकाविषयं कुर्वन् । कम् ? मां कृतापराद्धम् । कथम् ? कामं यथेष्टम् । आघ्नन्वा चर्मयष्ट्यादिना ताडयन्माम् । निघ्नन्वा प्राणैर्वियोजयन्माम् । कस्मात् ? तत्पारतन्त्र्यात् तस्य किल्बिषस्य पारवश्यात् । तत्परतन्त्रः सन्नित्यर्थः । कथम् ? ध्रुवं निश्चितम् । अथवा भवति । किं तत् ? तत् स्वोपात्तं किल्बिषम् । किंविशिष्टम् ? योग्यमुचितम् । किं कर्तुम् ? भोक्तुम् । कदा ? अद्यैव इहैव भवे, न भवान्तरेषु । कस्य ? मे मम तद्बन्धकस्य । किंविशिष्टस्य ? प्रशमपरिणतस्य माध्यस्थ्यमास्थितस्य । किंविशिष्टं तत् ? अवश्यभोग्यं यतः 'अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्' इति वचनात् ॥

परैः प्रयुक्ते सत्याक्रोशादौ क्रोधनिमित्ते चित्तं प्रसादयतः स्वेष्टसिद्धिमाचष्टे-

**दोषो मेस्तीति युक्तं शपति शपति वा तं विनाज्ञः परोक्षे,**
**दिष्ट्या साक्षान्न साक्षादथ शपति न मां ताडयेत्ताडयेद्वा ।**
**नासून् मुष्णाति तान्वा हरति सुगतिदं नैष धर्मं ममेति,**
**स्वान्तं यः कोपहेतौ सति विशदयति स्याद्धि तस्येष्टसिद्धिः ७**

हि स्फुटं यस्माद्वा तस्येष्टसिद्धिरभिमतार्थसंप्राप्तिः स्यात् । क्षमाया हि व्रतशीलपरिरक्षणमिहामुत्र च दुःखानभिष्वङ्गः सर्वस्य जगतः सन्मानसत्कारलाभप्रसिद्ध्यादिश्च गुणः स्यात् । यः किम् ? यो विशदयति प्रसादयति । किं तत् ? स्वान्तं मनः । क्व सति ? कोपहेतौ क्रोधकारणे शपनताडनादौ । कथम् ? इति । किमिति ? एष इत्यन्तदीपकत्वात् सर्व-

वाक्यार्थैः सह संबध्यते । एष मत्पापपाकपरतन्त्रः पुमान् युक्तमुचितं शपत्याक्रोशति माम् । कुतो हेतोः ? इति यतोस्ति विद्यते । कोसौ ? दोषो नग्नत्वाशुचित्वामङ्गलत्वादिः । कस्य ? मे मम । एतच्चात्मनि दोषसद्भावानुचिन्तनम् । वा अथवा एष मां शपति । कथम् ? विना । कम् ? तं दोषम् । किंविशिष्टो यतः ? अज्ञो बालः । ईदृशा हि बालका भवन्ति । एतत्पुनर्दोषाभावचिन्तनम् । अथवा दिष्ट्या कल्याणं वर्द्धापनकं मे, यस्मादेष मां शपति । क्व ? परोक्षे इन्द्रियाणामविषये स्थितं, न साक्षात् प्रत्यक्षम् । अथ अथवा एष मां साक्षात्प्रत्यक्षं शपति, न ताडयेच्चर्मयष्ट्यादिना न हन्यान्माम् । वा अथवा एष मां ताडयेद्, नासून् मुष्णाति न प्राणान्हरति मम । तान् वा प्राणान् हरत्येष मम, न धर्मं हरत्येष मम । किंविशिष्टम् ? सुगतिदं स्वर्गापवर्गप्रदम् ॥

क्रोधस्य दुष्कीर्तिदारुणदुःखहेतुत्वं दृष्टान्तेषु स्पष्टयन् दूरतस्त्याज्यत्वमुपदिशति—

**नाद्याप्यन्त्यमनोः स्वपित्यवरजामर्षार्जितं दुर्यशः,**
**प्रादोदोन्मरुभूतिमत्र कमठे वान्तं सकृत् क्रुद्विषम् ।**
**दग्ध्वा दुर्गतिमाप यादवपुरीं द्वीपायनस्तु क्रुधा,**
**तत्क्रोधं ह्यरिरित्यजत्वपि विराराधत्यरौ पार्श्ववत् ॥ ८ ॥**

न स्वपिति न शेते । न स्वव्यापारादुपरमतीत्यर्थः । किं तत् ? दुर्यशो दुर्वर्णः । अकीर्तिरित्यर्थः । कस्य ? अन्त्यमनोर्भरतचक्रिणः । किंविशिष्टम् ? अवरजामर्षार्जितम् । अवरजेऽनुजे बाहुबलिकुमारेऽमर्षः क्रोधोऽवरजामर्षः । तेनार्जितमात्मसात्कृतम् । क्व ? अद्यापि इदानीमपि । इयत्यपि काले गते इत्यर्थः । तथा प्रादोदोत् प्रकर्षेण पुनः पुनरुपतपतिस्म । किं तत् ? क्रुद्विषं क्रोधगरलम् । कम् ? मरुभूतिं मरुभूतिनामानं पूर्वभवे पार्श्वदेवजीवम् । क्व ? अत्र लोके मर्त्यलोके । किं विशिष्टं सत् ? वान्तमुद्गीर्णम् । क्व ? कमठे कमठाख्ये स्वज्येष्ठभ्रातरि । कथम् ? सकृदेकवारम् । तथा द्वीपायनो नाम तपस्वी आप प्राप । काम् ? दुर्गतिं नरकगतिम् । किं कृत्वा ? दग्ध्वा भस्मीकृत्य । काम् ? यादव-

पुरीं तद्द्वारावतीम्। कया? क्रुधा क्रोधेन। तपोलब्धिविशेषसमुत्थवह्निनेत्यर्थः। तुर्विशेषे। यत् एवं तत् तस्माद्जतु क्षिपतु शमयतु मुमुक्षुः। कम्? क्रोधम्। कथं कृत्वा? ह्यरिरिति हि स्फुटमरिः शत्रुः पुंसां क्रोध इति। क्व सति? अरौ शत्रौ अपकर्तरि। किं कुर्वति? विराराधत्यपि अत्यर्थं पुनः पुनर्वा विराधत्यपकुर्वत्यपि सति। किंवत्? पार्श्ववत् पार्श्वदेवजीवेन तुल्यम्। स एव हि क्षमापराणां धुरीणः। एतत्कथास्तिस्रोपि संप्रदायाद्बेद्याः॥ इत्युत्तमक्षमाभावनाप्रकरणम्।

एवमुत्तमक्षमालक्षणं धर्मं निरूप्येदानीं तमुत्तममार्दवलक्षणं लक्षयितुं मानं धिक्कुर्वन्नाह—

**हृत्सिन्धुर्विधिशिल्पिकल्पितकुलाद्युत्कर्षहर्षोर्मिभिः,**
**किर्मीरः क्रियतां चिराय सुकृतां म्लानिस्तु पुंमानिनाम्।**
**मानस्यात्मभुवापि कुत्रचिदपि स्वोत्कर्षसंभावनं,**
**तद्ध्येयेपि विधेश्वरेयमिति धिग्मानं पुमुत्प्लाविनम्॥ ९॥**

**धिङ्मानमहंकारम्।** तिरस्कुर्मो वयमित्यर्थः। किंविशिष्टं यतः? **पुमुत्प्लाविनम्।** पुमांसं पुरुषमुत्प्लावयति माहात्म्याद् भ्रंशयतीत्येवंशीलम्। कथम्? इति। किमिति? **क्रियतां** विधीयताम्। कोसौ। **हृत्सिन्धुः।** हृद् हृदयं सिन्धुः समुद्र इव, तरङ्गाणामिव कुलाद्युत्कर्षहर्षविवर्तानामभीक्ष्णमावर्तनात्। केषाम्? **सुकृतां** विपरीतलक्षणयाऽकृतपुण्यानाम्। किंविशिष्टः? **किर्मीरश्चित्रः।** कैः? **विधीत्यादि।** विधिर्दैवम्। विधिरेव शिल्पी, कर्मनिर्माणकुशलसाधर्म्यात्। विधिशिल्पिना कल्पिता निर्मिता विधिशिल्पिकल्पिताः ते च ते कुलाद्युत्कर्षहर्षोर्मयश्च ते तथोक्ताः। कुलादीनां वंशरूपतपोविद्यैश्वर्यादीनामुत्कर्षा अतिरेकाः कुलाद्युत्कर्षाः। तत्कृता हर्षाः कुलाद्युत्कर्षद्वारेण प्रवृत्ताः प्रमोदाः ते ऊर्मयस्तरङ्गा इवानियतोत्थानत्वात्। कथम्? **चिराय** यावज्जीवम्। पुंमानिनां पुमांसमिवात्मानं मन्यमानानां पुनर्भवति। किं तत्? **स्वोत्कर्षसंभावनम**हमस्मिन्नुत्कृष्ट इत्यात्मनोऽधिकतोत्प्रेक्षणम्। क्व? **कुत्रचिदपि** कस्मिन्नपि विषये। केन? **आत्मभुवापि** स्वजातेनापि पुत्रेण, किं

पुनरन्येन। कीदृशं भवति ? म्लानिश्छायाहानिः । कस्य ? मानस्याभिमानस्य। यत एवं तत् तस्माच्चरेयं प्रवर्तेयमहम्। क्व ? ध्येये स्मरणीये वस्तुनि।अशक्यानुष्ठाने इत्यर्थः । कस्य ? विधेरपि दैवस्यापि॥

अहंकारादनर्थपरम्परां कथयति—

**गर्वप्रत्यग्रगकवलिते विश्वदीपेविवेक,—**
**त्वष्टर्युच्चैः स्फुरितदुरितं दोषमन्देहवृन्दैः।**
**सत्रोद्वृत्ते तमसि हतदृग् जन्तुराप्तेषु भूयो,**
**भूयोऽभ्याजत्स्वपि सजति ही स्वैरमुन्मार्ग एव ॥ १० ॥**

ही कष्टं, **सजति** आसक्तो भवति। कोसौ ? **जन्तुः** प्राणी। क्व ? **उन्मार्ग एव**। पुरुषार्थमुत्क्रान्तो मार्ग उन्मार्गस्तस्मिन् । पुरुषार्थविरोधिन्युपाये इत्यर्थः । कथम् ? **स्वैरं** स्वच्छन्दम् ध्वान्तच्छादितदृष्टिपक्षे तु स्वेनात्मना, न परोपदेशेन, ईरे गमने मुत् प्रीतिर्यस्यासौ स्वैरमुत् काकुव्याख्यायां मार्गे एव सजति, न सजति । किं तर्हि ? अमार्गेऽपि लगतीत्यर्थः । केषु सत्सु ? **आप्तेषु** गुर्वादिषु। किं कुर्वत्स्वपि ? **अभ्याजत्स्वपि** निवारयत्स्वपि । कथम् ? **भूयो भूयः** पुनः पुनः किंविशिष्टः सन् ? **हतदृग्** हतदृष्टिः । क्व सति ? **तमसि** मोहेऽन्धकारे च । किंविशिष्टे ? **उद्वृत्ते** उच्छृङ्खलप्रवृत्ते। कथम् ? **सत्रा** सह कैः ? **दोषमन्देहवृन्दैः**। दोषा रागद्वेषादयः। त एव मन्देहा राक्षसविशेषाः। तेषां वृन्दानि संघाताः। कथं कृत्वा ? **उच्चैः स्फुरितदुरितम्** उच्चैः स्फुरितानि नितान्तविजृम्भितानि दुरितानि पापकर्माणि चौर्यपारदारिकत्वादीनि यत्र तदेवम्। क्व सति ? **विवेकत्वष्टरि** कृत्याकृत्यविभागज्ञानादित्ये। किंविशिष्टे ? **विश्वदीपे** जगत्प्रदीपे। किंविशिष्टे सति ? **गर्वप्रत्यग्रगकवलिते**। प्रत्यग्रगोऽस्तशैलः। गर्व एव प्रत्यग्रगः। तेन कवलिते ग्रस्ते। तिरस्कृते इत्यर्थः॥

अहंकारजनितदुष्कृतविपक्तिममत्युग्रमपमानदुःखमाख्याति—

**जगद्वैचित्र्येऽस्मिन्विलसति विधौ काममनिशं,**
**स्वतन्त्रो न क्वास्मीत्यभिनिविशतेऽहंकृतितमः।**

**कुधीर्येनादत्ते किमपि तदघं यद्रसवशा,—**
**च्चिरं भुङ्क्ते नीचैर्गतिजमपमानज्वरभरम् ॥ ११ ॥**

कुधीः कुमतिः पुमानभिनिविशतेऽभिमुखं नियतं विशति । निर्बन्धं करोतीत्यर्थः । किं तत् ? **अहंकृतितमः** । अहंकृतिरहंकारस्तम इव, स्वपरस्वरूपप्रच्छादकत्वात् । कथम् ? **इति** । किमिति ? क्व कस्मिन्निष्टेऽनिष्टे वार्थे । **नास्मि** भवाम्यहम् । किंविशिष्टः ? **स्वतन्त्रः** आत्मप्रधानः । कर्तेति यावत् । क्व सति **विधौ** दैवे । किं कुर्वति ? **विलसति** विजृम्भमाणे । क्व ? **अस्मिन्** प्रतीयमाने **जगद्वैचित्र्ये** । जगतः स्थावरजङ्गमात्मनो लोकस्य वैचित्र्यं भेदप्रपञ्चः तस्मिन् । कथं विलसति ? **कामं** यथेष्टम् । कथम् ? **अनिशं** शश्वत् । येन किम् ? **येनाहंकृतितमोभिनिविशेन आदत्ते** स्वीकरोति । कोसौ ? कुधीः । किं तत् । **तत्** किमप्यनिर्वचनीयम**घं** पापम् । **यद्रस-वशा**द्यद्विपाकपारतन्त्र्यात् कुधी**र्भुङ्क्ते**ऽनुभवति । कम् ? **अपमानज्वरभ-रम्** । अपमानो महत्त्वहानिर्ज्वर इव, तीव्रसंतापहेतुत्वात् । तस्य भर उद्रेकः । किंविशिष्टम् ? **नीचैर्गतिजं** नीचैर्गतिषु निगोदादिपर्यायेषु जातम् । उक्तं च—

> जातिरूपकुलैश्वर्यशीलज्ञानतपोबलैः ।
> कुर्वाणोहंकृतिं नीचं गोत्रं बध्नाति मानवः ॥

तत्तादृगपायप्रायमानोपमर्दनचणं मार्दवमाशास्ते—

**भद्रं मार्दववज्राय येन निर्लूनपक्षतिः ।**
**पुनः करोति मानाद्रिर्नोत्थानाय मनोरथम् ॥ १२ ॥**

**भद्रं** कुशलं भूयात् । कस्मै ? **मार्दववज्राय** । मार्दवं जात्याद्यतिशयवतोपि सततस्तत्कृतमदावेशाभावात् परप्रयुक्तपरिभवनिमित्ताभिमानाभावान्माननिर्हरणम् । येन किम् ? **येननिर्लूनपक्षतिर्नि**श्शेषच्छिन्नपक्षमूलो **मानाद्रि**रभिमानपर्वतो **न करोति** । कम् ? **मनोरथम**भिलाषम् । कस्मै ? **उत्थानाय** उद्भवितुमुत्पतितुं चेत्यर्थः । कथम् ? **पुन**र्भूयः । पक्षतिः पक्षमूलम् । तच्च मानपक्षे शक्तिविशेषः ॥

गर्वः सर्वथाप्यकर्तव्य इत्युपदेष्टुं संसारदुरवस्थां प्रथयति—

**क्रियेत गर्वः संसारे न श्रूयेत नृपोपि चेत् ।**
**दैवाज्जातः कृमिर्गूथे भृत्यो नेक्ष्येत वा भवन् ॥ १३ ॥**

**क्रियेत** विधीयेत सद्भिः । कोसौ ? **गर्वः** । क ? **संसारे** आजवंजवीभावे चेद्यदि **न श्रूयेत** नाप्तसंप्रदायादाकर्ण्येत । कोसौ ? **नृपोपि** राजापि, किं पुनरन्यः । किंविशिष्टः । **जातः** संभूतः । कीदृशः ? **कृमिः** क्षुद्रजन्तुः । क ? **गूथे** वर्चस्के । कस्मात् ? **दैवात्** स्वोपार्जिताशुभकर्मविपाकात् । **वा** अथवा चेन्नेक्ष्येत संप्रत्यपि न दृश्यते । कोसौ ? नृपोपि । किं कुर्वन् ? **भवन्** जायमानः । किंविशिष्टः ? **भृत्यो** मूल्येन कर्मकरः ॥

मानविजयोपायमधस्तनभूमिकायां सक्तैः कर्मोच्छेदार्थमभिमानोत्तेजनं चोपदिशति—

**प्राच्यानैदंयुगीनानथ परमगुणग्रामसामृद्ध्यसिद्धा,—**
**नद्धा ध्यायन्निरुन्ध्यान्म्रदिमपरिणतः शिर्मदं दुर्मदारिम् ।**
**छेत्तुं दौर्गत्यदुःखं प्रवरगुरुगिरा संगरे सद्व्रतास्त्रैः,**
**क्षेप्तुं कर्मारिचक्रं सुहृदमिव शितैर्दीपयेद्वाभिमानम् ॥१४॥**

**निरुध्यान्निवारयेत्** स्वहितैषी । कम् ? **दुर्मदारिम्** । दुर्मदोऽयुक्तिप्रणीतोहंकारोऽरिरिव बह्वपायत्वात् । किंविशिष्टम् ? **शिर्मदं** मर्मव्यथकम् । कथंभूतो भूत्वा ? **म्रदिमपरिणतो** मार्दवमापन्नः । किं कुर्वन् ? **ध्यायन्** । कान् ? **प्राच्यान्** पूर्वपुरुषान् । **अथ** अथवा **ऐदंयुगीनान्** अस्मिन्युगे साधून् । कथंभूतान् ध्यायन् ? **परमगुणग्रामसामृद्ध्यसिद्धान्** । समृद्धस्य भावः सामृद्ध्यं संपत्तिः । परमाश्च ते गुणाश्च ज्ञानविनयदयासत्यशौर्यविक्रमादयः परमगुणाः । तेषां ग्रामः संघातः । तस्य सामृद्ध्यम् । तेन सिद्धान् प्रसिद्धान् । कथं ध्यायन् ? **अद्धा** तत्त्वतः । **वा** अथवा **दीपयेदु**त्तेजयेन्मुमुक्षुः । कम् ? **अभिमानं** कर्मक्षपणाभिनिवेशम् । क ? **संगरे** प्रतिज्ञायां संग्रामे च । कया ? **प्रवरगुरुगिरा** । प्रवरगुरुर्व्यवहारेण धर्माचार्यो, निश्चयेन च स्वहितसाधनोद्युक्तः स्वात्मा । पक्षे सचिवादिः । प्रवरगुरोर्गीर्वाक्

प्रवरगुरुगीस्तया । किं कर्तुम् ? **छेत्तुमपनेतुम्** । किं तत् ? **दौर्गत्यदुःखम्** । दौर्गत्यं नरकादिगतिभावो दारिद्र्यं च दौर्गत्यस्य दुःखमाबाधा दौर्गत्यदुःखम् । पुनः किं कर्तुम् ? **क्षेप्तुं** प्रेरयितुम् । किं तत् ? **कर्मारिचक्रं** ज्ञानावरणादिकर्मशत्रुसंघातम् । कैः ? **सद्व्रतास्त्रैः** निरतीचारव्रतशस्त्रैः । किंविशिष्टैः ? **शितैः** तीक्ष्णैः कर्मारिखण्डनक्षमैः । किमिव ? **सुहृदमिव** । अयमर्थो, यथा कश्चिद्विजिगीषुर्दारिद्र्यदुःखं निरसितुं मन्त्र्यादिवाचा संग्रामविषये निशातशस्त्रैः प्रहर्तुमुद्युक्तं प्रतिपक्षसैन्यं क्षेप्तुकामो मित्रमुत्तेजयति तथा साधुर्दुर्गतिदुःखं निराकर्तुकामः सद्गुरुवाचा प्रतिज्ञायां कर्मक्षपणक्षमनिर्मलाहिंसादिव्रतैः कर्मारिचक्रं क्षेप्तुकामोऽभिमानमुत्तेजयतु अधस्तनभूमिकायामभिमानस्य मुमुक्षोर्विधेयतयोपदेशात् "त्वया शुचिकृतं येनाभिमानामृतम्" इत्यभिधानात् ॥

मार्दवभावनाभिभूतस्यापि गर्वस्य सर्वथोच्छेदः शुक्लध्यानप्रवृत्त्यैव स्यादित्युपदिशति—

**मार्दवाशनिनिर्लूनपक्षो मायाक्षितिं गतः**
**योगाम्बुनैव भेद्योन्तर्वहता गर्वपर्वतः ॥ १५ ॥**

**भेद्यो** भेत्तुं शक्यः । कोसौ ? **गर्वपर्वतो**ऽहंकारगिरिः । केन ? **योगाम्बुनैव** शुक्लध्यानजलेनैव । किं कुर्वता ? **वहता** संतत्या वर्तमानेन । क्व ? **अन्तः** अध्यात्मम् । किंविशिष्टः **गतः** । काम् ? **मायाक्षितिं** तृतीयसंज्वलनकषायभूतलम् । किंविशिष्टः सन् ? **मार्दवाशनिनिर्लूनपक्षः** । अयमर्थो, यथा शक्रमुक्तवज्रनिःशेषच्छिन्नपतत्रो भूतलं गतः शैलो मध्ये प्रवहता जलेनैव विदारयितुं शक्येत तथा मार्दवभावनानिरस्तशक्तिविशेषात्मकपक्षः संज्वलनमायां पतितो मानकषायः पृथक्त्ववितर्कवीचाराख्यशुक्लध्यानेनैवात्मनि संतत्या वर्तमानेन निःशेषयितुं पार्येत । क्षपकश्रेण्यां हि मायासंज्वलने प्रक्षिप्य शुक्लध्यानविशेषेण मानः किलोन्मूल्यते ॥

मानान्महतामपि महतीं स्वार्थक्षतिमालक्षयंस्तदुच्छेदाय मार्दवभावनां मुमुक्षोरवश्यकर्तव्यतयोपदिशति—

**मानोऽवर्णमिवापमानमभितस्तेनेऽर्ककीर्तेस्तथा,**
**मायाभूतिमचीकरत्सगरजान् षष्टिं सहस्राणि तान् ।**

**तत्सौनन्दमिवादिराट् परमरं मानग्रहान्मोचयेत्,**
**तन्वन्मार्दवमाप्नुयात् स्वयमिमं चोच्छिद्य तद्वच्छिवम् १६॥**

**तेने** वितस्तार । कोसौ ? **मानो**ऽहंकारः । कम् ? **अपमानं** महत्त्वहानिम् । कमिव ? **अवर्णमिव** अयशः शोभाभ्रंशं च यथा । अपमानमयशः शोभाभ्रंशं च करोति स्मेत्यर्थः । कस्य ? **अर्ककीर्तेर्भ**रतेश्वरनन्दनस्य । कथम् ? **अभितः** समन्तात् । कथम् ? **तथा** तेनार्षप्रसिद्धेन प्रकारेण । एतदुत्तरत्रापि संबध्यते । तथा **अचीकरद्** मणिकेतुनाम्ना देवेन कारयति स्म । कोसौ ? **मानः** । कान् ? **सगरजान्** सगरचक्रवर्तिपुत्रान् । कति ? **सहस्राणि** । कियन्ति ? **षष्टिं** षष्टिसंख्यानि । पद्मे सहस्रपत्रव्यपदेशवत्प्रायिकमेतत् । तेन भीमभगीरथाभ्यां विनापि भस्मीकरणे षष्टिसहस्रसंख्यावचनं न विरुध्यते । किंविशिष्टान् तान् । **आर्षप्रसिद्धान्** । एतेन सगरात्साक्षादसाक्षाच्च जाताः सगरजा इति पुत्रवत् पौत्राणामप्यार्षाविरोधेन ग्रहणं लक्षयति । काम‌चीकरत् ? **मायाभूतिम**ऽवास्तवभस्म । कथम् ? **तथा** तेनार्षप्रसिद्धेन प्रकारेण । यत एवं **तत्** तस्मा**न्मोचये**द्वियोजयेच्छोटयेत् । कोसौ ? साधुः । कम् ? **परं** कुतश्चिन्निमित्तादारूढाभिमानं यं कंचित् । कस्मात् ? **मानग्रहा**दहंकारभूतावेशात् । कथम् ? **अरं** क्षिप्रम् । क इव ? **आदिराडिव** भरतराजो यथा । कम् ? **सौनन्दं** सुनन्दाया अपत्यं बाहुबलिनम् । तथा**ऽऽप्नुया**दश्नुवीत साधुः । किं तत् ? **शिवम**भ्युदयमोक्षौ । किंवत् ? **तद्वद्** भरतराजवत् । किं कृत्वा ? **उच्छिद्य** उन्मूल्य । कम् ? **इमं** मानग्रहम् । किं कुर्वन् ? **तन्वन्** भावयन् । किं तत् ? **मार्दवम्** । केन ? **स्वय**मात्मना । चः समुच्चये । तथा चोक्तम्—

**"मार्दवोपेतं गुरवोनुगृह्णन्ति । साधवोपि साधु मन्यन्ते । ततश्च सम्यग्ज्ञानादीनां पात्रीभवति । अतश्च स्वर्गापवर्गफलायाप्तिः"॥**

इत्युत्तममार्दवभावनाप्रकरणम् ।

अथार्जवस्वभावं धर्मं व्याकर्तुकामस्तदेकनिराकार्यां निकृतिमनुभावतोऽनुवदन्नाह—

**क्रोधादीनसतोपि भासयति या सद्वत् सतोप्यर्थतो,-**
**ऽसद्वद्दोषधियं गुणेष्वपि गुणश्रद्धां च दोषेष्वपि ।**
**या सूते सुधियोपि विभ्रमयते संवृण्वती यात्यणू,-**
**न्यप्यभ्यूहपदानि सा विजयते माया जगद्व्यापिनी ॥१७॥**

**विजयते** सर्वोत्कर्षेण वर्तते । कोसौ ? **सा माया** वञ्चना । किंविशिष्टा यतः ? **जगद्व्यापिनी** विश्वव्यापनशीला । सा का ? **या भासयति** प्रतीतिमानयति । कान् ? **क्रोधादीन्** क्रोधमानलोभान् । किंवत् ? **सद्वद्** उद्भूतानिव । किंविशिष्टानपि ? **असतोपि** अनुद्भूतानपि । कस्मात् ? **अर्थतः** प्रयोजनमाश्रित्य । तथा या भासयति क्रोधादीन् । किंवत् ? **असद्वत्** अनुद्भूतानिव । कस्मात् ? **अर्थतः** । किंविशिष्टानपि ? **सतोप्युद्भूतानपि** । उक्तं च—

भेयं मायामहागर्तान्मिथ्याघनतमोमयात् ।
यस्मिँल्लीना न लक्ष्यन्ते क्रोधादिविषमाहयः ॥

तथा **या सूते** जनयति । काम् ? **दोषधियं** दोषा इति बुद्धिम् । केषु ? **गुणेष्वपि** । तथा या सूते । काम् ? **गुणश्रद्धां** गुणा इति प्रतीतिम् । केषु ? **दोषेष्वपि** । तथा या **विभ्रमयते** विपर्ययज्ञानं नयति । कान् ? **सुधियोपि** विद्याविनीतमतीनपि । किं कुर्वती ? **संवृण्वती** छादयन्ती । कानि ? **अभ्यूहपदानि** वितर्कस्थानानि । किंविशिष्टान्यपि ? **अत्यणून्यपि** अतीव सूक्ष्माण्यपि । उक्तं च—

बहिः सर्वाकारप्रवणरमणीयं व्यवहरन्,
पराभ्यूहस्थानान्यपि तनुतराणि स्थगयति ।
जनं विद्वानेवं सकलमतिसंधाय कपटै,-
स्तटस्थः स्वानर्थान् घटयति च मौनं स भजते ॥

इहामुत्र च मायायाः कृच्छ्रैकनिबन्धनत्वमवबोधयति—

**यः सोढुं कपटीत्यकीर्तिभुजगीमीष्टे श्रवोन्तश्चरीं,**
**सोपि प्रेत्य दुरत्ययात्ययमयीं मायोरगीमुज्झतु ।**

**नो चेत्स्त्रीत्वनपुंसकत्वविपरीणामप्रबन्धार्पितं,**
**ताच्छील्यं बहु धातृकेलिकृतपुंभावोप्यभिव्यङ्क्ष्यति॥१८॥**

**उज्झतु** परित्यजतु । कोसौ ? **सोपि** । काम् ? **मायोरगीं** वञ्चनाभुजङ्गीत् । किंविशिष्टाम् ? **प्रेत्य** परलोके **दुरत्ययात्ययमयीं** दुरतिक्रमापायबहुलाम् । यः किम् ? **य ईष्टे** प्रभवति शक्नोति । किं कर्तुम् ? **सोढुं** सहितुम् । काम् ? **कपटीत्यकीर्तिभुजगीम्** अयं दांभिक इत्ययशः सर्पिणीम् । किंविशिष्टाम् ? **श्रवोन्तश्चरीं** कर्णान्तश्चारिणीम् । **नो-चेन्मायोरगीं** यदि नोज्झिष्यति तदाऽ**भिव्यङ्क्ष्यति** अभिव्यक्तं करिष्यत्यसौ मायावी । किं तत् ? **ताच्छील्यं** स्त्रीनपुंसकस्वभावतां भावस्त्रीत्वं भावनपुंसकत्वं चेत्यर्थः । कथं कृत्वा ? **बहु** प्रभूतम् । तल्लिङ्गानि यथा—

श्रोणिमार्दवत्रस्तत्वमुग्धत्वक्लीबतास्तनाः ।
पुंस्कामेन समं सप्त लिङ्गानि स्त्रैणसूचने ॥
खरत्वमेहनस्ताब्ध्यशौण्डीर्यश्मश्रुधृष्टताः ।
स्त्रीकामेन समं सप्त लिङ्गानि पौंस्नवेदने ॥
यानि स्त्रीपुंसलिङ्गानि पूर्वाणीति चतुर्दश ।
सर्वाणि तानि मिश्राणि षण्ढभावनिवेदने ॥

अत्र मानसा भावाभावस्य शारीराश्च द्रव्यस्य सूचका इति विभागः । किंविशिष्टं ताच्छील्यम् ? **स्त्रीत्वेत्यादि** । स्त्रीत्वनपुंसकत्वाभ्यां स्त्रीणषंढत्वाभ्यां विपरीणामो विविधं परिणमनम् । तस्य प्रबन्धः संतानः । तेनार्पितं संयोजितम् । किंविशिष्टोपि सन् ? **धातृकेलिकृतपुंभावोपि** । धात्रा पुंस्त्वनिर्मायककर्मणा केलिना क्रीडयेव कृतो निर्मितः पुंभावः पुल्लिङ्गपर्यायो यस्य स एवम् ॥

मायाविनो लोकेऽत्यन्तमविश्वास्यतां प्रकाशयति—

**यो वाचा स्वमपि स्वान्तं वाचं वञ्चयतेऽनिशम् ।**
**चेष्टया च स विश्वास्यो मायावी कस्य धीमतः ॥ १९ ॥**

**स मायावी** वञ्चकः **कस्य धीमतः** प्रेक्षापूर्वकारिणो **विश्वास्यो** विश्वसनीयः स्यात् । केनापि धीमता तस्य विश्रम्भो न क्रियते इत्यर्थः

यः किम्? **यो वञ्चयते** प्रतारयति। किं तत्? **स्वान्तं** मनः। किंविशिष्टम्? **स्वमपि** आत्मीयमपि। कया? **वाचा** भाषया। कथम्? **अनिशं** नित्यम्। तथा योऽनिशं स्वामपि **वाचं** वञ्चयते। कया? **चेष्टया** कायव्यापारेण। यन्मनस्यस्ति तन्न वदति यच्च वक्ति तन्न कायेन व्यवहरतीतिभावः॥

आर्जवशीलानां संप्रति दुर्लभत्वमाह—

**चित्तमन्वेति वाग् येषां वाचमन्वेति च क्रिया।**
**स्वपरानुग्रहपराः सन्तस्ते विरलाः कलौ॥ २०॥**

वर्तन्ते। के? **ते संतः** साधवः। किंविशिष्टाः? **विरला** द्वित्राः। क्व? **कलौ** पञ्चमकाले। किंविशिष्टास्ते? **स्वपरानुग्रहपराः** स्वपरोपकारप्रधानाः। येषां किम्? **येषां वागन्वेति** अनुयाति अनुवर्तते। किं तत्? **चित्तम्**। तथान्वेति। कासौ? **क्रिया** चेष्टा। केषाम्? येषाम्। काम्? **वाचं** भाषाम्॥

आर्जवशीलानां माहात्म्यमाह—

**आर्जवस्फूर्जदूर्जस्काः सन्तः केपि जयन्ति ते।**
**ये निगीर्णत्रिलोकायाः कृन्तन्ति निकृतेर्मनः॥ २१॥**

**जयन्ति** सर्वोत्कर्षेण वर्तन्ते। के? **ते केपि** लोकोत्तराः **सन्तः** साधवः। किंविशिष्टाः? **आर्जवस्फूर्जदूर्जस्काः**। आर्जवेन ऋजुभावेन स्फूर्जत् स्फुरदूर्जे उत्साहो येषां ते एवम्। ये किम्? **ये कृन्तन्ति** छिन्दन्ति। किं तत्? **मनो** हृदयम्। कस्याः? **निकृतेर्मा**यायाः। मायया जेतुमशक्या इत्यर्थः। किंविशिष्टायाः? **निगीर्णत्रिलोकाया** जठरान्तर्नीतजगत्त्रयायाः जगत्त्रयजेत्र्या इत्यर्थः॥

आर्जवनिर्जितदुर्जयमायाकषायाणां मुक्तिवर्त्मनि निष्प्रतिबन्धा प्रवृत्तिः स्यादित्युपदिशति—

**दुस्तरार्जवनावा यैस्तीर्णा मायातरङ्गिणी।**
**इष्टस्थानगतौ तेषां कः शिखण्डी भविष्यति॥ २२॥**

**कः शिखण्डी** अन्तरायो भविष्यति, न कोपि । केषाम् ? **तेषाम्** । क ? **इष्टस्थानगतौ** अभिमतपदगमने । यैः किम् ? यैस्तीर्णा लङ्घिता । कासौ ? **मायातरङ्गिणी** वञ्चनानदी । कया ? **आर्जवनावा** ऋजुत्वतरण्या । किंविशिष्टा सती ? **दुस्तरा** लङ्घयितुमशक्या ॥

मायाया दुर्गतिक्लेशावेशदुस्सहगर्हानिबन्धनत्वमुदाहरणद्वारेण प्रणिगदति—

**खलूक्त्वा हृत्कर्णक्रकचमखलानां यदतुलं,**
**किल क्लेशं विष्णोः कुसृतिरसृजत् संसृतिसृतिः ।**
**हतोऽश्वत्थामेति स्ववचनविसंवादितगुरु,—**
**स्तपःसूनुर्म्लानः सपदि शृणु सद्भ्योन्तरधित ॥ २३ ॥**

**खलूक्त्वा** नोच्यते तत्साधुभिः ? किं विशिष्टं यतः ? **हृत्कर्णक्रकचं** हृदयश्रवणस्य करपत्रमिव, विदारकत्वात् । केषाम् ? **अखलानां** सज्जनानाम् । यत्किम् ? **यदसृजज्जनयति स्म** । कासौ ? **कुसृतिर्माया** । कम् ? **क्लेशमुपतापम्** । किंविशिष्टम् ? **अतुलमनन्यसमम्** । कस्य ? **विष्णोर्वासुदेवस्य** । कथम् ? **किल** आगमे लोके वा श्रूयते । किंविशिष्टा कुसृतिः ? **संसृतिसृतिः** संसारमार्गः संसारस्योपायभूता । अनन्तानुबन्धिनीत्यर्थः । भोः साधो, **शृणु** आकर्णय त्वं तावदेतत् । **अन्तरधित** । कोसौ ? **तपःसूनुः** युधिष्ठिरः । केभ्यः ? **सद्भ्यः** साधुभिरदर्शनमात्मन इच्छति स्म । सन्तो मां मा पश्यन्त्वित्यन्तर्हितोऽभूदित्यर्थः । सद्भ्य इत्यत्र "येनादर्शनमिच्छति" इत्यनेन पञ्चमी । किंविशिष्टः सन् ? **म्लान**श्छायाहानिं गतः । कथम् ? **सपदि** सद्यः । किंविशिष्टो यतः ? **हतोऽश्वत्थामेति स्ववचनविसंवादितगुरुः** अश्वत्थामा द्रोणाचार्यपुत्रो हस्तिविशेषश्च । हतो मारितोऽश्वत्थामा इत्यनेन स्ववचनेन निजवाक्येन विसंवादितः कुञ्जरो न नर इत्युक्त्वा विप्रलम्भितो गुरुर्द्रोणाचार्यो येन स तथोक्तः । कथाः सर्वा अपि यथास्वं संप्रदायादधिगम्याः ॥ इत्युक्तमार्जवभावनाप्रकरणम् ।

अथ शौचरूपं धर्मं व्याचिख्यासुस्तदेकप्रत्याख्येयस्य सन्निहितविषय-

गर्द्धोत्पादनलक्षणस्य लोभस्य सर्वपापमूलत्वसर्वगुणभ्रंशकत्वप्रकाशनपूर्वकं कृशीकरणमवश्यकरणीयतया मुमुक्षूणामुपदिशति—

लोभमूलानि पापानीत्येतद्यैर्न प्रमाण्यते ।
स्वयं लोभाद्गुणभ्रंशं पश्यन्तः श्यन्तु तेपि तम् ॥ २४ ॥

श्यन्तु कृशीकुर्वन्तु । के ? तेपि अप्रमाणीकृतलोकप्रसिद्धवाक्याः । किं पुनरन्ये । कम् ? तं लोभम् । किं कुर्वन्तः ? पश्यन्तोऽनुभवन्तः । कम् ? गुणभ्रंशं गुणानां दयामैत्रीसाधुकारादीनां तेभ्योऽपगमम् । कस्मात् ? लोभात् । केन ? स्वयमात्मना । तथा व्यासोप्याह—

भूमिष्ठोपि रथस्थांस्तान् पार्थः सर्वधनुर्धरान् ।
एकोपि पातयामास लोभः सर्वगुणानि वा ॥

यैः किम् ? यैर्न प्रमाण्यते न प्रमाणं क्रियते । विसंवाद्यते इत्यर्थः किं तत् ? लोभमूलानि पापानीत्येतल्लोकप्रसिद्धं वाक्यम् । लोभो मूलं कारणं येषां तानि लोभमूलानि ॥

गुणलक्षशतेन समकक्षमप्यौचित्यमत्यन्तलुब्धस्य नित्यमुद्वेजनीयं स्यादित्युपदिशति—

गुणकोट्या तुलाकोटिं यदेकमपि टीकते ।
तदप्यौचित्यमेकान्तलुब्धस्य गरलायते ॥ २५ ॥

गरलायते विषमिवात्मानमाचरति । किं तत् ? तदप्यौचित्यं दानप्रियवचनाभ्यामन्यस्य संतोषोत्पादनम् । कस्य ? एकान्तलुब्धस्य नितान्तलोभाविष्टस्य । यत्किम् ? यट्टीकते चटति । काम् ? तुलाकोटिमूर्ध्वमानान्तमुपभोत्कर्षं च । कथम् ? सह । कया ? गुणकोट्या गुणानां लक्षशतेन । किंविशिष्टमपि ? एकमपि । उक्तं च—

औचित्यमेकमेकत्र गुणानां राशिरेकतः ।
विषायते गुणग्राम औचित्यपरिवर्जितः ॥

स्वपरजीवितारोग्येन्द्रियोपभोगविषयविभेदादष्टविधेनापि लोभेनाकुलितः सातत्येन सर्वमकृत्यं करोतीत्युपदिशति—

**उपभोगेन्द्रियारोग्यप्राणान् स्वस्य परस्य च ।**
**गृध्यन् मुग्धः प्रबन्धेन किमकृत्यं करोति न ॥ २६ ॥**

**किमकृत्यं** गुरुपितृवधादिकं **मुग्धो** मूढो जनः **प्रबन्धेन** सातत्येन **न करोति,** अपि तु सर्वं करोति । किं कुर्वन्? **गृध्यन्** अभिकाङ्क्षन् । कान् ? **उपभोगेन्द्रियारोग्यप्राणान्** । कस्य ? **स्वस्या**त्मनः न केवलं, **परस्य च** कलत्रादेः । केन ? प्रबन्धेनाव्युच्छेदेन । प्रबन्धेनेत्युभयत्र संबन्धनीयम् । उपेत्य भुज्यते इत्युपभोग इष्टेन्द्रियार्थः । इन्द्रियं चक्षुरादि । आरोग्यं स्वास्थ्यम् । प्राणा जीवितम् । ततो मोहं निगृह्य लोभो निरसनीय इति विधौ वाक्यार्थः पर्यवस्यति ।

लोभपरतन्त्रस्य गुणभ्रंशं व्याचष्टे—

**तावत्कीर्त्यै स्पृहयति नरस्तावदन्वेति मैत्रीं,**
**तावद्वृत्तं प्रथयति बिभर्त्याश्रितान् साधु तावत् ।**
**तावज्जानात्युपकृतमघाच्छङ्कते तावदुच्चै,—**
**स्तावन्मानं वहति न वशं याति लोभस्य यावत् ॥ २७ ॥**

नरस्तावदिदमिदं करोति । यावत्किम् ? **यावन्न याति** न गच्छति । कम् ? **वशं** पारतन्त्र्यम् । कस्य ? **लोभस्य** । तदेव दर्शयति—**स्पृहयति** अभिलषति । कोसौ ? **नरः** पुरुषः । कस्मै ? **कीर्त्यै** यशसे । कथम् ? **तावत्** । तथा **तावदन्वेति** अविच्छेदेन वर्तयति नरः । काम् ? **मैत्रीं** सख्यम् । तथा **तावन्नरः प्रथयति** पृथूकरोति प्रकाशयति वा । किं तत्? **वृत्तं** चारित्रम् । तथा **तावन्नरो बिभर्त्ति** पुष्णाति । कान् ? **आश्रितान्** प्रतिपन्नपरिग्रहान् । कथं कृत्वा ? **साधु** शोभनम् । तथा **तावन्नरो जानाति** स्मरति । किं तत् ? **उपकृतं** कृतमुपकारम् । तथा **तावन्नरः शङ्कते** बिभेति । कस्मात् ? **अघात्** पापात् । तथा **तावन्नरो वहति** धारयति । कम् ? **मानं** स्वोत्कर्षसंभावनम् । किंविशिष्टम् ? **उच्चै**रुन्नतम् ॥

लोभविजयोपायसेवायां शिवार्थिनः सज्जयन्नाह—

**प्राणेशमनु मायाम्बां मरिष्यन्तीं विलम्बयन्।**
**लोभो निशुम्भ्यते येन तद्भजेच्छौचदैवतम् ॥ २८ ॥**

शौचं प्रकर्षप्राप्ता लोभनिवृत्तिः मनोगुप्तौ मनसः परिस्पन्दः सकलः प्रतिषिध्यते। तत्राक्षमस्य परवस्तुष्वनिष्टप्रणिधानोपरमः शौचमिति। ततोस्य भेदः। शौचमेव दैवतमाश्रितपक्षपातित्वात्। **तच्छौचदैवतं** मुमुक्षुर्**भजेत्** सेवेत। येन किम्? **येन निशुम्भ्यते** निगृह्यते। कोसौ? **लोभः**। किं कुर्वन्? **विलम्बयन्**नवस्थापयन्। काम्? **मायाम्बां** वञ्चनामातरम्। किं करिष्यन्तीम्? **मरिष्यन्तीं** मर्तुमिच्छन्तीम्। कथम्? **अनु** सह। कम्? **प्राणेशं** स्वपराभेदप्रत्ययलक्षणं मोहं भर्तारं च। नारी हि स्वभर्त्रा सह मर्तुकामा पुत्रेण धार्यते इत्युक्तिलेशः॥

संतोषाभ्यासान्निरस्ततृष्णस्यात्मध्यानोपयोगोद्योगमुद्द्योतयन्नाह—

**अविद्यासंस्कारप्रगुणकरणग्रामशरणः**
**परद्रव्यं गृध्नुः कथमहमधोधश्चिरमगाम्।**
**तदद्योद्यद्विद्याद्दतिधृतिसुधास्वादहृततृ,—**
**ड्वरः स्वध्यात्योपर्युपरि विहराम्येष सततम् ॥ २९ ॥**

कथमिति सखेदविस्मये। **कथमगां** गतः। कोसौ? **अहम्**। क्व? **अधोधो**ऽधराधरत्र। नीचैर्नीचैरित्यर्थः। कियत्कालम्? **चिरं** संसारात्प्रभृति। किंविशिष्टः सन्? **गृध्नुर**भिलाषुकः। किं तत्? **परद्रव्यं** शरीरादि। किंविशिष्टो यतः? अविद्येत्यादि। अविद्या देहात्मनोरेकत्वप्रत्ययलक्षणो विभ्रमः। तज्जन्यः संस्कारो वासना अविद्यासंस्कारः तेन प्रगुणो विषयग्रहणाभिमुखः। स चासौ करणग्रामश्चेन्द्रियवर्गः। स एव शरणमाश्रयो यस्य सोहमविद्यासंस्कारप्रगुणकरणग्रामशरणः। यत एवं **तत्** तस्मादेष स्वसंवेदनप्रत्यक्षोहं **विहरामि** उपयुक्तो भवामि। क्व? **उपर्युपरि** ऊर्ध्वमूर्ध्वम्। कथम्? **सततम्**। कया? **स्वध्यात्या** आत्मनि संतत्या वर्तमानया निर्विकल्पनिश्चलया बुद्ध्या। तदुक्तम्—

**इष्टे ध्येये स्थिरा बुद्धिर्या स्यात्सन्तानवर्तिनी ।**
**ज्ञानान्तरापरामृष्टा सा ध्यातिर्ध्यानमीरिता ॥**

कथंभूतो भूत्वा ? अद्येत्यादि । अद्य इदानीमुद्यती आरोहन्ती विद्या आत्मदेहान्तरज्ञानमद्योद्यद्विद्या । तस्या दृतिरन्तःसारनिर्यासोऽद्योद्यद्विद्यादृतिः । सा चासौ धृतिश्च संतोषः । सैव सुधाऽमृतम् । तस्या आस्वादोऽसकृदभ्यासः । तेन हृतो निगृहीतस्तृङ्गरो येन यस्य वा सोऽद्योद्यद्विद्यादृतिधृतिसुधास्वादहृततृङ्गरः । तृट् तृष्णा । तृडेव गरः कृत्रिमविषं तृङ्गरः ॥

शौचमहिमानमभिष्टौति—

**निर्लोभतां भगवतीमभिवन्दामहे मुहुः ।**
**यत्प्रसादात्सतां विश्वं शश्वद्भातीन्द्रजालवत् ॥ ३० ॥**

अभिवन्दामहेऽभिमुखं नमस्कुर्महे स्तुमहे वा वयम् । काम् ? निर्लोभतां प्रकर्षप्राप्तलोभनिवृत्तिम् । किंविशिष्टाम् ? भगवतीं पूज्यां, यथाख्यातचारित्रस्य महद्भिरपि पूज्यत्वात् । कथम् ? मुहुर्वारं वारम् । यत्प्रसादाद् यस्या अनुग्रहाद्भाति आत्मानं दर्शयति । किं तत् ? विश्वं चराचरं जगत् । किंवत् ? इन्द्रजालवदिन्द्रजालेन तुल्यमनुपभोग्यत्वात् । केषाम् ? सतां शुद्धोपयोगनिष्ठानां साधूनाम् । कथम् ? शश्वदजस्रम् ॥

लोभमाहात्म्यमुपाख्यानमुखेन ख्यापयन्नाह—

**तादृक्षे जमदग्निमिष्टिनमृषिं स्वस्यातिथेयाध्वरे,**
**हत्वा स्वीकृतकामधेनुरचिराद्यत्कार्तवीर्यः क्रुधा ।**
**जघ्ने सान्वयसाधनः परशुना रामेण तत्सूनुना,**
**तद्दुर्दण्डित इत्यपाति निरये लोभेन मन्ये हठात् ॥ ३१ ॥**

मन्ये अहमेवं जाने । अपाति पातितः प्रवेशितः । कोसौ ? कार्तवीर्यः । केन ? लोभेन । क्व ? निरये नरके । कथं कृत्वा ? दुर्दण्डित इति । अयथादोषं कृतदण्डो दुर्दण्डितोयमिति निश्चित्येत्यर्थः । कस्मात् ? हठाद् बलात्कारात् । कथम् ? तत् । यत्किम् ? यज्जघ्ने हतः । कोसौ ?

कार्तवीर्यः। केन ? **तत्सूनुना** जमदग्निपुत्रेण। किन्नाम्ना ? **रामेण** परशुरामनाम्ना। केन ? **परशुना** परश्वधेन। कया ? **क्रुधा** क्रोधेन। किं केवलः ? नेत्याह—**सान्वयसाधनः** संतानसैन्यसहितः। कस्मात् ? **अचिरात्** सपदि। किंविशिष्टो यतः ? **स्वीकृतकामधेनुः** स्वायत्तीकृतसुरसुरभिः। किं कृत्वा ? **हत्वा** मारयित्वा। कम् ? **ऋषिं** वानप्रस्थाश्रमिणम्। किंनामानम् ? **जमदग्निम्**। किंविशिष्टम् ? **इष्टिनम्**। इष्ट आतिथेयाध्वरोऽनेनेति विगृह्य "इष्टादेः" इतीन्। क ? **अतिथेयाध्वरे**। अतिथौ साधुरातिथेयः। आतिथेयश्चासावध्वरश्च यज्ञः अतिथेयाध्वरस्तस्मिन्। कस्य संबन्धिनि ? **स्वस्य** कार्तवीर्यात्मनः। किंविशिष्टे ? **तादृक्षे** सकललोकचित्तचमत्कारिणि॥ इत्युत्तमशौचभावनाप्रकरणम्।

अथानन्तानुबन्ध्यप्रत्याख्यानावरणप्रत्याख्यानावरणसंज्वलनसंज्ञिकाः क्रोधमानमायालोभानां प्रत्येकं चतस्रोवस्था दृष्टान्तविशेषैः स्पष्टयन् क्रमेण तत्फलान्यार्याद्वयेनोपदिशति—

**दृशद्वनिरजोऽबुराजिवदश्मस्तम्भास्थिकाष्ठवेत्रकवत्।**
**वंशाङ्घ्रिमेषशृङ्गोक्षमूत्रचामरवदनुपूर्वम्॥ ३२॥**
**क्रिमिचक्रकायमलरजनिरागवदपि च पृथगवस्थाभिः।**
**क्रुन्मानदम्भलोभा नारकतिर्यङ्नृसुरगतीः कुर्युः॥३३॥**

(युग्मम्)

**कुर्युर्**विदध्युः। के ? **क्रुन्मानदम्भलोभाः**। क्रुत् क्रोधः। दम्भो माया। क्रुच्च मानश्च दम्भश्च लोभश्च त एवम्। काः ? **नारकतिर्यङ्नृसुरगतीः**। यदुदयाज्जीवो नारकादिरुच्यते सा गतिः। नारकश्च तिर्यङ् च ना च सुरश्च नारकतिर्यङ्नृसुराः। तेषां गतयस्तद्गतयस्तास्तद्गतीः। काभिः ? **अवस्थाभिः** सर्वोत्कृष्टहीनहीनतरहीनतमोदयरूपाभिरनन्तानुबन्ध्यादिशक्तिभिः। कथम् ? **अनुपूर्वं** यथाक्रमम्। कथम् ? **पृथक्** प्रत्येकम्। किंवत् ? **दृषद्वनिरजोऽबुराजिवत्** शिलापृथ्वीधूलीजलरेखातुल्याभिरनन्तानुबन्धित्वाप्रत्या-

ख्यानावरणत्वप्रत्याख्यानावरणत्वसंज्वलनत्वशक्तिलक्षणाभिश्चतसृभिरवस्थाभिः क्रोधो नरकगतिं तिर्यग्गतिं मनुष्यगतिं देवगतिं च यथाक्रमं करोति। तथाऽश्मस्तम्भास्थिकाष्ठवेत्रकवत् पाषाणस्तम्भकीकशदारुवेत्रलतातुल्याभिरनन्तानुबन्धित्वादिशक्तिलक्षणाभिश्चतसृभिरवस्थाभिर्मानो नरकगतिं तिर्यग्गतिं मनुष्यगतिं देवगतिं च यथाक्रमं करोति। तथा वंशाङ्घ्रिमेषशृङ्गोक्षमूत्रचामरवद् वंशमूलाऽविशृङ्गगोमूत्रचमरीकेशतुल्याभिरनन्तानुबन्धित्वादिशक्तिलक्षणाभिश्चतसृभिरवस्थाभिर्माया नरकगतिं तिर्यग्गतिं मनुष्यगतिं देवगतिं च यथाक्रमं करोति। तथा क्रिमिचक्रकायमलरजनीरागवत् कृमिरागघ्राणककिट्टिकाशरीरमलहरिद्रारागतुल्याभिरनन्तानुबन्धित्वादिशक्तिलक्षणाभिश्चतसृभिरवस्थाभिर्लोभो नरकगतिं तिर्यग्गतिं मनुष्यगतिं देवगतिं च यथाक्रमं करोति। अपि चेति समुच्चये। दृषच्चावनिश्च रजश्चापश्च दृषदवनिरजआपः। दृषदवनिरजोऽपां राजयो रेखा दृषदवनिरजोप्राजयः। ताभिस्तुल्यं दृषदादिराजिवत्। अश्मस्तम्भश्च अस्थि च काष्ठं च वेत्रकश्च ( अल्पो वेत्रो वेत्रकः सुकुमारवेत्रो वेत्रलतेति यावत् ) अश्मस्तम्भास्थिकाष्ठवेत्रकाः। तैस्तुल्यं तद्वत्। वंशाङ्घ्रिश्च मेषशृङ्गं चोक्षमूत्रं च गच्छद्वृषभप्रस्रवश्चामरं च तानि। तैस्तुल्यं तद्वत्। क्रिमिशब्देनात्र क्रिमिरागो गृह्यते। चक्रं च कायश्च चक्रकायौ चक्रकाययोर्मलौ चक्रकायमलौ। क्रिमिश्च चक्रकायमलौ च घ्राणकिट्टिकाशरीरमलौ, रजनी च हरिद्रा=क्रिमिचक्रकायमलरजन्यः। तासां रागो रंजनपर्यायः। तेन तुल्यं तद्वत्। क्रिमिरागः क्रिमिवान्तरक्ताहारः। तद्रंजितोर्णातन्तुनिष्पादितो हि कम्बलो दग्धावस्थोपि न विरज्येत। तत्र यथा—शिला भिन्ना सती पुनरुपायशतेनापि न संयुज्यते तथानन्तानुबन्धिना क्रोधेन विघटितं चित्तं मनः। यथा च पृथ्वी विदीर्णा सति महोपक्रमेण पुनर्मिलति तथाऽप्रत्याख्यानेन विघटितं चेतः। यथा च धूली रेखाकारेण मध्ये भिन्ना अल्पेनाप्युपक्रमेण पुनर्मिलति तथा प्रत्याख्यानेन विघटितं चित्तम्। यथा च जलं यष्ट्यादिना मध्ये छेद्यमानं स्वयमेव निःसंधिबन्धं मिलति तथा संज्वलनेन विघटितं चित्तम्। इत्युपमानार्थः। एवमुत्तरेष्वपि यथास्वमसौ व्याख्येयः॥

उत्तमक्षमादिभिः क्रोधादीन् जितवतः शुक्लध्यानबलेन जीवन्मुक्तिः सुलभेत्युपदिशति—

**संख्यातादिभवान्तराब्ददलपक्षान्तर्मुहूर्ताशयान्,**
**दृग्देशव्रतवृत्तसाम्यमथनान् हास्यादिसैन्यानुगान्।**
**यः क्रोधादिरिपून् रुणद्धि चतुरोप्युद्घक्षमाद्यायुधै,-**
**र्योगक्षेमयुतेन तेन सकलश्रीभूयमीषल्लभम् ॥ ३४ ॥**

ईषल्लभमनायासेन लभ्यते । किं तत् ? **सकलश्रीभूयम्** । सह कलया शरीरेण वर्तते इति सकले सशरीरे । सकले श्रियावन्तरङ्गबहिरङ्गानन्तज्ञानादिचतुष्टयसमवसरणादिविभूती यस्यासौ सकलश्रीर्जीवन्मुक्तः । पक्षे सकला अर्धचक्र्यपेक्षया समग्रा षट्खण्डभूम्याधिपत्यलक्षणा श्रीर्लक्ष्मीर्यस्य सोयं सकलश्रीश्चक्रवर्ती । सकलश्रियो भवनं सकलश्रीभूयम् । जीवन्मुक्तत्वं चक्रवर्तित्वं चेत्यर्थः । केन ? **तेन** । किंविशिष्टेन ? **योगक्षेमयुतेन** । योगः समाधिः । स चेह शुक्लध्यानं, कषायनिरोधाविनाभावित्वात् "शुचिगुणयोगाच्छुक्लं कषायरजसः क्षयादुपशमाद्वा" इति वचनात् । योगस्य क्षेमोऽनुपघातः, क्षपकश्रेणीप्रभवत्वाद्, योगक्षेमः योगक्षेमेण युतः एकलोलीभावमापन्नः । एकत्ववितर्कवीचारशुक्लध्याननिष्ठ इत्यर्थः । उक्तं च—

**निर्विचारावतारासु चेतःश्रोतःप्रवर्तिषु ।**
**आत्मन्येव स्फुरन्नात्मा तत्स्याद्ध्यानमबीजकम् ॥**

पक्षेऽलब्धलाभलब्धपरिरक्षणसहितेन । यः किम् ? **यो रुणद्धि** प्रतिबध्नाति । कान् ? **क्रोधादिरिपून्** । क्रोधादयो रिपवः शत्रव इवेष्टार्थप्रतिबन्धकत्वात् । कति ? **चतुरोपि** चतुःसंख्यान् । पक्षे दिक्चतुष्टयवर्तिनश्च न पुनरेकद्वित्रीणीत्यपिशब्दार्थः । कैः ? **उद्घक्षमाद्यायुधैः** । उद्घानि लाभपूजाख्यातिनिरपेक्षतयोत्तमानि । तानि च तानि क्षमादीनि । उद्घक्षमादीन्यायुधानि चक्रादिप्रहरणानीव शत्रूणामिव क्रोधादीनां प्रतिहन्तृत्वात् । किंविशिष्टान् ? **दृग्देशव्रतवृत्तसाम्यमथनान्** यथाक्रममनन्तानुबन्ध्यप्रत्याख्यानावरणप्रत्याख्यानावरणसंज्वलनसंज्ञान् । दृक् सम्यक्त्वम् । देशव्रतमणुव्रतम् । वृत्तं महाव्रतम् । साम्यं यथाख्यातचारित्रम् । तेषां मथनान् घातकान् उक्तं च—

पढमो[1] दंसणघाई बिदियो तह देसविरदिघाई य ।
तदिओ संजमघाई चउत्थो जहक्खादघाई य ॥

पक्षे उत्कृष्टमध्यमापकृष्टप्रतापान् । पुनः किंविशिष्टान् ? समित्यादि । संख्यातादीनि संख्यातान्यसंख्यातान्यनन्तानि च । संख्यातादीनि च तानि भवान्तराणि च भाविजन्मानि संख्यादिभवान्तराणि । अब्ददलं संवत्सरार्धम् । षण्मासमित्यर्थः । पक्षो मासार्धम् । पञ्चदशाहोरात्रा इत्यर्थः । अन्तर्मुहूर्तः किंचिदूननाडीद्वयम् । संख्यातादिभवान्तराणि चाब्ददलं च पक्षश्चान्तर्मुहूर्तश्च संख्यातादिभवान्तराब्ददलपक्षान्तर्मुहूर्तास्तान् । तावत्कालमाशयो वासना संस्कारो येषां ते तथोक्ताः । तत्रानन्तानुबन्धिनः क्रोधादयः संख्यातादिभवान्तरस्थायिवासनाः । अप्रत्याख्यानावरणाः षण्मासस्थायिवासनाः । प्रत्याख्यानावरणाः पक्षस्थायिवासनाः । संज्वलना अन्तर्मुहूर्तस्थायिवासनाः । उक्तं च—

अन्तोमुहुत्त[2] पक्खं छम्मासं संखसंखणन्तभवं ।
संजलणमादियाणं वासणकालो दु णियमेण ॥

पक्षे उत्कृष्टमध्यमापकृष्टवैरानुबन्धान् । पुनरपि किंविशिष्टान् ? हास्यादिसैन्यानुगान् । हास्यादयो हास्यरत्यरतिशोकभयजुगुप्सास्त्रीवेदपुंवेदनपुंसकवेदा नव नोकषायाः सैन्याः सैनिका इव, तदधीनवृत्तित्वात् । हास्यादिसैन्या अनुगा अनुचरा येषां ते तथोक्ताः । इदमत्र तात्पर्यम्— यथा कश्चिद्विजिगीषुरुत्कृष्टादिशक्तीनुत्कृष्टादिवैरानुबन्धान् सेनाचरानुचरसनाथान् प्रतिपक्षान् दिक्चतुष्टयवर्तिनश्चक्राद्यायुधैः प्रतिहत्य योगक्षेमौ बिभ्राणश्चक्रवर्ती भवति तथा कश्चिद्भव्योनन्तानुबन्ध्यादिक्रोधादीन् संख्यातादिभवान्तरादिस्थायिवासनान् हास्यादिभिरन्वीयमानानुत्तमक्षमादिभाव-

---

१—प्रथमो दर्शनघाती द्वितीयस्तथा देशविरतघाती च ।
तृतीयः संयमघाती चतुर्थो यथाख्यातघाती च ॥

२—अन्तर्मुहूर्तः पक्षः षण्मासाः संख्यासंख्यानन्तभवाः ।
संज्वलनादिकानां वासनाकालस्तु नियमेन ॥ ( गोम० जीवकाण्डे )

नाबलेन निर्मूल्य शुक्लध्यानविशेषावष्टम्भाज्जीवन्मुक्तिमवाप्नोति ॥ इत्युत्तमक्षमाद्यनुभावानुवर्णनप्रकरणम् ।

अथ सत्यलक्षणस्य धर्मस्य लक्षणोपलक्षणपूर्वकमनुभावमाह—

**कूटस्थस्फुटविश्वरूपपरमब्रह्मोन्मुखाः सम्मताः,**
**सन्तस्तेषु च साधुसत्यमुदितं तत्तीर्णसूत्रार्णवैः ।**
**आ शुश्रूषुतमःक्षयात्करुणया वाच्यं सदा धार्मिकै-**
**र्घोराज्ञानविषार्दितस्य जगतस्तद्ध्येकमुज्जीवनम् ॥३५॥**

**संमताः** सम्यज्ज्ञायन्ते स्म शिष्टैः । के ? **सन्तः** । किंविशिष्टाः ? कूटस्थेत्यादि । कूटस्थानि द्रव्यरूपतया नित्यानि स्फुटानि स्पष्टसंवेदनवेद्यानि विश्वरूपाणि चराचरस्य जगतोऽतीतानागतवर्तमानानन्तपर्यायाकाराः । यदवोचत्स्वयमेव स्तुतिषु—

**सर्वदा सर्वथा सर्वं यत्र भाति निखातवत् ।**
**तज्ज्ञानात्मानमात्मानं जानानस्तद्भवाम्यहम् ॥**

कूटस्थानि स्फुटानि विश्वरूपाणि यस्मिन्तत् कूटस्थस्फुटविश्वरूपम् । तच्च तत्परमब्रह्म च प्रत्यग्ज्योतिः **कूटस्थस्फुटविश्वरूपपरमब्रह्म** । तस्योन्मुखास्तेन परिणन्तुमुद्युक्ता ये त एवम् । **तेषु च** सत्सु **साधू**पकारकमु**दितं** वचनं **सत्यं** संमतं, सत्सु साधु सत्यमिति निरुक्तविषयत्वात् । तत्सत्यं **वाच्यं** वक्तव्यं **सदा** सर्वदा । कैः ? **धार्मिकै**र्धर्मं चरद्भिः । किंविशिष्टैः ? **तीर्णसूत्रार्णवैः** । तीर्णः सूत्रार्णवो यैस्तैः । प्रवचनसमुद्रपारदृश्वभिरित्यर्थः । कथम् ? **आ** । कस्मात् ? **शुश्रूषुतमःक्षयात्** श्रोतुमिच्छूनामज्ञानस्य नाशं यावत् । कया ? **करुणया** दुःखोच्छित्तिवाञ्छया । अत्र समर्थनमाह—**हि** यस्माद्भवति । किम् ? **तत्** सत्यं वचः । किंविशिष्टम् ? **एक**मुत्कृष्ट**मुज्जीवन**मुद्बोधकम् । कस्य ? **जगतो** बहिरात्मप्राणिगणस्य । किंविशिष्टस्य ? **घोराज्ञानविषार्दितस्य** । दारुणदुर्बोधगरलाभिभूतस्य ॥

व्रतादित्रयविषयस्य सत्यस्य लक्षणविभागार्थमाह—

**असत्यविरतौ सत्यं सत्स्वसत्स्वपि यन्मतम् ।**
**वाक्समित्यां मितं तद्धि धर्मे सत्स्वेव बह्वपि ॥ ३६ ॥**

यत्सत्यं मतमिष्टं शिष्टैः। किंविशिष्टम् ? बह्वपि । केषु विषयेषु ? सत्सु प्रागुक्तलक्षणेषु । न केवलमसत्सु च तद्विलक्षणेषु । बह्वपीति सामर्थ्यलब्धमत्र योज्यम् । कस्मिन्विषये ? असत्यविरतावनृतविरतिमहाव्रते। तद्धि तदेव सत्यं मतम् । किं यत् ? मितमल्पं सत्स्वसत्सु च । कस्याम् ? वाक्समित्यां भाषासमितौ तदेव सत्यं मतम् । कियत् ? बह्वपि प्रभूतम् । अपिशब्दात्स्तोकं च । केषु ? सत्स्वेव नासत्सु । क्व ? धर्मे सत्स्वसत्सु च बह्वप्युच्यमानं व्रतसत्यम् । सत्स्वसत्सु च मितमुच्यमानं समितिसत्यम् । सत्स्वेव प्रभूतमल्पं चोच्यमानं धर्मसत्यमित्यर्थः । इति सत्यप्ररूपणम् ।

अथ संयमलक्षणं धर्मं व्याचिख्यासुस्तद्भेदयोरुपेक्षाऽपहृतसंयमयोर्मध्ये केचिदुत्तरं समितिषु वर्तमानाः पालयन्तीत्युपदिशति—

**प्राणेन्द्रियपरीहाररूपेपहृतसंयमे ।**
**शक्यक्रियप्रियफले समिताः केपि जाग्रति ॥ ३७ ॥**

केपि केचिदैदंयुगीनाः समिताः समितिषु वर्तमाना जाग्रति प्रमादपरिहारेण वर्तन्ते । क्व ? अपहृतसंयमे । किंविशिष्टे ? प्राणीन्द्रियपरीहाररूपे प्राणिनां त्रसस्थावरजीवानां परीहारः पीडावर्जनमिन्द्रियाणां स्पर्शनादीनामनिन्द्रियस्य च परीहारो निजनिजविषयप्रवृत्तिनिरोधः । तद्विषया यथा—

**पञ्चरस पञ्चवण्णा दोगंधा अट्ठ फास सत्तसरा ।**
**मणसहिद अट्ठवीसा इन्दियविसया मुणेयव्वा ॥**

प्राणिनश्चेन्द्रियाणि च प्राणीन्द्रियाणि तेषां परीहार एव रूपं यस्य स एवम् । पुनः किंविशिष्टे ? शक्यक्रियप्रियफले शक्या शक्तिगम्या क्रियाऽनुष्ठानं यस्य तच्छक्यक्रियं कर्तुं शक्यं प्रियमिष्टं फलं प्रयोजनमुपेक्षासंयमलक्षणं यस्य स एवम् । शक्यानुष्ठान इष्टप्रयोजनश्चेत्यर्थः ॥

द्विविधस्याप्यपहृतसंयमस्योत्तममध्यमजघन्यभेदाः त्रैविध्यमालम्बमानस्य भावनायां प्रयोजयति—

**सुधीः समरसाप्तये विमुखयन् खमर्थान्मन,-**
**स्तुदोथ द्रवयन्स्वयं तमपरेण वा प्राणितः ।**

**तथा स्वमपसारयन्नुत नुदन् सुपिच्छेन तान्,**
**स्वतस्तदुपमेन वापहृतसंयमं भावयेत् ॥ ३८ ॥**

**सुधीः** समीक्ष्यकारी मुमुक्षुर्भावयेदभ्यस्येत् । किम् ? **अपहृतसंयमम्** । कस्मै ? **समरसाप्तये** उपेक्षासंयमलब्ध्यर्थम् । किं कुर्वन् ? **विमुखयन्** पराङ्मुखं कुर्वन् । किं तत् ? **खं** स्पर्शनादीन्द्रियम् । कस्मात् ? **अर्थात्** स्पर्शादिविषयात् । किंविशिष्टात् ? **मनस्तुदो** रागद्वेषोद्भावनेन चित्तक्षोभकरात् । मनस्तुदति व्यथते इति मनस्तुत् । एष उत्तमइन्द्रियसंयमः । **अथ** अथवा सुधीः समरसाप्तयेऽपहृतसंयमं भावयेत् । किं कुर्वन् ? **द्रवयन्** दूरीकुर्वन् । इन्द्रियग्रहणायोग्यं कुर्वन्नित्यर्थः । कम् ? **तं** मनस्तुदमर्थम् । केन ? **स्वयम**ात्मना । एष मध्यम इन्द्रियसंयमः । **वा** अथवा सुधीरपहृतसंयमं भावयेत् । किं कुर्वन् ? द्रवयन् । कम् ? तम् । केन ? **अपरेण** गुर्वादिना । एष जघन्य इन्द्रियसंयमः । **तथा** सुधीः समरसाप्तयेऽपहृतसंयमं भावयेत् । किं कुर्वन् ? **अपसारयन्** व्यावर्तयन् । कम् ? **स्व**मात्मानम् । केभ्यः ? **प्राणितः** स्वयमुपस्थितेभ्यः प्राणिभ्यः । अयमुत्तमप्राणिसंयमः । **उत** अथवा सुधीरपहृतसंयमं भावयेत् । किं कुर्वन् ? **नुदन्** प्रेरयन् प्रतिलिखन् । कान् ? **तान्** प्राणिनः । कस्मात् ? **स्वत** आत्मीयाच्छरीरादेः । केन ? **सुपिच्छेन** पञ्चगुणोपेतप्रतिलेखनेन । तदुक्तम्—

**रजसे दाणमगहणं मद्दवसुकुमालदालहुत्तं च ।**
**जत्थेदे पंच गुणा तं पडिलिहणं पसंसंति ॥**

अयं मध्यमः प्राणिसंयमः ॥ **वा** अथवा सुधीरपहृतसंयमं भावयेत् । किं कुर्वन् ? **तान् स्वतो नुदन्** । केन ? **तदुपमेन** सुपिच्छालाभे तदाभासेन मृदुवस्त्रादिना वा । अयं जघन्यः प्राणिसंयमः ॥

अस्वतंत्रं बहिर्मन इत्युररीकृत्य स्वस्वविषयापायप्राचण्ड्यप्रदर्शनपरैः स्पर्शनादीन्द्रियैरेकशः सामर्थ्यप्रत्यापादनाज्जगति स्वैरं त्वरमाणस्य मनसो निरोधं कर्तव्यतयोपदिशति—

**स्वामिन्पृच्छ वनद्विपान्नियमितान्नाथाश्रुपिल्ला झषीः,**
**पश्याधीश विदन्त्यमी रविकराः प्रायः प्रभोऽग्नेः सखा ।**
**किं दूरेऽधिपते क पक्कणभुवां दौःस्थित्यमित्येकशः,**
**प्रत्युप्तप्रभुशक्ति खैरिव जगद्धावन्निरुन्ध्यान्मनः ॥ ३९ ॥**

**निरुन्ध्यान्नियन्त्रयेन्मारयेद्वा** शिवार्थी । किं तत् ? **मनश्चित्तम्** । किं कुर्वत् ? **धावद्** वेगेन गच्छत् । किं तत् ? **जगद्विश्वम्** । किंविशिष्टम् मनः ? **प्रत्युप्तप्रभुशक्ति** प्रतिरोपिताप्रतिविधेयसामर्थ्यम् । प्रभुशक्तिर्हि जिगीषोः कोषदण्डबलमुच्यते । कैः ? **खैः** स्पर्शनादीन्द्रियैः । कथम् ? **एकशः** प्रत्येकम् ? एकैकेनेत्यर्थः । कथमिव ? **इतीव** । इवेति वाक्यार्थोत्प्रेक्षायाम् । **तामेव दर्शयति** । तत्र तावत्स्पर्शनेन्द्रियं मनः प्रति स्वसामर्थ्यं प्रकाशयति । हे**स्वामिन्, पृच्छ** अनुयुङ्क्ष्व त्वम् । कान् ? **वनद्विपान्** आरण्यककरिणः । किंविशिष्टान् ? **नियमितान्** स्तम्भेषु बद्धान् । कुलीनानां हि स्वावदानविकत्थनं त्रपायै स्यात् । अत्र हस्तिनीस्पर्शदोषो व्यङ्ग्यः । एवमुत्तरत्रापि यथाक्रमं रसगन्धवर्णशब्दाश्चिन्त्याः ॥ अथ रसनेन्द्रियं वक्ति—हे **नाथ** स्वामिन्, **पश्य** अवलोकय त्वम् । काः ? **झषीर्मत्स्यपत्नीः** । किंविशिष्टाः ? **अश्रुपिल्ला** वाष्पजलैः क्लिन्ननेत्राः । किमत्र मे स्वौद्धत्यकथनेन । अत्र वडिशरसास्वादनलम्पटपतिमरणदुःखं व्यङ्ग्यम् ॥ अथ घ्राणेन्द्रियमाह—**अधीश** हे स्वामिन्, **विदन्ति** जानन्ति । के ? **अमी** एते **रविकराः** सूर्यरश्मयः । कथम् ? **प्रायो** बाहुल्येन । किमत्र मे स्वकृत्यकथनेन । अत्र कमलकोशे गन्धलुब्धभ्रमरमरणं व्यङ्ग्यम् ॥ अथ चक्षुरिन्द्रियमाचष्टे—हे **प्रभो** स्वामिन्, किं किं वर्तते । कोऽसौ ? **अग्नेः सखा** वायुः । क ? **दूरे** विप्रकृष्टे यदहं ब्रवीमि । वायुरेव मत्कृत्यं प्रष्टव्यस्तस्य सदा सर्वगत्वेन मत्पुरुषाकारे साक्षित्वात् । अत्र रूपालोकनोत्सुकपतङ्गमरणं व्यङ्ग्यं । अथ श्रोत्रेन्द्रियं वदति—हे **अधिपते** स्वामिन्, **क** कस्मिन् देशे विद्यते । किं तत् ? **दौःस्थित्यं** कृच्छ्रजीवनम् । केषाम् ? **पक्कणभुवां** पक्कणेषु शबरालयेषु भवन्तीति पक्कणभुवः शबरास्तेषाम् । सर्वत्र शवराः सुखजीविका यद् दृश्यन्ते स कस्यानुभाव इति भावः । अत्र गीतध्वनिलुब्धमृगवधो व्यङ्ग्यः ॥

इन्द्रियाणां प्रवृत्तौ च निवृत्तौ च मनः प्रभुः।
मन एव जयेत्तस्माज्जिते तस्मिन् जितेन्द्रियः॥

इतीन्द्रियसंयमासिद्ध्यर्थं मनः संयमयितुं मुमुक्षुरुपक्रमते—

चिद्दृग्धीर्मुदुपेक्षितास्मि तदहो चित्तेह हृत्पङ्कजे,
स्फूर्जंस्त्वं किमुपेक्षणीय इह मेऽभीक्ष्णं बहिर्वस्तुनि।
इष्टद्विष्टधियं विधाय करणद्वारैरभिस्फारयन्,
मां कुर्याः सुखदुःखदुर्मतिमयं दुष्टैर्न दूष्येत किम्॥ ४०॥

अस्मि भवाम्यहम्। किंविशिष्टः? चित्। चेतति संवेदयते स्वरूपं पररूपं चेति चित् स्वपरप्रकाशात्मकोऽयमहमस्मि प्रमाणादेशात्। तथास्म्यहम्। किंविशिष्टः? दृक्। पश्यत्यनुभवति स्वरूपमात्रमिति दृक् स्वात्मोपलब्धिरूपोयमहमस्मि शुद्धनिश्चयनयादेशात्। तथास्म्यहम्। किंविशिष्टः? धीः। ध्यायत्यनन्यपरतयोपलभते परस्वरूपमिति धीः परस्वरूपोपलब्धिरूपोऽयमहमस्मि। तत एव मुत्। मोदतेन्तर्बहिर्विकल्पजालविलयादात्मनि विश्रान्तत्वादाल्हादते इति मुत् शुद्धस्वात्मानुभूतिमयात्यन्तसुखस्वभावोयमहमस्मि निश्चयनयादेशादेव। तथास्म्यहम्। किं विशिष्टः? उपेक्षिता। उपेक्षते स्वरूपे पररूपे च क्वचिदपि न रज्यति न च द्वेष्टि इति उपेक्षाशीलः परमौदासीनज्ञानमयोऽयमहमस्मि च तत एव। तथा चोक्तम्—

सद्द्रव्यमस्मि चिदहं ज्ञाता द्रष्टा सदाप्युदासीनः।
स्वोपात्तदेहमात्रस्ततः पृथग्गगनवदमूर्तः॥

यत एवं तत् तस्मादहो चित्त भो मनः, किं कुर्याः? किं विदध्यास्त्वम्। कम्? मां चिदादिरूपमात्मानम्। कीदृशम्? सुखदुःखदुर्मतिमयम् अहं सुखी अहं दुःखीति मिथ्याज्ञानपरिणतम्। तथा चोक्तम्—

वासनामात्रमेवैतत् सुखं दुःखं च देहिनाम्।
तथा ह्युद्वेजयन्त्येते भोगा रोगा इवापदि॥

किं कुर्वन्? अभिस्फारयदभिमुखेन तत्तद्विषयोपभोगपरं कुर्वन्।

कम् ? माम् । कैः ? करणद्वारैरिन्द्रियमुखैः । किं कृत्वा ? विधाय उत्पाद्य । काम् ? इष्टद्विष्टधियम् । कस्य ? मे मम चिदाद्यात्मनः इदं मे इष्टमिच्छया विषयीकृतम्, इदं द्वेषेण विषयीकृतमिति बुद्धिं जनयित्वेत्यर्थः । क? बहिर्वस्तुनि । कीदृशे ? इहास्मिन् इन्द्रियैः प्रतीयमाने । कथम् ? अभीक्ष्णमसकृत् । वस्तुतः कीदृशेस्मिन् ? उपेक्षणीये मध्यस्थभावगम्ये । तथा चोक्तम्—

**स्वयमिष्टं न च द्विष्टं किंतूपेक्ष्यमिदं जगत् ।**
**नाहमेष्टा न च द्वेष्टा किंतु स्वयमुपेक्षिता ॥**

पुनः किं कुर्वंस्त्वम् ? स्फूर्जत् तत्तद्विषयग्रहणव्याकुलं भवत् । क ? इहास्मिन्नागमप्रसिद्धे हृत्पङ्कजे द्रव्यमनसि । यथेन्द्रराजः—

**उवइट्ठं अट्ठदलं संकुइयं हियय सरवरुप्पण्णं ।**
**जो य रवितेयतवियं विहस्सए झत्तिकं दुट्ठं ॥**

पङ्कादङ्गोपाङ्गनामकर्माख्यपापाज्जातं पङ्कजम् । हृच्च तत्पङ्कजं च हृत्पङ्कजम् । तस्मिन् स्फूर्जंस्त्वम् । इत्यपि वक्रभणित्या व्याख्येयम् । कुर्यां इत्यत्राहं गर्हे अन्याय्यमेतदिति सप्तम्या द्योत्यते । "किंवृत्ते लिङ्लृटौ" इति गर्हे लिङ् । अत्र समर्थनमाह—अथवा युक्तमेतत् । किं वस्त्वदुष्टमपि न दूष्येत विकृतं न क्रियेत । कैः ? दुष्टैर्विकृतैः । सर्वं शुद्धमप्यशुद्धैरन्यथा क्रियते इत्यर्थः । चित्तेन हि पापकर्मणा द्रव्यमनसि विलसता सकलविकल्पशून्योपि चेतनो नानाविकल्पजालजटिलः क्रियते इति भावः ॥

अन्तरात्मनः परमाभिजातत्वाभिमानशुद्धोधयत्नुपालम्भगर्भां शिक्षां प्रयच्छन्नाह—

**पुत्रो यद्यन्तरात्मन्नसि खलु परमब्रह्मणस्तत्किमक्षै,**
**र्लौल्याद्यद्वल्लतान्ताद्रसमलिभिरसृग्रक्तपाभिर्व्रणाद्वा ।**
**पायं पायं यथास्वं विषयमघमयैरेभिरुद्गीर्यमाणं,**
**भुञ्जानो व्यात्तरागाररतिमुखमिमकं हंस्यमा स्वं सवित्रा ४१**

१—उपदिष्टमष्टदलं संकुचितं हृदयसरोवरोत्पन्नम् ।
यच्च रवितेजस्तप्तं विह................ ॥

हे **अन्तरात्मन् !** चित्तदोषात्मविचारचतुर चिद्विवर्ते, **खलु** निश्चयेन **यदि** चेद्**असि** भवसि त्वम् । कीदृशः ? **पुत्रो य** उत्पन्नः पुनीते वंशं स पुत्र इति निरुक्तिगम्यः । कस्य ? **परमब्रह्मणः** परमात्मनः । **तत् किं हंसि** हिनस्सि त्वम् । कम् ? **स्वमात्मानम्** । कथम् ? **अमा** सह । केन ? **सवित्रा** जनकेन परमब्रह्मणा । अन्तरात्मनश्चात्मघातो बहिरात्मपरिणतिः, परमात्मघातस्तु शुद्धस्वरूपप्रच्यावनपूर्वकं रागद्वेषापादनम् । तथा चोक्तम्—

> चित्ते[1] बद्धे बद्धो मुक्के मुक्को य णत्थि संदेहो ।
> अप्पा विमलसहाओ मइलिज्जइ मइलिए चित्ते ॥

किं कुर्वाणः ? **भुञ्जानो**ऽनुभवन् । कम् ? **इमकं** बन्धुहेतुत्वात् कुत्सितमिमं **विषयं** स्पर्शादिकम् । कथं कृत्वा ? **व्यात्तरागारतिमुखं** प्रसारितरागद्वेषोल्लेखम् । किं क्रियमाणम् । **यथास्वमुद्दीर्यमाणम्** यथायथमुपयुज्योद्गम्यमानम् । कैः ? **एभिः** प्रतीयमानै**रक्षैः** स्पर्शनादीन्द्रियैः । कथं कृत्वा ? **पायंपायं** पीत्वा पीत्वा । कस्मात् ? **लौल्यालाम्पट्यात्** । कथम् ? **यद्वद्** यथा **लतान्तात्पुष्पाद् रसं** मकरन्दमलिभि**र्भ्रमरैरसृग्वा** रुधिरं **व्रणाद् रक्तपाभि**र्जलूकाभिः पायं पायमुद्दीर्यमाणं तथाप्रशस्तमप्रशस्तं च विषयं स्वाधिकरणात्पायं पायमक्षैरुद्दीर्यमाणमित्यर्थः । कीदृशैः ? **अघमयैः** पापप्रचुरैस्त्रिभिरपि ॥

**इन्द्रियद्वारैरनाद्यविद्यावासनावशादसकृदुद्भिद्यमानदुराशस्य चित्तस्य विषयाभिष्वङ्गमुत्सारयन् परमपदप्रतिष्ठायोग्यताविधिमुपदिशति—**

> **तत्तद्गोचरभुक्तये निजमुखप्रेक्षीण्यमूनीन्द्रिया,—**
> **ण्यासेदु क्रियसेऽभिमानघन भोश्चेतः कयाऽविद्यया ।**
> **पूर्या विश्वचरी कृतिन् किमिमकै रङ्कैस्तवाशा ततो,**
> **विश्वैश्वर्यचणे सजत्सवितरि स्वे यौवराज्यं भज ॥ ४२ ॥**

---

[1]–चित्ते बद्धे बद्धो मुक्ते मुक्तश्च नास्ति संदेहः ।
आत्मा विमलस्वभावो..................... ॥

भोश्चेतः हे मनः, हे **अभिमानघन** अहंकारनिविड, पृच्छामि त्वाम्। कया **अविद्यया क्रियसे** त्वम्। कीदृशम्? **आसेदु** आसीदति तच्छीलं भवत्युपस्थातृ इत्यर्थः। कानि? **अमूनीन्द्रियाणि** चक्षुरादीनि। किंविशिष्टानि? **निजमुखप्रेक्षीणि** स्वायत्तवृत्तीनि। कस्मै? **तत्तद्गोचरभुक्तये**। ते ते प्रतिनियता गोचरा इष्टानिष्टविषयास्तत्तद्गोचराः। तेषां भुक्तिरनुभूतिस्तदर्थम्। मनःप्रणिधानाभावे चक्षुरादीनां स्वस्वविषयव्यापारानुपलम्भादेवमुच्यते। हे **कृतिन्**, गुणदोषविचारणस्मरणादिप्रधान, किं **पूर्या** पूरयितुं शक्या। कासौ? **आशा** आकाङ्क्षा। कस्य? **तव**। कैः? **इमकैः** संबद्धवर्तमानप्रतिनियतरूपादिगोचराचारित्वादल्पैरेभिरिन्द्रियैः। कीदृशैः? **रङ्कैः** प्रतिनियतार्थोपभोगबद्धदुर्वारनिर्बन्धत्वाद्रङ्कप्रायैः। कीदृशी तवाशा यतः? **विश्वचरी** सकलजगत्कवलनपरा। यत एवं ततो **भज** सेवस्व त्वम्। किं तत्? **यौवराज्यं** शुद्धस्वात्मानुभूतियोग्यतालक्षणं कुमारपदम्। एकत्ववितर्कावीचाराख्यशुक्लध्याननिष्ठतामित्यर्थः। किं कुर्वत्? **सजद्** निर्व्याजभक्त्यानुरक्ततया तन्मयीभवत्? क्व? **सवितरि** जनके। कीदृशे? **स्वे** निजे। परमब्रह्मणीत्यर्थः। पुनः कीदृशे? **विश्वैश्वर्यचणे** समस्तवस्तुविस्ताराधिपत्येन प्रतीते। यथाह—

तुभ्यं नमः परमचिन्मयविश्वकर्त्रे,
तुभ्यं नमः परमचिन्मयविश्वभोक्त्रे।
तुभ्यं नमः परमचिन्मयविश्वभर्त्रे,
तुभ्यं नमः परमकारणकारणाय॥

विषयाणामास्वादनक्षणरामणीयकानन्तरात्यन्तकटुकास्वादत्वप्रतिपादनपूर्वकमाविर्भावानन्तरोद्भावितवृष्णापुनर्नवीभावं तिरोभावं भावयन् पृथग्जनानां तदर्थं स्वाभिमुखं विपदाकर्षणमनुशोचति—

**सुधागर्वं खर्वन्त्यभिमुखहृषीकप्रणयिनः,**
**क्षणं ये तेष्वूर्ध्वं विषमपवदन्त्यङ्ग विषयाः।**
**त एवाविर्भूय प्रतिचितधनायाः खलु तिरो,—**
**भवन्त्यन्धास्तेभ्योप्यहह किमु कर्षन्ति विपदः॥ ४३॥**

**अङ्ग** इति प्रियत्वामन्त्रणे । **अपवदन्ति** उपक्रोशन्ति । तत्साध्यं मोहमूर्छासंतापादिकं कुर्वन्तीत्यर्थः । के ? **तेपि परमोत्तमा विषयाः** स्रग्वनिताचन्दनादयः । किं तत् ? **विषं** गरलम् । कथम् ? **ऊर्ध्वं** तत्क्षणादनन्तरम् । ये किम् ? **ये खर्वन्ति** खण्डयन्ति । कम् ? **सुधागर्वम**ऽमृतस्यात्मोत्कर्षसंभावनम् । अमृतादपि रम्यतां धारयन्तीत्यर्थः । किंविशिष्टा सन्तः ? **अभिमुखहृषीकप्रणयिनः** अभिमुखैः स्वग्रहणोत्सुकैर्हृषीकैरिन्द्रियैः प्रणयिनो यथास्वं परिचयभाजः । विषयविषयिसन्निकर्षविशेषसूचिका श्रुतिर्यथा—

**पुट्ठं सुणेदि सद्दमऽपुट्ठं पुण पस्सदे रूवं ।**
**गन्धं रसं च फासं पुट्ठापुट्ठं वियाणादि ॥**

एवमिष्टेन्द्रियार्थानामापातमात्ररमणीयत्वावसानकटुकत्वे निर्दिश्य क्षणभंगुरत्वतृष्णासंतापकारित्वे निर्दिशन्नाह—**तिरोभवन्ति** उपभोगयोग्यतारूपं त्यजन्ति । अनुपभोग्या भवन्तीत्यर्थः । के ? **त एव** तादृग्रम्या विषया एव । कथम् ? **खलु** निश्चयेन । कीदृशाः सन्तः ? **प्रतिचितधनायाः** प्रतिवर्धितगृद्धयः । किं कृत्वा ? **आविर्भूय** उपभोगयोग्यतारूपेण परिणम्य । उक्तं च—

**आरम्भे तापकान् प्राप्तावऽतृप्तिप्रतिपादकान् ।**
**अन्ते सुदुस्त्यजान् कामान् कामं कः सेवते सुधीः ॥**

अथानुशोचनामाह—**अहह कष्टं, किमु कर्षन्ति** किं स्वाभिमुखमानयन्ति । के ? **अन्धास्तत्तादृग्विषयतत्त्वानभिज्ञाः** । काः ? **विपद्** आपदः । किमर्थम् ? **तेभ्योपि** तत्तादृग्विषयेभ्यः । अपिर्विस्मयशोचने ॥

विषयाणामिहामुत्र चात्यन्तं चैतन्याभिभवनिबंधनत्वमभिधत्ते—

**किमपीदं विषयमयं विषमतिविषमं पुमानयं येन ।**
**प्रसभमभिभूयमानो भवे भवे नैव चेतयते ॥ ४४ ॥**

**इदं** प्रतीयमानं **विषयमयं** विषयात्मकं **विषं किमप्यलौकिकमतिविषमम**ऽत्यन्तकष्टं वर्तते । येन किम् ? **येन प्रसभं** हठाद**भिभूयमानो**

वैभाविकं भावमापाद्यमानोऽयं स्वसंवेदनसुव्यक्तः पुमानात्मा नैव चेतयते ज्ञानचेतनां न लभते एव। क? भवे भवे जन्मनि जन्मनि। लौकिकेन हि विषेणाभिभूतस्तद्भवे एव न चेतयते। विषयविषेण पुनरभिभूतोऽनन्तेष्वपि भवेषु न चेतयते इत्यस्यालौकिकत्वम्। ततो ज्ञानचेतनापीयूषपिपासूनामस्माद्विरमणमेव श्रेयः।

एवमिन्द्रियपरिहारलक्षणमपहृतसंयममुत्तमप्रकारेण भावनाविषयीकृत्येदानीं तमेव मध्यमजघन्यप्रकाराभ्यां भावयितुमुपक्रमते—

**साम्यायाक्षजयं प्रतिश्रुतवतो मेऽमी तदर्थाः सुखं,**
**लिप्सोर्दुःखविभीलुकस्य सुचिराभ्यस्ता रतिद्वेषयोः।**
**व्युत्थानाय खलु स्युरित्यखिलशस्तानुत्सृजेद्दूरत,-**
**स्तद्विच्छेदननिर्दयानथ भजेत्साधून्परार्थोद्यतान् ॥ ४५ ॥**

उत्सृजेत् त्यजेत् संयमार्थी। कान्? तानक्षार्थान्। किंविशिष्टान्? अखिलशः समस्तान्। कस्मात्? दूरतो विप्रकृष्टात्। कथम्? इति। किमिति? स्युर्भवेयुः। के? अमी सन्निहितास्तदर्था अक्षार्थाः। कस्मै? व्युत्थानाय झगित्युद्बोधाय। कयोः? रतिद्वेषयो रागापरागयोः। कथम्? खलु स्फुटम्। कीदृशा यतः? सुचिराभ्यस्ता अनादिकालं भाविताः। कस्य? मे मम। किं कृतवतः? प्रतिश्रुतवतोऽङ्गीकृतवतः। कम्? अक्षजयमिन्द्रियवशक्रियाम्। कस्मै? साम्याय उपेक्षासंयमसिद्ध्यर्थम्। किं चिकीर्षोः? लिप्सोः प्राप्तुमिच्छोः। किं तत्? सुखम्। तथा दुःखविभीलुकस्य दुःखाद्विशेषेण भयं शीलयतः। सेयं मध्यमवृत्त्येन्द्रियसंयमभावना। अत्र हि विषयाणां बाह्यवृत्त्या आत्मनो दूरीकरणं, न पुनः पूर्ववदन्तर्वृत्त्या आत्मनस्तेभ्यो व्यावर्तनम्। अथ तमेव जघन्यवृत्त्या निर्दिशति—अथ अथवा भजेत्सेवेत तद्भावनायामसमर्थः साधुः। कान्? साधून् चिरप्रव्रजितान्मुनीन्। कीदृशान्? तद्विच्छेदननिर्दयान् तेषां विषयाणां विच्छेदने दूरीकरणे कर्कशान्। कीदृशान् तान्? परार्थोद्यतान् परप्रयोजनोद्युक्तान्। सेयं जघन्यवृत्त्येन्द्रियसंयमभावना। अत्र हि परद्वारेण विषयापसारणम्॥

स्वयं विषयदूरीकरणलक्षणं मध्यममपहृतसंयमभेदं प्रत्युद्यमयति—

**मोहाज्जगत्युपेक्ष्येपि छेत्तुमिष्टेतराशयम् ।**
**तथाभ्यस्तार्थमुज्झित्वा तदन्यार्थं पदं व्रजेत् ॥ ४६ ॥**

**व्रजेद्** गच्छेत् संयमार्थी । किं तत् ? **पदं** स्थानम् । किंविशिष्टम् ? **तद-न्यार्थं** तेभ्य इष्टानिष्टतयाभ्यस्तेभ्योर्थेभ्योऽन्ये तथानभ्यस्ता अर्था यस्य यस्मिन्वा तत् तदन्यार्थम् । किं कृत्वा ? **उज्झित्वा** त्यक्त्वा । किं तत् ? पदम् । किंविशिष्टम् ? **तथाभ्यस्तार्थ**मिष्टानिष्टतया पुनः पुनः सेवित-विषयम् । किं कर्तुम् ? **छेत्तु**मपनेतुम् । कम् ? **इष्टेतराशयम्** इष्टानिष्ट-वासनाम् । कस्मात् ? **मोहा**दज्ञानात् प्रवृत्तम् । क्व ? **जगति** चराचरे लोके । किंविशिष्टेपि ? **उपेक्ष्येपि** वस्तुत उपेक्षणीयेपि ॥

मनोविक्षेपकारणकरणगोचरापसारणपरायणं गुर्वादिकमभिनन्दति—

**चित्तविक्षेपिणोक्षार्थान् विक्षिपन् द्रव्यभावतः ।**
**विश्वाराट् सोयमित्यार्यैर्बहुमन्येत शिष्टराट् ॥ ४७ ॥**

**मन्येत** प्रतिपद्येत । कोसौ ? **शिष्टराट्** शिष्टानां तत्त्वार्थश्रवणग्रहणसं-पादितगुणानां राड् राजा, शिष्टेषु वा राजते इति । कैः ? **आर्यैः** । कथं कृत्वा ? **बहु** प्रभूतम् । कथम् ? इति वर्तते । कोसौ ? **अयं** दृश्यमानः शिष्टराट् । कीदृशः ? **स** प्रसिद्धो **विश्वाराट्** । विश्वस्मिन् राजते इति विश्वाराड् जगन्नाथः । "विश्वस्य वसुराटोः" इति दीर्घः । किं कुर्वन्नसौ तथा मन्येत ? **विक्षिपन्** विशेषेण प्रेरयन् अपसारयन् । कान् ? **अक्षा-र्थान्** इंद्रियार्थान् । काभ्याम् ? **द्रव्यभावतो** द्रव्यतो बहिर्वर्तिनो भाव-तश्चान्तर्वृत्तीन् । कीदृशानुभयानपि ? **चित्तविक्षेपिणो** रागद्वेषाद्युद्भाव-नेन मनसः क्षोभकरान् ।

तथोत्तममध्यमाधमभेदात्त्रिप्रकारं प्राणिपरिहाररूपमपहृतसंयमं प्रपञ्च-यन्नाह—

**बाह्यं साधनमाश्रितो व्यसुवसत्यन्नादिमात्रं स्वसाद्,-**
**भूतज्ञानमुखस्तदभ्युपसृतान् जन्तून्यतिः पालयन् ।**

**स्वं व्यावर्त्य ततः सतां नमसितः स्यात् तानुपायेन तु,**
**स्वान्मार्जन् मृदुना प्रियः प्रतिलिखन्नप्याहतस्तादृशा॥४८॥**

स्यात्। कोसौ? **यतिः**। कीदृशः? **नमसितः** पूजितः। केषाम्? **सताम्**। साधुभिः पूज्यते इत्यर्थः। किं कुर्वन्? **पालयन्** रक्षन्। कान्? **जन्तून्** प्राणिनः। कीदृशान्? **तदभ्युपसृतान्** प्रासुकवसत्यादावुपनिपतितान्। किं कृत्वा? **व्यावर्त्य** तद्वस्तुत्यागेन वियोगोपघातादिचिन्तापरिहारेण वा प्रच्याव्य। कम्? **स्वमात्मानम्**। केभ्यः? **ततस्तेभ्यस्तथा**भूतजन्तुभ्यः। कीदृशः सन्? **आश्रितोऽभ्युपगतः**। किं तत्? **साधनं** ज्ञानाद्युपकरणम्। कीदृशम्? **बाह्यं व्यसुवसत्यन्नादिमात्रम्**। विगता असवः प्राणास्तद्योगात्प्राणिनो यस्मात्तद् व्यसु प्रासुकम्। तच्च तद्वसत्यन्नादिमात्रं च। वसतिर्यत्र स्थितो ज्ञानादिकमभ्यस्यति। अन्नं यदुपयोगात्तदुपचिनोति। आदिशब्दात् पुस्तकसहायादिग्रहः। वसतिश्चान्नं च वसत्यन्ने। ते आदी यस्य तद्वसत्यन्नादि। तदेव तन्मात्रम्। अविशेषार्थो मात्रट् प्रत्ययः। पुनः कीदृशः? **स्वसाद्भूतज्ञानमुखः** स्वाधीनज्ञानचरणकरणः। ज्ञानं मुखे यस्य तज्ज्ञानमुखं ज्ञानादिकम्। सोयमुत्तमः प्राणिसंयमः। तुर्विशेषे। **स्याद्भवेत्**। कोसौ? यतिः। कीदृशः? **प्रियोऽभि**मतः। केषाम्? **सताम्**। किं कुर्वन्? **मार्जन्** शोधयन् प्रतिलिखन्। कान्? **तान्** तदभ्युपसृतान् जन्तून्। केन? **उपायेन** पिच्छादिना। कीदृशेन? **मृदुना** उपलक्षणात्प्रागुक्तपञ्चगुणेन। कस्मात्? **स्वा**दात्मीयाच्छरीरादेः। सोयं मध्यमः प्राणिसंयमः। तथा यतिः **सतामाहतः** संप्रतिपन्नः स्यात्। किं कुर्वन्? **प्रतिलिखन्** अपनुदन्। कान्? तान् तदभ्युपसृतान् जन्तून्। कस्मात्? स्वात्। केन? उपायेन। कीदृशेन? **तादृशा** यथोक्तप्रतिलेखनाऽलाभे तत्तुल्येन। अपि समुच्चये।

अपहृतसंयमस्फारीकरणाय शुद्ध्यष्टकमुपदिशति—

**भिक्षेर्याशयनासनविनयव्युत्सर्गवाङ्मनस्तनुषु।**
**तन्वन्नष्टसु शुद्धिं यतिरपहृतसंयमं प्रथयेत्॥ ४९॥**

**यतिः** संयमपालनोद्यतः साधुः **प्रथयेत्** पृथूकुर्यात्। कम्? **अपहृतसंयमम्**। किं कुर्वन्? **तन्वन्** विस्तारयन्। काम्? **शुद्धिं** निरवद्य-

ताम् । कासु ? भिक्षादिषु । कतिषु ? अष्टसु । भिक्षा चेर्या च शयनासनं च विनयश्च व्युत्सर्गश्च वाक् च मनश्च तनुश्च, तास्वेवम् ॥ तत्र भिक्षाशुद्धिः पिण्डशुद्धौ व्याख्याता । तत्परस्य पुनर्मुनेरशनं गोचाराक्षम्रक्षणोदराग्निप्रशमनभ्रमराहारश्वभ्रपूरणनामभेदात्पञ्चधा स्यात् । तत्र गोर्बलीवर्दस्येव चारोऽभ्यवहारो गोचारः प्रयोक्तृजनसौन्दर्यनिरीक्षणविमुखतया यथालाभमनपेक्षितस्वादोचितसंयोजनाविशेषं चाभ्यवहरणात् । तथा अक्षस्य शकटीचक्राधिष्ठानकाष्ठस्य म्रक्षणं स्नेहेन लेपनमक्षम्रक्षणम् । तदिवाशनमप्यक्षम्रक्षणमितिरूढम्, येन केनापि स्नेहेनेव निरवद्याहारेणायुषोऽक्षस्येवाभ्यङ्गं प्रतिविधाय गुणरत्नभारपूरिततनुशकट्याः समाधीष्टदेशप्रापणनिमित्तत्वात् । तथा भाण्डागारवदुदरे प्रज्वलितोऽग्निः प्रशम्यते, येन शुचिनाऽशुचिना वा जलेनेव सरसेन विरसेन वाशनेन तदुदराग्निप्रशमनमिति प्रसिद्धम् । तथा भ्रमरस्येवाहारो भ्रमराहारो दातृजनपुष्पपीडानवतारात् परिभाष्यते । तथा श्वभ्रस्य गर्तस्य येन केनचित्कचारेणेव स्वादुनेतरेण वाहारेणोदरगर्तस्य पूरणात् श्वभ्रपूरणमित्याख्यायते । ईर्याव्युत्सर्गवाक्शुद्धयः समितिषु व्याख्याताः । शयनासनविनयशुद्धी तु तपःसु वक्ष्येते । मनःशुद्धिस्तु भावशुद्धिः कर्मक्षयोपशमजनिता मोक्षमार्गरुच्याहितप्रसादा रागाद्युपप्लवरहिता च स्यात् । सैव च सर्वशुद्धीनामुपरि स्फुरति तदेकमूलत्वादाचारप्रकाशनायाः । तथा चोक्तम्—

सर्वासामेव शुद्धीनां भावशुद्धिः प्रशस्यते ।
अन्यथालिङ्ग्यते पत्यमन्यथालिङ्ग्यते पतिः ॥

कायशुद्धिस्तु निरावरणाभरणा निरस्तसंस्कारा यथाजाता मलधारिणी निराकृताङ्गविकारा सर्वत्र प्रयत्नवृत्तिः प्रशमं मूर्तमिव प्रदर्शयन्ती च स्यात् । तस्यां च सत्यां न स्वतोन्यस्य नाप्यन्यतः स्वस्य भयमुद्भवति । स एष शुद्ध्यष्टकप्रपञ्चः समित्यादिभ्योऽपोद्धृत्य सूत्रेऽन्वाख्यायते संयमस्यातिदुष्करतया परिपालने सुतरां बालाशक्तानगारवर्गस्य प्रयत्नप्रतिसंधानार्थमिति ।

उपेक्षासंयमपरिणतं लक्षयति—

**तेमी मत्सुहृदः पुराणपुरुषा मत्कर्मक्लृप्तोदयैः,**
**स्वैः स्वैः कर्मभिरीरितास्तनुमिमां मन्नेतृकां मद्धिया ।**

**चञ्चम्यन्त इमं न मामिति तदाबाधे त्रिगुप्तः परा,—**
**क्लिष्ट्योत्सृष्टवपुर्बुधः समतया तिष्ठत्युपेक्षायमी ॥ ५० ॥**

**बुधो** देशकालविधानज्ञ आत्मदेहान्तरज्ञो वा **उपेक्षायमी** उपेक्षासंयमपरिणतः **समतया** इष्टानिष्टयो–रागद्वेषोपरमेण **तिष्ठति** आस्ते। मनागपि न विक्रियते इत्यर्थः। कथंभूतो भूत्वा? **उत्सृष्टवपुर्ममत्वव्यावर्तनेन** परित्यक्तशरीरः। कया? **पराक्लिष्ट्या** परेषामुपद्रावकजीवानामनुपघातेन। कीदृशः सन्? **त्रिगुप्तः** सम्यग्निगृहीतमनोवाक्कायव्यापारः। क्व सति? **तदाबाधे** तैरुपद्रावकजीवैः क्रियमाणे दुःखे। कथं समतया तिष्ठति? **इति** अनेन भावनाविशेषसौष्ठवलक्षणेन प्रकारेण। तमेव दर्शयति—**चञ्चम्यन्ते** अत्यर्थं पुनः पुनर्वा खादन्ति। के? **अमी** व्याघ्रादिजीवाः। काम्? **इमां** दृश्यमानां तनुमौदारिकशरीरम्। किंविशिष्टाम्? **मन्नेतृकाम्**। अहं चिदात्मा नेता प्रयोक्ताऽस्याः काहार इव कावव्या मन्नेतृका, ताम्। कयाचञ्चम्यन्ते? **मद्धिया** मद्बुद्ध्या। शरीरं मां बुद्ध्वेत्यर्थः। कीदृशाः सन्तः? **ईरिताः** प्रेरिताः प्रयुक्ताः। कैः? **कर्मभिः** परघातादिभिः। कीदृशैः? **स्वैः** स्वैर्निजैर्निजैः। पुनः कीदृशैः? **मत्कर्मक्लृप्तोदयैः**। मम कर्म उपघातादिरूपं मत्कर्म। मत्कर्मणा क्लृप्तः सहकारिभावेन निर्मित उदयो विपाकः स्वफलदातृत्वं येषां तानि तथोक्तानि। कीदृशा अमी? **ते** परमागमप्रसिद्धाः। पुराणपुरुषाः परमात्मानः सर्वजीवानां द्रव्यतस्तथाभावात्। तदुक्तम्—

**सिद्धत्वे यदिह विभाति वैभवं वो**
**बद्धत्वेप्यखिलतया किलेदमासीत्।**
**बद्धत्वे न खलु तथा विभातमित्थं,**
**बीजत्वे तरुगरिमात्र किं विभाति ॥**

पुनः कीदृशाः? **मत्सुहृदो** मया सदृशाः 'सव्वे सुद्धा हु सुद्धणया' इति वचनात्। अथवाऽनादिसंसारे पित्रादिपर्यायेण ममोपकारकाः। यदाह—

**सर्वे तातादिसंबन्धा नासन् यस्याङ्गिनोङ्गिभिः।**
**सर्वैरनेकधा सार्द्धं नासावङ्ग्यपि विद्यते ॥**

एवं च तनुसंसर्गाज्जीवस्य खाद्यत्वे प्रसक्ते सतीदमाह—**इमं न मामिति**। **न** चञ्चम्यन्ते। के? अमी। कम्? **इमं** स्वसंवेदनप्रत्यक्षं मां

टङ्कोत्कीर्णैकज्ञायकभावस्वभावम्। व्यवहारस्तु यद्यमी मां खादन्ति तदा खादन्तु इति क्रियासमभिहारार्थेन यङा द्योत्यते, स्वात्मसंवित्तिनिष्ठस्य बहिर्दुःखाऽचेतकत्वात्। तथा चोक्तम्—

आत्मानुष्ठाननिष्ठस्य व्यवहारबहिःस्थितेः।
जायते परमानन्दः कश्चिद्योगेन योगिनः॥
आनन्दो निर्दहत्युद्धं कर्मेन्धनमनारतम्।
नचासौ खिद्यते योगी बहिर्दुःखेष्वचेतनः॥

अपि च—

आत्मदेहान्तरज्ञानजनिताल्हादनिर्वृतः।
तपसा दुष्कृतं घोरं भुञ्जानोपि न खिद्यते॥

इति संयमप्रकरणम्।

अथोपेक्षासंयमसिद्ध्यङ्गे तपोरूपे धर्मेऽनुष्ठातॄनुत्साहयन्नाह—

**उपेक्षासंयमं मोक्षलक्ष्मीश्लेषविचक्षणम्।**
**लभन्ते यमिनो येन तच्चरन्तु परं तपः॥ ५१॥**

**चरन्तु** अनुतिष्ठन्तु। के? **यमिनः** साधवः। किं तत्? **तत्तपः**। किंविशिष्टम्? **परम्**उत्कृष्टम्। स्वाध्यायध्यानरूपमित्यर्थः। तथा चोक्तम्—

स्वाध्यायाद् ध्यानमध्यास्तां ध्यानात्स्वाध्यायमामनेत्।
ध्यानस्वाध्यायसंपत्त्या परमात्मा प्रकाशते॥

येन किम्? **येन लभन्ते** यमिनः। कम्? **उपेक्षासंयमम्**। कीदृशम्? **मोक्षलक्ष्मीश्लेषविचक्षणं** मोक्षलक्ष्म्या अनन्तज्ञानादिचतुष्टयलक्षणाया श्लेषे आलिङ्गने विचक्षणं चतुरदूतप्रायं तपः।

अथ त्यागात्मकं धर्ममवगमयति—

**शक्त्या दोषैकमूलत्वान्निवृत्तिरुपधेः सदा।**
**त्यागो ज्ञानादिदानं वा सेव्यः सर्वगुणाग्रणीः॥ ५२॥**

अयमत्राभिप्रायः । परिग्रहनिवृत्तिरनियतकाला यथास्वशक्ति त्यागः । कायोत्सर्गः पुनर्नियतकालः सर्वोत्सर्गरूपः । कर्मोदयवशादसन्निहितविषयगर्द्धोत्पत्तिनिषेधः शौचम् । त्यागः सन्निहितापायः । इति शौचादप्यस्य भेदः । **सेव्योऽसकृदभ्यसनीयः** साधुभिः । कोसौ ? **त्यागः** । किंरूपः ? **निवृत्तिर्व्यावृत्तिपरिणामः** । कस्मात् ? **उपधेः** परिग्रहात् । कस्मात् ? **दोषैकमूलत्वाद्** रागादीनां प्रधानकारणत्वात् । कया ? **शक्त्या** यथात्मशक्ति । कथम् ? **सदा** सर्वदा । पक्षान्तरमाह—**ज्ञानादिदानं वा** ज्ञानादिदानरूपो वा त्यागः सेव्यः साधुभिः । कीदृशो यतः ? **सर्वगुणाग्रणीः** सर्वेषां गुणानां मध्ये प्रधानम् । प्रथमपक्षे विशेषणमिदम् । उक्तं च—

अनेकाधेयदुष्पूर आशागर्तश्चिरादहो ।
चित्रं यत्क्षणमात्रेण त्यागेनैकेन पूर्यते ॥
कः पूरयति दुष्पूरमाशागर्तं दिने दिने ।
यत्र समस्तमाधेयमाधारत्वाय कल्पते ॥

ज्ञानदानमहिमानमखिलदानमाहात्म्यन्यग्भावेन पुरस्कुर्वन्नाह—

**दत्ताच्छर्म किलैति भिक्षुरभयादा तद्भवाद्भेषजा,-**
**दा रोगान्तरसंभवादशनतश्चोत्कर्षतस्तद्दिनम् ।**
**ज्ञानात्त्वाशुभवन्मुदो भवमुदां तृप्तोऽमृते मोदते,**
**तद्दातॄंस्तिरयन् ग्रहानिव रविर्भातीतरान् ज्ञानदः ॥ ५३ ॥**

**किल** एवं ह्यागमे श्रूयते—**एति** गच्छति प्राप्नोति । कोसौ ? **भिक्षुः** संयमी । किं तत् ? **शर्म** सुखम् । कस्मात् ? **अभयात्** । किंविशिष्टात् ? **दत्ताद्** 'मा कुतश्चिद्भैषीः' इति संकल्पेन वितीर्णात् । कियन्तं कालम् ? **आ तद्भवाद्** वर्तमानजन्म यावत् । कस्मात् ? **उत्कर्षतः** प्रकर्षवृत्त्या । तथा भिक्षु**र्भेषजा**दौषधाद्दत्ताच्छर्म एति । कियन्तं कालम् ? **आ रोगान्तरसंभवात्** । कस्मात् ? उत्कर्षतः । ज्वरघ्नौषधदानेन हि निवर्तिते ज्वरे तावदेव भिक्षुः सुखी भवति यावद्रक्तपित्तं कासादिर्वा नोत्पद्यते । तथाऽ**शनतो** भोजनाद्दत्ताद्भिक्षुः शर्मैति । कियन्तं कालम् ? **तद्दिनमन्न-**

दानदिवसं यावत् । कस्मात् ? उत्कर्षतः, प्रातः पुनः क्षुत्पीडाप्रादुर्भावोपलम्भात् । **ज्ञानात्तु** पुनर्दत्ताद्भिक्षुर्मोदते नित्यमाल्हादते । क ? **अमृते** मोक्षे । कथंभूतो भूत्वा ? **तृप्तः** सुखितः । कासाम् ? **भवमुदां** संसारसुखानाम् । कीदृशाज्ज्ञानात् ? **आशुभवन्मुदः** आशु सद्यो भवन्ती संजायमाना मुत्प्रीतिर्यस्मात्तदेवम् । यत एवं **तत्** तस्माद्भाति शोभते । कोसौ ? **ज्ञानदः** साधुः । किं कुर्वन् ? **तिरयन्** तिरस्कुर्वन् प्रभावेन हापयन् । कान् ? **दातॄन्** । कीदृशान् ? **इतरान्** अभयदानादिकारिणः । क इव कान् ? **रविरिव ग्रहान्** । यथा सूर्य इतरान् चन्द्रादिग्रहान् तिरयन् छादयन् भाति तथा प्रस्तुतोपि त्यागः ।

अथाकिंचन्यलक्षणधर्मानुष्ठायिनः परमाद्भुतफलप्रतिलम्भमभिधत्ते—

**अकिञ्चनोऽहमित्यस्मिन् पथ्यक्षुण्णचरे चरन् ।**
**तदृष्टचरं ज्योतिः पश्यत्यानन्दनिर्भरम् ॥ ५४ ॥**

**पश्यति** अनुभवति साधुः । किं तत् ? तट्टङ्कोत्कीर्णैकज्ञायकभावस्वभावमात्माख्यं **ज्योतिः** । कीदृशम् ? **अदृष्टचरं** पूर्वं कदाचिदप्यनुपलब्धम् । पुनः कीदृशम् ? **आनन्दनिर्भरमानन्देना**ल्हादेन निश्चितं भ्रियमाणं पूर्यमाणम् । किं कुर्वन् ? **चरन्** भावकभावेन प्रवर्तमानः । क ? **पथि** मार्गे प्राप्त्युपाये । कीदृशे ? **अकिञ्चनोहमित्यस्मिन्** नास्ति किंचनोपात्तमपि शरीरादिकं मम इत्यकिंचनोहमस्मीत्येवंभूते । उपात्तेष्वपि हि शरीरादिषु संस्कारादित्यागान्ममेदमित्यभिसंधिनिवृत्तिराकिंचन्यमिष्यते । पुनः कीदृशे ? **अक्षुण्णचरे** पूर्वं कदाचिदप्यनवगाहिते । आकिंचन्यम् ।

अथ ब्रह्मचर्यस्वरूपं धर्मं निरूपयन्नाह—

**चरणं ब्रह्मणि गुरावस्वातन्त्र्येण यन्मुदा ।**
**चरणं ब्रह्मणि परे तत्स्वातन्त्र्येण वर्णिनः ॥ ५५ ॥**

भवति । किम् ? **तच्चरणं** प्रवृत्तिः । कस्य ? **वर्णिनो** ब्रह्मचारिणो मैथुनान्निवृत्तस्य । क ? **ब्रह्मणि** ज्ञाने आत्मनि वा । किंविशिष्टे ? **परे** उत्कृष्टे । केन ? **स्वातन्त्र्येण** स्वच्छन्दवृत्त्या । यत्किम् ? **यच्चरणम्** ।

केन ? **अस्वातन्त्र्येण** तदधीनतया । क ? **गुरौ** उपदेष्टरि । कस्मिन्वि-पथे ? ब्रह्मणि आत्मनि । कया ? **मुदा** प्रीत्या । यो हि चतुर्थं व्रतमास्थितो व्यवहारेणाध्यात्मगुरोः परमार्थेन स्वात्मनश्चायत्तः सन् प्रीत्या वर्तते स परमं ज्ञानं स्वच्छन्दमनुभवतीति भावः ॥ ब्रह्मचर्यम् ।

इदानीं क्षमादिधर्माणां गुप्त्यादिभ्योऽपोद्धारव्याहारपुरस्सरमुत्तमविशेषणं व्याचष्टे—

**गुप्त्यादिपालनार्थं तत एवापोद्धृतैः प्रतिक्रमवत् ।**
**दृष्टफलनिर्व्यपेक्षैः क्षान्त्यादिभिरुत्तमैर्यतिर्जयति ॥ ५६ ॥**

**जयति** सर्वोत्कर्षेण वर्तते । कोसौ ? **यतिः** शुद्धोपयोगायतमानो मुमुक्षुः । कैः ? **क्षान्त्यादिभिः** क्षमादिलक्षणैर्दशभिर्धर्मैः । किंविशिष्टैः ? **उत्तमैरुत्कृष्टैः** । पुनः किंविशिष्टैः ? **दृष्टफलनिर्व्यपेक्षैर्यतः** । दृष्टफले लाभादौ निर्गता विशेषेणापेक्षा आकाङ्क्षा येषां येभ्यो वा त एवम् । लाभादिनिरपेक्षत्वादुत्तमैरित्यर्थः । पुनरपि किंविशिष्टैः ? **अपोद्धृतैः** पृथक्कृत्योक्तैः । केभ्यः ? **तत एव** गुप्त्यादिभ्यः । किंवत् ? **प्रतिक्रमवत्** कृतदोषनिराकरणलक्षणेन प्रतिक्रमेण तुल्यम् । किमर्थम् ? **गुप्त्यादि-पालनार्थं** गुप्तिसमितिव्रतानां रक्षणार्थम् ॥ इत्युत्तमक्षमादिदशलक्षण-धर्माधिकारः ।

अथ मुमुक्षूणामनुप्रेक्षाचिन्तनाधीनचेतसां बहुप्रत्यूहेपि मोक्षमार्गे कश्चि-त्प्रत्यवायो न स्यादित्युपदेशपुरस्सरं नित्यं तच्चिन्तने तानुद्योगयन्नाह—

**बहुविघ्नेपि शिवाध्वनि यन्निघ्नधियश्चरन्त्यमन्दमुदः ।**
**ताः प्रयतैः संचिन्त्या नित्यमनित्याद्यनुप्रेक्षाः ॥ ५७ ॥**

**संचिन्त्याः** शरीरादिसङ्गतत्वेन भावनीयाः । काः ? **ता अनित्याद्य-नुप्रेक्षाः** । अनुप्रेक्ष्यन्ते शरीराद्यनुगतत्वेन स्तिमितचेतसा दृश्यन्ते इत्यनु-प्रेक्षाः । अनित्यं रूपमादिर्येषामशरणादीनां तान्यनित्यादीनि अनित्याशरण-संसारैकत्वान्यत्वाशुच्यास्रवसंवरनिर्जरालोकबोधिदुर्लभधर्मस्वाख्यातत्वानि । तान्येवानुप्रेक्षा अनित्याद्यनुप्रेक्षाः । यदा पुनरनुप्रेक्षणमनुप्रेक्षेति भावसा-

धनः कृत्प्रत्ययस्तदा भावतद्वतोः कथंचिद्भेदात्समासः । अनुप्रेक्षा इति भावसाधनत्वे वचनविरोधः, कर्मसाधनत्वे सामानाधिकरण्याभाव इति चेन्न वा, कृदभिहितस्य द्रव्यवद्भावात् । सामानाधिकरण्यसिद्धिश्चोभयोः कर्मसाधनत्वात् । कैः ? प्रयतैः प्रयत्नपरैर्मुमुक्षुभिः । कथम् ? नित्यं सततम् । यदायत्तमनसां किं स्यादित्याह—यन्निम्नधियो यास्वनुप्रेक्षास्वायत्तमतयः सन्तो यतयश्चरन्ति विहरन्ति । क्व ? शिवाध्वनि मोक्षमार्गे । किंविशिष्टे ? बहुविघ्नेपि । बहवो विघ्नाः प्रतिबन्धका यस्मिन् । किंभूता भवन्तः ? अमन्दमुद उद्रिक्तानन्दाः ।

आयुःकायेन्द्रियबलयौवनानां क्षणभङ्गुरत्वचिन्तनान्मोहोपमर्दमुपदिशति—

चुलुकजलवदायुः सिन्धुवेलावदङ्गं,
करणबलममित्रप्रेमवद्यौवनं च ।
स्फुटकुसुमवदेतत् प्रक्षयैकव्रतस्थं,
क्वचिदपि विमृशन्तः किं नु मुह्यन्ति सन्तः ॥ ५८ ॥

नु अहो किं मुह्यन्ति अनित्यताज्ञानहीना ममत्वाधीना वा भवन्ति । न मुह्यन्तीत्यर्थः । के ? सन्तः साधवः । क्व ? क्वचिदपि आयुरादीनामनन्तरोक्तानां लक्ष्म्यादीनां चोत्तरत्र वक्ष्यमाणानां मध्ये एकस्मिन्नप्यर्थे । कस्मिंश्चिदपि न मुह्यन्तीत्यर्थः । किं कुर्वन्तः ? विमृशन्तः प्रणिहितचेतसा चिन्तयन्तः । किं तत् ? आयुर्भवधारणकारणं कर्म । किंवत् ? चुलुकजलवत् प्रतिक्षणगलद्रूपत्वात् करपुटीकोटरप्रक्षिप्तोदकेन तुल्यम् । तथाऽङ्गं शरीरं विमृशन्तः । किंवत् ? सिन्धुवेलावत् सिन्धोः समुद्रस्य वेलया जलोच्छ्वासेन तुल्यमारोहावरोहत्वात् । यथैव हि लवणोदवेला यावदारोढव्यमारोहति । ततश्च यावदवरोढव्यमवरोहति तथेदं शरीरं यावद्वर्धितव्यं तावद्धात्वादिभिर्वर्धते । ततश्च यावद्धातव्यं तावद्धीयते । तथा चोक्तम्—

वयस्त्वा षोडशाद्बाल्यं तत्र धात्विन्द्रियौजसाम् ।
वृद्धिरासप्ततेर्मध्यं तत्रावृद्धिः परं क्षयः ॥

अपि च—

बाल्यं वृद्धिर्वयः प्रज्ञा त्विट्चक्षुःशुक्रविक्रमाः ।
दशकेषु न वर्तन्ते मनः कर्मेन्द्रियाणि च ॥

तथा **करणबलमिन्द्रियाणामर्थग्रहणशक्तिं** विमृशन्तः । किं वत् ? **अमित्रप्रेमवत्** शत्रुस्नेहेन तुल्यमुचितोपचारेपि व्यभिचारप्रकाशनात् । यथैव हि योग्यासनादिप्रतिपत्त्याऽनुसंधीयमानमप्यमित्रप्रेम विघटितुं समयमुपेक्षते तथा पथ्याहारविहारादिनोपस्क्रियमाणमपीन्द्रियाणामर्थग्रहणसामर्थ्यमपसर्तुं प्रज्ञापराधं मृगयत इत्यर्थः । तथा **यौवनं** तारुण्यं विमृशन्तः । किंवत् ? **स्फुटकुसुमवत्** सद्यो विकारित्वाद्विकसितकुसुमेन तुल्यम् । यथैव हि विकसितं माल्त्यादिकुसुमं किंचित्कालं मनोहरणीयतां प्रकाश्य सपदि विकुरुते तथा तारुण्यमपि । तथा **एतच्चायुरादिचतुष्टयं** विमृशन्तः । कीदृशम् ? **प्रक्षयैकव्रतस्थम्** । प्रक्षयो निर्मूलप्रलयः । स एवैकमुत्कृष्टं व्रतं नियमः प्रक्षयैकव्रतम् । तत्र तिष्ठति ततो न चलति तत्स्थम् । अवश्यंभावि निर्मूलप्रलयमित्यर्थः ।

एवमन्तरङ्गभावानामायुरादीनामनित्यतामनुचिन्त्य बहिरङ्गभावानामपि संपदादीनां तामनुचिन्तयन्नाह—

**छाया माध्यान्हिकी श्रीः पथि पथिकजनैः सङ्गमः सङ्गमः स्वैः,**
**खार्थाः स्वप्नेक्षितार्थाः पितृसुतदयिता ज्ञातयस्तोयभङ्गाः ।**
**सन्ध्यारागोनुरागः प्रणयरसस्पृजां ह्रादिनीदाम वैश्यं,**
**भावाः सैन्यादयोन्येप्यनुविदधति तान्येव तद्ब्रह्म दुह्यः ॥५९॥**

वर्तते । कासौ ? श्रीर्लक्ष्मीः । कीदृशी ? **छाया** प्रभा प्रकाशावरणं वा । कीदृशी ? **माध्यान्हिकी** मध्यान्हे मध्यंदिनक्षणे भवा । यथैव हि मध्यान्हच्छाया क्षणमात्रं प्रकाश्यानन्तरं तिरोभवत्येवं संपदपि किंचित्कालमुद्भूय प्रलीयते इत्यर्थः । अत्र माध्याह्निकी छायेव माध्याह्निकी छायेति लुप्तोपमालंकारः, श्रीर्माध्याह्निकी छायैवेति रूपकालंकारो वा । तल्लक्षणं यथा—

उपमैव तिरोभूतभेदा रूपकमिष्यते ।

एवमुत्तरत्रापि योज्यम् । तथा वर्तते । कोसौ ? **सङ्गमः** संयोगः । कैः सह ? **स्वैर्बन्धुभिः** । पुंसामिति सर्वत्र योज्यम् । कीदृशः ? **सङ्गमः** संयोगः । कैः सह? **पथिकजनैः** । क्व? **पथि** मार्गे । यथैव हि यतस्तत आगत्य मार्गे अध्वनीना वृक्षादिसन्निधाने किंचित्कालं विश्रम्य स्वस्वकार्य-वशाद्यत्र तत्र गच्छन्ति तथा ज्ञातयो यतस्तत आगत्यैकत्र किंचित्कालं स्थित्वा स्वस्वकार्यवशाद्यत्र तत्र गच्छन्ति। यदि वा यथा पान्थाः पूर्वादेर्दिशो मार्गे गच्छन्तः पश्चिमादेश्चागच्छन्तः किंचित्कालं संयुज्य वियुज्यन्ते तथा बन्धवोपीति व्याख्येयम् । तथा वर्तन्ते । के ? **खार्थाः** इन्द्रियार्थाः । कीदृशाः ? **स्वप्नेक्षितार्थाः** । यथैव हि स्वप्नावस्थायां निरीक्षिताः पदार्था-स्तत्काले एव प्रबोधावस्थायां वा न कांचित्स्वसाध्यामर्थक्रियां कुर्वन्ति तथा स्रग्वनिताचन्दनादिविषया अप्युपभुज्यमाना उपभुज्योज्झिता वा तापतृष्णाशान्त्यादिलक्षणां न कांचिदर्थक्रियां कुर्वन्ति । तथा वर्तन्ते । के ? **पितृसुतदयिताज्ञातयः** । माता च पिता च पितरौ । सुता च सुतश्च सुतौ पुत्रौ । दयिताः प्रियाः । ज्ञातयो बान्धवाः । पितरौ च सुतौ च दयिताश्च ज्ञातयश्च त एते । कीदृशाः ? **तोयभङ्गाः** । यथैव हि नीरतरङ्गा उद्भूय सद्यस्तिरो भवन्ति तथैव पित्रादयोपि किंचिदवस्थाय विलीयन्त इत्यर्थः । तथा वर्तते । कोसौ ? **अनुरागः** प्रीतिः । केषाम् ? **प्रणयरसस्रृजाम्** । प्रणयरसं प्रेयोरसं सृजन्ति उद्गिरन्त्याविर्भावयन्ति प्रणयरसस्रृजो मित्रसंबंधिप्रभृतयस्तेषामनुरागः । कीदृशः ? **संध्यारागः** । यथैव हि संध्याया वर्णवैचित्री कतिपयक्षणभाविनी तथा मित्रादीनां प्रीतिरित्यर्थः । तथा वर्तते । किंतत् ? **ऐश्यं** पूजार्थाज्ञाद्यैश्वर्यम् । कीदृशम्? **ह्लादिनीदाम वा** विद्युन्मालेव क्षणदृष्टनष्टत्वात् । किं बहुना? **अनुविद्-धति** अनुकुर्वन्ति । के ? **भावाः** पदार्थाः **सैन्यादयः** सैनिकरथगजतुरग-पदातिप्रभृतयः । न केवलम्, **अन्येपि** सौधोद्यानादयः । कानि ? **तान्येव** आयुरादीनि श्र्यादीनि । तद्वत्तेप्यनित्या इत्यर्थः । यत एवं **तत्** त-स्माद् **ब्रह्मः** प्रपूरयामो वयमानन्दं वा स्रावयामः । किं तत् ? **ब्रह्म** आत्म-देहान्तरज्ञानं परमज्ञानं वा । एवं चिन्तयंतस्तत्राभिषङ्गाभावाद्भुक्तोज्झित-माल्यादिवद्वियोगकालेपि न दुष्परिणामः स्यात् ॥ इत्यनित्यानुप्रेक्षा ।

संप्रत्यशरणं प्रणिधत्ते—

तत्तत्कर्मग्लपितवपुषां लब्धवल्लिप्सितार्थं,
मन्वानानां प्रसभमसुवत्प्रोद्यतं भङ्क्तुमाशाम् ।
यद्वद्वार्यं त्रिजगति नृणां नैव केनापि दैवं,
तद्वन्मृत्युर्ग्रसनरसिकस्तद्वृथा त्राणदैन्यम् ॥ ६० ॥

यद्वद्यथा नैव वार्यं नियमेन निवारयितुं न शक्यम् । किं तत्? दैवं पुराकृतमशुभं कर्म । केन ? केनापीन्द्रादिना चेतनेन मन्त्रादिनाऽचेतनेन तदुभयेन वा । क्व ? त्रिजगति त्रिषु लोकेषु । कीदृशम्? प्रोद्यतमभिमुखेनोद्युक्तम् । किं कर्तुम् ? भंक्तुं मर्दयितुम् । काम् ? आशां भविष्यदर्थवाञ्छाम् । कथम् ? प्रसभं हठात् । किंवत् ? असुवत् प्राणैस्तुल्यम् । जीवितव्यमिवाशां निरसितुं प्रोद्यतमित्यर्थः । उक्तं च—

कर्माण्युदीर्यमाणानि स्वकीये समये सति ।
प्रतिषेद्धुं न शक्यन्ते नक्षत्राणीव केनचित् ॥

केषाम् ? नृणां पुरुषाणाम् । किं कुर्वाणानाम्? मन्वानानां मन्यमानानाम् । कम् ? लिप्सितार्थं लब्धुमिष्टमर्थम् । किंवत्? लब्धवद् लब्धमिव हस्तप्राप्तं यथा । कीदृशानां सताम् ? तत्तत्कर्मग्लपितवपुषाम् । तेन तेन कर्मणा कृष्यादिना ग्लपितं निःसत्त्वीकृतं वपुः शरीरं येषां त एवम् । तद्वत् तथा नैव वार्यः । कोसौ ? मृत्युः केन ? केनापि । क्व ? त्रिजगति । कीदृशः ? ग्रसनरसिकः प्राणसंहरणे प्रसक्तः । केषाम् ? नृणाम् । यत एवं दैवं मृत्युश्चोभयमपि निराकर्तुमशक्यं तत् तस्मात् भवति । किंतत् ? त्राणदैन्यं त्राणाय शरणाय दैन्यं परानुशरणेन कारुण्याविष्करणं अत्राणेन वा शरणाभावेन दैन्यं शोकसंतापानुपतनं । कथं ? वृथा व्यर्थम् । धैर्यमेवावलम्बितुं सतामुचितमित्यर्थः ॥

कालस्य चक्रीन्द्रयोगीन्द्राणामप्यशक्यप्रतीकारत्वचिन्तनेन सर्वत्र बहिर्वस्तुनि निर्मोहतां मुमुक्षुरालम्बयति—

सम्राजां पश्यतामप्यभिनयति न किं स्वं यमश्चण्डिमानं,
शक्राः सीदन्ति दीर्घे क्व न दयितवधूदीर्घनिद्रामनस्ये ।

**आः कालव्यालदंष्ट्रां प्रकटतरतपोविक्रमा योगिनोपि,**
**व्याक्रोष्टुं न क्रमन्ते तदिह बहिरहो यत् किमप्यस्तु किं मे ६१**

**किं नाभिनयति** किं न व्यनक्ति । कोसौ ? **यमः** कृतान्तः । कम् ? **चण्डिमानं** हठात्प्राणहरणलक्षणं क्रूरत्वम् । किंविशिष्टम् ? **स्वमात्मीयम्** । केषामग्रे ? **सम्राजां** सकलचक्रवर्तिनाम् । किं कुर्वताम् ? **पश्यतामालोकमानानामपि** । तर्हि व्यञ्जयत्येव तेषां प्रसारितदृशामपि हठात्पुत्रादीनां प्राणिसंहरणान्यथानुपपत्तेः । तथा **क न सीदन्ति** न खिद्यन्ते । के ? **शक्रा** इन्द्राः । क ? **दयितवधूदीर्घनिद्रामनस्ये** । किंविशिष्टे ? **दीर्घे** चिरकालानुबन्धिनि । किं तर्हि ? **सर्वस्मिन्** प्रियाङ्गनामरणदुःखे देवेन्द्रा दैन्यमनुभवन्ति । दयिताः प्रियाः । ताश्च ता वध्वश्च दयितवध्वः तासां दीर्घनिद्रा मरणम् । तदुत्थमामनस्यं दुःखं दयितवधूदीर्घनिद्रामनस्यं । इन्द्रदयिता हि समुद्राम्भसीव सागरोपमप्रमिते स्वपत्यायुषि पल्योपमायुषो लहर्य इवोत्पद्योत्पद्य बह्व्यो विपद्यन्ते । तन्मरणदुःखेन च तत्पतयोपि चिरं वैक्लव्यमनुभवन्तीति । एवं चक्रिणामिन्द्राणां च प्रतिकर्तुमशक्योपि कालः प्रव्यक्ततपोविक्रमैर्योगीश्वरैः प्रतिविधास्यते इत्यत्राह— **आः** ( संतापप्रकोपयोः ) संतप्ये तदाक्षेपेण प्रकुप्यामि वा । **न क्रमन्ते** नोत्सहन्ते । न शक्नुवन्तीत्यर्थः । के ? **योगिनोपि** । किं विशिष्टाः ? **प्रकटतरतपोविक्रमाः** । प्रकटतरो जगद्विख्यातस्तपोविक्रमस्तपसां शक्त्यतिशयो येषां त एवम् । किं कर्तुम् ? **व्याक्रोष्टुं** प्रतिहन्तुम् । काम् ? **कालव्यालदंष्ट्राम्** । कालोऽन्तकः । स एव व्यालो भुजगो व्याघ्रादिर्वा । तस्य दंष्ट्रा महादशनः । यत एवं **तत्** तस्मादहो तत्त्वज्ञा महर्षयः । **अस्तु** भवतु । किं तत् ? **यत्किमपि** व्याधिमरणादिकम् । क ? **इह** अस्मिन्प्रतीयमाने **बहिर्बाह्ये** वस्तुनि शरीरादौ, तत्किं **मे** मम । देहादेरत्यन्तभिन्नत्वान्मम नित्यानन्दात्मकस्य न किमपि स्यादित्यर्थः । तथा चोक्तम्—

**न मे मृत्युः कुतो भीतिर्न मे व्याधिः कुतो व्यथा**
**नाहं बालो न वृद्धोहं न युवैतानि पुद्गले ॥**
**जीवोन्यः पुद्गलश्चान्य इत्यसौ तत्त्वसंग्रहः ।**
**यदन्यदुच्यते किंचित् सोस्तु तस्यैव विस्तरः ॥**

मत्तः कायादयो भिन्नास्तेभ्योऽहमपि तत्त्वतः ।
नाहमेषां किमप्यस्मि ममाप्येते न किंचन ॥

एवं भावयतो नित्यमशरणोस्मीत्युद्विग्नस्य सांसारिकभावेषु ममत्वाभावः सर्वज्ञमार्गेरतिश्च स्यात् । इत्यशरणानुप्रेक्षा ।

इदानीं संसारमनुप्रेक्षितुमाह—

**तच्चेद् दुःखं सुखं वा स्मरसि न बहुशो यन्निगोदाहमिन्द्र-**
**प्रादुर्भावान्तनीचोन्नतविविधपदेष्वा भवाद्भुक्तमात्मन् ।**
**तत्किं ते शाक्यवाक्यं हतक परिणतं येन नानन्तराति,—**
**क्रान्ते भुक्तं क्षणेपि स्फुरति तदिह वा कास्ति मोहः सगर्हः ॥**

हे आत्मन् क्षेत्रज्ञ, चेद् यदि न स्मरसि नाध्येषि त्वम् । किम् ? तद्दुःखं सुखं वा । यत्किम् ? यद्भुक्तमनुभूतं त्वया । केषु ? निगोदाहमिन्द्रप्रादुर्भावान्तनीचोन्नतविविधपदेषु । कथम् ? बहुशो बहूननन्तान्वारान् । कथम् ? आ भवात् संसारात्प्रभृति । नीचानि चोन्नतानि च नीचोन्नतानि । निगोदाश्चाहमिन्द्राश्च निगोदाहमिन्द्राः । तेषु प्रादुर्भावो जन्म । सोन्तेऽवसाने येषां तानि निगोदाहमिन्द्रप्रादुर्भावान्तानि । तानि च नीचोन्नतानि च निगोदाहमिन्द्रप्रादुर्भावान्तनीचोन्नतानि निगोदजन्मपर्यन्तानि नीचस्थानानि, ग्रैवेयकोद्भवावसानानि चोच्चस्थानानीत्यर्थः । तथा विविधानि नानाप्रकाराणि तन्मध्यवर्तीनि जन्मलक्षणानि पदानि स्थानानि, निगोदाहमिन्द्रप्रादुर्भावान्तनीचोन्नतानि च विविधानि च निगोदाहमिन्द्रप्रादुर्भावान्तनीचोन्नतविविधानि । तानि च तानि पदानि च तेषु । उक्तं च—

समभवमहमिन्द्रोऽनन्तशोऽनन्तवारान्,
पुनरपि च निगोतोऽनंतशोऽन्तर्निवृत्तः ।
किमिह फलमभुक्तं तद्यदद्यापि भोक्ष्ये,
सकलफलविपत्तेः कारणं देव देयाः ॥

किमिति आक्षेपप्रश्ने । हे हतक दुरात्मन्, किं परिणतमेकलोलीभावमापन्नम् । किं तत् ? निरन्वयक्षणिकवादरूपं शाक्यवाक्यं सुगतवचनम् ।

कस्य ? **ते** तव । **येन** शाक्यवाक्यपरिणामेन कारणेन **न स्फुरति** न स्फुटमाभासते । किंम् ? **तत्** सुखं दुःखं वा । कस्य ? **ते** । किंविशिष्टम् ? **भुक्तम**नुभूतम् । क ? **क्षणे** । किंभूते ? **अनन्तरातिक्रान्तेपि** पाश्चात्यसमनन्तरातीतेपि । शाक्यो ह्यनन्तरातीतक्षणानुभूतं सुखं दुःखं च न प्रत्यक्षमिच्छति । तेनार्थान् ज्ञानस्योत्पत्तेरभिमतत्वादर्थाकारत्वाच्च ज्ञानस्य तन्मते । **वा** अथवा युक्तमेवैतत् । **क** कस्मिन्प्राणिन्यस्ति ? न कापीत्यर्थः । कोसौ ? **मोहः** । किंविशिष्ट ? **सगर्हो** जुगुप्सावान् । क ? **इह** लोके कमपि प्राणिनं ग्रसमानो न शूकायते इत्यर्थः ।

संसारदुरवस्थां सुतरां भावयन्नाह—

**अनादौ संसारे विविधविपदातङ्कनिचिते,**
**मुहुः प्राप्तस्तां तां गतिमगतिकः किं किमवहम् ।**
**अहो नाहं देहं कमथ न मिथो जन्यजनका,—**
**द्युपाधिं केनागां स्वयमपि हहा स्वं व्यजनयम् ॥ ६३ ॥**

**अहो** इत्युद्बोधकं स्वात्मानं परात्मानं वा प्रति संबोधनद्योतनार्थमिदम् । भावको हि अहो इत्यनेन स्वस्योद्बोधकमभिमुखीकुरुते । किं किं वर्णसंस्थानोत्सेधादिभेदेन नानाप्रकारं **देहं** शरीरमहं **नावहं** न वहामि स्म । सर्वं स्ववहनयोग्यं शरीरमूढवानहमित्यर्थः । प्रायिकमेतत् । तेन सम्यक्त्वसहचारिपुण्योदयजन्यदेहानामप्रसङ्गः । कीदृशः सन् ? **प्राप्तो**धिगतः । काम् ? **तां तां** नारकादिलक्षणां **गतिम्** । कथम् ? **मुहु**र्वारंवारम् । क ? **संसारे** । किंविशिष्टे ? **अनादौ** । पुनः किंविशिष्टे ? **विविधविपदातङ्कनिचिते** । विविधा विचित्रा विपद इष्टानिष्टविप्रयोगसंप्रयोगद्वारायाता विनिपाताः । तत्कृत आतङ्कः क्षोभावेशो विविधविपदातङ्कः । तेन निचिते व्याप्ते । पुनः कीदृशः ? **अगतिकः** । गतिरपायनिवारणोपायस्तज्ज्ञानं वा । तद्रहितः । **अथ** अथवा **केन** जीवेन सह । **कं जन्यजनकाद्युपाधि**मुत्पाद्योत्पादकपाल्यपालकभोज्यभोजकभावादिवैभाविकभावम् **मिथः** परस्परं **नागां** न गतोऽहम् । सर्वेण सहान्योन्यं सर्वं पुत्रपित्रादिभावं प्राप्तवानहमित्यर्थः । उक्तं च—

सर्वे तातादिसंबन्धा नासन् यस्याङ्गिनोङ्गिभिः ।
सर्वैरनेकधा सार्धं नासावऽङ्ग्यपि विद्यते ॥

एतदपि प्रायिकं नित्यनिगोदेभ्योऽन्यत्रैवं विविधविवर्तनसंभवात्, तेषां कालत्रयेपि त्रसभावाभावात् । तथा चोक्तम्—

अत्थि[1] अणंता जीवा जेहिं ण पत्तो तसाण परिणामो ।
भावकलंकसुपउरा णिगोदवासं ण मुंचंति ॥

किं बहुना, हहा कष्टम् । व्यजनयं विशेषेणोत्पादितवानहम् । कम् ? स्वमात्मानम् । केन ? स्वयमात्मना । न परं परेणेत्यपिशब्दार्थः । एवं भावयन् संसारदुःखादुद्विग्नो निर्विण्णः सन् संसारं हातुमुपक्रमते ॥ इति संसारानुप्रेक्षा ।

अथुनैकत्वानुप्रेक्षाया भावनाविधिमाह—

किं प्राच्यः कश्चिदागादिह सह भवता येन साध्येत सध्र्यङ्,
प्रेत्येहत्योपि कोपि त्यज दुरभिमतिं संपदीवापदि स्वान् ।
सध्रीचो जीव जीवन्ननुभवसि परं त्वोपकर्तुं सहैति,
श्रेयोंहश्चापकर्तुं भजसि तत इतस्तत्फलं त्वेककस्त्वम् ॥ ६४ ॥

किमिति प्रश्ने । हे जीव आत्मन्, पृच्छामि त्वाम्, किमागादागतः । कोसौ ? कश्चित् पुत्रादिः । किंभूतः ? प्राच्यः पूर्वभवसंबन्धी । कथम् ? सह सार्धम् । केन ? भवता त्वया । क ? इह अस्मिन्भवे । येन प्राच्येन सहायातेन पुत्रादिना दृष्टान्तभूतेन साध्येत व्यवस्थाप्येत त्वया परीक्षकलोकेन वा । कोसौ ? कोपि कश्चित् पुत्रादिः । किंभूतः ? इहत्योपि इह भवसंबन्ध्यपि । किंभूतः साध्येत ? सध्र्यङ् भवता सहगामी ।

१—सन्ति अनन्ता जीवा यैर्न प्राप्तस्त्रसानां परिणामः ।
भावकलङ्कसुप्रचुरा निगोदवासं न मुञ्चन्ति ॥
अधुना पर्यन्तं यैर्न प्राप्तस्त्रसपर्यायो ये तु प्राप्स्यन्ति न वेत्यनिश्चयात्मा तदर्थः ।

क ? प्रेत्य परत्रभवे । सहाञ्चति गच्छतीति क्विप्यागतनिवृत्ते सहस्य सध्रिः । यतश्च प्राग्भवसंबन्धी कश्चित्सहायातोत्र न दृश्येत अतः संभाव्येत अत्रत्योपि परत्र कश्चित्सह न यास्यतीति । उक्तं च—

**एकाकी जायते जीवो म्रियते च तथाविधः ।**
**संसारं पर्यटत्येको नानायोनिसमाकुलम् ॥**

यतश्चैवं ततस्त्यज मुञ्च त्वम् । काम् ? **दुरभिमतिं** ममायमिति मिथ्याभिनिवेशम् । किंच, हे जीव, **अनुभवसि** पश्यसि त्वम् । काक्वा, नानुभवसीत्यर्थः । कान् ? **स्वान्** निजान् बन्धुपुत्रादीन् । किं भूतान् ? **सध्रीच्वः** सहायान् सहकारिणः । क ? **आपदि** विपदि । कस्यामिव ? **संपदीव** संपत्तौ यथा । किं कुर्वन् सन् ? **जीवन्**, न मृतः । जीवतोपि तव बन्धुवर्गः संपद्येव विद्यमानायां सहचरति विपत्तौ पुनर्दूरमपसरतीति प्रतिपद्यस्व त्वम् । **परं** किंतु **एति** गच्छति । किं तत् ? **श्रेयः** पुण्यम् । कथम् ? **सह** सार्धं त्वया । किं कर्तुम् ? **उपकर्तुम्** । कम् ? **त्वा** त्वाम् । त्वदनुग्रहबुद्ध्या त्वदुपार्जितं पुण्यमेव त्वया सह सर्वत्र यातीत्यर्थः । न केवलम्, **अंहश्च** पापं च पुण्यवत् त्वया सहैति । किं कर्तुम् ? **अपकर्तुम्** । कम् ? त्वा त्वाम् । **तत्फलं तु** तयोः सहगामिश्रेयोंहसोः फलं सुखदुःखरूपं पुनर्भजसि सेवसे भुङ्क्ष्व त्वम् । किंभूतः सन् ? **एकक** एकाकी । कथम् ? **तत** इतः तत्रेह वा । पुण्यपापफले सुखदुःखरूपे अनुभवतस्तव क्वचित्कश्चिन्न संविभागीत्यर्थः ।

आत्मनस्तत्त्वतो न कश्चिदन्वयी स्यादित्यनुशास्ति—

**यदि सुकृतममाहंकारसंस्कारमङ्गं,**
**पदमपि न सहैति प्रेत्य तत्किं परेर्थाः ।**
**व्यवहृतितिमिरेणैवार्पितो वा चकास्ति,**
**स्वयमपि मम भेदस्तत्त्वतोस्म्येक एव ॥ ६५ ॥**

**यदि नैति** न गच्छति । किं तत् ? **अङ्गं** शरीरम् । कथम् ? **सह** जीवेन मया वा । क ? प्रेत्य परत्र भवे । कियत् ? **पदमपि** एकमपि पादन्या-

सम् । किं पुनर्दूरम् । कीदृशमङ्गम् ? **सुकृतममाहंकारसंस्कारम्** । ममाहंकारौ ममेदमिति ममकारोऽहमिदमिति अहंकारश्च । उक्तं च—

शश्वदनात्मीयेषु स्वतनुप्रमुखेषु कर्मजनितेषु ।
आत्मीयाभिनिवेशो ममकारो मम यथा देहः ॥
ये कर्मकृता भावाः परमार्थनयेन चात्मनो भिन्नाः ।
तत्रात्माभिनिवेशोऽहंकारोऽहं यथा नृपतिः ॥

ममाहंकारयोः संस्कारो दृढतमप्रतिपत्तिर्ममाहंकारसंस्कारः सुकृतो जन्मप्रभृति निर्मितो ममाहंकारसंस्कारो यस्मिंस्तदेवम् । **तत्किं सहैष्यन्ति** मया । के ? **अर्थाः** स्त्रीसुवर्णादयो भावाः । कीदृशाः ? **परे** पृथग्भूताः पृथक्प्रतीयमानाश्च । किं बहुना, **वा** अथवा **चकास्ति** आत्मानं दर्शयति । कोसौ ? **भेदो** ज्ञानसुखदुःखादिपर्यायनानात्वम् । कथम् ? **स्वयमपि** आत्मना आत्मनि वा । किं पुनः परेण परत्र वा । कस्य ? **मम** आत्मनः । कीदृशः ? **अर्पित** आरोपितः । केन ? **व्यवहृतितिमिरेणैव** । व्यवहृतिर्व्यवहारोऽपोद्धारकल्पना । भेदोपचार इति यावत् । सैव तिमिरं नयनरोगस्तेनैव, न मनागपि निश्चयनयेन । तर्हि निश्चयतः कीदृशस्त्वमसीत्याह **अस्मि** भवाम्यहम् । कीदृशः ? **एक एव** पूर्वापरानुस्यूतैकचैतन्यरूपत्वात् । कथम् ? **तत्त्वतो** निश्चयनयेन । एवं ध्यायन् स्वपरजने रागद्वेषाभावान्निःसङ्गो मोक्षाय घटते ॥ इत्येकत्वानुप्रेक्षा ॥

सांप्रतमन्यत्वभावनायां फलातिशयप्रदर्शनेन प्रलोभयन्नाह—

**नैरात्म्यं जगत इवार्य नैर्जगत्यं,**
**निश्चिन्वन्ननुभवसिद्धमात्मनोपि ।**
**मध्यस्थो यदि भवसि स्वयं विविक्तं,**
**स्वात्मानं तदनुभवन् भवादपैषि ॥ ६६ ॥**

हे **आर्य** सामायिकचारित्रेण श्रियमाण, **यदि भवसि** त्वम् । किंभूतः ? **मध्यस्थो** रागद्वेषरहितोऽध्यात्मतत्त्वनिष्ठो वा । किं कुर्वन् ? **निश्चिन्वन्** प्रतिपत्तिदार्ढ्यं नयन् । किं तत् ? **नैर्जगत्यं** जगदिदंतया

प्रतीयमानं समस्तं बहिर्वस्तु । जगतो निष्क्रान्तो निर्जगत्। निर्जगतो भावो नैर्जगत्यम्। सर्वपरद्रव्यग्रहरहितत्वम् । कस्य ? आत्मनोपि स्वस्यापि । किं भूतम्? अनुभवसिद्धमनुभवेन स्वसंवेदनेन सिद्धमनुभूतमात्मनात्मन्यात्मनः पराकारशून्यतया संवेद्यमानत्वात् । किं कस्येव ? नैरात्म्यं जगत इव आत्मा अहंतया प्रतीयमानमन्तस्तत्त्वम् । आत्मनो निष्क्रान्तं निरात्म । निरात्मनो भावो नैरात्म्यम् । कस्य? जगतो विश्वस्य अनहंकारास्पदत्वेन सर्वपरद्रव्याणामनुभवसिद्धत्वात् । उक्तं च—

> परस्परपरावृत्ताः सर्वे भावाः कथंचन ।
> नैरात्म्यं जगतो यद्वन्नैर्जगत्यं तथात्मनः ॥

तत् ततोऽपैषि प्रच्यवसे त्वम् । कस्मात् । भवात् संसारात् शरीराद्वा । किं कुर्वन् ? अनुभवन् संवेदयमानः । कम् ? स्वात्मानम् । किंभूतम् ? विविक्तं देहादिभ्यः पृथग्भूतम् । शुद्धमित्यर्थः । केन ? स्वयमात्मना उक्तं च—

> कर्मभ्यः कर्मकार्येभ्यः पृथग्भूतं चिदात्मकम् ।
> आत्मानं भावयेन्नित्यं नित्यानन्दपदप्रदम् ॥

अन्यत्वभावनापरस्य ततोऽपुनरावृत्तिकामतां कथयति—

> **बाह्याध्यात्मिकपुद्गलात्मकवपुर्युग्मं भृशं मिश्रणा,—**
> **द्धेम्नः किट्टककालिकाद्वयमिवाभादप्यदोऽनन्यवत् ।**
> **मत्तो लक्षणतोन्यदेव हि ततश्चान्योहमर्थादत,—**
> **स्तद्भेदानुभवात्सदा मुदमुपैम्यन्वेमि नो तत्पुनः ॥ ६७ ॥**

वर्तेते । किं तत् ? अद् एतद्बाह्याध्यात्मिकपुद्गलात्मकवपुर्युग्मम् । बाह्यं रसादिधातुमयमौदारिकमाऽऽध्यात्मिकं ज्ञानावरणादिमयं कार्मणम् । पुद्गलाः स्पर्शरसगन्धवर्णवन्तः । पुद्गला आत्मा ययोस्ते पुद्गलात्मके । वपुषी शरीरे । पुद्गलात्मके च ते वपुषी च पुद्गलात्मकवपुषी । बाह्यं चाध्यात्मिकं च बाह्याध्यात्मिके । ते च ते पुद्गलात्मकवपुषी च तयोर्युग्मं द्वयम् । किं-

भूतम् ? अन्यदेव भिन्नमेव। कस्मात् ? मत्तः शुद्धचिदानन्दात्मकादात्मनः। कस्मात् ? लक्षणतः। अन्योन्यव्यतिकरे सति येनान्यत्वं लक्ष्यते तल्लक्षणम्। तच्चेह देहस्य रूपादिमत्त्वमात्मनश्चोपयोगः। प्रयोगो, जीवदेहावत्यन्तं भिन्नौ, भिन्नलक्षणलक्षितत्वाज्जलानलवत्। किं कुर्वत् ? आभादपि आभासमानमपि। किंवत् ? अनन्यवद् दुःशकविवेचनत्वादभिन्नमिव। तथा चोक्तम्—

ववहारणओ[1] भासइ जीओ देहो य हवइ खलु एक्को।
ण उ णिच्छयें स जीवो देहो य कयावि एक्कट्ठो॥

अपि च—

यदचेतत्तथापूर्वं चेतिष्यति यदन्यदा।
चेततीत्थं यदत्राद्य तच्चिद्द्रव्यं समस्म्यहम्॥
यन्न चेतयते किंचिन्नाऽचेतयत किंचन।
यच्चेतयिष्यते नैव तच्छरीरादि नास्म्यहम्॥

कस्मात्तद्द्वयं मत्तो भिन्नमप्यभिन्नमाभाति ? भृशं मिश्रणाद् मया सहात्यन्तं मीलनात्। कस्मात्किमिव ? हेम्नः किट्टककालिकाद्वयमिव। किट्टकः स्थूलो बाह्यमलः। कालिका सूक्ष्मोऽन्तर्लीनोऽन्तर्मलः। किट्टकश्च कालिका च किट्टककालिके। तयोर्द्वयम्। यथा हेम्नः काञ्चनाल्लक्षणतो भिन्नमपि भृशं मिश्रणादभिन्नमाभाति तथा प्रस्तुतमपि। हिरवधारणार्थोऽन्य इत्यतोऽनन्तरं योज्यम्। अहं च वर्ते। कीदृशः ? अन्यो हि भिन्न एव। कस्मात् ? ततस्तस्माद्वपुर्युग्मात्। कस्मात् ? अर्थाद्वस्तुतः। उक्तं च—

नरदेहस्थमात्मानमविद्वान् मन्यते नरम्।
तिर्यञ्चं तिर्यगङ्गस्थं सुराङ्गस्थं सुरं तथा॥
नारकं नारकाङ्गस्थं न स्वयं तत्त्वतस्तथा।
अनन्तानन्तधीशक्तिः स्वसंवेद्योऽचलस्थितिः॥

---

१ व्यवहारनयो भासते जीवो देहश्च भवति खल्वेकः।
न च निश्चयात् स जीवो देहश्च कदापि एकार्थः॥

एतेन व्यवहारादेव तस्माद्भिन्नोस्मीति गम्यते । यतश्चैवमत एतस्माद्धेतोरुपैमि प्राप्नोम्यहम् । काम् ? मुद्मानन्दम् । कथम् ? सदा । कस्मात् ? तद्भेदानुभवाद् वपुर्युग्मादन्यत्वेनात्मनः स्वयं संवेदनात् । उक्तं च—

वपुषोऽप्रतिभासेपि स्वातन्त्र्येण चकासति ।
चेतना ज्ञानरूपेयं स्वयं दृश्यत एव हि ॥

तथा,—

आत्मानुष्ठाननिष्ठस्य व्यवहारबहिःस्थितेः ।
जायते परमानन्दः कश्चिद्योगेन योगिनः ॥

नो अन्वेमि नानुवर्तेहम् । किम् ? तद् वपुर्युग्मम् । कथम् ? पुनर्भूयः । उक्तं च—

तथैव भावयेद्देहाद् व्यावर्त्यात्मानमात्मनि ।
यथा न पुनरात्मानं देहे स्वप्नेपि योजयेत् ॥

किंच, एकत्वानुप्रेक्षायामेकोहमित्यादिविधिरूपेण निरूपणा । अन्यत्वानुप्रेक्षायां तु देहादयो मम सकाशादन्ये, मदीया न भवन्तीति निषेधरूपेण । इत्यत्यन्तमनयोर्विशेषः । एवं चिन्तने शरीरादिषु निरीहः सन् श्रेयसि नित्यमुत्सहते ॥ इत्यन्यत्वानुप्रेक्षा ।

अथ देहस्याशुचित्वं भावयन्नात्मनस्तत्पक्षपातमपवदति—

कोपि प्रकृत्यशुचिनीह शुचेः प्रकृत्या,
भूयान्वसेरकपदे तव पक्षपातः ।
यद्विश्रसा रुचिरमर्पितमर्पितं द्राग्,
व्यत्यस्यतोपि मुहुरुद्विजसेऽङ्ग नाङ्गात् ॥ ६८ ॥

अङ्गेति प्रियत्वामन्त्रणे । अङ्ग हे आत्मन्, वर्तते । कोसौ ? पक्षपातः स्वीकारः । कीदृशः ? कोप्यलौकिको भूयान्महान् । क्व ? इह अस्मिन्नङ्गे । कीदृशे ? प्रकृत्यशुचिनि प्रकृत्या शुक्रार्तवात्मककारणेन रसादिधात्वात्मकस्वभावेन विण्मूत्राद्यात्मककार्येण वाऽशुचिन्यऽपवित्रेऽरम्ये । पुनः कीदृशे ?

**वसेरकपदे** पथिकनिशावासस्थाने । तेन च साधर्म्यमङ्गस्य परद्रव्यत्वाद्-ल्पकालाधिवास्यत्वाच्च । कस्य ? **तव** । कीदृशस्य ? **शुचेः** पवित्ररम्यस्य । कया ? **प्रकृत्या** स्वभावेन । अत्रोपपत्तिमाह—यद् यस्मात्कारणान्नोद्विजसे नोद्वेगं गच्छसि त्वम् । न विरमसीत्यर्थः । कस्मात् ? **अङ्गात्** । किं कुर्वतः ? **द्राग्व्यत्यस्यतोपि** सद्यो गन्धवर्णादिना विपर्यासं नयतोपि । कथम् ? **मुहु-र्वारं** वारम् । किं तत् ? **विश्रसा** स्वभावेन **रुचिरं** रम्यं श्रीचन्दनानुलेप-नादिद्रव्यम् । कीदृशं सत् ? **अर्पितमर्पितमिहाङ्गे** योजितं योजितम् । उक्तं च—

आधीयते यदिह वस्तु गुणाय कान्तं,
काये तदेव मुहुरेत्यऽपवित्रभावम् ।
छायाप्रतारितमतिर्मलरन्ध्रबन्धं,
किं जीव लालयसि भङ्गुरमेतदङ्गम् ॥

देहस्य त्वगावरणमात्रेणैव गृध्राद्यनुपघातं प्रदर्श्य तस्यैव शुद्धस्वरूपदर्शन-निष्ठात्माधिष्ठानतामात्रेण पवित्रताकरणात् सर्वजगद्विशुद्ध्यङ्गतासंपादनाया-त्मानमुत्साहयति—

**निर्मायास्थगयिष्यदङ्गमनया वेधा न भोश्चेत् त्वचा,**
**तत् क्रव्याद्भिरखण्डयिष्यत खरं दायादवत् खण्डशः ।**
**तत्संशुद्धनिजात्मदर्शनविधावग्रेसरत्वं नयन्,**
**स्वस्थित्यैकपवित्रमेतदखिलत्रैलोक्यतीर्थं कुरु ॥ ६९ ॥**

भो भवन् आत्मन्, **चेद्** यदि **नास्थगयिष्यद्** नाच्छादयिष्यत् । कोसौ ? **वेधाः** स्रष्टा । किम् ? **तदेतदङ्गम्** । कया ? **अनया** दृश्यमानया बाह्यया **त्वचा** चर्मणा । किं कृत्वा ? **निर्माय** निष्पाद्य **तत्** ततः **अख-ण्डयिष्यत** अकर्तिष्यत छेदमनेष्यत । किम् ? **तदेतदङ्गम्** । कैः कर्तृभिः ? **क्रव्याद्भिर्मां**सभक्षकैर्गृध्रादिभिः । कथम् ? **खण्डशः** खण्डं खण्डं कृत्वा । कथम् ? **खरमु**त्कृष्टम् । किंवत् ? **दायादवद्** दायादैरिव, सक्रोधमिथः स्पर्द्धासंरब्धत्वात् । दायं कुलसाधारणं द्रव्यमाददते विभज्य गृह्णन्तीति

दायादा आत्रादयः । ते यथाऽविभाज्यं वस्तु रैकणिकादिकं विभक्तुमशक्यं सक्रोधमिथः स्पर्धासंरब्धाः सन्तः परमं खण्डं खण्डं कृत्वा गृह्णन्ति तथा त्वदीयमेतच्छरीरं निष्पाद्य यदि बाह्यत्वचा स्रष्टा नाच्छादयिष्यत्तदा गृध्रादिभिः सक्रोधमिथःस्पर्धासंरब्धैः परमं खण्डं खण्डं कृत्वा अग्रहीष्यतेत्यर्थः । **तत्** तस्मादखिलत्रैलोक्यतीर्थं **कुरु** सकलजगतां विशुध्यङ्गं विधेहि त्वम् । किं तत् ? **एतदङ्गम्** । कीदृशम् ? **स्वस्थित्यैकपवित्रं** स्वस्थित्या आत्मस्थित्या एकया अद्वितीयया पवित्रं पूतम् । सर्वात्मना अपवित्रमप्येतत्त्वयैव वसता पवित्रं कृतमित्यर्थः । किं कुर्वन् ? **नयन्** प्रापयन् । किं तत् ? एतदङ्गम् । किम् ? **अग्रेसरत्वं** पुरोगत्वं प्राधान्यम् । क्व ? **संशुद्धनिजात्मदर्शनविधौ** । संशुद्धश्चासौ निजात्मा च । तस्य दर्शनं साक्षात्कारः । तस्य विधिर्विधानं करणम् । परमार्थनिर्मले स्वात्मनि साक्षात्करणीये मनुष्यशरीरस्याग्रकारणत्वादेवमुच्यते । यत्सूत्रम्—

"उत्तमसंहननस्यैकाग्रचिन्तानिरोधो ध्यानमान्तर्मुहूर्तात्" इति । एवं भावयन्निर्विण्णोऽशरीरत्वाय यतते ॥ इत्यशुचित्वानुप्रेक्षा ।

संप्रत्यास्रवमनुप्रेक्षितुं तद्दोषांश्चिन्तयन्नाह—

**युक्ते चित्तप्रसत्त्या प्रविशति सुकृतं तद्भविन्यत्र योग,—**
**द्वारेणाहृत्य बद्धः कनकनिगडवद्येन शर्माभिमाने ।**
**मूर्छन् शोच्यः सतां स्यादतिचिरमयमेत्यात्तसंक्लेशभावे,**
**यत्त्वंहस्तेन लोहान्दुकवदवसितच्छिन्नमर्मेव ताम्येत् ॥ ७० ॥**

**प्रविशति** । किं तत् ? **सुकृतं** सद्वेद्यशुभायुर्नामगोत्रलक्षण—पुण्यकर्मयोग्यपुद्गलद्रव्यम् । क्व ? **अत्र** एतस्मिन् भविनि संसारिणि जीवे । केन ? **योगद्वारेण** कायवाङ्मनःकर्ममुखेन । किंविशिष्टे ? **युक्ते** समाहिते परिणते । कया ? **चित्तप्रसत्त्या** प्रशस्तरागानुकम्पादिपरिणामेण सम्यक्त्वाद्यनुरञ्जितजीवप्रदेशवर्तिकर्मस्कन्धान् पुण्यकर्मयोग्यपुद्गला आत्मप्रदेशपरिस्पन्दनद्वारेणानुप्रवशन्तीत्यर्थः । येन किम् ? **येन** तदनुप्रवि-

ष्टेन सुकृतेन विशिष्टशक्तिपरिणामेनावस्थितेनाहृत्य हठाद्बद्धः परतन्त्रीकृतोयं भवी स्यात्। किंविशिष्टः ? **शोच्यः** शोचनयोग्यः। केषाम्? **सतां** सिद्धसाधनोद्यतानाम्। किं कुर्वन्? **मूर्छन्** आविशन्। क्व ? **शर्माभिमाने** अहं सुखीत्यहंकाराविष्टो भवन्नित्यर्थः। कियन्तं कालम् ? **अतिचिरं** पल्योपमादिप्रमितम्। किंवत् ? **कनकनिगडवत्** सुवर्णशृङ्खलया तुल्यम्। यथा कश्चिद्राजपुरुषः सुवर्णशृङ्खलेन बद्धः स्वस्योत्कर्षं संभावयन् सुखमभिनिवेशमानस्तत्त्वदर्शिभिः शोच्येत तथा प्रकृतोपि। तथा **एति** आगच्छति आस्रवतीति यावत्। किं तत्? **यत्तु पुनरंहः** पापमसद्वेद्यादिपापकर्मयोग्यपुद्गलद्रव्यम्। क्व ? **अत्र भविनि**। केन ? **योगद्वारेण**। कीदृशे ? **आत्तसंक्लेशभावे** अप्रशस्तरागद्वेषमोहपरिणते। आत्तो गृहीतः संक्लेशभावो येन स एवम्। मिथ्यात्वाद्यनुरञ्जितजीवप्रदेशवर्तिकर्मस्कन्धान् पापकर्मयोग्यपुद्गला आत्मप्रदेशपरिस्पन्दनद्वारेणानुप्रविशन्तीत्यर्थः। **तेन** तदनुप्रविष्टेनांहसा विशिष्टशक्तिपरिणामेनावस्थितेनावसितोऽवसमन्ताद्बद्धोऽयं भवी **ताम्येत्** खिद्येत दैन्यमापद्येत। किंभूत इव ? **छिन्नमर्मेव**

"विषमं स्पन्दनं यत्र पीडनं रुक् च मर्म तत्"

छिन्नं लूनं मर्म यस्यासौ छिन्नमर्मा यथा। केनेव ? **लोहान्दुकवल्लोहनिगडेनेव**। यथा कश्चित्कृतापराधो लोहशृङ्खलेन बद्धश्छिन्नमर्मवद् दुःखायते तथा प्रकृतोपीत्यर्थः। अतिचिरमिति अत्रापि योज्यम्॥

आस्रवं निरुन्धानस्यैव मुमुक्षोः क्षेमं स्यादन्यथा दुरन्तसंसारपात इत्युपदेष्टुमाह—

**विश्वातङ्कविमुक्तमुक्तिनिलयद्रङ्गाग्रिमाप्त्युन्मुखः,**
**सद्रत्नोच्चयपूर्णमुद्भटविपद्भीमे भवाम्भोनिधौ।**
**योगच्छिद्रपिधानमादधदुरूद्योगः स्वपोतं नये,–**
**न्नो चेन्मङ्क्ष्यति तत्र निर्भरविशत्कर्माम्बुभारादसौ॥७१॥**

**नयेत्** प्रापयेत्। कोसौ ? **उरूद्योगः**। उरुर्महान् दशविधधर्माष्ट-

विधशुद्धिविषयत्वाद्विपुल उद्योग उत्साहो यस्यासौ अप्रमत्तसंयत इत्यर्थः । कम् ? **स्वपोतं** स्वमात्मानं पोतं यानपात्रमिव भवार्णवोत्तारणप्रवणत्वात् । किं नयेत् ? मुक्तिवेलापत्तनम् । सांयात्रिकवदिति शेषः । किं कुर्वन् ? **आदधत्** कुर्वन् । किं तत् ? **योगच्छिद्रपिधानम्** । योगा मनोवाक्कायव्यापाराः सम्यक्त्वक्रियादिपञ्चविंशतिक्रियारूपाः । उपलक्षणादिन्द्रियकषायाव्रतानि च, एषामतीन्द्रियज्ञानस्वभावनिःक्षोभरागादिविकल्पशून्याऽचलचैतन्यविलक्षणत्वात् । योगाश्छिद्राणीव कर्माम्बुप्रवेशनिमित्तत्वात् । योगच्छिद्राणां पिधानं छादनं निरोधनम् । क्व वर्तमानं स्वपोतम् ? **भवाम्भोनिधौ** संसारसागरे । किंभूते ? **उद्भटविपद्भीमे** । उद्भटाः प्रतिविधातुमशक्या विपद आपदः । ताभिर्भीमे भयङ्करे । कथंभूतं स्वपोतम् ? **सद्रत्नोच्चयपूर्णम्** । सन्ति प्रशस्तानि निर्दोषाणि रत्नानि सम्यक्त्वादीनि भाण्डानि च सद्रत्नानि । तेषामुच्चयः संघातः । तेन पूर्णं संभृतम् । कथंभूतो भूत्वा ? **विश्वातङ्कविमुक्तमुक्तिनिलयद्रङ्गाग्रिमाप्त्युन्मुखः** । मुक्तिरनन्तज्ञानादिचतुष्टयावस्था । मुक्तेर्निलय आश्रमो मुक्तिनिलयः परमात्मा द्रङ्गाणां नगराणामग्रिमं प्रधानं द्रङ्गाग्रिमं वेलापत्तनम् । मुक्तिनिलयो द्रङ्गाग्रिममिव, समस्तविनिपातापेतत्वात् । विश्वे सर्वे आतङ्का विनिपातजनितचित्तक्षोभा विश्वातङ्काः । तैर्विशेषेण मुक्तं त्यक्तं विश्वातङ्कविमुक्तम् । तच्च तन्मुक्तिनिलयद्रङ्गाग्रिमं च । तस्य आप्तिः प्राप्तिः । उन्मुखोऽभिमुखः । तद्भवे भवान्तरेषु वा द्वित्रेषु प्राप्य परमपद इत्यर्थः । **नो चेदिन्द्रियाद्यास्रवच्छिद्राणि न पिधास्यति चेन्मुमुक्षुः सांयात्रिकस्तदा **मङ्क्ष्यति** ब्रुडिष्यति । कोसौ ? **असौ** स्वपोतः । क्व ? **तत्र** भवाम्भोनिधौ । कस्मात् ? **निर्भरविशत्कर्माम्बुभारात्** । कर्माणि ज्ञानावरणादीन्यम्बूनि जलानीव यानपात्रस्येवात्मनो भवार्णवनिमज्जननिमित्तत्वात् । निर्भरमतिमात्रं विशन्ति प्रविशन्त्यन्तः पतन्ति च तानि कर्माम्बूनि च निर्भरविशत्कर्माम्बूनि । तेषां भारो भरणं पूरणं, तस्मात् । तथा च वार्तिकम्—

"समुद्रे सच्छिद्रपोतवदयं जीव इन्द्रियाद्यास्रवैः संसारसागरे पतति" इति । एवं चिन्तयतः क्षमादिधर्मेषु श्रेयस्त्वबुद्धिः स्थैर्यं भजते ॥ इत्यास्रवानुप्रेक्षा ।

सांप्रतं संवरमनुप्रेक्षितुं तद्गुणांश्चिन्तयति—

कर्मप्रयोक्तृपरतन्त्रतयात्मरङ्गे
प्रव्यक्तभूरिरसभावभरं नटन्तीम् ।
चिच्छक्तिमग्रिमपुमर्थसमागमाय,
व्यासेधतः स्फुरति कोपि परो विवेकः ॥ ७२ ॥

**स्फुरति** दीप्यते । कोसौ ? **कोपि** कश्चिदनिर्वचनीयः **परः** प्रकृष्टो **विवेकः** शुद्धोपयोगेऽवस्थानम् । पक्षे, हिताहितविचारश्च । उक्तं च—

विहाय कल्पनाजालं स्वरूपे निश्चलं मनः ।
यदाधत्ते तदैव स्यान्मुनेः परमसंवरः ॥

कस्य ? जिगीषोरिव घटमानयोगस्य मुनेः । किं कुर्वतः ? **व्यासेधतो** निषेधतः सतः । काम् ? **चिच्छक्तिम्** । चितश्चेतनस्य शक्तिर्वीर्यम् । किं कुर्वन्तीम् ? **नटन्तीम**वस्यन्दमानाम् । जीवेन सह भेदविवक्षया चिच्छक्तेरेवमुच्यते । अन्यथा शक्तेर्जीवपरिणामत्वाच्चलनक्रिया नोपपद्यते, द्रव्याश्रयत्वात्तस्याः । स एष आत्मप्रदेशपरिस्पन्दलक्षणः कर्मास्रवकारणं योगो बोद्धव्यः । उक्तं च—

पुग्गलविवाइदेहोदएण मणवयणकायजुत्तस्स ।
जीवस्स जा हु सत्ती कम्मागमकारणं जोगो ॥

एतेन नर्तकीमुपमानमाक्षिपति । कथं कृत्वा ? **प्रव्यक्तभूरिरसभावभरम्** । रसो विभावादिभिरभिव्यक्तः स्थायीभावो रत्यादिः भावो देवादिविषया रतिः । व्यभिचारी च व्यक्तः । रसाश्च भावाश्च रसभावाः । भूरयः प्रचुराः श्रृङ्गारादिभेदभिन्ना रसभावा भूरिरसभावाः । तेषां भरोतिशयो लोकोत्तरचमत्कारप्रकारः । प्रव्यक्तः प्रकर्षेण प्रेक्षकजनानामिव परीक्षकजनानां प्रतीतिमानीतः प्रव्यञ्जितुमारब्धो भूरिरसभावभरो यत्र नटनकर्मणि तत्तथोक्तम् । क्व ? **आत्मरङ्गे** आत्मरङ्गो नर्तनस्थानमिव तथा नटन्त्या नर्तक्या इव चिच्छक्तेरधिष्ठानत्वात् । कया नटन्तीम् ? **कर्मप्रयोक्तृपरतन्त्रतया** कर्मणां ज्ञानावरणादीनां प्रयोक्ता स्वस्वफल-

दानाय प्रेरयिता कर्मप्रयोक्ता ज्ञानावरणादिकर्मविपाकः। पक्षे, कर्मणि नर्तनाख्ये प्रयोक्ता नर्तक्या व्यापारयिता कर्मप्रयोक्ता नाट्याचार्यः। परतन्त्रस्य भावः परतन्त्रता पारतन्त्र्यम्। तदधीनतया वृत्तिः, कर्मप्रयोक्तुः परतन्त्रता, कर्मप्रयोक्तृपरतन्त्रता तया। किमर्थमित्थं नटन्तीं नर्तकीमिव चिच्छक्तिं निषेधतीत्यत्राह **अग्रिमपुमर्थसमागमाय**। पुंसः पुरुषस्यार्थोऽभिलष्यमाणो भावः पुमर्थः पुरुषार्थः। अग्रिमः प्रधानभूतश्चासौ पुमर्थश्चाग्रिमपुमर्थः प्रधानपुरुषार्थो धर्मो मोक्षो वा। पक्षे, कामस्याग्रे भवोग्रिमोर्थः तस्यैव विजिगीषुणा यत्नतोऽर्जनीयत्वाद् विषयोपभोगस्य चेन्द्रियमनःप्रसादनमात्रफलत्वेन यथावसरमनुज्ञानात्। अग्रिमपुमर्थस्य समागमः संप्राप्तिस्तस्मै। एतेनास्रवनिरोधः संवर इति सूत्रार्थः स्फुटीकृतः प्रतिपत्तव्यः।

मिथ्यात्वाद्यास्रवप्रकारान् शुद्धसम्यक्त्वादिसंवरप्रकारैर्निरुन्धतो मुख्यमशुभकर्मसंवरण मानुषङ्गिकं च सर्वसंपत्प्राप्तियोग्यत्वं फलमाह—

**मिथ्यात्वप्रमुखद्विषद्बलमवस्कन्दाय दृप्यद्बलं**
**रोद्धुं शुद्धसुदर्शनादिसुभटान् युञ्जन् यथास्वं सुधीः।**
**दुष्कर्मप्रकृतीर्न दुर्गतिपरीवर्तैकपाकाः परं,**
**निःशेषाः प्रतिहन्ति हन्त कुरुते स्वं भोक्तुमुत्काः श्रियः ७२**

**न परं** न केवलं **सुधीः** प्रेक्षापूर्वकारी मुमुक्षुः **प्रतिहन्ति** प्रतिबध्नाति। काः? **दुष्कर्मप्रकृतीः**रसद्वेद्यादिकर्मबन्धप्रकारान्। किंविशिष्टाः? **निःशेषाः** समस्ताः। कीदृक्फलाः? **दुर्गतिपरीवर्तैकपाकाः**। दुर्गतिषु नारकतिर्यक्कुमानुष्यकुदेवपर्यायेषु परिवर्तनं ग्रहणमोक्षणं दुर्गतिपरीवर्तः स एकोऽद्वितीयः पाकः फलं यासां तास्तथोक्ताः। किं तर्हि? **हन्त कुरुते स्वं भोक्तुमुत्काः श्रियः** इति गत्वा संबन्धः कर्तव्यः। किं कुर्वन् सुधीः? **युञ्जन्** प्रयुञ्जानः। कान्? **शुद्धसुदर्शनादिसुभटान्** निरतीचारसम्यग्दर्शनप्रभृतिवीरपुरुषान्। किं कर्तुम्? **रोद्धुं** प्रतिबद्धुम्। किं तत्? **मिथ्यात्वप्रमुखद्विषद्बलम्**। मिथ्यात्वं प्रमुखमाद्यं यस्य मिथ्याज्ञानाविरतिप्रमादकषाययोगप्रकारस्यास्रवस्य सोयं मिथ्यात्वप्रमुखो द्विषद्बलं शत्रुसैन्यमिव, विजिगीषोरिव मुमुक्षोरवश्यप्रतिरोधित्वात्।

किंविशिष्टम् ? दृप्यद्बलं दृप्यदहमहमिकया प्रवर्तमानं बलं पराक्रमो यस्य तद् दृप्यद्बलम् । कस्मै ? अवस्कन्दाय लक्षणया शुद्धात्मस्वरूपोपघाताय अतर्कितोपस्थितप्रपाताय च । कथं रोद्धुम् ? यथास्वं यो यः स्वः । तत्र सम्यग्दर्शनस्य रोद्धव्यं स्वप्रतिपक्षभूतमिथ्यादर्शनम् । सम्यग्ज्ञानस्य मिथ्याज्ञानम् । अविरतेन्द्रियप्राणिविषयायाः समितिपरं संयमो व्रतानि वा । प्रमादस्य कुशलेष्वनुत्साहलक्षणस्योत्साहः सत्त्वं च । क्रोधस्य क्षमा । मानस्य मार्दवम् । मायाया आर्जवम् । लोभस्य शौचम् । रागद्वेषयोः समत्वं निर्ममत्वं वा । मनोयोगस्य मनोनिग्रहः । वाग्योगस्य वाग्निग्रहः । काययोगस्य च कायनिग्रहः । इति यथास्वं सुधीः शुद्धसुदर्शनादीन् प्रयुञ्जानो न परं दुष्कर्मप्रकृतीः प्रतिहन्ति । किंतु कुरुते । काः ? श्रियो देवेन्द्रनरेन्द्रादिविभूतीः । किंविशिष्टाः ? उत्काः सोत्कण्ठाः । किं कर्तुम् ? भोक्तुं सेवितुम् । कम् ? स्वमात्मानम् । अनिच्छतोपि तस्योपभोगाय त्वरमाणा इत्यर्थः । अत एव हन्त इति हर्षे । हृष्यामो वयं, यदेवमनिच्छन्तमपि तं महाभागमिन्द्रादिसंपदः सेवन्ते इत्यर्थः । यः सुधीर्विद्याविनीतमतिर्विजिगीषुनायकः शत्रुबलं सौप्तिकायोद्यतं प्रतिहन्तुं यथास्वं यो यस्मै प्रभवति तं तं प्रति तं तं प्रयुङ्क्ते स न परं दुष्कर्मप्रकृतीर्दुराचारानमात्यादीन् दुर्गतिपरीवर्तैकपाकान् दारिद्र्यपर्यायसंपादनैकफलान् निःशेषान् प्रतिहन्ति कुरुते स्वं भोक्तुमुत्काः श्रियोऽभ्युदयसंपद इत्यप्राकरणिकोप्यर्थः सहृदयैर्हृदि निधेयः । एवं चिन्तयन् नित्यं संवरोद्युक्तो भवति । इति संवरानुप्रेक्षा ।

संप्रति निर्जरामनुप्रेक्षितुं तदनुग्रहं प्रकाशयन्नाह—

**यः स्वस्याविश्य देशान् गुणविगुणतया भ्रश्यतः कर्मशत्रून्,**
**कालेनोपेक्षमाणः क्षयमवयवशः प्रापयंस्तद्बुभुक्षामान् ।**
**धीरस्तैस्तैरुपायैः प्रसभमनुषजत्यात्मसंपद्यजस्रं,**
**तं बाहीकश्रियोङ्कं श्रितमपि रमयत्यान्तरश्रीः कटाक्षैः ॥७४॥**

रमयति रतिं नयति । कासौ ? आन्तरश्रीरनन्तज्ञानादिविभूतिः

---

१ स्कन्दाय ।

कम् ? **तं** योगिनं । कैः ? **कटाक्षैरनुरागोद्रेकानुभावैः** अन्तरङ्गलक्ष्मीस्तस्य कतिपयदिनलभ्या भवतीत्यर्थः । किंविशिष्टमपि ? **अङ्कं श्रितमपि** उत्सङ्गमाश्रितमपि । कस्याः ? **बाह्यीकश्रियो** बाह्यलक्ष्म्याः तपोतिशयर्द्धेरित्यर्थः । यः किम् ? **यो धीरः** परीषहोपसर्गैरक्षोभ्यः **सन्ननुषजति** आसक्तो भवति । क ? **आत्मसंपदि** आत्मसंवित्तौ । कथम् ? **अजस्रं** संततम् । किं कुर्वाणः ? **उपेक्षमाण** औदासीन्येन भावयन् । कान् ? **कर्मशत्रून्** । किं कुर्वतः ? **भ्रश्यतः** स्वस्मादपगच्छतः । केन ? **कालेन** । स्वयं पक्त्वा कर्मपुद्गलान् गलत इत्यर्थः । संवरपूर्विकां निर्जरां कुर्वन्निति यावत् । किं कृत्वा भ्रश्यतः ? **आविश्य** अनुप्रविश्य विशिष्टशक्तिपरिणामेनावस्थाय । कान् ? **देशान्** कर्ममलीमसचिद्देशान् । कस्य ? **स्वस्य** स्वात्मनः । कया ? **गुणविगुणतया** गुणानां सम्यक्त्वादीनां विगुणता मिथ्यात्वादिपरिणामो गुणविगुणता, तया । न केवलमुपेक्षमाणः, **प्रापयंश्च** नयन् । कान् ? **तत्सुकामान्** स्वफलदानोन्मुखान् कर्मशत्रून् । कम् ? **क्षयं** विश्लेषम् । कथम् ? **अवयवशो**ऽशेनांशेन । कैः ? **उपायैरुपक्रमैः** । किंविशिष्टैः ? **तैस्तैः** प्रसिद्धैरनशनादिभिः । कथम् ? **प्रसभं** हठात् । हठवृत्त्या स्वफलदानोन्मुखान् कर्मशत्रून् क्षपयन्नित्यर्थः । एतन्निर्जरागुणानुचिन्तनम् । अथ श्लेषार्थः कथ्यते—

अत्र द्वौ नायकौ दुर्गमध्यगतो जनपदस्थितश्च । तत्र तं जनपदस्थितनायकं रमयति । कासौ ? आन्तरश्रीर्दुर्गमध्यगतसंपत् । कैः ? कटाक्षैरनुरागोद्रेकानुभावैः । किंविशिष्टम् ? अङ्कं श्रितमपि उत्सङ्गमाश्रितमपि । कस्याः ? बाह्यीकश्रियो बाह्यलक्ष्म्याः । जनपदविभूतेरित्यर्थः । यः किम् ? यो धीरो धीरोदात्तनायकोऽनुषजति । कस्याम् ? आत्मसंपदि विजिगीषुगुणसामग्र्याम् । प्रभुशक्तावित्यर्थः । कथम् ? अजस्रं नित्यम् । किं कुर्वाणः ? उपेक्षमाणोऽवहेलयन् । कान् ? कर्मशत्रून् व्यापारपररिपून् । किं कुर्वतः ? भ्रश्यतोऽपचीयमानान् । केन ? कालेन समयेन । कया ? गुणविगुणतया गुणानां संधिविग्रहादीनां विगुणतया प्रयोगवैपरीत्येन । किं कृत्वा ? आविश्य प्रविश्य । कान् ? देशान् विषयान् । कस्य ? स्वस्य नायकात्मनः । न केवलमुपेक्षमाणः, प्रापयंश्च नयन् कर्मशत्रून् । किंविशिष्टान् ? तत्सुकामान् उपद्रोतुमिच्छून् ।

कम् ? क्षयमपचयम् । कथम् ? अवयवशोंऽशेनांशेन । कैः ? तैस्तैः प्रसिद्धै-रुपायैर्घोटकादिभिः । कथम् ? प्रसभं हठात् ।

अनादिप्रवृत्तबन्धसहभाविनिर्जरानुशयानुस्मरणपुरस्सरं संवरसहभाविनि-र्जराप्रधानफलमात्मध्यानं प्रतिजानीते—

**भोजं भोजमुपात्तमुज्झति मयि भ्रान्तेल्पशोनल्पशः,**
**स्वीकुर्वत्यपि कर्म नूतनमितः प्राक् को न कालो गतः ।**
**संप्रत्येष मनोऽनिशं प्रणिदधेऽध्यात्मं न विन्दन्बहि,—**
**र्दुःखं येन निरास्रवः शमरसे मज्जन्भजे निर्जराम् ॥ ७५ ॥**

कः कालो न गतो नातीतः प्रागस्माद्वर्तमानक्षणात्पूर्वम् । सर्वो गत इत्यर्थः । क्व सति ? **मयि** आत्मनि । किं कुर्वति ? **उज्झति** त्यजति सति । किं तत् ? **कर्म** । किंविशिष्टम् ? **उपात्तं** बद्धम् । कथम् ? **भोजं भोजं** भुक्त्वा भुक्त्वा । कियत् ? **अल्पशः** स्तोक-मञ्जलिप्रमाणम् । कीदृशे मयि ? **भ्रान्ते** अनादिमिथ्यात्वसंस्कारवशाद्देहा-त्मनोरेकत्वाध्यवसायपरिणते सति । तथा **स्वीकुर्वत्यपि** बध्नति सति । किं तत् ? कर्म । किंविशिष्टम् ? **नूतनं** प्रतिनवम् । कियत् ? **अनल्पशो** बहुखारिप्रमाणम् । एतन्निर्जरादोषानुचिन्तनमबुद्धिपूर्वाया नरकादिषु कर्म-वशजाया अकुशलानुबन्धासंज्ञायास्तस्या विवक्षितत्वात् । ततः संप्रति किं करोमीत्याह—**एष** स्वसंवेदनप्रत्यक्षोहमात्मा **प्रणिदधे** समादधे । किं तत् ? **मनश्चित्तम्** । क्व ? **संप्रति** इदानीम् । क्व ? **अध्यात्ममन्तः** । कथम् ? **अनिशं** सततम् । **येन** सतताध्यात्ममनःप्रणिधानेन **भजे** सेवेहम् । काम् । **निर्जरामेकदेशकर्मक्षयम्** । किं कुर्वन् ? **मज्जन्** आविशन् । क्व ? **शमरसे** प्रशमसुखे । कीदृशः सन् ? **निरास्रवः** कृताशुभकर्मसंवरः । किं कुर्वन् यतः ? **न विन्दन्** अचेतयमानः । किं तत् ? **बहिर्दुःखं** परीषहोपसर्गकृत-कृच्छ्रम् । उक्तं च—

**आत्मानुष्ठाननिष्ठस्य व्यवहारबहिःस्थितेः ।**
**जायते परमानन्दः कश्चिद्योगेन योगिनः ॥**

आनन्दो निर्दहत्युद्धं कर्मेन्धनमनारतम् ।
न चासौ खिद्यते योगी बहिर्दुःखेष्वचेतनः ॥

सैषा कुशलशार्दूलमूला संज्ञा शुभानुबन्धा च निर्जरा; परीषहजये कृते सति प्रवृत्तत्वात् । एवं निर्जरागुणदोषभावनं निर्जरानुप्रेक्षा । एवं भावय न्निर्जरार्थं प्रवर्तते । इति निर्जरानुप्रेक्षा ।

इदानीं लोकालोकस्वरूपं निरूप्य तद्भावनापरस्य स्वात्मोपलब्धियोग्यतामुपदिशति—

जीवाद्यर्थचितो दिवर्धमुरजाकारस्त्रिवातीवृतः,
स्कन्धः खेऽति महाननादिनिधनो लोकः सदास्ते स्वयम् ।
नॄन् मध्येत्र सुरान् यथायथमधः श्वाभ्रांस्तिरश्चोभितः,
कर्मोदर्चिरुपप्लुतानधियतः सिद्ध्यै मनो धावति ॥ ७६ ॥

आस्ते तिष्ठति । कोसौ ? लोकः । लोक्यन्ते दृश्यन्ते जीवादयः पदार्था अस्मिन्निति लोकः । क ? खे अलोकाकाशे न वराहदंष्ट्रादौ । कथम् ? सदा सर्वस्मिन्काले । कथम् ? स्वयमात्मना । न केनचित्कदाचित्कृत इत्यर्थः । किंविशिष्टोसौ ? जीवाद्यर्थचितो जीवपुद्गलधर्माधर्माकाशकालैर्व्याप्तः । तथा दिवर्धमुरजाकारः अधोन्यस्तमृदङ्गार्धमुखस्थापितोर्ध्वमृदङ्गसमसंस्थानः । इत्थं वा वेत्रासनमृदङ्गोरुझल्लरीसदृशाकृतिः । अधश्चोर्ध्वं च तिर्यक् च यथायोगम् । इति त्रिधा । तथा त्रिवातीवृतः त्रयाणां वातानां घनोदधिघनवाततनुवातसंज्ञानां मरुतां समाहारस्त्रिवाती । तया वृतो वृक्ष इव त्वक्त्रयेण वेष्टितः । तथा स्कन्धः समुदायरूपः । उक्तं च—

समवाओ पंचह्णं समओत्ति जिणोत्तमेहिं पण्णत्तं ।
सो चेव हवदि लोओ तत्तो अमिदो अलोगो खं ॥

१–समवायः पञ्चानां समय इति जिनोत्तमैः प्रज्ञप्तम् ।
स चैव भवति लोकः ततोऽमितोऽलोकः खम् ॥

तथा **अतिमहान्** अत्यंतविपुलः। घनाकारेण त्रिचत्वारिंशदधिकरज्जुशतत्रयप्रमित इत्यर्थः। तथा **अनादिनिधनः** सृष्टिसंहाररहितः। उक्तं च—

**लोओ अकिट्टिमो खलु अणाइणिहणो सहावणिब्बंधो।**
**जीवाजीवेहिं फुढो सव्वागासऽवयवो णिच्चो॥**

अत्र एतस्मिँल्लोके **धावति** वेगेन गच्छति। किं तत् ? **मनश्चित्तम्**। कस्यै ? **सिद्ध्यै** बहिः सिद्धक्षेत्राय लोकाग्राय, अध्यात्मं च स्वात्मोपलब्धये। किं कुर्वतः? **अधियतो** ध्यायतः साधोः। कान्? **नॄन्** मनुष्यान्। क्व? **मध्ये** मानुषोत्तरपर्वतपर्यन्ते जम्बूद्वीपलवणोदकधातकीखण्डद्वीपकालोदकसमुद्रपुष्करवरद्वीपार्धरूपे मध्यदेशे। किंविशिष्टान् ध्यायतः? **कर्मोदर्चिरुपप्लुतान्**। कर्माणि ज्ञानावरणादीनि उदर्चिषोऽग्नय इव, तापत्रयहेतुत्वात् कर्मोदर्चिषः। तैरुपप्लुतानुपद्रुतान्। तथा कर्मोदर्चिरुपप्लुतान् **सुरान् यथायथं** यथात्मीयस्थानं ध्यायतः साधोः सिद्ध्यै मनो धावति॥ तत्र भवनवासिनां मुखे योजनशतानि विंशतिमुपर्यधश्चैकैकसहस्रं त्यक्त्वा खरभागे नागादिनवानां कुमाराणां पङ्कबहलभागे त्वसुराणां राक्षसानां च स्थानानि। व्यन्तराणामधस्ताच्चित्रावज्रावनीसंधेरारभ्योपरिष्टान्मेरुं यावत् तिर्यक् च समन्तादास्पदानि। ज्योतिषाणामतो भूमेर्नवत्यधिकसप्तशतयोजनान्याकाशे गत्वोर्ध्वं दशोत्तरशतयोजनावकाशे नभोदेशे तिर्यक् च घनोदधिवातवलयं यावद्विमानाधिष्ठानानि। वैमानिकानां पुनरूर्ध्वमृजुविन्द्रकादारभ्य सर्वार्थसिद्धिं यावद्विमानपदानि। इति यथागमं विस्तरतश्चिन्त्यम्।

तथा कर्मोदर्चिरुपप्लुतान् **श्वाभ्रान्** नारकानधोऽब्बहलभागात्प्रभृति ध्यायतः साधोः सिद्ध्यै मनो धावति। तथा कर्मोदर्चिरुपप्लुतान् **तिरश्चस्तैर्यग्योनीनभितः** समन्तात् सर्वत्र लोके ध्यायतः साधोः सिद्ध्यै मनो धावति।

---

१--लोकोऽकृत्रिमः खलु अनादिनिधनः स्वभावनिर्बन्धः।
जीवाजीवैः............................ ... ... ... ॥

सम्यग्लोकस्थितिभावनयाऽधिगतसंवेगस्य मुक्त्यर्थसामर्थ्यसमुद्भवं भावयति—

**लोकस्थितिं मनसि भावयतो यथावद्,**
**दुःखार्तदर्शनविजृम्भितजन्मभीतेः ।**
**सद्धर्मतत्फलविलोकनरञ्जितस्य,**
**साधोः समुल्लसति कापि शिवाय शक्तिः ॥ ७७ ॥**

**समुल्लसति** समुद्भवति । कासौ ? **कापि** अलौकिकी **शक्तिः** सामर्थ्यम् । कस्मै ? **शिवाय** अपवर्गार्थम् । कस्य ? **साधोः** सिद्धिसाधनोद्यतस्य । किं कुर्वतः ? **भावयतः** पुनः पुनश्चिन्तयतः । काम्? **लोकस्थितिं** जगत इत्थंभावनियमम् । क्व ? **मनसि** अन्तश्चेतसि । कथम् ? **यथावत्** सम्यक् । पुनः किंविशिष्टस्य ? **दुःखार्तदर्शनविजृम्भितजन्मभीतेः** दुःखपीडितलोकावलोकनेन प्रवृत्तसंसारभयस्य । पुनरपि किंविशिष्टस्य ? **सद्धर्मे**त्यादि । सद्धर्मः शुद्धात्मानुभूतिः तत्फलं परमानन्दः । सद्धर्मश्च तत्फलविलोकनं च सद्धर्मतत्फलविलोकने । ताभ्यां रञ्जितः कृतानुरागः सद्धर्मतत्फलविलोकनरञ्जितस्तस्य । एवं चिन्तयतस्तत्त्वज्ञानविशुद्धिर्भवति । इति लोकानुप्रेक्षा ।

संप्रति बोधिदुर्लभत्वं प्रणिधत्ते—

**जातोत्रैकेन दीर्घं घनतमसि परं स्वानभिज्ञोऽभिजानन्,**
**जातु द्वाभ्यां कदाचित्त्रिभिरहमसकृज्जातुचित्खैश्चतुर्भिः ।**
**श्रोत्रान्तैः कर्हिचिच्च क्वचिदपि मनसानेहसीदृङ्नरत्वं,**
**प्राप्तो बोधिं कदापं तदलमिह यते रत्नत्रजन्मसिन्धौ ॥ ७८ ॥**

**जात** उत्पन्नोहम् । क्व ? **अत्र** एतस्मिंल्लोके । कथम् ? **दीर्घं** चिरकालम् । कथम् ? **असकृद्**वारंवारम् । क्व ? **घनतमसि** । घनं निबिडं तमो मिथ्यात्वस्वरूपमन्धकारो यत्र तद्घनतमस्तस्मिन् । नित्यनिगोतादिस्थाने इत्यर्थः । किं कुर्वन् ? **अभिजानन्** आभिमुख्येन परि-

श्छिन्दन् । किं तत् ? **परं** परद्रव्यं स्पर्शप्रधानम् । केन ? **एकेन** **खेनेन्द्रियेण** । स्पर्शनेनेत्यर्थः । **खै**रिति वचनपरिणामेण संबन्धः । एवमुत्तरत्रापि नैयायिकसमन्वयश्चिन्त्यः । किंविशिष्टः सन् । **स्वानभिज्ञ** आत्मज्ञानपराङ्मुखः । तथा जातोहमत्र दीर्घमसकृज्जातु कदाचित् । किं कुर्वन् ? **अभिजानन्** । किं तत् ? परं स्पर्शरसप्रधानं परद्रव्यम् । काभ्याम् ? **द्वाभ्यां** खाभ्यां स्पर्शनरसनाभ्याम् । क ? घनतमसि कृम्यादिस्थाने । किंविशिष्टः सन् ? स्वानभिज्ञः । तथा जातोहमत्र दीर्घमसकृत्कदाचित् । किं कुर्वन् ? अभिजानन् । किं तत् ? परं परद्रव्यं स्पर्शरसगन्धप्रधानम् । कैः ? **त्रिभिः** खैः स्पर्शनरसनघ्राणैः । क ? घनतमसि पिपीलिकादिस्थाने । किंविशिष्टः सन् ? स्वानभिज्ञः । तथा जातोहमत्र दीर्घमसकृज्जातुचित् कदाचिदपि । किं कुर्वन् ? अभिजानन् । किं तत् ? परं परद्रव्यं स्पर्शरसगन्धरूपप्रधानम् । कैः ? **खैरिन्द्रियैश्चतुर्भिः** स्पर्शनरसनघ्राणचक्षुर्भिः । क ? घनतमसि भ्रमरादिस्थाने । किंविशिष्टः सन् ? स्वानभिज्ञः । तथा जातोहमत्र दीर्घमसकृत्क्वचित् कदाचित् । किं कुर्वन् ? अभिजानन् । किं तत् ? परं परद्रव्यं स्पर्शरसगन्धवर्णशब्दप्रधानम् । कैः ? **खैः श्रोत्रान्तैः** स्पर्शनरसनघ्राणचक्षुःश्रोत्रैर्यथासंख्यम् । श्रोत्रमन्ते येषां तानि श्रोत्रान्तानीति विग्रहः । क ? घनतमसि गोरहरादिस्थाने । असंज्ञित्वे सतीत्यर्थः । किंविशिष्टः सन् ? स्वानभिज्ञः । तथा जातोहमत्र दीर्घमसकृत् **क्वचिज्जाने**ऽहसि काले । कदाचिदपीत्यर्थः । किं कुर्वन् ? अभिजानन् । किं तत् ? परं परद्रव्यं स्पर्शरसगन्धवर्णशब्दश्रुतार्थविषयम् । केन ? **अपि मनसा** मनःषष्ठैः पञ्चभिरपीन्द्रियैरित्यर्थः । संज्ञित्वं प्राप्तोहमिति यावत् । क ? घनतमसि मनुष्यादिस्थाने । किंविशिष्टः सन् ? स्वानभिज्ञः । **कदा** कस्मिन् काले **आपं** लब्धवानहम् ? काम् ? **बोधिं** रत्नत्रयप्राप्तिम् । किं विशिष्टः सन् ? **प्राप्तः** । किं तत् ? **नरत्वं** मनुष्यत्वम् । किंविशिष्टम् ? **ईदृक्** सुजात्यादिसंपन्नम् । यत एवं बोधेर्दुर्लभत्वं संसारे **तत्** तस्मात् कारणात् । **यते** प्रयत्नं करोम्यहम् । क ? **इह** बोधौ । कथम् ? **अलम**त्यर्थम् । क ? **जन्मसिन्धौ** संसारसमुद्रे । किंवत् ? **रत्नवद्** रत्ने यथा । यथा कश्चित्समुद्रमध्येऽत्यन्तदुर्लभं रत्नं प्राप्य अलं यतते तथा संसारेऽत्यन्तदुर्लभां बोधिं प्राप्याहं प्रयत्नं करोमीत्यर्थः ।

दुर्लभबोधेः प्रमादात्क्षणमपि प्रच्युतायास्तत्क्षणबद्धकर्मविपक्त्रिमक्लेशसंक्लेशवेदनावशस्य पुनर्दुर्लभतरत्वं चिन्तयति—

**दुष्प्रापं प्राप्य रत्नत्रयमखिलजगत्सारमुत्सारयेयं,**
**नो चेत्प्रज्ञापराधं क्षणमपि तदरं विप्रलब्धोक्षधूर्तैः ।**
**तत्किंचित्कर्म कुर्यां यदनुभवभवत्क्लेशसंक्लेशसंविद्,**
**बोधेर्विन्देय वार्तामपि न पुनरनुप्राणनास्याः कुतस्त्याः ॥७९॥**

**नोचेद्यदि** नोत्सारयेयं दूरीकुर्यामहम् । कम् ? **प्रज्ञापराधं** प्रमादाचरणम् । कथम् ? **क्षणम**प्यल्पकालमपि । किं कृत्वा ? **प्राप्य** लब्ध्वा । किं तत् ? **रत्नत्रयं** सम्यग्दर्शनादित्रयम् । किंविशिष्टम् ? **दुष्प्रापं** दुःखेन लभ्यम् । पुनः किंविशिष्टम् ? **अखिलजगत्सारं** सर्वलोकोत्तमम् । उक्तं च—

ज्ञातमप्यात्मनस्तत्त्वं विविक्तं भावयन्नपि ।
पूर्वविभ्रमसंस्काराद्भ्रान्तिं भूयोपि गच्छति ॥

**तत्** तस्मात्प्रज्ञापराधाद्धेतोः **कुर्यां** विदध्यामहम् । किं तत् ? **किंचिद्** दारुणं तत्कर्म । किंविशिष्टः सन् ? **विप्रलब्धो** वञ्चितः । कैः ? **अक्षधूर्तै**रिन्द्रियैर्धूर्तैरिव वञ्चनाप्रधानत्वात् । कथम् ? **अरं** शीघ्रम् । **यदनुभवभवत्क्लेशसंक्लेशसंविदहं न विन्देयं** न लभेयम् । काम् ? **वार्तामपि** प्रवृत्तिमपि न केवलं स्वरूपलाभमित्यपिशब्दार्थः । कस्याः ? **बोधेः** । क्लेशा अविद्यास्मितारागद्वेषाभिनिवेशाः । संक्लेशाः सुखदुःखोपभोगविकल्पाः । क्लेशाश्च संक्लेशाश्च क्लेशसंक्लेशाः । तेषां संवित् संवित्तिः क्लेशसंक्लेशसंवित् । यस्य कर्मणोऽनुभवो विपाको यदनुभवः तस्माद्भवन्ती जायमानाः क्लेशसंक्लेशसंविद् यस्य सोहं बोधेर्वार्तामपि न प्राप्नुयामित्यर्थः । कथम् ? **पुनर्भूयः । कुतस्त्या** कुतो भवा । कासौ ? **अनुप्राणना** पुनरुज्जीवना । कस्याः ? **अस्या** बोधेः । न कश्चिद्बोधिः प्राप्यत इत्यर्थः । उक्तं च—

"एकनिगोदशरीरे जीवाः सिद्धानन्तगुणाः । एवं सर्वलोको निरन्तरं स्थावरैर्निचितः । अतस्त्रसतापञ्चेन्द्रियत्वमनुष्यत्वदेशकुलेन्द्रियारोग्यसद्धर्म-

संपत्तिः कृच्छ्रलभ्या । एवं कृच्छ्रलभ्यं धर्ममवाप्य विषयसुखभावो विरक्तविषयस्य तपोभावना धर्मप्रभावना सुखमरणादिरूपसमाधिश्च दुर्लभः । तस्मिन्सति बोधिलाभः फलवान् भवति । इति चिन्तनं बोधिदुर्लभानुप्रेक्षेति ।" एवं चिन्तयतो बोधिं प्राप्य न प्रमादो भवति । इति बोधिदुर्लभानुप्रेक्षा ।

अथ केवलिप्रज्ञप्तत्रैलोक्यैकमङ्गललोकोत्तमस्य धर्मस्याविर्भावमाशंसति—

**लोकालोके रविरिव करैरुल्लसन् सत्क्षमाद्यैः,**
**खद्योतानामिव घनतमोद्योतिनां यः प्रभावम् ।**
**दोषोच्छेदप्रथितमहिमा हन्ति धर्मान्तराणां,**
**स व्याख्यातः परमविशदख्यातिभिः ख्यातु धर्मः ॥ ८० ॥**

**ख्यातु** प्रकटीभवतु । कोसौ ? **स धर्मः** चतुर्दशगुणस्थानानां गत्यादिषु चतुर्दशमार्गणास्थानेषु स्वतत्त्वविचारणलक्षणो वस्तुयाथात्म्यरूपो वा । किंविशिष्टः ? **स्वाख्यातः** शोभनं सम्यगुक्तः । व्यवहारनिश्चयाभ्यां व्यवस्थापित इत्यर्थः । कैः ? **परमविशदख्यातिभि**रुत्कृष्टाशेषविशेषस्फुटप्रकाशननिष्ठज्ञानैः । सर्वज्ञैरित्यर्थः । यः किम् ? **यो हन्ति** तिरस्करोति । कम् ? **प्रभावं** माहात्म्यम् । केषाम् ? **धर्मान्तराणां** वेदाद्युक्तधर्माणाम् । किंविशिष्टानाम् ? **घनतमोद्योतिनां** घने निबिडे तमसि मिथ्यात्वे द्योतनशीलानाम् । केषामिव ? **खद्योतानामिव** ज्योतिरिङ्गणानामिव । किं विशिष्टानाम् ? घनतमोद्योतिनां घनेऽन्धकारे द्योतनशीलानाम् । किंविशिष्टोसौ ? **दोषोच्छेदप्रथितमहिमा** । दोषा रागादयो दोषा च रात्रिः दोषोच्छेदेन प्रथितः प्रख्यातो महिमा माहात्म्यं यस्य सोऽयम् । किं कुर्वन् ? **उल्लसन्** प्रकाशमानः । कैः ? **सत्क्षमाद्यै**रुत्तमक्षमामार्दवादिभिः । क इव कैः ? **रविरिव करैः** सूर्यो यथा रश्मिभिः । क ? **लोकालोके** भव्यजनान्तर्दृष्टौ चक्रवालगिरौ च ।

संप्रत्यहिंसैकलक्षणस्य धर्मस्याक्षयसुखफलत्वं दुर्लभत्वं समग्रशब्दब्रह्मप्राणत्वं च प्रकाशयन्नाह—

सुखमचलमहिंसालक्षणादेव धर्माद्,
भवति विधिरशेषोप्यस्य शेषोऽनुकल्पः।
इह भवगहनेसावेव दूरं दुरापः,
प्रवचनवचनानां जीवितं चायमेव॥ ८१ ॥

भवति। किं तत्? सुखम्। किंविशिष्टम्? अचलमक्षयम्। कस्मात्? धर्मात्। किंविशिष्टात्? अहिंसालक्षणादेव "अप्रादुर्भावः खलु रागादीनां भवत्यहिंसेति" अहिंसा लक्षणं स्वरूपं यस्य। सोयं भवति। कोसौ? विधिः सत्यवचनादिः। किंविशिष्टः? शेषोऽन्यः। किंविशिष्टो भवति? अनुकल्पः। अनुगतं द्रव्यभावाभ्यामहिंसकत्वं कल्पयति समर्थयते। तदनुयायीत्यर्थः। कस्य? अस्य अहिंसालक्षणस्य धर्मस्य। किं कियान्? न। इत्याह—अशेषोपि समग्रोपि। इह चास्मिन्भवगहने संसारारण्ये भवत्यसावेव। किंविशिष्टः? दुरापो दुर्लभः। कथम्? दूरमत्यर्थम्। भवति चायमेव। किंविशिष्टः? जीवितं प्राणाः। केषाम्? प्रवचनवचनानां सिद्धान्तवाक्यानाम्। एवं भावयतः सदा धर्मानुरागो भवति। इति धर्मस्वाख्यातत्वानुप्रेक्षा।

अथानित्यताद्यनुप्रेक्षाणां यां कांचिदिष्टामनुध्याय निरुद्धेन्द्रियमनःप्रसरस्यात्मनात्मन्यात्मनः संवेदनात् कृतकृत्यतामापन्नस्य जीवन्मुक्तिपूर्विकांपरमुक्तिप्राप्तिमुपदिशति—

इत्येतेषु द्विषेषु प्रवचनदृगनुप्रेक्षमाणोऽध्रुवादि,—
ष्वद्धा यत्किंचिदन्तःकरणकरणजिद्वेत्ति यः स्वं स्वयं स्वे।
उच्चैरुच्चैःपदाशाधरभवविधुराम्भोधिपाराप्तिराज-
त्कार्तार्थ्यः पूतकीर्तिः प्रतपति स परैः स्वैर्गुणैर्लोकमूर्ध्नि ८२

प्रतपति प्रकर्षेण दीप्यते। कोसौ? स आत्मा। क? लोकमूर्ध्नि त्रैलोक्यशिरसि। कैः? गुणैः सम्यक्त्वादिभिः। किंविशिष्टैः? स्वैः सिद्धात्मसंबन्धिभिः। पुनः किंविशिष्टैः? परैरुत्कृष्टैः। किंविशिष्टः सन्? उच्चैरि-

त्यादि। उच्चैरुच्चैःपदेषु उन्नतोन्नतस्थानेषु नृपमहर्द्धिकदेवचक्रिसुरेन्द्राहमिन्द्र-गणधरतीर्थंकरत्वलक्षणेषु आशा प्राप्त्यभिलाषः, तां धरति तथा वाऽधरो निन्द्यः, शुभाशुभकर्मबन्धनिबन्धनत्वात्, उच्चैरुच्चैःपदाशाधरः। स चासौ भवश्च संसारः। तस्य विधुरं दुःखम्। तदेवाम्भोधिः समुद्रः तस्य पारं परतीरम्। तस्याप्तिः प्राप्तिः। तथा राजत् शोभमानं कार्तार्थ्यं कृतकृत्यता यस्य सोयमुच्चैरुच्चैःपदाशाधरभवविधुराम्भोधिपाराप्तिराजत्कार्तार्थ्यः। परममुक्तो भवन्नित्यर्थः। कृतोर्था येन स कृतार्थः कृतकृत्यः। तस्य भावः कार्तार्थ्यम्। उक्तं च—

> सर्वविवर्तोत्तीर्णं यदा स चैतन्यमचलमाप्नोति।
> भवति तदा कृतकृत्यः सम्यक्पुरुषार्थसिद्धिमापन्नः॥

पुनः किंविशिष्टः? पूतकीर्तिः। कीर्तिर्वाग्यशःस्तुतिर्नाम वा। पूता पवित्रा अबाधिता कीर्तिर्वाग् यस्य सोयं पूतकीर्तिः। जीवन्मुक्तो भूत्वेत्यर्थः। यशःस्तुतिनामपक्षे तु पूता पवित्रा उच्चारणमात्रेण पापापहारक्षमा कीर्तिर्यस्येति विग्रहः। यः किम्? यो वेत्ति प्रतिपद्यते। कम्? स्वमात्मानम्। केन? स्वयमात्मना स्वसंवेदनेन। क्व? स्वे आत्मनि। किंविशिष्टः सन्? अन्तःकरणकरणजिद् मनोक्षजेता। किं कुर्वाणः? अनुप्रेक्षमाणो भावयन्। किं तत्? यत्किंचिदिष्टम्। कथम्? अद्धा तत्त्वतः। केषु? अध्रुवादिषु। अनित्याशरणसंसारैकत्वान्यत्वाशुच्यास्रवसंवरनिर्जरालोकबोधिदुर्लभधर्मस्वाख्यातत्वेषु मध्ये। किंविशिष्टेषु? इत्येवंप्रकारेषु एतेषु सन्निहितेषु। पुनः किंविशिष्टेषु? द्विषेषु द्वादशसु। द्विः षट् इमानि द्विषाणि। "संख्येये संख्यया ह्यासन्नादूरसंख्यम्" इति बहुव्रीहिः। "संख्यावाड्डोऽबहुगणात्" इति डः समासान्तः। वृत्त्यैवाभ्यावृत्तेरुक्तत्वात्सुचोऽप्रयोगः। तथा च शिष्टप्रयोगः, "ह्यनेकद्विषभेदगम्" इति। किंविशिष्टः सन्? प्रवचनदृक् परमागमचक्षुः। इति द्वादशानुप्रेक्षाप्रकरणम्।

अथ—

> "अदुःखभावितं ज्ञानं क्षीयते दुःखसन्निधौ।
> तस्माद्यथाबलं दुःखैरात्मानं भावयेन्मुनिः॥"

इत्यभिप्रेत्य विशेषसंख्यागर्भं परीषहसामान्यलक्षणमाचक्षाणस्तज्जयाधिकारिणो निर्दिशति—

दुःखे भिक्षुरुपस्थिते शिवपथाद्भ्रश्यत्यदुःखश्रितात्,
तत्तन्मार्गपरिग्रहेण दुरितं रोद्धुं मुमुक्षुर्नवम् ।
भोक्तुं च प्रतनं क्षुदादिवपुषो द्वाविंशतिं वेदनाः,
स्वस्थो यत्सहते परीषहजयः साध्यः स धीरैः परम् ॥८३॥

भ्रश्यति प्रच्यवति । कोसौ ? भिक्षुः संयमी । कस्मात् ? शिवपथाद् मोक्षमार्गात् । किंविशिष्टात् ? अदुःखश्रिताद् अदुःखेन सुखेन श्रितात् सेवितात् । भावितादित्यर्थः । क्व सति ? दुःखे । किंविशिष्टे ? उपस्थिते संनिहिते । यत एवं तत् तस्मात् स भण्यते । कोसौ ? परीषहजयः । अस्य संयमतपोविशेषत्वादिहोपदेशः । उक्तं च—

परिषोढव्या नित्यं दर्शनचारित्ररक्षणे नियताः ।
संयमतपोविशेषास्तदेकदेशाः परीषहाख्याः स्युः ॥

यत्किम् ? यत्सहते संक्लेशं दैन्यं च विनानुभवति । कोसौ ? मुमुक्षुः । किंविशिष्टः सन् ? स्वस्थः स्वस्मिन्कर्मविविक्ते आत्मनि तिष्ठन् । काः ? वेदनाः । वेद्यन्तेऽनुभूयन्तेऽसद्वेद्यादिकर्मोदयपरतन्त्रैः प्राणिभिरिति वेदना अन्तर्बहिर्द्रव्यपरिणामाः शारीरमानसप्रकृष्टपीडाहेतवः । किंविशिष्टाः ? क्षुदादिवपुषः क्षुत्पिपासाशीतोष्णदंशमशकनाग्न्यारतिस्त्रीचर्यानिषद्याशय्याक्रोशवधयाचनालाभरोगतृणस्पर्शमलसत्कारपुरस्कारप्रज्ञाज्ञानादर्शनस्वभावः । कति ? द्वाविंशतिम् । किं कर्तुम् ? रोद्धुं निवारयितुम् । किं तत् ? दुरितं दुष्कृतम् । किंविशिष्टम् ? नवं प्रत्यग्रमपूर्वम् । न केवलं, भोक्तुं च निर्जरयितुम् । किं तत् ? दुरितम् । किंविशिष्टम् ? प्रतनं पुराणं प्राग्बद्धम् । केन ? तन्मार्गपरिग्रहेण । तस्य शिवस्य मार्गः प्राप्त्युपायस्तन्मार्गः । सद्ध्यानमिति यावत् । तस्य परिग्रहः स्वीकारस्तेन । उक्तं च—

परीषहाद्यविज्ञानादास्रवस्य निरोधिनी ।
जायतेऽध्यात्मयोगेन कर्मणामाशु निर्जरा ॥

क्षुत्पिपासादिसहनाद्धि संवरे सत्यौपक्रमिकं कर्मफलमनुभवन् क्रमेण निर्जीर्णकर्मा मोक्षमवाप्नोति । स च परीषहजयः साध्यः साधयितुं शक्यः । कैः ? धीरैरकातरैः पुंभिः । कथम् ? परं केवलम् । कातराणां मनागपि साध्यो न भवतीत्यर्थः ।

बालव्युत्पत्त्यर्थं पुनस्तत्सामान्यलक्षणं प्रपञ्चयति—

**शारीरमानसोत्कृष्टबाधहेतून् क्षुदादिकान् ।**
**प्राहुरन्तर्बहिर्द्रव्यपरिणामान् परीषहान् ॥ ८४ ॥**

**प्राहुः** प्रवदन्ति सूरयः । कान् ? **परीषहान्** । किंविशिष्टान् ? **अन्तर्बहिर्द्रव्यपरिणामान्** । क्षुदादयोन्तर्द्रव्यस्य जीवस्य परिणामाः । शीतोष्णादयो बहिर्द्रव्यस्य पुद्गलस्य च । इति यथासंभवं योज्यम् । अन्तश्च बहिश्चान्तर्बहिः अन्तरङ्गबहिरङ्गे । ते च ते द्रव्ये च यथासंख्यं जीवपुद्गलौ अन्तर्बहिर्द्रव्ये । तयोः परिणामा अवस्थाविशेषाः । पुनः किंविशिष्टान् ? **क्षुदादिकान्** क्षुत्पिपासाशीतोष्णादीन् । पुनरपि किंविशिष्टान् ? **शारीरे**त्यादि । शरीरे भवाः शारीराः । मनसि भवा मानसाः । बाधाः पीडाविशेषाः । उत्कृष्टाश्च ते बाधाश्च उत्कृष्टबाधाः । शारीराश्च मानसाश्च शारीरमानसाः । ते च ते उत्कृष्टबाधाश्च । तेषां हेतवः कारणानि कालत्रयेपि कार्यारम्भस्य सर्वेषां सप्रत्ययवायत्वात् ॥

विघ्नोपनिपातेपि श्रेयोर्थिभिः प्रारब्धश्रेयोन्मार्गान्नापसर्तव्यमिति शिक्षार्थमाह—

**स कोपि किल नेहाभून्नास्ति नो वा भविष्यति ।**
**यस्य कार्यमविघ्नं स्यान्न्याकार्यो हि विधेः पुमान् ॥ ८५ ॥**

**किले**ति शास्त्रे लोके च श्रूयते । शास्त्रे यथा—

"स किं कोपीहाभूदस्ति भविष्यति वा यस्याऽप्रत्यवायः कार्यारम्भ" इति । लोके यथा—

"श्रेयांसि बहुविघ्नानि भवन्ति महतामपि" इति ।

स कोपि कश्चिन्नाभून्न भूतो, नास्ति न विद्यते, नो वा भविष्यति न वा संपत्स्यते। क्व? इह लोकत्रये। यस्य किम्? यस्य स्यात्। किं तत्? कार्यम्। किंविशिष्टम्? अविघ्नमविद्यमानप्रत्यूहम्। हि यस्माद्भवति। कोसौ? पुमान् पुरुषः। किंविशिष्टः? न्यक्कार्योऽभिभवनीयः। कस्य? विधेर्दैवस्य। ततो विघ्ननिघ्नीभूय प्रेक्षापूर्वकारिभिर्न जातु प्रारब्धं श्रेयसः साधनमुज्झितव्यम्। यद्वाह्या अप्याहुः—

प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्नविहता विरमन्ति मध्याः।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः,
प्रारब्धमुत्तमगुणा न परित्यजन्ति॥

क्लेशायासाभ्यां विह्वलीभवतो लोकद्वयेपि स्वार्थभ्रंशः स्यादिति भीतिमुद्भावन्नाह—

**विक्लवप्रकृतिर्यः स्यात् क्लेशादायासतोथवा।**
**सिद्धस्तस्यात्रिकध्वंसादेवामुत्रिकविप्लवः॥ ८६॥**

यः पुरुषः स्यात्। किंविशिष्टः? विक्लवप्रकृतिर्विह्वलीभूतस्वभावः। कस्मात्? क्लेशाद्व्याध्यादिबाधातः, अथवाऽऽयासतः प्रारब्धकर्मश्रमात्। विक्लवप्रकृतिः स्यात्तस्य सिद्धो निश्चितो निष्पन्नो वा। कोसौ? आमुत्रिकविप्लवः परलोकप्राप्याभीष्टफलविनाशः। कस्मात्? आत्रिकध्वंसादेव इह लोकप्राप्याभीष्टफलस्य कर्मारम्भस्य परलोकफलार्थस्य वा तस्य विनाशात्।

भृशं पौनःपुन्येन वाप्युपसर्पद्भिः परीषहोपसर्गैरविक्षिप्यमाणचित्तस्य निःश्रेयसपदप्राप्तिमुपदिशति—

**क्रियासमभिहारेणाप्यापतद्भिः परीषहैः।**
**क्षोभ्यते नोपसर्गैर्वा योपवर्गं स गच्छति॥ ८७॥**

स मुमुक्षुरपवर्गं मोक्षं गच्छति प्राप्नोति। यः किम्? यो न क्षोभ्यते प्रकृतेश्चाल्यते। कैः? परीषहैः क्षुदादिभिरुपसर्गैर्वा सुरनरतिर्यगचेतन-

निमित्तकैरसह्यपीडाविशेषैः। किं कुर्वद्भिः ? आपतद्भिरागच्छद्भिः। केन ? क्रियासमभिहारेणापि अतिमात्रेण पौनःपुन्येन वा। न केवलं मनाग्, अनभ्यावृत्त्या वा इत्यपि शब्दार्थः।

प्रागेवाभ्यस्तसमस्तपरीषहजयस्य महासत्त्वस्य क्रमक्षपितघात्यघातिकर्मणो लोकाग्रचूडामणित्वमुद्गृणाति—

**सोढाशेषपरीषहोऽक्षतशिवोत्साहः सुदृग्वृत्तभाग्,**
**मोहांशक्षपणोल्बणी कृतबलो निस्सांपरायं स्फुरन्।**
**शुक्लध्यानकुठारकृत्तबलवत्कर्मद्रुमूलोऽपरं,**
**ना प्रस्फोटितपक्षरेणुखगवद्यात्यूर्ध्वमस्त्वा रजः ॥ ८८ ॥**

**याति** गच्छति। कोसौ ? **ना** द्रव्यतः पुमानेव। क्व याति। **ऊर्ध्वं** लोकाग्रे। किं कृत्वा ? **अस्त्वा** व्युपरतक्रियानिवृत्तिलक्षणशुक्लध्यानेन क्षिप्त्वा। किं तत् ? **रजो** रज इव रेणुरिव रजः स्वरूपोपघातपरिहारेणैवोपश्लेषावस्थानात्। किंविशिष्टम् ? **अपरं** वेद्यायुर्नामगोत्ररूपमघाति कर्म। किंवत् ? **प्रस्फोटितपक्षरेणुखगवत्** पक्षयोः पतत्रयोः रेणू-रजः पक्षरेणुः। प्रस्फोटितोऽपनीतः पक्षरेणुर्येन स प्रस्फोटितपक्षरेणुः। स चासौ खगश्च पक्षी। तेन तुल्यम्। किंविशिष्टः सन् ? **सोढाशेषपरीषहः** सोढाः सह्यतां नीता अशेषाः सर्वे परीषहाः क्षुधादयो येन स एवम्। सर्वपरीषहैरनभिभवनीय इत्यर्थः। पुनः किंविशिष्टः ? **अक्षतशिवोत्साहः**। अक्षतोनुपहतः प्रतिक्षणं वर्धमानः शिवोत्साहो मोक्षायोद्योगो यस्य स एवम्। अप्रमत्तसंयत इत्यर्थः। तल्लक्षणं यथा,—

**णट्ठासेसपमाओ वयगुणसीलोलिमंडिओ णाणी।**[1]
**अणुवमसमओ अखवओ झाणणिलीणो हु अपमत्तो ॥**

तथा **सुदृग्वृत्तभाक्**। सुदृग्वृत्ते क्षायिकसम्यक्त्वसामायिकाद्यन्यतमचारित्रे भजति सेवते तन्मयो भवतीति सुदृग्वृत्तभाक्। क्षपकश्रेण्यारोहणोन्मुख

१ नष्टाशेषप्रमादो वृतगुणशीलावलिमण्डितो ज्ञानी।
अनुपशमकोऽक्षपको ध्याननिलीनः खलु अप्रमत्तः ॥

इत्यर्थः। तथा **मोहांशक्षपणोल्वणीकृतबलः**। मोहांशानां चारित्रमोहैकदेशानां क्षपणं क्षयः। तेनोल्वणीकृतमुत्कटीकृतं बलं सामर्थ्यं येन स एवम्। अपूर्वकरणादिगुणस्थानवर्तीत्यर्थः। तथा **निःसाम्परायं स्फुरन्** निःसाम्परायं लोभाभावेन स्फुरन् द्योतमानः। क्षीणमोह इत्यर्थः। तथा **शुक्लध्यानकुठारकृत्तबलवत्कर्मद्रुमूलः**। शुक्लध्यानमेकत्ववितर्कावीचाराख्यमत्र ग्राह्यं, पृथक्त्ववितर्कवीचाराख्यस्य तस्यापूर्वकरणादिषु त्रिषु गुणस्थानेषु निवृत्तत्वात्। बलवत्कर्माणि ज्ञानदर्शनावरणान्तरायसंज्ञान्यघातिकर्मापेक्षयात्र गृह्यन्ते। शुक्लध्यानमेव कुठारः परशुः। तेन कृत्तानि—छिन्नानि बलवत्कर्माण्येव द्रुमूलानि वृक्षबुध्ना येन स एवम्। जीवन्मुक्त इत्यर्थः।

सोढाशेषपरीषहत्वविशेषणं व्याकर्तुकामस्तावत् क्षुत्परीषहविजयविधानार्थमाह—

**षट्कर्मीपरमादृतेरनशनाद्यात्मकृशिम्नोऽशन,—**
**स्यालाभाच्चिरमप्यरं क्षुदनले भिक्षोर्दिधक्ष्यत्यसून्।**
**कारापञ्जरनारकेषु परवान् योऽभुक्षि तीव्राः क्षुधः,**
**का तस्यात्मवतोऽद्य मे क्षुदियमित्युज्जीव्यमोजो मुहुः॥८९॥**

उज्जीव्यमुद्दीप्यम्। किं तत्? **ओज** उत्साहो धातुतेजो वा। कस्य? **भिक्षो**र्भिक्षान्नवृत्तेः। संयतेनेत्यर्थः। कथम्? **मुहु**र्वारंवारम्। कथम्? **इति**। किमिति? **का** वर्तते, न कापि। कासौ? इयमनुभूयमाना **क्षुत्** बुभुक्षावेदना। कस्य? **मे** मम। किंविशिष्टस्य? **तस्यात्मवत** आत्मायत्तस्य। क्व? **अद्य** अधुना। यः किमकर्षम्? **योऽभुक्षि** भुक्तवानहम्। काः? **क्षुधः** क्षुद्वेदनाः। किंविशिष्टाः? **तीव्राः** असह्यतमाः। किंविशिष्टः सन्? **परवान्** परायत्तः। केषु? **कारापञ्जरनारकेषु**। कारा वन्दिकुटी। मनुष्यं प्रत्येषा। शेषौ तैर्यङ्नैरयिकौ प्रति। कारा च पञ्जरं च पक्षिगृहं नारकश्च नरकः कारापञ्जरनारकास्तेषु। मनुष्येषु वन्दिकुट्यां, तिर्यक्षु पञ्जरे श्वभ्रेषु च नरके परायत्तः सन् यस्तीव्राः क्षुद्बाधाः सोढवानहम्। तस्यात्मायत्तस्य सांप्रतं मम का क्षुदियम्। न कापीत्यर्थः। किंविशिष्टस्य भिक्षोः? **षट्कर्मीपरमादृतेः**। षण्णां कर्मणां समाहारः षट्कर्मी षडा-

वश्यकक्रियाः षट्कर्मी परमा प्रकृष्टा आदृतिरादरः प्रयत्नो यस्य स एवम्। पुनः किंविशिष्टस्य ? **अनशनाद्यात्तकृशिम्नः** अनशनादिभिर्बाह्यतपोनुष्ठानैरात्तः प्राप्तः कृशिमा कृशत्वं क्षामत्वं येन स एवम्। क्व सति ? **क्षुदनले** क्षुद्बाधाग्नौ। किं कुर्वति ? **दिधक्षति** दग्धुमिच्छति। दग्धुं प्रवृत्ते इत्यर्थः। कान् ? **असून्** प्राणान्। कथम् ? **अरं** शीघ्रम्। यद्वैद्याः—

> आहारं पचति शिखी दोषानाहारवर्जितः पचति।
> दोषक्षये च धातून् पचति च धातुक्षये प्राणान्॥

कस्मात् ? **अलाभात्** अप्राप्तेः। कस्य ? **अशनस्य** भोजनस्य। कथम् ? **चिरमपि** बहुतरकालमपि। संवत्सरं यावदित्यर्थः।

तृष्णापरीषहतिरस्कारार्थमाह—

> **पत्रीवानियतासनोदवसितः स्नानाद्यपासी यथा,-**
> **लब्धाशी क्षपणाध्वपित्तकृदवष्वाणज्वरोष्णादिजाम्।**
> **तृष्णां निष्कुषिताम्बरीषदहनां देहेन्द्रियोन्माथिनीं,**
> **संतोषोद्धकरीरपूरितवरध्यानाम्बुपानाज्जयेत्॥ ९०॥**

**जयेद्** निगृह्णीयात्संयतः। काम् ? **तृष्णां** पिपासाम्। किंविशिष्टाम् ? **देहेन्द्रियोन्माथिनीं** शरीरस्याक्षाणां च कदर्थनशीलाम्। पुनः किंविशिष्टाम् ? **निष्कुषिताम्बरीषदहनां** निर्जितभ्राष्ट्राग्निं यतः। पुनरपि किंविशिष्टाम् ? **क्षपणाध्वपित्तकृदवष्वाणज्वरोष्णादिजाम्।** क्षपणमुपवासः। अध्वा मार्गचलनम्। पित्तकृदवष्वाणः पित्तकराहारः कट्वम्ललवणादिः। ज्वरः संतापात्मव्याधिः उष्णो ग्रीष्मः। आदिशब्दान्मरुदेशादिः। क्षपणं चाध्वा च पित्तकृदवष्वाणश्च ज्वरश्चोष्णश्च, ते आदयो येषां ते क्षपणादयः। तेभ्यो जाताम्। किंविशिष्टः संयतः ? **अनियतासनोदवसितः।** आसनमुपवेशनम्। उदवसितं गृहम्। आसनं चोदवसितं चासनोदवसिते। अनियते अनवस्थिते आसनोदवसिते यस्य स एवम्। क इव ? **पत्रीव** पक्षी यथा। पुनः किंविशिष्टः ? **स्नानाद्यपासी** अभिषेकावगाहपरिषेकशिरोलेपाद्युपचारपरिहारी। पुनरपि किं वि

शिष्टः? **यथालब्धाशी** यथाप्राप्ताशनव्रतः यथालब्धमश्नातीत्येवंव्रतः। "व्रताभीक्ष्ण्ययोश्च" इति णिन्। कस्माज्जयेत्? **संतोषोद्घकरीरपूरितवरध्यानाम्बुपानात्।** संतोषो धृतिः। उद्घकरीरो माघमासिकाभिनवघटः। उद्घः प्रशस्तः करीरो घट उद्घकरीरः। संतोष एवोद्घकरीरः संतोषोद्घकरीरः। तत्र तेन वा पूरितं पूर्णीकृतं वरध्यानं धर्म्यंशुक्लाख्यमेवाम्बु जलम् तस्य पानात्।

शीतपरीषहनिग्रहोपायमाह—

**विष्वक्चारिमरुच्चतुष्पथमितो धृत्येकवासाः पत,—**
**त्यन्वङ्गं निशि काष्ठदाहिनि हिमे भावांस्तदुच्छेदिनः।**
**अध्यायन्नधियन्नधोगतिहिमान्यर्तीर्दुरन्तास्तपो,—**
**बर्हिस्तप्तनिजात्मगर्भगृहसंचारी मुनिर्मोदते॥ ९१॥**

**मोदते** आनन्दमनुभवति। कोसौ? **मुनिर्योगी**। किंविशिष्टः सन्? **तपोबर्हिस्तप्तनिजात्मगर्भगृहसंचारी**। रत्नत्रयाविर्भावार्थमिच्छानिरोधस्तपः। तदेव बर्हिरग्निः। तेन तप्तमुष्णीकृतं निजात्मैव स्वात्मैव गर्भगृहं वासगृहं तपोबर्हिस्तप्तनिजात्मगर्भगृहम्। तत्र संचारी संचरणशीलः तदवस्थायीत्यर्थः। किंविशिष्टो मुनिः? **इतो** गतः। किं तत्? **चतुष्पथं** शृङ्गाटकम्। कीदृशम्? **विष्वक्चारिमरुत्** समताच्चरणशीलपवनम्। पुनः किंविशिष्टः? **धृत्येकवासाः**। धृतिः संतोष एकं केवलं वासो वसनं यस्य स एवम्। पुनरपि किंविशिष्टः? **अध्यायन्** अस्मरन्। कान्? **भावान्** पदार्थान्। किंविशिष्टान्? **तदुच्छेदिनः** पूर्वानुभूतान् शीतापनोदिनो गर्भगृहदीप्ताङ्गारगन्धतैलकुङ्कुमादीन्। क्व सति? **हिमे** तुषारे। किं कुर्वति? **पतति**। कथम्? **अन्वङ्गम**ङ्गमङ्गं प्रति। पुनः किंविशिष्टे? **काष्ठदाहिनि** दारुदहनशीले। कस्याम्? **निशि** रात्रौ। किं कुर्वन्नसौ तच्छीतं सहते? **अधियन्** स्मरन्। काः? **अधोगतिहिमान्यर्तीः**। महद्धिमं हिमानी। अधोगतौ नरके हिमानी अधोगतिहिमानी। तस्या अर्तीः पीडाः। नरकमहातिशीतदुःखानीत्यर्थः। किंविशिष्टाः?

दुरन्ताश्चिरकालभाविनीः। नरके महाशीतबाधाश्चिरकालभाविन्यः परतन्त्रेण मया परिषोढाः। तदपेक्षया कियच्छीतमिदमिति भावनापरिणतः सहते इत्यर्थः।

उष्णपरीषहपरिसहनमाह—

**अनियतविहृतिर्वनं तदात्वज्वलदनलान्तमितः प्रवृद्धशोषः।**
**तपतपनकरालिताध्वखिन्नः स्मृतनरकोष्णमहार्तिरुष्णसाट्स्यात्**

**स्यात्**। कोसौ? संयतः। किंविशिष्टः? **उष्णसाट्**। उष्णं सहते विचे क्विपि प्राग्दीर्घः। स्यात्। किंविशिष्टः संयतः? **अनियतविहृतिः** अनियता एकत्रानवस्थिता विहृतिर्विहारो यस्य स एवम्। पुनः किंविशिष्टः? इतो गतो। किं तत्? **वनमरण्यम्**। कीदृशम्? **तदात्वज्वलदनलान्तम्**। तदात्वे एव प्रवेशक्षणे एव ज्वलन् दीप्यमानोऽनलोग्निरन्तेषु पर्यन्तेषु यस्य तत्। पुनरपि किंविशिष्टः? **प्रवृद्धशोषः**। प्रवृद्धः प्रकर्षं प्राप्तः शोषः सौम्यधातुक्षयो मुखशोषश्च यस्य स एवम्। पुनरपि किंविशिष्टः? तपेत्यादि। तपस्य ग्रीष्मस्य तपन आदित्यस्तपतपनः। तेन करालितः प्रज्वलितोऽध्वा मार्गः। तेन खिन्नः खेदं गतः। किंभूतो भूत्वा उष्णं सहते? **स्मृतनरकोष्णमहार्तिः**। महती अर्तिः पीडा महार्तिः। नरके उष्णस्य महार्तिर्नरकोष्णमहार्तिः। स्मृता ध्याता नरकोष्णमहार्तिर्येन स एवम्। नरकेष्वत्युष्णशीते यथा,—

**षष्ठसप्तमयोः शीतं शीतोष्णं पञ्चमे स्मृतम्।**
**चतुर्ष्वत्युष्णमाद्येषु नरकेष्विति भूगुणाः॥**

इति चतसृषु भूषु पञ्चम्याश्च त्रिषु चतुर्भागेषूष्णनरकाणि ८२२५०००। शीतनरकाणि शेषाणि १७५०००।

---

१–८२२५००० पञ्चविंशतिसहस्राधिकद्व्यशीतिलक्षाण्युष्णनरकाणि, पञ्चसप्ततिसहस्राधिकैकलक्षं शीतनरकाणि मिलित्वा चतुरशीतिल० ८४००००० नरकाणि।

दंशमशकसहनमाह—

**दंशादिदंशककृतां बाधामघजिघांसया ।**
**निःक्षोभं सहतो दंशमशकोर्मीक्षमा मुनेः ॥ ९३ ॥**

भवति । कासौ ? **दंशमशकोर्मीक्षमा** दंशमशकपरीषहसहनम् । कस्य ? **मुने**र्योगिनः । किं कुर्वतः ? **सहतः** सहमानस्य । काम् ? **बाधाम्** । किंविशिष्टाम् ? **दंशादिदंशककृताम्** । दंश आदिर्येषां मशकमक्षिकापिशुकपुत्तिकामत्कुणकीटपिपीलिकावृश्चिकादीनां ते दंशादयः । ते च ते, दशन्ति व्यथयन्तीति, दंशकाः क्षुद्रप्राणिनो, दंशादिदंशकाः । तैः कृताम् । काकेभ्यो रक्ष्यतां सर्पिरित्यादिवद्धि सर्वोपघातोपलक्षणार्थं दंशमशकोभयग्रहणम् । कया ? **अघजिघांसया** अशुभकर्मविपाकहननेच्छया । कथं कृत्वा ? **निःक्षोभ**मचलितचित्तम् ।

निर्जितनाग्न्यपरीषहमृषिं लक्षयति—

**निर्ग्रन्थनिर्भूषणविश्वपूज्यनाग्न्यव्रतो दोषयितुं प्रवृत्ते ।**
**चित्तं निमित्ते प्रबलेपि यो न स्पृश्येत दोषैर्जितनाग्न्यरुक् सः**

भवति । कोसौ ? **स** साधुः । किंविशिष्टः ? **जितनाग्न्यरुग्** निर्जितदिगम्बरत्वपरीषहः । यः किम् ? **यो न स्पृश्येत** नाश्लिष्येत । कैः ? **दोषै** रागद्वेषादिभिः । क्व सति ? **निमित्ते** वामदृष्टिशापाकर्णनकामिन्यालोकनादौ कारणे । किंविशिष्टे ? **प्रबलेपि** अशक्यप्रतिविधानेपि । पुनः किंविशिष्टे ? **प्रवृत्ते** व्यापृते । किं कर्तुम् ? **दोषयितुं** विकृतिं नेतुम् । किं तत् ? **चित्तं** साधोर्मनः । किंविशिष्टः सन् ? **निर्ग्रन्थे**त्यादि । ग्रन्थाद्वस्त्रादिपरिग्रहान्निष्क्रान्तं निर्ग्रन्थम् । भूषणात्कटककुण्डलादेर्निष्क्रान्तं निर्भूषणम् । विश्वस्मिन् जगति पूज्यं विश्वपूज्यम् । निग्रन्थं च तन्निर्भूषणं च तद्विश्वपूज्यं, च तत् निर्ग्रंथनिर्भूषणविश्वपूज्यं तच्च तन्नाग्न्यं च नग्नत्वम् । तदेव व्रतं प्रतिज्ञा यस्य स एवम् । उक्तं च—

**वत्थाजिणवक्केण व अहवा पत्ताइणा असंवरणे ।**
**णिब्भूसणणिग्गंथं अच्चेलक्कं जगदि पुज्जम् ॥**

अरतिपरीषहजयोपायमाह—

लोकापवादभयसद्व्रतरक्षणाक्ष,—
रोधक्षुदादिभिरसह्यमुदीर्यमाणाम् ।
स्वात्मोन्मुखो धृतिविशेषहृतेन्द्रियार्थ,—
तृष्णः शृणात्वरतिमाश्रितसंयमश्रीः ॥ ९५ ॥

शृणातु हिनस्तु । कोसौ ? आश्रितसंयमश्रीरालिङ्गितसंयमसंपत् । दृष्टश्रुतानुभूतरतिस्मरणकथाश्रवणरहित इत्यर्थः । काम् ? अरतिं शयनासनादावेकत्रानवस्थानम् । किं क्रियमाणाम् ? उदीर्यमाणामुद्भवन्तीम् । कथं कृत्वा ? असह्यं दुःसहम् । कैः ? लोकेत्यादि । लोकस्यापवाद उपक्रोशो लोकापवादः तस्माद्भयं भीतिः । यद्बाह्या अप्याहुः—

सन्तः सच्चरितोदयव्यसनिनः प्रादुर्भवद्यन्त्रणाः,
सर्वत्रैव जनापवादचकिता जीवन्ति दुःखं सदा ।
अव्युत्पन्नमतिः कृतेन न सता नैवासताप्याकुलो,
युक्तायुक्तविवेकशून्यहृदयाद्न्यो जनः प्राकृतः ॥

उक्तं च—

विपद्युच्चैः स्थेयं पदमनुविधेयं च महतां,
प्रिया न्याय्या वृत्तिर्मलिनमसुभङ्गेप्यसुकरम् ।
असन्तो नाभ्यर्थ्या सुहृदपि न याच्यस्तनुधनः,
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥

तथा,—

आर्द्रसन्तानता त्यागः कायवाक्चेतसां दमः ।
स्वार्थबुद्धिः परार्थेषु पर्याप्तमिति सद्व्रतम् ॥

इत्यस्य सद्व्रतस्य रक्षणं रक्षा सद्व्रतरक्षणम् । अक्षरोध इन्द्रियजयः ? क्षुधा बुभुक्षा आदिर्येषां पिपासादीनां ते क्षुधादयः । लोकापवादभयं च सद्व्रतरक्षणं चाक्षरोधश्च क्षुधादयश्च, तैः । किंविशिष्टः सन्

साधुः ? स्वात्मोन्मुखः स्वस्वरूपाभिमुखः । पुनः किंविशिष्टः? धृतिविशेषेण विशिष्टसंतोषेण हृता अपनीता इन्द्रियार्थतृष्णा विषयाभिलाषो येन सोयं धृतिविशेषहृतेन्द्रियार्थतृष्णः । न चक्षुरादीनां सर्वेषामरतिहेतुत्वात्पृथगरतिग्रहणमयुक्तं, कदाचित् क्षुधाद्यभावेपि कर्मोदयात्संयमेऽरतिरुपजायते ।

स्त्रीपरीषहसहनमुपदिशति—

**रागाद्युपप्लुतमतिं युवतीं विचित्रां-,**
**श्चित्तं विकर्तुमनुकूलविकूलभावान् ।**
**संतन्वतीं रहसि कूर्मवदिन्द्रियाणि,**
**संवृत्य लघ्वपवदेत गुरूक्तियुक्त्या ॥ ९६ ॥**

अपवदेत निराकुर्यात्साधुः । काम् ? **युवतीं** तरुणीम् । किंविशिष्टाम् । **रागाद्युपप्लुतमतिं** रागद्वेषयौवनदर्परूपमदविभ्रमोन्मादमद्यपानावेशाद्युपहतबुद्धिम् । पुनः किं कुर्वतीम् ? **संतन्वतीं** सातत्येन कुर्वतीम् । कान् ? **अनुकूलविकूलभावान्** । अनुकूला लिङ्गहर्षणालिङ्गनजघनप्रकाशनभ्रूविभ्रमादयः । विकूला लिङ्गकदर्थनोपहसनताडनावघट्टनादयः । अनुकूलाश्च विकूलाश्चानुकूलाः । ते च भावाश्च मानसविकारास्तान् । किंविशिष्टान् ? **विचित्रान्** विविधान् । किं कर्तुम् ? **विकर्तुं** दूषयितुम् । किं तत् ? **चित्तं** साधोर्मनः । क्व ? **रहसि** एकान्ते । कयाऽपवदेत ? **गुरूक्तियुक्त्या** गुरुवचनप्रणिधानेन । कथम् ? **लघु** शीघ्रम् । किं कृत्वा ? **संवृत्य** अन्तः प्रवेश्य । कानि ? **इन्द्रियाणि** चक्षुरादीनि । किंवत् । **कूर्मवत्** कच्छपेन तुल्यम् । स्त्रीदर्शनस्पर्शनालापाभिलाषादिनिरुत्सुकस्य तदक्षिवक्त्रभ्रूविकाररूपगतिहासलीलाविजृम्भितपीनोन्नतस्तनजघनोरुमूलकक्षानाभिनिरीक्षणादिभिरविप्लुतचेतसस्त्यक्तवंशगीतादिश्रुतेः स्त्रीपरीषहजयः स्यादित्यर्थः ।

चर्यापरीषहसहनमन्वाचष्टे—

**बिभ्यद्भवाच्चिरमुपास्य गुरून्निरूढ,—**
**ब्रह्मव्रतश्रुतशमस्तदनुज्ञयैकः ।**

**क्षोणीमटन् गुणरसादपि कण्टकादि,—**
**कष्टे सहत्यनधियन् शिबिकादि चर्याम् ॥ ९७ ॥**

**सहति** क्षमते । कोसौ ? साधुः । काम् ? **चर्यां** संचरणपरीषहम् । किं कुर्वन् ? **अनधियन्** अस्मरन् । किं तत् ? **शिबिकादि** पूर्वानुभूतयाप्ययानवाहनादिगमनम् । क सति ? **कण्टकादिकष्टेपि** कण्टक आदिर्येषां परुषशर्करामृत्कण्टकादीनां ते कण्टकादयः । तेषां कष्टे कृच्छ्रेपि । किं कुर्वन् ? **बिभ्यत्** त्रस्यन् । कस्मात् ? **भवात्** संसारात् । तथा **निरूढब्रह्मव्रतश्रुतशमः** । निरूढाः प्रकर्षं प्राप्ता ब्रह्मव्रतश्रुतशमा ब्रह्मचर्यशास्त्रज्ञानोपशमा यस्य स एवम् । किं कृत्वा ? **उपास्य** सेवित्वा । कान् ? **गुरून्** धर्माचार्यादीन् । कथम् ? **चिरं** बहुतरकालम् । तथा **अटन्** विहरन् । काम् ? **क्षोणीं** पृथ्वीम् । कस्मात् ? **गुणरसाद्** दर्शनविशुद्ध्याद्यनुरागात् । कया ? **तदनुज्ञया** गुरूणामभ्यनुज्ञया । किंविशिष्टः सन् ? **एको**ऽसहायः ।

निषद्यापरीषहं लक्षयति—

**भीष्मश्मशानादिशिलातलादौ,**
**विद्यादिनाऽजन्यगदाद्युदीर्णम् ।**
**शक्तोपि भङ्क्तुं स्थिरमङ्गिपीडां,**
**त्यक्तुं निषद्यासहनः समास्ते ॥ ९८ ॥**

**समास्ते** समाधिना वीरासनाद्यन्यतमकायोत्सर्गेण तिष्ठति । न चलतीत्यर्थः । कोसौ ? **निषद्यासहनः** निषद्यापरीषहसहिष्णुः । किं कर्तुम् ? **त्यक्तुं** परिहर्तुम् । काम् ? **अङ्गिपीडाम्** प्राणिबाधाम् । कथं कृत्वा ? **स्थिरं** निश्चलम् । किंविशिष्टोपि ? **शक्तोपि** समर्थोपि । किं कर्तुम् ? **भङ्क्तुं** नाशयितुम् । किंविशिष्टम् ? **उदीर्णम्**उद्भूतम् । किं तत् ? **अजन्यगदादि** उपसर्गव्याधिप्रभृति । केन ? **विद्यादिना** विद्यामन्त्रौषधादिना । क स्थितः । **भीष्मेत्यादि** । भीष्मं च भयंकरं तत् श्मशानादि च प्रेतवनारण्यशून्यायतननगिरिगुहागह्वरादि । तत्र शिलातलादि । शिलातलमादिर्यस्य स्थण्डिलप्रदेशादेस्तत्र ।

शय्यापरीषहक्षमामुपदिशति—

शय्यापरीषहसहोऽस्मृतहंसतूल,
प्रायोऽविषादमचलन्नियमान्मुहूर्तम् ।
आवश्यकादिविधिखेदनुदे गुहादौ,
त्र्यस्रोपलादिशबले शववच्छयीत ॥ ९९ ॥

**शयीत** स्वप्यात् । कोसौ ? **शय्यापरीषहसहः** । क ? **गुहादौ** गुहागह्वरादौ । किंविशिष्टे ? **त्र्यस्रोपलादिशबले** त्रिकोणपाषाणशर्कराकर्पराद्याकीर्णे । कथम् ? **मुहूर्तं** घटिकाद्वयम् । कस्यै ? **आवश्यकादिविधिखेदनुदे** । आवश्यकमादिर्यस्य स्वाध्यायादेस्तदावश्यकादि । तस्य विधिर्विधानम् । तस्माज्जातः खेदः । तस्य नुद् नोदनं निराकरणं, तस्यै । किंवत् ? **शववत्** परिवर्तनरहितत्वान्मृतकेन तुल्यम् । किंविशिष्टः ? **अस्मृतहंसतूलप्रायः** । हंसतूलमादिर्यस्य दुकूलास्तरणादेस्तद्धंसतूलप्रायम् । अस्मृतं हंसतूलप्रायं येन स एवम् । पुनः किं कुर्वन् ? **अचलन्** अप्रच्यवमानः । कस्मात् ? **नियमाद्** एकपार्श्वदण्डायतादिशयनप्रतिज्ञानात् । केन ? **अविषादं** 'व्याघ्रादिसंकुलोयं प्रदेशः अचिरादतो निर्गमनं श्रेयः, कदा नु रात्रिर्विरमति' इति विषादाभावेन ।

आक्रोशपरीषहजिष्णुं व्याचष्टे—

मिथ्यादृशश्चण्डदुरुक्तिकाण्डैः,
प्रविध्यतोऽरूंषि मृधं निरोद्धुम् ।
क्षमोपि यः क्षाम्यति पापपाकं,
ध्यायन् स्वमाक्रोशसहिष्णुरेषः ॥ १०० ॥

एष साधुराक्रोशसहिष्णुराक्रोशपरीषहसहनशीलः स्यात् । यः किम् ? **यः क्षाम्यति** सहते । किं कुर्वन् ? **ध्यायन्** भावयन् । कम् ? **पापपाक**मशुभकर्मोदयम् । किंविशिष्टम् ? **स्व**मात्मीयम् । किंविशिष्टोपि ? **क्षमोपि** समर्थोपि । किं कर्तुम् ? **निरोद्धुं** निषेद्धुं । कान् ? **मिथ्यादृशो** वामदृष्टीन् ।

कथम्? **मृधं** शीघ्रम्। किं कुर्वतः? **प्रविध्यतः** प्रकर्षेण व्यथयतः। कानि? **अरूंषि** मर्माणि। कैः? **चण्डदुरुक्तिकाण्डैः**रत्यन्तानिष्टदुर्वचनबाणैः।

वधतितिक्षामाह—

**नृशंसेऽरं क्वचित्स्वैरं कुतश्चिन्मारयत्यपि।**
**शुद्धात्मद्रव्यसंवित्तिवित्तः स्याद्वधमर्षणः॥ १०१॥**

**स्या**त्संयतः। किंविशिष्टः? **वधमर्षणो** वधपरीषहसहनः। किंविशिष्टः सन्? **शुद्धे**त्यादि। द्रव्यमविनाशिरूपम्। आत्मैव द्रव्यमात्मद्रव्यम्। शुद्धं च निर्मलं तदात्मद्रव्यं च शुद्धात्मद्रव्यम्। तस्य संवित्तिः संवेदनमनुभवनम्। तेन वित्तः प्रतीतः। शुद्धात्मद्रव्यसंवित्तिरेव वित्तं धनमस्येति वा। अयमर्थो, विनश्वरं दुःखदं शरीरमेवानेन हन्यते न पुनर्ज्ञानादिकमिति भावयन्नित्यर्थः। क्व सति? **नृशंसे** क्रूरकर्मकारिणि चोरारक्षकादौ **क्वचित्** क्वापि। किं कुर्वत्यपि? **मारयत्यपि** प्राणैर्वियोजयत्यपि। कस्मात्? **कुतश्चि**द्धेतोर्दृष्टाददृष्टाद्वा। कथम्? **अरं** शीघ्रम्। कथं कृत्वा? **स्वैरं** स्वच्छन्दम्।

याचनापरीषहसहनाय साधुमुत्साहयति—

**भृशं कृशः क्षुन्मुखसन्नवीर्यः,**
**शम्पेव दातॄन् प्रति भासितात्मा।**
**ग्रासं पुटीकृत्य करावऽयाञ्चा,-**
**व्रतोपि गृह्णन् सह याचनार्तिम्॥ १०२॥**

भोः साधो **सह** क्षमस्व त्वम्। काम्? **याचनार्तिं** याचनापरीषहम् किं कुर्वन्? **गृह्णन्** आददानः। कम्? **ग्रासं** कवलम्। किं कृत्वा? **पुटीकृत्य** पुटाकारौ कृत्वा। कौ? **करौ** हस्तौ। किंविशिष्टोपि? **अयाञ्चाव्रतोपि** प्राणात्ययेप्याहारवसतिभेषजादीनि दीनाभिधानमुखवैवर्ण्याङ्गसंज्ञादिभिरयाचमानोपीत्यर्थः। कीदृशः सन्? **भृश**मत्यर्थं **कृशः** उपणतास्थिस्नायुजालादिः। तथा **क्षुन्मुखसन्नवीर्यः** क्षुदध्वपरिश्रमतपोरोगादि-

ग्लपितनैसर्गिकशक्तिः । तथा भासितात्मा दर्शितस्वरूपः । सकृन्मूर्तिसंदर्शनव्रतकाल इत्यर्थः । कथम् ? प्रति उद्दिश्य । कान् ? दातॄन् दानोद्यतान् । का इव ? शम्पेव विद्युद्यथा, दुरुपलक्षमूर्तित्वात् ।

अलाभपरीषहं दर्शयति—

**निःसङ्गो बहुदेशचार्यऽनिलवन्मौनी विकायप्रती,—**
**कारोऽद्येदमिदं श्व इत्यविमृशन् ग्रामेस्तभिक्षः परे ।**
**बह्वोकःस्वपि बह्वहं मम परं लाभादलाभस्तपः,**
**स्यादित्यात्तधृतिः पुरोः स्मरयति स्मार्तानलाभं सहन्॥१०३॥**

**स्मरयति** स्मरतः प्रयोजयति । कोसौ ? साधुः । किंकुर्वन् ? **अलाभं सहन्** अलाभपरीषहं सहमानः । कान् ? **स्मार्तान्** स्मृतिः परमागमोद्धारशास्त्रम् । तां विदन्त्यधीयते वा ये तान् । कस्य ? **पुरोरादिनाथस्य** । कर्मण्यत्र षष्ठी । किंविशिष्टः सन् ? **आत्तधृतिः** । आत्ता गृहीता धृतिः संतोषो येनासौ । संतुष्ट इत्यर्थः । कथम् ? **इति** । किमिति ? **स्यात्** । किं तत् ? **तपः** । किंविशिष्टम् ? **परमुत्कृष्टम्** । कस्य ? **मम** । किं तपः स्यात् ? **अलाभः** । कस्मात् ? **लाभात्** । केषु ? **बह्वोकस्सु** बहुषु गृहेषु । किम् ? **बह्वहमपि** बहून्यपि दिनानि । पुनः किंविशिष्टः ? **निःसङ्गो** निर्ग्रन्थः संसक्तिरहितश्च । किंवत् ? **अनिलवद्** वायुर्यथा । पुनः किंविशिष्टः ? **बहुदेशचारी** बहुषु जनपदेषु चरणशीलः । तथा **मौनी** वाचंयमः । तथा **विकायप्रतीकारः** कायप्रतीकाररहितः । तथा **अविमृशन्** असंकल्पयन् । कथम् ? **इति** । किमिति ? **इदं** गृहमद्य विहर्तव्यमिदं च **श्वः** प्रभाते । तथा **अस्तभिक्षो** निराकृतभिक्षावृत्तिः । क्व ? **ग्रामे** । किंविशिष्टे ? **परे** तद्दिनभिक्षाविषयीकृतादन्यत्र । एकस्मिन् ग्रामे भिक्षामलब्ध्वा ग्रामान्तरान्वेषणनिरुत्सुक इत्यर्थः ।

रोगसहनमाह—

**तपोमहिम्ना सहसा चिकित्सितुं,**
**शक्तोपि रोगानतिदुस्सहानपि ।**

दुरन्तपापान्तविधित्सया सुधीः,
स्वस्थोऽधिकुर्वीत सनत्कुमारवत् ॥ १०४ ॥

**सुधीः** आत्मदेहान्तरज्ञानपरिणतोऽ**धिकुर्वीत** प्रसहेत । कान् ? **रोगान्** कुष्टादिव्याधीन् युगपदुपस्थितान् । कीदृशानपि ? **अतिदुःसहानपि** अत्यन्तं सोढुमशक्यानपि । किंविशिष्टोपि ? **शक्तोपि** समर्थोपि । किं कर्तुम् ? **चिकित्सितुं** प्रतिकर्तुम् । केन ? **तपोमहिम्ना** जल्लौषधिप्राप्त्याद्यनेकतपोविशेषर्द्धिलब्ध्या । कथम् ? **सहसा** झटिति । किंविशिष्टः सन् ? **स्वस्थो** निराकुलः । किंवत् ? **सनत्कुमारवत्** सनत्कुमारचक्रवर्ती यथा । कया ? **दुरन्तपापान्तविधित्सया** दुरवसानदुष्कृतविनाशचिकीर्षया ।

तृणस्पर्शक्षमणमाह—

तृणादिषु स्पर्शखरेषु शय्यां भजन्निषद्यामथ खेदशान्त्यै ।
संक्लिश्यते यो न तदर्तिजातखर्जुस्तृणस्पर्शतितिक्षुरेषः ॥१०५॥

**एष** साधुस्तृणस्पर्शतितिक्षुस्तृणस्पर्शपरीषहसहनशीलः स्यात् । यः किम् ? **यो न संक्लिश्यते** दुःखं न चिन्तयति । किंविशिष्टः सन् ? **तदर्तिजातखर्जुः** । तेभ्यः शुष्कतृणादिभ्यो जातायामर्तौ पीडायां जाता उत्पन्ना खर्जुः कण्डूविकारो यस्य स एवम् । किं कुर्वन् ? **भजन्** सेवमानः । काम् ? **शय्यां** शयनं **निषद्यामथ** उपवेशनं वा । कस्मै ? **खेदशान्त्यै** व्याधिमार्गगमनशीतोष्णजनितश्रमापनोदार्थम् । केषु ? **तृणादिषु** । तृणग्रहणमुपलक्षणम् । तेन शुष्कतृणपत्रभूमिकटफलकशिलादिषु प्रासुकेष्वसंस्कृतेषु । किंविशिष्टेषु ? **स्पर्शखरेषु** स्पर्शेषु कर्कशेषु ।

मलपरीषहसहनमाह—

रोमास्पदस्वेदमलोत्थसिध्म,—
प्रायार्त्यवज्ञातवपुः कृपावान् ।
केशापनेतान्यमलाग्रहीता,
नैर्मल्यकामः क्षमते मलोर्मिम् ॥ १०६ ॥

क्षमते सहते साधुः। कम्? **मलोर्मिं** मलपरीषहम्। किंविशिष्टः सन्? **नैर्मल्यकामः** कर्ममलपङ्कापनोदार्थी। कथंभूतो भूत्वा? **रोमेत्यादि**। रोमाणि तनुरुहाणि आस्पदं स्थानं यस्य। स चासौ खेदमलः प्रस्वेदपङ्कः। तस्मादुत्था उत्थानं येषां ते रोमास्पदस्वेदमलोत्थाः। ते च ते सिध्मप्रायाश्च दुर्भित्तककच्छुदद्रुप्रमुखाः। तेभ्यो जातायामतौ कण्ड्वाख्यपीडायामवज्ञातमऽवहेलितं वपुः शरीरं येन स एवम्। तथा **कृपावान्**। बादरनिगोदप्रतिष्ठितजीवदयार्थमुद्वर्तनं जलजन्त्वादिरक्षार्थं च स्नानं त्यजन्निति भावः। तथा **केशापनेता** केशानां लुञ्चकः। एतेन केशलुञ्चने तत्संस्काराकरणे च महान् खेदः संजायते। इति तत्सहनमपि मलधारणेन्तर्भवतीत्युक्तं प्रतिपत्तव्यम्। तथा **अन्यमलाग्रहीता** परमलोपचयत्यागीत्यर्थः।

सत्कारपुरस्कारपरीषहजयमाह—

**तुष्येन्न यः स्वस्य परैः प्रशंसया,**
**श्रेष्ठेषु चाग्रे करणेन कर्मसु।**
**आमन्त्रणेनाथ विमानितो न वा,**
**रुष्येत्स सत्कारपुरस्क्रियोर्मिजित्॥ १०७॥**

सत्कारः पूजाप्रशंसात्मकः। पुरस्क्रिया पुरस्कारः क्रियारम्भादिष्वग्रतः करणम्। सत्कारश्च पुरस्क्रिया च सत्कारपुरस्क्रिये। तयोरूर्मिः परीषहः सत्कारपुरस्क्रियोर्मिः। तं जयति **सत्कारपुरस्क्रियोर्मिजित् स** साधुः स्यात्। यः किम्? **यो न तुष्येत्** तोषं न गच्छेत्। कया? **प्रशंसया**। कस्य? **स्वस्यात्मनः**। कैः? **परैरुत्कृष्टपुरुषैः** क्रियमाणया। न केवलम्, **अग्रे करणेन** च पुरस्कारेण। केषु? **कर्मसु** क्रियासु। किंविशिष्टेषु? **श्रेष्ठेषु** नन्दीश्वरादिपर्वयात्राद्यात्मकक्रियादिषु। **अथ** अथवाऽऽ**मन्त्रणेन** आकारणेन। **वा** अथवा न रुष्येन्न रोषं गच्छेत्। किंविशिष्टः सन्? **विमानितः** खण्डितमाहात्म्योऽवज्ञातो वा तैः। अयमर्थः—चिरोषितब्रह्मचर्यस्य महातपस्विनः स्वपरसमयज्ञस्य हितोपदेशकथामार्गकुशलस्य बहुकृत्वः परवादिविजयिनः 'प्रणामभक्तिसंभ्रमासनप्रदानादीनि न मे कश्चित्करोति। वरं मिथ्या दृशः, स्वसमयगतमज्ञमपि

सर्वज्ञसंभावनया संमान्य स्वसमयप्रभावनां कुर्वन्ति। व्यन्तरादयः पुराऽत्युग्रतपसां प्रत्यग्रपूजां निर्वर्तयन्तीति यदि न मिथ्याश्रुतिस्तदा कस्मादस्मादृशामेते समयगता अप्यनादरं कुर्वन्ति। इति प्रणिधानरहितचित्तस्य मानापमानयोस्तुल्यमनसः सत्कारपुरस्कारपरीषहजयः स्यादिति।

प्रज्ञापरीषहमाह—

**विद्याः समस्ता यदुपज्ञमस्ताः प्रवादिनो भूपसभेषु येन।**
**प्रज्ञोर्मिजित् सोस्तु मदेन विप्रो गरुत्मता यद्वदखाद्यमानः १०८**

**अस्तु** भवतु। कोसौ? **स** साधुः **प्रज्ञोर्मिजित्** प्रज्ञापरीषहजेता। किं क्रियमाणः? **अखाद्यमानो**ऽभक्ष्यमाणः। केन? **मदेन** ज्ञानदर्पेण। क इव? **विप्रो गरुत्मता यद्वद्** गरुडेन स्वमातृवाक्यान्निषादखादनावसरे तत्संवलितो मुखान्तर्गतो ब्राह्मणो यथा। तथा च माघकाव्यम्—

साधं कथंचिदुचितैः पिचुमर्दपत्रै,—
रास्यान्तरालगतमाम्रदलं म्रदीयः।
दासेरकः सपदि संवलितं निषादै,—
र्विप्रं पुरा पतगराडिव निर्जगार॥

कोसौ साधुरस्तु प्रज्ञोर्मिजित्? **यदुपज्ञं** यस्योपज्ञा प्रथमोपदेशः स्यात्। काः? **विद्याः**। किंविशिष्टाः? **समस्ता** अङ्गपूर्वप्रकीर्णकलक्षणाः। **येन** चा**स्ता** निराकृताः। के? **प्रवादिनः** प्रकृष्टा अनुमानवादिनः। केषु? **भूपसभेषु** बहुराजसभासु।

अज्ञानपरीषहजयमाह—

पूर्वेऽसिधन् येन किलाशु तन्मे,
चिरं तपोभ्यस्तवतोपि बोधः।
नाद्यापि बोभोत्यपि तूच्यकेहं,
गौरित्यतोऽज्ञानरुजोऽपसर्पेत् ॥ १०९ ॥

**अपसर्पे**दपसरेत्साधुः । कस्याः ? **अत** एतस्या **अज्ञानरुजो**ऽज्ञानपरीषहात् । अज्ञानपरीषहपरतन्त्रमात्मानं न कुर्यादित्यर्थः । कथम् ? **इति** । किमिति ? **असिधन्** सिद्धाः । के ? **पूर्वे** प्राञ्चस्तपस्विनः । केन ? **येन** तपसा । कथम् ? **आशु** शीघ्रम् । कथम् ? **किल** एवं ह्यागमे श्रूयते । **तत् तपो मे** मम **चिरं** बहुतरकालमभ्यस्तवतोपि भावितवतोपि **न बोभोति** भृशं न भवति । कोसौ ? **बोधो** ज्ञानम् । कथम् ? **अद्यापि** अधुनापि । **अपि तु** किंतु **उच्यके** कुत्सितमुच्ये व्याह्रियेऽहम् । किम् ? **गौः** पशुः । लोकैरिति शेषः ।

अयमर्थः, अज्ञोयं, न किंचिदपि वेत्ति, पशुसम इत्याद्यधिक्षेपवचनं सहमानस्य सततमध्ययनरतस्य निवृत्तानिष्टमनोवाक्कायचेष्टस्य महोपवासाद्यनुष्ठायिनोद्यापि मे ज्ञानातिशयो नोत्पद्यते इत्यनभिसंदधतोऽज्ञानपरीषहजयः स्यादिति ।

अदर्शनसहनमाह—

**महोपवासादिजुषां मृषोद्याः,**
**प्राक् प्रातिहार्यातिशया न हीक्षे ।**
**किंचित्तथाचार्यपि तद्वृथैषा,**
**निष्ठेत्यसन् सद्दृगदर्शनासट् ॥ ११० ॥**

**सद्दृग्** दर्शनविशुद्धियुक्तः साधु**रदर्शनासट्** अदर्शनपरीषहस्य सहिता स्यादित्यर्थः । अदर्शनं सहते क्विप्यागतनिवृत्ते "नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ" इत्यनेन दीर्घः । किं कुर्वन् ? **असन्** अभवन् । कथम् ? **इति** । किमिति ? भवन्ति । के ? **प्रातिहार्यातिशया** आपत्प्रतीकारज्ञानातिशयनानि । किंविशिष्टाः ? **मृषोद्या** मिथ्या कथ्यमानाः । केषाम् ? **महोपवासादिजुषां** पक्षमासाद्युपवाससेविनाम् । कथम् ? **प्राक्** पूर्वस्मिन् काले हि यस्मान्न ईक्षे न पश्याम्यहम् । किं तत् ? **किंचित्** प्रातिहार्यातिशयसदृशम् । किंविशिष्टोपि ? **तथाचार्यपि** महोपवासाद्यनुष्ठानव्रतोपि । **तत्** तस्माद्वर्तते । कासौ ? **एषा निष्ठा** तपोनुष्ठानम् । कथम् ? **वृथा** व्यर्था ।

अयमर्थः, दुष्करतपोनुष्ठायिनो वैराग्यभावनापरस्य ज्ञातसकलतत्त्वस्य चिरंतनव्रतिनोद्यापि मे ज्ञानातिशयो नोत्पद्यते । महोपवासाद्यनुष्ठायिनां प्रातिहार्यविशेषाः प्रादुरभूवन्निति कथनं प्रलापमात्रम् । अनर्थिकेयं प्रव्रज्या । विफलं व्रतपालनम् । इत्येवमचिन्तयतो दर्शनविशुद्धियोगाद्-दर्शनपरीषहसहनं स्यादिति ।

किंच, एते सर्वेपि परीषहाः कर्मोदयजनिताः । तद्यथा—ज्ञानावरणे प्रज्ञाज्ञाने । दर्शनमोहान्तराययोरदर्शनालाभौ ।

मानकषाये नाग्न्यनिषद्याक्रोशयाचनासत्कारपुरस्काराः । अरतिवेदयोररति-स्त्रीपरीषहौ । वेदनीये क्षुत्पिपासाशीतोष्णदंशमशकचर्याशय्यावधरोगतृण-स्पर्शमलाः । एकस्मिञ्जीवे एकस्मिन् काले एकादयः परीषहा आ एकान्न-विंशतेर्युगपद्भवन्ति । तद्यथा, शीतोष्णपरीषहयोरेकः । शय्यानिषद्याचर्याणां चान्यतम एव भवति । श्रुतज्ञानापेक्षया प्रज्ञाप्रकर्षे सति अवध्याद्यभावा पेक्षयाऽज्ञानोत्पत्तेः सहावस्थाविरोधो न भवति । मिथ्यादृष्टिसासादनसम्य-ग्दृष्टिसम्यग्मिथ्यादृष्ट्यसंयतसम्यग्दृष्टिसंयतासंयतप्रमत्तसंयताप्रमत्तसंयतेषु सप्तसु गुणस्थानेषु सर्वे परीषहाः सन्ति । अदर्शनपरीषहं विनाऽपूर्वकरणे एकविंशतिपरीषहा भवन्ति । अरतिपरीषहमन्तरेण सवेदानिवृत्तौ विंशतिः परीषहाः स्युः । अवेदाऽनिवृत्तौ स्त्रीपरीषहे नष्टे एकान्नविंशतिः परीषहा भवेयुः । तस्यैव मानकषायोदयक्षयान्नाग्न्यनिषद्याक्रोशयाचनासत्कारपुरस्कारा विनश्यन्ति । तेषु विनष्टेष्वनिवृत्तिसूक्ष्मसांपरायोपशान्तकषायक्षीणकषायेषु चतुर्षु गुणस्थानेषु चतुर्दश परीषहाः सन्ति । क्षीणकषाये प्रज्ञाऽज्ञानालाभा विनश्यन्ति । सयोगिभट्टारकस्य ध्यानानलनिर्दग्धघातिकर्मेन्धनस्यानन्ताप्रतिहतज्ञानादिचतुष्टयस्यान्तरायाभावान्निरन्तरमुपचीयमानशुभपुद्गलसंताते-र्वेदनीयाख्यं कर्म विद्यमानमपि प्रक्षीणघातिसहायबलं स्वप्रयोजनोत्पादनं प्रत्यसमर्थम् । यथा विषद्रव्यं मन्त्रौषधिबलादुपक्षीणमारणशक्तिकमुपयुज्यमानं मारणाय न समर्थम् । यथा छिन्नमूलतरुः कुसुमफलप्रदो न भवति । यथोपेक्षावतोरनिवृत्तिसूक्ष्मसाम्पराययोर्मैथुनपरिग्रहसंज्ञा । यथा च परिपूर्णज्ञाने एकाग्रचिन्तानिरोधाभावेपि कर्मरजोविधूननफलसंभवाद्ध्यानोपचारः । तथा क्षुधारोगवधादिवेदनासद्भावपरीषहाऽभावे वेदनीयकर्मो-

दयद्रव्यपरिसहनपरीषहसद्भावाद् 'एकादश जिने' सन्तीत्युपचारो युक्तः। वेद्यकर्मोदयद्रव्यसद्भावादेकादश जिने सन्ति । घातिकर्मबलसहायरहितं वेद्यं फलवन्न भवति । तेन, एकादश[1] जिने न सन्ति । एवं सति स्यादस्ति, स्यान्नास्तीति स्याद्वाद उपपन्नो भवति । तथा च शतकस्य प्रदेशबन्धे वेदनीयभागविशेषकारणकथनेप्युक्तम्—

'जम्हा[2] वेदणीयस्स सुखदुःखोदयं सणाणावरणादि उदयादि उपकारकारणं तम्हा वेदणीयं से व पागडो सुहदुःखोदयं दिस्सदे' इति ।

तस्माद्वेदनीयं घातिकर्मोदयं विना फलवन्न भवतीति सिद्धम् । इति ।

नरकतिर्यग्गतौ सर्वे परीषहाः । मनुष्यगतावोघभङ्गा भवन्ति । देवगतौ घातिकर्मोत्थपरीषहैः सह वेदनीयोत्पन्नक्षुत्पिपासावधैः सह चतुर्दश भवन्ति । इन्द्रियकायमार्गणयोः सर्वे परीषहाः सन्ति । वैक्रियिकद्वितयस्य देवगतिभङ्गः । तिर्यग्मनुष्यापेक्षया द्वाविंशतिः । शेषयोगानां वेदादिमार्गणानां च स्वकीयस्वकीयगुणस्थानभङ्गा भवन्ति ।

एवं द्वाविंशतिक्षुधादिपरीषहजयं प्रकाश्य तदनुषङ्गप्राप्तमुपसर्गसहनमुदाहरणपुरस्सरं व्याहरन्नाह—

**स्वध्यानाच्छिवपाण्डुपुत्रसुकुमालस्वामिविद्युच्चर,—**
**प्रष्ठाः सोढविचित्रतिर्यगमरोत्थानोपसर्गाः क्रमात् ।**
**संसारं पुरुषोत्तमाः समहरंस्तत्तत्पदं प्रेप्सवो**
**लीनाः स्वात्मनि येन तेन जनितं धुन्वन्त्वजन्यं बुधाः ॥१११॥**

**समहरन्** संहरन्ति स्म । के ? **पुरुषोत्तमाः** । कम् ? **संसारम्** । किंविशिष्टाः ? **शिवपाण्डुपुत्रसुकुमालस्वामिविद्युच्चरप्रष्ठाः** । शिवः शिवभूतिर्नाम मुनिः । शिवश्च पाण्डुपुत्राश्च सुकुमालस्वामी च विद्युच्चरश्च

---

१ प्रज्ञाऽज्ञाने अदर्शनालाभौ अरतिस्त्रियौ नाग्न्यनिषद्याक्रोशयाचनासत्कारपुरस्काराः ।

२ यस्माद्वेदनीयस्य सुखदुःखोदयः सज्ञानावरणाद्युदयाद्युपकारकारणं तस्माद्वेदनीये स एव प्राकृतो सुखदुःखोदयो दृश्यते ॥ इति ।

शिवपाण्डुपुत्रसुकुमालस्वामिविद्युच्चराः । ते प्रष्टा अग्रेचरा येषां ते तथोक्ताः । प्रष्टग्रहणादचेतनकृतोपसर्गा एणिकापुत्रादयो, मनुष्यकृतोपसर्गा गुरुदत्तगजकुमारादयः, तिर्यक्कृतोपसर्गाः सिद्धार्थसुकोशलादयः देवकृतोपसर्गाः श्रीदत्तसुवर्णभद्रादयो यथागममधिगन्तव्याः । कथंभूताः सन्तः ? **सोढविचिन्नृतिर्यगमरोत्थानोपसर्गाः** । कस्मात् ? **क्रमाद्** यथासंख्येन । कस्मात् ? **स्वध्यानादा**त्मस्वरूपप्रणिधानात् । विचितश्चाचेतना नरश्च मनुष्यास्तिर्यञ्चश्च तैर्यग्योना अमराश्च देवाः । ते उत्थानानि कारणानि येषां ते विचिन्नृतिर्यगमरोत्थानाः ते च ते उपसर्गाश्च । सोढास्ते यैस्ते तथोक्ताः । यत एवं **तत्** तस्मात्तत्पदं धाम । **प्रेप्सवः** प्राप्तुमिच्छवो **बुधा** विद्वांसो **धुन्वन्तु** प्रतिबध्नन्तु । किं तत् ?

**अजन्यमुपसर्गम्** । कीदृशम् ? **येन तेन** जनितमचेतनादीनामन्यतमेनोत्पादितम् । किंविशिष्टाः सन्तः ? **लीनाः** श्लिष्टाः । क्व ? **स्वात्मनि** चिदानन्दमये आत्मस्वरूपे । अचेतनादिचतुर्विधोपसर्गजयः ।

परीषहोपसर्गसहनं प्रकृतमुपसंहरन् बाह्याभ्यन्तरतपश्चरणाय शिवपुरपान्थमुद्यमयितुमाह—

**इति भवपथोन्माथस्थामप्रथिम्नि पृथूद्यमः,**
**शिवपुरपथे पौरस्त्यानुप्रयाणचणश्चरन् ।**
**मुनिरनशनाद्यस्त्रैरुग्रैः क्षितेन्द्रियतस्कर,—**
**प्रसृतिरमृतं विन्दत्वन्तस्तपःशिबिकां श्रितः ॥ ११२ ॥**

**मुनिः** संयतो **विन्दतु** लभताम् । किं तत् ? **अमृतं** मोक्षममृतपानसहचर्यात्, स्वर्गं वा । किंविशिष्टः सन् ? **श्रितो**ऽधिष्ठितः । काम् ? **अन्तस्तपःशिबिकाम**भ्यन्तरतपोयाप्ययानम् । कथंभूतो भूत्वा ? **क्षितेन्द्रियतस्करप्रसृतिर्**निराकृताक्षचौरप्रसरः । कैः ? **अनशनाद्यस्त्रै**रनशनावमौदर्यप्रभृतिशस्त्रैः । किंविशिष्टैः ? **उग्रैर्**दुःसहैः । किंविशिष्टः सन् ? **पृथूद्यमो** महोत्साहः । क्व ? **भवपथोन्माथस्थामप्रथिम्नि** मिथ्यात्वादित्रयोच्छेदार्थशक्तिविस्तारे । पुनः किंविशिष्टः ? **पौरस्त्यानु**-

**प्रयाणचणः** पौरस्त्यानां पूर्वाचार्याणामनुप्रयाणेनानुगमनेन प्रतीतः । किं कुर्वन् ? **चरन्** विहरन् । क्व ? **शिवपुरपथे** निर्वाणनगरमार्गे । कथम् ? **इति** अनेन प्रकारेण ॥ इति भद्रम् । ( ग्रंथसंख्या १७५५ )

**यो धर्मामृतमुद्दधार सुमनस्तृप्त्यै जिनेन्द्रागम,—**
**क्षीरोदं शिवधीर्निर्मथ्य जयतात् स श्रीमदाशाधरः ।**
**भव्यात्मा हरदेव इत्यभिधया ख्यातश्च नन्द्यादिमं,**
**टीकाशुक्तिमचीकरत्सुखमिमां तस्योपयोगाय यः ॥**

इत्याशाधरविरचितायां स्वोपज्ञधर्मामृतानगारधर्मटीकायां भव्यकुमुद-चन्द्रिकासंज्ञायां **मार्गमहोद्योगवर्णनीयः** षष्ठोऽध्यायः ॥ ६ ॥



# अथ सप्तमोऽध्यायः ॥ ७॥

अथातः सम्यक्तपआराधनामुपदेष्टुकामो मुक्तिप्रधानसाधनवैतृष्ण्यसिद्ध्यर्थं नित्यं तपोऽर्जयेदिति शिक्षयन्नाह—

**ज्ञाततत्त्वोपि वैतृष्ण्यादृते नाप्नोति तत्पदम् ।**
**ततस्तत्सिद्धये धीरस्तपस्तप्येत नित्यशः ॥ १ ॥**

**तप्येत** अर्जयेत् । कोसौ ? **धीरः** परीषहोपसर्गैरक्षोभ्यः । किं तत् ? **तपो** वक्ष्यमाणलक्षणम् । कथम् ? **नित्यशो** नित्यम् । कस्यै ? **तत्सिद्धये** तस्य वैतृष्ण्यस्य सिद्धिर्निष्पत्तिः संप्राप्तिर्वा तत्सिद्धिस्तस्यै । कस्मात् ? **ततस्तस्माद्धेतोः** । यतः किम् ? यतो **नाप्नोति** न लभते । कोसौ ? **ज्ञाततत्त्वः** । ज्ञातं निर्णीतं तत्त्वं हेयमुपादेयं च वस्तुस्वरूपं येनासौ ज्ञाततत्त्वः । किं पुनरज्ञाततत्त्व इत्यपिशब्दार्थः । किं तत् ? **तत्पदं** तस्यानन्तज्ञानादिचतुष्टयस्य पदं स्थानं तत्पदम् । कथम् ? **ऋते** विना । कस्मात् ? **वैतृष्ण्यात्** । विगता तृष्णा स्पृहा यस्यासौ वितृष्णो वीतरागद्वेषः क्षायिकयथाख्यातचारित्रसंपन्नः । वितृष्णस्य भावो वैतृष्ण्यं, तस्माद्वैतृष्ण्यात् । वीतरागत्वादित्यर्थः ।

तपसो निर्वचनमुखेन लक्षणमाह—

**तपो मनोक्षकायाणां तपनात् सन्निरोधनात् ।**
**निरुच्यते दृगाद्याविर्भावायेच्छानिरोधनम् ॥ २ ॥**

**निरुच्यते** निर्वचनगोचरीक्रियते । अर्थानुगतं कथ्यते इत्यर्थः । कैः ? नैरुक्तैरिति शेषः । किं तत् ? **तपः** । किं लक्षणम् ? **इच्छानिरोधनम्** इच्छाया हातुमुपादातुं च वाञ्छाया निरोधनं नियतं रोधनं निवारणम् । किमर्थम् ? **दृगाद्याविर्भावाय** दृगादीनां सम्यग्दर्शनादीनामाविर्भावोभिव्यक्तिर्दृगाद्याविर्भावस्तस्मै । रत्नत्रयाविर्भावार्थमिच्छानिरोधस्तप इत्यभिधानात् । कस्मात् ? **तपनात्** । कोर्थः ? **सन्निरोधनात्** सम्यङ्निवारणात् ।

केषाम्? **मनोक्षकायाणाम्**। मनश्चित्तं चाक्षाणीन्द्रियाणि च कायः शरीरं च मनोक्षकायास्तेषाम्।

पुनर्भङ्‌ग्यन्तरेण तपोलक्षणमाह—

**यद्वा मार्गाविरोधेन कर्मोच्छेदाय तप्यते।**
**अर्जयत्यक्षमनसोस्तत्तपो नियमक्रिया॥ ३॥**

**वा** अथवा **तत् तपो** भण्यते। या किम्? या **नियमक्रिया** विहिताचरणनिषिद्धपरिवर्जनविधानम्। कयोः? **अक्षमनसोरि**न्द्रियचेतसोः। इन्द्रियमनसोर्नियमानुष्ठानं तप इति वचनात्। यत्किम्? **यत्तप्यते**। कोर्थः? **अर्जयति**। कोसौ? मुमुक्षुः। कस्मै? **कर्मोच्छेदाय** कर्मणां ज्ञानावरणादीनां शुभाशुभकर्मणोर्वोच्छेदायोन्मूलनार्थम्। केन? **मार्गाविरोधेन** रत्नत्रयानुपघातेन।

पुनरपि शास्त्रान्तरप्रसिद्धं तपोलक्षणमन्वाख्याय तद्भेदप्रभेदनसूचनपुरस्सरं तदनुष्ठानमुपदिशति—

**संसारायतनान्निवृत्तिरमृतोपाये प्रवृत्तिश्च या,**
**तद्वृत्तं मतमौपचारिकमिहोद्योगोपयोगौ पुनः।**
**निर्मायं चरतस्तपस्तदुभयं बाह्यं तथाभ्यन्तरं,**
**षोढाऽत्राऽनशनादि बाह्यमितरत् षोढैव चेतुं चरेत्॥ ४॥**

**मतं** संमतं पूर्वाचार्याणाम्। किं तत्? **तद्वृत्तं** चारित्रम्। किंविशिष्टम्? **औपचारिकं** व्यावहारिकम्। या किम्? **या निवृत्तिर्व्यावृत्तिः**। कस्मात्? **संसारायतनात्** संसारस्य द्रव्यादिपञ्चधा परिवर्तनस्यायतनं कारणं संसारायतनं बन्धः, 'तच्चेह मिथ्यादर्शनादित्रयं, कारणे कार्योपचारात्' तस्मात्।

उक्तं च—

**बन्धस्य कार्यं संसारः सर्वदुःखप्रदोऽङ्गिनाम्।**
**द्रव्यक्षेत्रादिभेदेन स चानेकविधः स्मृतः॥**

**स्युर्मिथ्यादर्शनज्ञानचारित्राणि समासतः ।**
**बन्धस्य हेतवोन्यस्तु त्रयाणामेव विस्तरः ॥**

न केवलं संसारायतनान्निवृत्तिः, **प्रवृत्तिश्च** । क? **अमृतोपाये** । अमृतस्य मोक्षस्योपायः कारणममृतोपायस्तस्मिन् । रत्नत्रये इत्यर्थः । **मतं** पुनः । किं तत्? **तपः** । कथंभूतं ? आराधनाशास्त्रोपदेशेन **उद्योगोपयोगौ** उद्यमायोजने । क? **इह** औपचारिके चारित्रे । कस्य? **साधोः** । किं कुर्वतः? **चरतोऽनुतिष्ठतः** । कथं कृत्वा? **निर्मायं** निर्दम्भम् । शाठ्यहीनमनुष्ठानं कुर्वत इत्यर्थः । उक्तं च—

**[1]कायव्वमिणमकायव्वं इदि णादूण होदि परिहारो ।**
**तं चेव हवदि णाणं तं चेव य होदि सम्मत्तम् ॥**
**चरणम्हि तम्हि जो उज्जमो य आउज्जणा य जा होदि ।**
**सो चेव जिणेहिं तओ भणियो असढं चरंतस्स ॥**

तत्पुनर्यथोक्तलक्षणं तप **उभयं** द्वयं **मतम्** । कथम्? **बाह्यं** बहिर्भवं **तथाऽभ्यन्तरमाध्यात्मिकं** च । अत्रैतयोर्बाह्याभ्यन्तरयोस्तपसोर्मध्ये **बाह्यं** तपश्चरेदनुतिष्ठेन्मुमुक्षुः । कतिधा? **षोढा** षट्प्रकारम् । किं तदित्याह— **अनशनादि** अनशनमुपवास आदिर्यस्यावमौदर्यादेस्तदनशनादि । अनशनावमौदर्यवृत्तिपरिसंख्यानरसपरित्यागविविक्तशय्याशनकायक्लेशलक्षणमित्यर्थः । किं कर्तुम्? **जेतुं** वर्धयितुम् । किं तत्? **इतरदभ्यन्तरं तपः** । कतिधा ? **षोढैव** षट्प्रकारमेव । प्रायश्चित्तविनयवैयावृत्त्यस्वाध्यायव्युत्सर्गध्यानात्मकमेवेत्यर्थः । उक्तं[2] च—

---

१ कर्तव्यमिदमकर्तव्यमिति ज्ञात्वा भवति परिहारः ।
तच्चैव भवति ज्ञानं तच्चैव च भवति सम्यक्त्वम् ॥
चरणे तस्मिन् य उद्यमश्च आयोजना च या भवति ।
स चैव जिनैस्तपो भणितः अशाठ्यं चरतः ॥

२—श्रीसमन्तभद्रैः बृहत्स्वयंभूनाम्नि चतुर्विंशतिस्तवे स्वोपज्ञे उक्तम् ।

"बाह्यं तपः परमदुश्चरमाचरंस्त्व,-
माध्यात्मिकस्य तपसः परिबृंहणार्थम् ।" इति ।

अनशनादेस्तपस्त्वे युक्तिमाह—

देहाक्षतपनात्कर्मदहनादान्तरस्य च ।
तपसो वृद्धिहेतुत्वात् स्यात्तपोऽनशनादिकम् ॥ ५ ॥

स्यात् । किं तत् ? तपः । किंविशिष्टम् ? अनशनादिकम् । कस्मात् ? देहाक्षतपनात् शरीरेन्द्रियक्लेशनात् । न केवलं, कर्मदहनादशुभकर्मभस्मीकरणात् । न केवलं, वृद्धिहेतुत्वादुपचयनिमित्तत्वात् । कस्य ? तपसः । किंविशिष्टस्य ? आन्तरस्यान्तरङ्गस्य ।

अनशनादितपसो बाह्यत्वे युक्तिमाह—

बाह्यं वल्भाद्यपेक्षत्वात्परप्रत्यक्षभावतः ।
परदर्शनिपाषण्डिगेहिकार्यत्वतश्च तत् ॥ ६ ॥

तत् तपः स्यात् । किंविशिष्टम् ? बाह्यम् । कस्मात् ? वल्भाद्यपेक्षत्वात् । वल्भा भोजनमादिर्यस्य न्यूनभोजनादेस्तद्वल्भादि अपेक्षते बाह्यद्रव्यमपेक्ष्य वर्तत इति वल्भाद्यपेक्षम् । तद्भावात् । न केवलं परप्रत्यक्षभावतः परेषां बाह्यानां स्वयूथ्यपरयूथ्यानां प्रत्यक्षभावात् साक्षात्करणात् । न केवलं, परदर्शनिपाषण्डिगेहिकार्यत्वतश्च । परैर्बाह्यैर्दर्शनिभिः सौगतादिभिः पाषण्डिभिश्च कापालिकादिभिर्गेहिभिश्च गृहस्थैः कार्यत्वात् क्रियमाणत्वाच्च ।

बाह्यतपसः फलमाह—

कर्माङ्गतेजोरागाशाहानिध्यानादिसंयमाः ।
दुःखक्षमासुखासङ्गब्रह्मोद्योताश्च तत्फलम् ॥ ७ ॥

भवति । किं तत् ? तत्फलं तस्य बाह्यतपसः फलं साध्यम् । किं किम् ? कर्माङ्गादिदुःखक्षमादि च । तत्र कर्मणां ज्ञानावरणादीनामङ्गतेजसश्च देहदीप्तेर्हानिरपकर्षः । अथवा कर्माङ्गाणां हिंसादीनां तेजसश्च शुक्रस्य हानि-

रिति ग्राह्यम्। कर्माणि चांगतेजश्च रागश्चाशा च कर्माङ्गतेजोरागाशाः। तासां हानिरपकर्षः कर्माङ्गतेजोरागाशाहानिः। ध्यानमेकाग्रचिन्तानिरोधः। तदिह प्रकरणात्प्रशस्तं गृह्यते। तेन, धर्म्यं शुक्लं चेत्यर्थः। ध्यानमादिर्येषां स्वाध्यायारोग्यमार्गप्रभावनाकषायमदमथनपरप्रत्ययकरणदयाद्युपकारतीर्थायतनस्थापनादीनां ते ध्यानादयः। उक्तं च—

**विदितार्थशक्तिचरितं कायेन्द्रियपापशोषकं परमम्।**
**जातिजरामरणहरं सुनाकमोक्षाश्रयं सुतपः॥**

संयमोऽपहृतोपेक्षाभेदाद् द्विधा। कर्माङ्गतेजोरागाशाहानिश्च ध्यानादयश्च संयमौ च ते **कर्माङ्गतेजोरागाशाहानिध्यानादिसंयमाः**। दुःखक्षमा तापत्रयसहनम्। सुखासङ्गः सुखानभिषङ्गः। ब्रह्मोद्योत आगमप्रभावना ब्रह्मचर्यनिर्मलीकरणं वा। दुःखक्षमा च सुखासङ्गश्च ब्रह्मोद्योतश्च ते **दुःखक्षमासुखाऽसङ्गब्रह्मोद्योताः**। **चः** समुच्चये।

बाह्यतपसां परम्परया मनोविजयाङ्गत्वमाचष्टे—

**बाह्यैस्तपोभिः कायस्य कर्शनादक्षमर्दने।**
**छिन्नबाहो भट इव विक्रामति कियन्मनः॥ ८॥**

**कियत्** किंपरिमाणं **विक्रामति** विक्रमं करोति। किं तत्? **मनश्चित्तम्**। न कियदपि विक्रामतीत्यर्थः। क सति? **अक्षमर्दने** इन्द्रियाणां दर्पदलने सति। कस्मात्? **कर्शनात्** कृशीकरणात्। कस्य? **कायस्य**। कैः? **तपोभिः**। किंविशिष्टैः? **बाह्यैरनशनादिभिः**। क इव? **भट इव** वीरपुरुषो यथा। किंविशिष्टः? **छिन्नबाहः** प्रतिभटकृत्तघोटकः।

तपस्यता भोजनादि तथा प्रयोक्तव्यं यथा प्रमादो न विजृम्भते इति शिक्षार्थमाह—

**शरीरमाद्यं किल धर्मसाधनं,**
**तदस्य यस्येत् स्थितयेऽशनादिना।**
**तथा यथाक्षाणि वशे स्युरुत्पथं,**
**न वानुधावन्त्यनुबद्धतृड्वशात्॥ ९॥**

भवति। किं तत्? **शरीरम्**। किंविशिष्टम्? **धर्मसाधनं** रत्नत्रयाङ्गम्। किंविशिष्टम्? **आद्यं** प्रथमम्। किलेत्यागमोक्तौ यत एवं **तत** तस्मात्कारणात् **यस्येत्** प्रयत्नं कुर्वीत तपस्वी। कस्यै? **स्थितये** वर्तनार्थम्। कस्य? **अस्य** शरीरस्य। केन? **अशनादिना** भोजनपानशयनादिना। कथम्? **तथा** तेन प्रकारेण। यथा किम्? **यथा** येन प्रकारेण **स्युर्भवेयुः**। कानि? **अक्षाणीन्द्रियाणि**। क्व? **वशे** स्वाधीने। **वा** अथवा **न धावन्ति** न प्लवन्ते। कानि? अक्षाणि। कथम्? **अनु** लक्ष्यीकृत्य। किं तत्? **उत्पथं** निषिद्धाचरणम्। कस्मात्? **अनुबद्धतृड्वशाद**ऽनादिसंबद्धतृष्णापारतन्त्र्यात्। उक्तं च—

वशे यथा स्युरक्षाणि नोत धावन्त्यनूत्पथम्।
तथा प्रयतितव्यं स्याद्वृत्तिमाश्रित्य मध्यमाम्॥

इष्टमृष्टाद्याहारोपयोगे दोषमाह—

**इष्टमृष्टोत्कटरसैराहारैरुद्भटीकृताः।**
**यथेष्टमिन्द्रियभटा भ्रमयन्ति बहिर्मनः॥ १०॥**

**भ्रमयन्ति** इतस्ततो विक्षिपन्ति। के? **इन्द्रियभटा** अक्षवीराः। किं तत्? **मनश्चित्तम्**। क्व? **बहि**र्बाह्यार्थेषु। कथं कृत्वा? **यथेष्टं** यद्यदिष्टमभिप्रेतम्। किंविशिष्टाः सन्तः? **उद्भटीकृता** दुर्दमतां नीताः। कैः? **आहारै**र्भोजनैः। किंविशिष्टैः? **इष्टमृष्टोत्कटरसैः** इष्टैरभिमतैर्मृष्टैर्मुखप्रियैरुत्कटरसैरुल्वणस्वादैश्च। सद्यः संजीवनैरित्यर्थः। इष्टाश्च मृष्टाश्चोत्कटरसाश्चेति विग्रहः। उक्तं च—

न केवलमयं कायः कर्शनीयो मुमुक्षुभिः।
नाप्युत्कटरसैः पोष्यो मृष्टैरिष्टैश्च वल्भनैः॥

तथानशनं तपः सभेदं लक्षयति—

**चतुर्थाद्यर्धवर्षान्त उपवासोथवाऽऽमृतेः।**
**सकृद्भुक्तिश्च मुक्त्यर्थं तपोनशनमिष्यते॥ ११॥**

चतुर्थादीत्यादि । अहोरात्रमध्ये किल द्वे भक्तवेले । तत्रैकस्यां भोजनमेकस्यां च तत्त्यागः । एकभक्तम् धारणकदिने पारणकदिने च एकभक्तम् । इति द्वयोर्भुक्तवेलयोर्भोजनत्यागो द्वयोश्चोपवासदिने तत्त्याग इति चतसृषु भक्तवेलासु चतुर्विधाहारपरिहारश्चतुर्थ इति रूढः । एकोपवास इत्यर्थः । एवं षड्भक्तवेलासु भोजनत्यागः षष्ठो द्वौ उपवासौ । अष्टास्वष्टमस्त्रय उपवासाः । दशसु दशमश्चत्वार उपवासाः । द्वादशसु द्वादशः पञ्चोपवासाः । एवं चतुर्थ आदिर्यस्य षष्ठाद्युपवासस्य स चतुर्थादिः । अर्धवर्षं षण्मासाः । तद्विषयत्वादुपवासोऽप्यर्धवर्षमुच्यते । अर्धवर्षं षण्मासोपवासोऽन्तः पर्यन्तो यस्य सोऽर्धवर्षान्तः । चतुर्थादिश्चासावर्धवर्षान्तश्च चतुर्थाद्यर्धवर्षान्त उपवासः क्षपणं सकृद्भुक्तिश्चैकभक्तम् । इत्येवमवधृतकालमनशनं तप इष्यते । यः पुनरा मृतेर्मरणं यावदुपवासस्तदनवधृतकालम् । इत्यनशनं तपो द्विधात्र सूत्रितं प्रतिपत्तव्यम् । उक्तं च—

> अद्धानशनं सर्वानशनं द्विविकल्पमनशनमिहोक्तम् ।
> विहृतिभृतोद्धानशनं सर्वानशनं तनुत्यागे ॥
> एकोपवासमूलः षण्मासक्षपणपश्चिमः सर्वः ।
> अद्धानशनविभागः स एष वाञ्छानुगं चरतः ॥

च शब्दो मध्यजघन्योपवाससमुच्चयार्थो, नञो निषेधे ईषदर्थे च विवक्षितत्वात् । तेनाशनस्याभाव ईषदशनं चानशनमिति रूढम् । मुक्त्यर्थमिति कर्मक्षयार्थं दृष्टफलमंत्रसाधनाद्यनुद्दिश्येत्यर्थः । यच्च दण्डकाचारादिशास्त्रेषु संवत्सरातीतमप्यनशनं श्रूयते तदप्यर्धं च वर्षं चेत्यर्धवर्षे इत्येकस्य वर्षशब्दस्य लोपं कृत्वा व्याख्येयम् । इतः पदघटना—

इष्यते अभिमन्यते पूर्वाचार्यैः । किं तत् ? तपः । किमाख्यम् ? अनशनम् । किं किम् ? उपवासस्तावत् । किंविशिष्टः ? चतुर्थाद्यर्धवर्षान्तः । न केवलं, सकृद्भुक्तिश्च । अथवा तपोऽनशनमिष्यते । कोसौ उपवासः । कथम् ? आ मृतेर्मरणावधि । किमर्थम् ? मुक्त्यर्थम् ।

उपवासस्य निरुक्तिपूर्वकं लक्षणमाह—

> **स्वार्थादुपेत्य शुद्धात्मन्यक्षाणां वसनाल्लयात् ।**
> **उपवासोऽशनस्वाद्यखाद्यपेयविवर्जनम् ॥ १२ ॥**

भण्यते । कोसौ ? **उपवासः** । किमात्मा ? **अशनस्वाद्यखाद्यपेयविवर्जनम्** । अशनं च स्वाद्यं च खाद्यं च पेयं चाशनस्वाद्यखाद्यपेयानि । तेषां विवर्जनं विधिपूर्वकं त्यजनम् । कस्मात् ? **वसनात्** । कोर्थः ? लयाल्लीनत्वात् । केषाम् ? **अक्षाणां** स्पर्शनादीन्द्रियाणाम् । क्व ? **शुद्धात्मनि** रागद्वेषरहिते स्वस्वरूपे । किं कृत्वा ? **उपेत्य** आगत्य । कस्मात् ? **स्वार्थान्निजनिजविषयात्** । उक्तं च—

**उपेत्याक्षाणि सर्वाणि निवृत्तानि स्वकार्यतः ।**
**वसन्ति यत्र स प्राज्ञैरुपवासोऽभिधीयते ॥**

परे त्वेवमाहुः—

**उपावृत्तस्य दोषेभ्यो यस्तु वासो गुणैः सह ।**
**उपवासः स विज्ञेयः सर्वभोगविवर्जितः ॥**

अशनादीनां लक्षणमाह—

**ओदनाद्यशनं स्वाद्यं ताम्बूलादि जलादिकम् ।**
**पेयं खाद्यं त्वपूपाद्यं त्याज्यान्येतानि शक्तितः ॥ १३ ॥**

भवति । किं तत् ? **अशनम्** । किमात्मकम् ? **ओदनादि** भक्तमौद्गादि । तथा भवति । किं तत् ? **स्वाद्यम्** । किंलक्षणम् ? **ताम्बूलादि** क्रमुकदाडिमादि । तथा भवति । किं तत् ? **पेयम्** । किंरूपम् ? **जलादिकं** नीरक्षीरादि । तथा भवति । किं तत् ? **खाद्यम्** । किंस्वभावम् ? **अपूपाद्यं** पूरिकामोदकादि । **तु**र्विशेषे । उक्तं च—

**मौद्गोदनाद्यमशनं क्षीरजलाद्यं मतं जिनैः पेयम् ।**
**ताम्बूलदाडिमाद्यं स्वाद्यं खाद्यं त्वपूपाद्यम् ॥**

अपि च—

**प्राणानुग्राहि पानं स्यादशनं दशनं क्षुधः ।**
**खाद्यते यत्नतः खाद्यं स्वाद्यं स्वादोपलक्षितम् ॥**

अथैषां विधिपूर्वकं परिहरणीयत्वमाह—त्याज्यानीत्यादि । **त्याज्यानि**

परिहार्याणि मुमुक्षुभिः । कानि ? एतानि अशनस्वाद्यपेयखाद्यानि । कस्मात् ? शक्तितो वीर्यानिगूहनेन, 'शक्तितस्त्यागतपसी' इति वचनात् ॥

उपवासस्योत्तमादिभेदात्त्रिप्रकारस्यापि प्रचुरदुष्कृताशुनिर्जराङ्गत्वाद्यथाविधि विधेयत्वमाह—

**उपवासो वरो मध्यो जघन्यश्च त्रिधापि सः ।**
**कार्यो विरक्तैर्विधिवद्बह्वागःक्षिप्रपाचनः ॥ १४ ॥**

भवत्युपवासः । कीदृशः ? **वर** उत्तमो, **मध्यो** मध्यमो, **जघन्यश्चा**धमः । तस्य करणीयत्वमाह—त्रिधापीत्यादि । **कार्यो** विधेयः । कोसौ ? **स** उपवासः । कैः ? **विरक्तैः** संयमितप्राणीन्द्रियैः । कथम् ? **विधिवत्** शास्त्रोक्तविधानेन । कतिधा ? **त्रिधापि** त्रिप्रकारोपि । किंविशिष्टो यतः ? **बह्वागःक्षिप्रपाचनो** बहूनां प्रचुराणामागसां पातकानां क्षिप्रं शीघ्रं पाचनो निर्जराकारकः ॥

उत्तमाद्युपवासभेदानां लक्षणान्याह—

**धारणे पारणे सैकभक्तो वर्यश्चतुर्विधः ।**
**साम्बुर्मध्योनेकभक्तः सोधमस्त्रिविधावुभौ ॥ १५ ॥**

**वर्य** उत्तममुपवासो भण्यते । कीदृशः ? **सैकभक्तः** सकृद्भोजनयुक्तः । क्व ? **धारणे** धारणकदिने । न केवलं, **पारणे** पारणकदिने । तस्य संज्ञान्तरमाह—**चतुर्विध** इति चतुर्विधसंज्ञकः । तथा भवति **मध्यो** मध्यम उपवासः । कीदृशः ? **साम्बु**र्जलपानयुक्तो, धारणे पारणे सैकभक्त इत्येव । तथा भवत्यधमः **स** उपवासः । कीदृशः ? **अनेकभक्तो** धारणे पारणे चैकभक्तरहितः साम्बुरित्येव । भवतः ? कौ ? **उभौ** द्वौ मध्यमाधमौ । कीदृशौ भवतः ? **त्रिविधौ** त्रिविधसंज्ञौ । उक्तं च—

**चतुर्णां तत्र भुक्तीनां त्यागे वर्यश्चतुर्विधः ।**
**उपवासः सपानीयस्त्रिविधो मध्यमो मतः ॥**

**भुक्तिद्वयपरित्यागे त्रिविधो गदितोऽधमः ।**
**उपवासस्त्रिधाप्येष शक्तित्रितयसूचकः ॥**

अशक्तितो भोजनत्यागे दोषमाह—

**यदाहारमयो जीवस्तदाहारविराधितः ।**
**नार्तरौद्रातुरो ज्ञाने रमते न च संयमे ॥ १६ ॥**

**यद्** यस्मात्कारणाद्भवति । कोसौ ? **जीवो** द्रव्यप्राणप्रधानः प्राणी । किंविशिष्टः ? **आहारमय** आहारेण कवललक्षणेन निर्वृत्त इव । **तत्** तस्मात्कारणान्न **रमते** न रतिमुपयाति । क्व ? **ज्ञाने न च** नापि **संयमे** । किंविशिष्टः ? **आर्तरौद्रातुर** आर्तरौद्राभ्यामार्तः । किंविशिष्टः सन् ? **आहारविराधितो** भोजनं हठात्त्याजितः ॥

एतदेव भङ्ग्यन्तरेणाह—

**प्रसिद्धमन्नं वै प्राणा नृणां तत्त्याजितो हठात् ।**
**नरो न रमते ज्ञाने दुर्ध्यानार्तो न संयमे ॥ १७ ॥**

भवति । किं तत् ? **प्रसिद्धं** प्रतीतम् । किम् ? **अन्नम्** । अद्यते इत्यन्नमाहारः । किम् ? **प्राणा** जीवितम् । केषाम् ? **नृणां** मनुष्याणाम् । कथम् ? **वै** स्फुटम् । यत एवं ततो **नरो न रमते** । क्व ? **ज्ञाने नापि संयमे** । किंविशिष्टः ? **दुर्ध्यानार्त** आर्तरौद्राभ्यामाविष्टः । किंविशिष्टः सन् ? **त्याजितो** मोचितः । किं तत् ? **तदन्नम्** ।

दीर्घे सत्यायुषि नित्यनैमित्तिकांश्चोपवासान् यथाशक्ति विधाय तच्छेषमनशनेनैव नयेदिति शिक्षार्थमाह—

**तन्नित्यनैमित्तिकभुक्तिमुक्तिविधीन्यथाशक्ति चरन्विलङ्घ्य ।**
**दीर्घं सुधीर्जीवितवर्त्म युक्तस्तच्छेषमत्येत्वशनोज्झयैव ॥१८॥**

यतोऽनशनतपस एवंविधा गुणाः सिद्धान्ते प्रसिद्धास्तत् तस्मात्कारणात् **अत्येतु** अतिक्रामतु । कोसौ ? **सुधीः** सद्बुद्धिः । कम् ? **तच्छेषं**

तस्य जीवितस्य शेषमल्पीभावम् । कया ? **अशनोज्झयैव** अशनस्य चतुर्विधाहारस्योज्झा त्यागोऽशनोज्झा, तया अशनोज्झया अनशनेन भक्तप्रत्याख्यानेङ्गिनीप्रायोपगमनमरणानामन्यतमेन, न पुनरन्यथेति एवशब्दार्थः । किंविशिष्टः सन् ? **युक्तः** समाहितः सन् । किं कृत्वा ? **विलङ्घ्य** अतिक्रम्य । किं तत् ? **जीवितवर्त्म** जीवितव्यमार्गम् । किंविशिष्टम् ? **दीर्घम्** आयतम् । किं कुर्वन् ? **चरन्** अनुतिष्ठन् । कान् ? **नित्यनैमित्तिकभुक्तिमुक्तिविधीन्** । भुक्तेराहरस्य मुक्तिः प्रत्याख्यानं भुक्तिमुक्तिः । भुक्तिमुक्तेर्विधयः प्रकारा भुक्तिमुक्तिविधयः । नित्या लुञ्चाद्याश्रयाः । नैमित्तिकाः कनकावल्याद्याश्रयाः । एतेषां लक्षणं टीकाराधनायां बोध्यम् । नित्याश्च नैमित्तिकाश्च नित्यनैमित्तिकाः । ते च ते भुक्तिमुक्तिविधयश्च नित्यनैमित्तिकभुक्तिमुक्तिविधयस्तान् । कथं चरन् ? **यथाशक्ति** शक्तेरनतिक्रमेण । निजवीर्यानिगूहनेनेत्यर्थः ।

अनशनतपसि प्ररोचनामुत्पादयन्नाह—

**प्राञ्चः केचिदिहाप्युपोष्य शरदं कैवल्यलक्ष्म्याऽरुचन्,**
**षण्मासानशनान्तवश्यविधिना तां चक्रुरुत्कां परे ।**
**इत्यालम्बितमध्यवृत्त्यनशनं सेव्यं सदार्यैस्तनुं,**
**तप्तां शुद्ध्यति येन हेम शिखिना मूषामिवात्माऽऽवसन् ॥ १९॥**

**सेव्यं** भक्तव्यम् । किं तत् ? **अनशनम्** उपवासः । कैः ? **आर्यैः** मुमुक्षुभिः । कथम् ? **सदा** नित्यम् । कथं कृत्वा ? **आलम्बितमध्यवृत्ति** । मध्याऽनुत्कृष्टापकृष्टा वृत्तिर्व्यापारो मध्यवृत्तिर्मध्यमचर्या । आलम्बिता स्वीकृता मध्यवृत्तिर्यत्र तदालम्बितमध्यवृत्ति यथा भवत्येवम् । कुतो हेतोः ? **इति** एवं, यतोऽरुचन्नद्युतन् । के ? **प्राञ्चः** पूर्वपुरुषाः । के ते ? **केचिद्** बाहुबल्यादयः । कया ? **कैवल्यलक्ष्म्या** केवलज्ञानसंपदा । अनन्तज्ञानादिचतुष्टयश्रियेत्यर्थः । किं कृत्वा ? **उपोष्य** उपवासं कृत्वा । कम् ? **शरदं** संवत्सरं यावत् । क्व ? **इहापि** अस्मिन्नपि क्षेत्रे । का कथा विदेहक्षेत्रेष्वित्यपिशब्दार्थः । तथा **चक्रुः** कृतवन्तः । के ? **परे** पुरुदेवादयः । काम् ? **तां** कैवल्यलक्ष्मीम् । किंविशिष्टाम् ? **उत्काम्** उत्कण्ठिताम् । कतिपय-

संवत्सरलभ्यामित्यर्थः । केन ? **षण्मासानशनान्तवश्यविधिना** षण्मासानऽनशनं षण्मासानशनं मासषट्कमुपवासः । तदन्ते यस्य चतुर्थभक्तादेरुपवासस्य सोयं षण्मासानशनान्तः । स एव वश्यविधि· र्वशीकरणप्रयोगस्तेन । येन किम् ? **येनानशनेन** । किं भवति ? **शुद्ध्यति** शुद्धो भवति । द्रव्यभावकर्मभ्यां मुच्यते इत्यर्थः । कोसौ ? **आत्मा** पुरुषः । किं कुर्वन् ? **आवसन्** अधितिष्ठन् । काम् ? **तनुं** शरीरम् । किंविशिष्टाम् ? **तप्तां** क्लिष्टाम् । किमिव ? **हेमशिखिना मूषामिव** । इवशब्दो यथार्थे । यथा **शुद्ध्यति** शुद्धं भवति किट्टकालिकाभ्यां मुच्यते इत्यर्थः । किं तत् ? **हेम** काञ्चनम् । किं कुर्वत् ? आवसत् । काम् ? **मूषाम्** । किंविशिष्टाम् ? **तप्तां** संतप्ताम् । केन ? **शिखिना** अग्निना ॥

स्वकारणचतुष्टयादुद्भवन्तीमाहारसंज्ञामाहारदर्शनादिप्रतिपक्षभावनया निगृह्णीयादित्यनुशास्ति—

**भुक्त्यालोकोपयोगाभ्यां रिक्तकोष्ठतया सतः ।**
**वेद्यस्योदीरणाच्चान्नसंज्ञामभ्युद्यतीं जयेत् ॥ २० ॥**

**जयेद्** निगृह्णीयात् । कोसौ ? मुमुक्षुः । काम् ? **अन्नसंज्ञामाहाराभि-** लाषम् । किं कुर्वतीम् ? **अभ्युद्यती**माभिमुख्येनोद्गच्छन्तीम् । केभ्यः ? भुक्त्यालोकादिभ्यः भुक्तेराहारस्यालोको दर्शनं भुक्त्यालोकः । तस्या एव चोपयोगो भुक्त्युपयोगः । आहारं प्रति मनःप्रणिधानमित्यर्थः । आलोक-श्चोपयोगश्चालोकोपयोगौ भुक्तेरालोकोपयोगौ भुक्त्यालोकोपयोगौ । ताभ्यां **भुक्त्यालोकोपयोगाभ्याम्** । आहारदर्शनेन तदुपयोगेन चेत्यर्थः । तथा **रिक्तकोष्ठतया** । कोष्ठ आमाशयपक्वाशयलक्षणो देहस्यान्तर्भागः महास्रोतोऽपरसंज्ञः । रिक्त आहारविरहितः कोष्ठो यस्यासौ रिक्तकोष्ठः । तस्य भावस्तत्ता, तया । तथो**दीरणाच्चो**दयात् । कस्य ? **वेद्यस्य** । किं विशिष्टस्य ? **असतो**ऽसातसंज्ञस्य । असातवेदनीयस्येत्यर्थः उक्तं च—

**आहा[१]रदंसणेण य तस्सुवओगेण ओमकोट्ठाए ।**
**वेदस्सुदीरणाए आहारे जायदे सण्णा ॥**

---

१ आहारदर्शनेन च तस्योपयोगेन...कोष्ठे ।
वेदस्योदीरणया आहारे जायते संज्ञा ॥

अनशनतपोभावनायां नियुङ्क्ते—

शुद्धस्वात्मरुचिस्तमीक्षितुमपक्षिप्याक्षवर्गं भजन्,
निष्ठासौष्ठवमङ्गनिर्ममतया दुष्कर्मनिर्मूलनम् ।
श्रित्वाऽब्दानशनं श्रुतार्पितमनास्तिष्ठन् धृतिन्यक्कृत,—
द्वन्द्वः कर्हि लभेय दोर्बलितुलामित्यस्त्वनाश्वांस्तपन्॥२१॥

**अस्तु** भवतु । कोसौ ? **तपन्** तपः कुर्वन् । कीदृशः ? **अनाश्वान्** अनशनव्रतः । कथम् ? **इति** एवम् । किमिति ? **कर्हि लभेय** कदा प्राप्नुयामहम् । काम् ? **दोर्बलितुलां** बाहुबलिकक्षाम् । कीदृशः सन् । **धृतिन्यक्कृतद्वन्द्वः** । धृतिरात्मस्वरूपधारणं स्वरूपविषया प्रसत्तिर्वा । धृत्या न्यक्कृतान्यभिभूतानि द्वन्द्वानि परीषहा येन सोऽहं धृतिन्यक्कृतद्वन्द्वः । किं कुर्वन् ? **तिष्ठन्** उद्गः सन् । कथंभूतो भूत्वा ? **श्रुतार्पितमनाः** श्रुतज्ञानाहितचित्तः । किं कृत्वा ? **श्रित्वा** प्रतिज्ञाय । किं तत् ? **अब्दानशनं** संवत्सरोपवासम् । कीदृशम् ? **दुष्कर्मनिर्मूलनम**शुभकर्मनिर्जरणम् । कया श्रित्वा ? **अङ्गनिर्ममतया** शरीरममत्वत्यागेन, किं कुर्वन् ? **भजन्** सेवमानः । किं तत् ? **निष्ठासौष्ठवं** चारित्रावष्टम्भम् । किं कृत्वा ? **अपाक्षिप्य** विषयेभ्यो व्यावर्त्य । कम् ? **अक्षवर्गं** स्पर्शनादिकरणग्रामम् । किं कर्तुम् ? **ईक्षितुं** साक्षात्कर्तुम् । कम् ? **तं शुद्धस्वात्मानम्** । कथंभूतो भूत्वा ? **शुद्धस्वात्मरुचिः** शुद्धेत्यन्तनिर्मले स्वात्मनि निजचिद्रूपे रुचिः श्रद्धा यस्यासौ शुद्धस्वात्मरुचिः । बाहुबलिचर्या आर्षे यथा,—

गुरोरनुमतोऽधीती दधत्त्वेकविहारताम् ।
प्रतिमायोगमावर्षमातस्थे किल संवृतः ॥

स शंसितव्रतोऽनाश्वान् वनवल्लीततान्तिकः ।
वल्मीकरन्ध्रनिःसर्पत्सर्पैरासीद्भयानकः ॥

इत्यादि प्रबन्धेन । अनशनम् ।

अथावमोदर्यस्य लक्षणं फलं चाह—

ग्रासोऽश्रावि सहस्रतन्दुलमितो द्वात्रिंशदेतेऽशनं,
पुंसो वैश्रसिकं स्त्रियो विचतुरास्तद्धानिरौचित्यतः।
ग्रासं यावदथैकसिक्थमवमोदर्यं तपस्तच्चरे,—
द्धर्मावश्यकयोगधातुसमतानिद्राजयाद्याप्तये ॥ २२ ॥

**अश्रावि** श्रावितः शिष्टैस्तेभ्यः श्रुतो वा। कोसौ ? **ग्रासः** कवलः। कीदृशः ? **सहस्रतन्दुलमितः**। सहस्रं दशशतानि तन्दुला मितं मानं यस्य स एवम्। भवति। किं तत् ? **अशनं** भोजनम्। किम् ? **एते** ग्रासाः। कति ? **द्वात्रिंशत्**। कस्य ? **पुंसः** पुरुषस्य। कीदृशम् ? **वैश्रसिकं** स्वाभाविकम्। अथवा,—

कुक्कुटाण्डसमग्रासा द्वात्रिंशद्भोजनं मतम्।
तदेकद्वित्रिभागोनमवमोदर्यमीर्यते ॥

तथा भवति। किं तत् ? अशनम्। कस्याः ? **स्त्रियो** नार्याः। किंविशिष्टम् ? **वैश्रसिकम्**। किं तत् ? ग्रासाः। किंविशिष्टाः ? **विचतुरा** विगताश्चत्वारो येषां विचतुराः। अष्टाविंशतिरित्यर्थः। भवति च। किं तत् ? **तपस्**तपोहेत्वाद्यूनतापरिहाररूपत्वात्। किमाख्यम् ? **अवमोदर्य**मतृप्तिभोजनम्। किं तत् ? **तद्धानि**स्तेषां द्वात्रिंशतोऽष्टाविंशतेर्वा हानिरपकर्षः। कथम् ? **यावद्**ऽवधीकृत्य। कम् ? **ग्रासं** ग्रासमात्रम्। एककवलमित्यर्थः। **अथ** अथवा **एकसिक्थं** सिक्थमात्रमित्यर्थः। कस्मात् ? **औचित्यत** एकोत्तरश्रेण्याः चतुर्थादिभागत्यागाद्वा। उक्तं च—

द्वात्रिंशाः कवलाः पुंस आहारस्तृप्तये भवेत्।
अष्टाविंशतिरेवेष्टाः कवलाः किल योषितः ॥
तस्मादेकोत्तरश्रेण्या यावत्कवलमात्रकम्।
ऊनोदरं तपो ह्येतत्तद्भेदोपीदमिष्यते ॥

**तच्च चरे**दनुतिष्ठेन्मुमुक्षुः। कस्यै ? **धर्मा**द्याप्तये। धर्मे उत्तमक्षमामा-

र्द्वार्जवशौचसत्यसंयमतपस्त्यागाकिंचन्यब्रह्मचर्यलक्षणो दशप्रकारः। आव-श्यकानि वक्ष्यमाणलक्षणानि षट्। योग आतापनादिः सद्ध्यानादिश्च। धातु-समता वाताद्यवैषम्यम्। निद्राजयः स्वापनिग्रह आदिर्यस्येन्द्रियप्रद्वेषनिवृ-त्त्यादेः सोयं निद्राजयादिः। धर्मश्चावश्यकानि च योगश्च धातुसमता च निद्राजयादिश्च धर्मावश्यकयोगधातुसमतानिद्राजयादयः। तेषामाप्तिः प्राप्ति-स्तस्यै। उक्तं च—

धर्मावश्यकयोगेषु ज्ञानादावुपकारकृत्।
दर्पहारीन्द्रियाणां च ज्ञेयमूनोदरं तपः॥

बह्वाशिनो दोषानाह—

**बह्वाशी चरति क्षमादिदशकं दृप्यन्न नावश्यका,—**
**न्यक्षूणान्यनुपालयत्यनुषजत्तन्द्रस्तमोऽभिद्रवन्।**
**ध्यानाद्यर्हति नो समानयति नाप्यातापनादीन्वपुः,—**
**शर्मासक्तमनास्तदर्थमनिशं तत्स्यान्मिताशी वशी॥ २३॥**

**न चरति** नानुतिष्ठति। कोसौ? **बह्वाशी** अतिमात्राशनशीलः। किं तत्? **क्षमादिदशकमु**त्तमक्षमादीनि दश। कीदृशो भवन्? **दृप्यन्** दृप्तः सन्। **नाप्यनुपालयति** अनुगतं रक्षति बह्वाशी। कानि? **आवश्यकानि**। कीदृशानि? **अक्षूणानि** निर्दोषाणि संपूर्णानि वा। किं कुर्वन्? **दृप्यन्** नो नाप्यर्हति बह्वाशी दृप्यन्। किं तत्? **ध्यानादि** ध्यानस्वाध्यायादि। किं कुर्वन्? **अभिद्रवन्** आभिमुख्येन गच्छन्। किं तत्? **तमो** **मोहम्**। कथंभूतो भूत्वा? **अनुषजत्तन्द्रः**। अनुषजन्ती अनुबध्यमाना तन्द्रा प्रमीला यस्य स एवम्। **नापि समानयति** प्रत्यानयति संपूर्णीकरोति वा बह्वाशी। कान्? **आतापनादीना**तापनवर्षायोगबाह्यशयनयोगान्। किंविशिष्टः सन्? **वपुःशर्मासक्तमनाः** शरीरसुखासक्तचित्तः। यत एवं विधा दोषा बह्वाशिनः संभवन्ति **तत्** तस्मात्कारणात् **स्याद्**भवे**द्** यतिः किंविशिष्टः? **मिताशी**। मितं परिमितमश्नातीत्येवं व्रतः। किमर्थम्? **तदर्थं** धर्माद्यर्थम्। कथम्? **अनिशं** नित्यम्॥

मिताशनादिन्द्रियाणां प्रद्वेषाभावं वशवर्तित्वं च दर्शयति—

**नाक्षाणि प्रद्विषन्त्यन्नप्रति क्षयभयान्न च ।**
**दर्पात्स्वैरं चरन्त्याज्ञामेवानूद्यन्ति भृत्यवत् ॥ २४ ॥**

**न प्रद्विषन्ति** न विप्रीतिं गच्छन्ति । कानि ? **अक्षाणीन्द्रियाणि** । कथम् ? **अन्नप्रति** अन्नस्य मात्रया । स्तोकाहारेणेत्यर्थः । कस्मात् ? **क्षयभयात्** प्रलयभीतेः । उपवासादिन्द्रियाणां क्षयाद् भयं स्यात् । अन्नप्रतीत्यत्र 'स्तोके[१] प्रतिना' इत्यनेनाव्ययीभावः । **नच** नापि **चरन्ति** प्रवर्तन्ते । कानि ? अक्षाणि । कथम् ? **स्वैरं** स्वच्छन्दम् । कस्मात् ? **दर्पान्**मदावेशात् । किं तर्हि कुर्वन्तीत्याह—आज्ञामित्यादि । **उद्यन्ति** उत्थानं कुर्वन्त्यक्षाणि । कथम् ? **अनु** सह । काम् ? **आज्ञामेव** । आज्ञयैव सहेत्यर्थः । किंवत् ? **भृत्यवद्** भृत्या यथा । आज्ञामेवानु इत्यत्र "भार्थे ।१।४।४१४। इत्यनेन सहार्थे द्वितीया ॥

मिताशिनो गुणविशेषमाह—

**शमयत्युपवासोत्थवातपित्तप्रकोपजाः ।**
**रुजो मिताशी रोचिष्णु ब्रह्मवर्चसमश्नुते ॥ २५ ॥**

**शमयति** शमं नयति । कोसौ ? **मिताशी** । काः ? **रुजो** व्याधीन् । किंविशिष्टाः ? **उपवासोत्थवातपित्तप्रकोपजाः** । उपवासादुत्था उत्थानं यस्य सोयमुपवासोत्थः । स चासौ वातपित्तप्रकोपश्च पवनपित्तयोरुन्मार्गगामित्वम् । तस्माज्जाताः । उपवासाद्धि धातुवैषम्याद्वातपित्तप्रकोपः स्यात् । तथाऽश्नुते प्राप्नोति मिताशी । किं तत् ? **ब्रह्मवर्चसं** परमात्मतेजः श्रुतज्ञानं वा । किंविशिष्टम् ? **रोचिष्णु** दीपनशीलम् । अवमोदर्यम् ।

अथ वृत्तिपरिसंख्यानतपसो लक्षणं तदाचरणफलं चोपदिशति—

**भिक्षागोचरचित्रदातृचरणामत्रान्नसद्मादिगात्,**
**संकल्पाच्छ्रमणस्य वृत्तिपरिसंख्यानं तपोऽङ्गस्थितिः ।**

---

१ 'स्तोके प्रति' इत्येव पाठोत्र मूलपुस्तके दृष्टः । तथापि जैनेन्द्रे "स्तोके प्रतिना" इति पाठो लभ्यते ।

**नैराश्याय तदाचरेन्निजरसासृग्मांससंशोषण,—**
**द्वारेणेन्द्रियसंयमाय च परं निर्वेदमासेदिवान् ॥ २६ ॥**

भवति। किं तत्? **तपः**। किन्नाम? **वृत्तिपरिसंख्यानम्**। किंरूपम्? **अङ्गस्थितिः** शरीराय वृत्तिः। कस्य? **श्रमणस्य** तपस्विनः। कस्मात्? **संकल्पात्** अभिप्रायात्। किंविशिष्टात्। **भिक्षागोचरचित्रदातृचरणामत्रान्नसद्मादिगात्**। भिक्षाश्रितनानाविधदायकादिविषयमभिसंधिमाश्रित्य यतेराहारग्रहणं वृत्तिपरिसंख्यानमित्याख्यायते इत्यर्थः। उक्तं च—

**गोयरपमाणदायगभायणणाणाविहाण जं गहणं।**
**तह यासणं सगहणं विविधं सयमंति परिसंखा॥**

दाता दायकः। चरणं वीथ्यादिगमनम्। अमत्रं भाजनम्। अन्नं भोज्यद्रव्यम्। सद्म गृहम्। दातारश्च चरणानि चामत्राणि चान्नानि च सद्मानि च दातृचरणामत्रान्नसद्मानि। तान्यादयो येषां पाटकादीनां ते दातृचरणामत्रान्नसद्मादयः। चित्रा नानाप्रकाराश्च ते दात्रादयश्च चित्रदात्रादयः। भिक्षाया गोचरा विषया भिक्षागोचराः। ते च ते चित्रदात्रादयश्च भिक्षागोचरचित्रदात्रादयः। तान्गच्छति विषयीकरोति यः संकल्पः स भिक्षागोचरचित्रदातृचरणामत्रान्नसद्मादिगस्तस्मात्। तमाश्रित्येत्यर्थः। तद्यथा—

"ब्राह्मणक्षत्रियादिर्वा सोपि वृद्धो बालयुवाद्यवस्थो वा सोपानत्को मार्गस्थो हस्त्याद्यारूढोऽन्यथा वा यद्यद्य प्रभृति मां धरेत् तदानीं तिष्ठामि नान्यथा। एवं स्त्रियामपि योज्यम्।" एवंविधो बहुविधो दातृविषयः संकल्पः। तथा यया वीथ्या गच्छामि पूर्वं तयैव प्रथ्या गच्छन् यदि भिक्षां लभेय तदा गृह्णीयां नान्यथा। एवं प्राञ्जलं वीत्यागच्छन् गोमूत्रिकाकारं वा चतुरस्राकारं वा अभ्यन्तरमारभ्य बहिर्निस्सरणेन वा शलभमालाभ्रमणाकारं वा गोचर्याकारं वा भ्राम्यन् यद्यद्य प्रभृति भिक्षां लभेय तदा गृह्णीयाम् इत्यादिरनेकविधश्चरणविषयः। तथा सौवर्णेन राजतादिना वा मृन्मयेन वा भाजनेन यदि दास्यति भिक्षां तदा

गृहीष्यामि नान्यथा। एवमादिरमत्रविषयः। तथा यदि पिण्डभूतं द्रव-बहुलतया पेयं वा यवागूं वा मसूरचणकयवादिधान्यं वा शाककुल्माषादि-संसृष्टं वा समन्तादवस्थितशाकमध्यावस्थितौदनं वा परितः स्थितव्यञ्जन-मवास्थितान्नं वा व्यञ्जनमध्ये पुष्पावलीवदवस्थितसिक्थकं वा निष्पाचा-द्यामिश्रितान्नं वा शाकव्यञ्जनादिकं वा हस्तलेपकारि वा तदलेपकारि वा निःसिक्थकं ससिक्थकं वा पानकं वाद्यप्रभृत्यभ्यवहरामि नान्यत्। इत्यन्न-विषयः। तथा एतेष्वेतावत्सु वा गृहेषु प्रविशामि नान्येषु बहुषु। इति सद्मविषयः। आदिशब्दात्पाटकादयो गृह्यन्ते। तत्र इममेव पाटकं प्रविश्य लब्धां भिक्षां गृह्णामि नान्याम्। एकमेव पाटकं द्वयमेव वेति। तथास्य गृहस्य परिकरतयावस्थितां भूमिं प्रविश्य गृह्णामीत्यभिग्रहो निवसन-मित्युच्यते इति केचिद्वदन्ति। अपरे, पाटकस्य भूमिमेव प्रविशामि, न पाटकगृहाणीति संकल्पः पाटकनिवसनमित्युच्यते, इति कथयन्ति। तदुभयमपि च गृह्यते। तथा एकां भिक्षां द्वे एव वा गृह्णामि, नाधिकामिति भिक्षापरिमाणम्। तथा एकेनैव दीयमानं द्वाभ्यामेवेति वा दातृ-क्रियापरिमाणम्। अनियतायामपि भिक्षायामियत एव ग्रासानियन्त्येव वा वस्तून्येतावन्तमेव वा कालमेतस्मिन्नेव वा काले गृह्णामीति वा परि-माणं गृह्यते इति। तदुक्तम्—

> गत्वा प्रत्यागतमृजुविधिश्च गोमूत्रिका तथा पेटा।
> शम्बूकावर्तविधिः पतङ्गवीथी च गोचर्या॥
> पाटकनिवसनभिक्षापरिमाणं दातृदेयपरिमाणम्।
> पिण्डाशनपानाशनखिच्चयवागूर्व्रतयति सः॥
> संसृष्टफलकपरिखा पुष्पोपहृतं च शुद्धकोपहितम्।
> लेपकमलेपकं पानकं च निःसिक्थकं ससिक्थं च॥
> पात्रस्य दायकादेरवग्रहो बहुविधः स्वसामर्थ्यात्।
> इत्येवमनेकविधा विज्ञेया वृत्तिपरिसंख्या॥

तत्कः किमर्थमाचरेदित्यत्राह—नैराश्यायेत्यादि। आचरेदनुतिष्ठेन्मु-मुक्षुः। कीदृशः? **आसेदिवान्** प्राप्तः। किम्? **निर्वेदं** संसारशरीर-भोगवैराग्यम्। किंविशिष्टम्? **परं** परमम्। किं तत्? **तद्** वृत्तिपरि-

संख्यानं नाम तपः । कस्मै ? नैराश्याय आशानिरासार्थम् । न केवलं इन्द्रियसंयमाय च करणगणसंयमनार्थम् । केन ? निजरसासृग्मांससंशोषणद्वारेण । रस आद्यो धातुः । असृग् रुधिरम् मांसमामिषम् । रसश्चासृक् च मांसं च रसासृग्मांसानि । निजानि च स्वकीयानि रसासृग्मांसानि । निजरसासृग्मांसानि । तेषां सम्यग्विहिताचरणेन शोषणमपकर्षणम् । तस्य द्वारं मुखमुपायस्तेन वृत्तिपरिसंख्यानम् ।

अथ रसपरित्यागलक्षणमाह—

त्यागः क्षीरदधीक्षुतैलहविषां षण्णां रसानां च यः,
कात्स्न्येंनावयवेन वा यदसनं सूपस्य शाकस्य च ।
आचाम्लं विकटौदनं यददनं शुद्धौदनं सिक्थव,—
द्रूक्षं शीतलमप्यसौ रसपरित्यागस्तपोऽनेकधा ॥ २७ ॥

भवति । किं तत् ? तपः । किंनाम ? रसपरित्यागः । कतिधा ? अनेकधा अनेकप्रकारः । किं लक्षणोसौ ? क्षीरादित्यागादिः । यः किम् ? यस्त्यागो वर्जनम् । केषाम् ? क्षीरदधीक्षुतैलहविषां द्रव्याणाम् । क्षीरं गव्यादि । दधि गव्यादिक्षीरविकारः । इक्षुर्गुडखण्डमत्स्यण्डिकाशर्करादिः । तैलं तिलतैलादिकम् । हविर्गव्यादिघृतम् । क्षीरं च दधि चेक्षुश्च तैलं च हविश्च क्षीरदक्षीक्षुतैलहवींषि, तेषाम् । न केवलं, यश्च त्यागः । केषाम् । रसानां द्रव्याश्रितमधुरादिनिर्यासानाम् । कियताम् ? षण्णां षट्संख्यानाम् । उक्तं च—

रसाः स्वाद्वम्ललवणतिक्तोषणकषायकाः ।
षड्द्रव्यमाश्रितास्ते च यथापूर्वं बलावहाः ॥

केन क्षीरादीनां रसानां च त्यागः ? कात्स्न्येंन सर्वं सर्विकया । न केवलम्, अवयवेन वा एक द्वित्र्याद्यवच्छेदेन । न केवलं तथा क्षीरादि·

---

१ 'मत्स्यण्डी फाणितम्' इत्यमरे वैश्यवर्गः श्लोकः ४३ तमः ।
राब इति ख्यातस्य द्रवगुडरूपस्य नामेदम् ।

त्यागो रसपरित्यागो नाम तपः स्यात्, यच्चासनं वर्जनम् । कस्य ? सूपस्य मुद्गादेः न केवलं, शाकस्य च जीवन्त्यादेर्हरितकस्य । कार्त्स्न्येनावयवेनवा अत्रापि योज्यम् । न केवलं सूपादिवर्जनं, यच्चादनं भक्षणम् । किंविशिष्टम् ? आम्लमसंस्कृतसौवीरमिश्रम् । तथा विकटौदनं यदुदनमतिपक्वमुष्णोदकमिश्रं वा । यच्च भोजनं शुद्धौदनं केवलभक्तम् । यच्चादनं सिक्थवत् सिक्थाढ्यम् । अल्पोदकमित्यर्थः । सिक्थान्यस्मिन् सन्तीति । भूम्नि मत्वर्थीयः । यच्चादनं रूक्षमस्नेहम् । यच्चादनं शीतलं शीतमनुष्णम् । अपिः श्रेष्ठानामिष्टरूपरसगन्धस्पर्शोपेतानां परमान्नपानफलभक्षौषधादीनां रूपबलवीर्यवृद्धिदर्पवर्धनानां स्वादूनामाहाराणां महारम्भप्रवृत्तिहेतूनां संग्रहणार्थः ।

यः संविग्नः सर्वज्ञाज्ञादृढबद्धादरस्तपःसमाधिकामश्च सल्लेखनोपक्रमात् पूर्वमेव नवनीतादिलक्षणाश्चतस्रो महाविकृतीर्यावज्जीवं त्यक्तवान् स एव रसपरित्यागं वपुःसल्लेखनाकामो विशेषेणाभ्यसितुमर्हतीत्युपदेशार्थं वृत्तद्वयमाह—

काङ्क्षाकृन्नवनीतमक्षमदसृण्मांसं प्रसङ्गप्रदं,
मद्यं क्षौद्रमसंयमार्थमुदितं यद्यच्च चत्वार्यपि ।
सम्मूर्छालसवर्णजन्तुनिचितान्युच्चैर्मनोविक्रिया,—
हेतुत्वादपि यन्महाविकृतयस्त्याज्यान्यतो धार्मिकैः ॥ २८ ॥

इत्याज्ञां दृढमार्हतीं दधदघाद्भीतोऽत्यजत् तानि य,—
श्चत्वार्येव तपःसमाधिरसिकः प्रागेव जीवावधि ।
अभ्यस्येत्स विशेषतो रसपरित्यागं वपुः संलिखन्,
स्याद्दूषीविषवद्धि तन्वपि विकृत्यङ्गं न शान्त्यै श्रितम् ॥२९ ॥

( युग्मम् )

**अभ्यस्येत्** असकृत् प्रवर्तयेत्। कोसौ ? **स** मुमुक्षुः । कम् ? **रसपरित्यागम्**। किं कुर्वन् ? **संलिखन्** कृशीकुर्वन्। किं तत्? **वपुः** शरीरम् कस्मात् ? **विशेषतः** । सर्वदा रसपरित्यागमभ्यस्येद्वपुः संलिखन् सुतरामित्यर्थः। यः किंम् ? **योऽत्यजत्** त्यक्तवान्। कानि ? **तानि** नवनीतमांसमद्यमधूनि । कियन्ति? **चत्वार्येव** चतुःसंख्यानि । तान्येव व्यस्तसमस्तदोषभूयस्त्वादत्यजन्न रसान्तराणीति एवशब्दार्थः। कथम् ? **प्रागेव** सल्लेखनोक्रमात्पूर्वमेव। कथम् ? **जीवावधि** । जीवनं जीवः। जीवोवधिर्मर्यादा यत्र तज्जीवावधि । यावज्जीवमित्यर्थः। किंविशिष्टः ? **भीतस्त्रस्तः**। कस्मात् ? **अघात्** पापात्। पुनः किं विशिष्टः ? **तपःसमाधिरसिकः** । तपस्येकाग्रतां तपःसमाधी वा नितान्तमाकाङ्क्षन्। किं कुर्वन् ? **दधद्** धारयन्। काम् ? **आज्ञां** शासनम्। किंविशिष्टाम् ? **आर्हतीं** जैनीम् । कथं कृत्वा ? **दृढम्**। सर्वज्ञाज्ञालङ्घनादेव दुरन्तसंसारपातो ममाभूद्भविष्यति च तदेनां जातुचिन्न लङ्घयेयमिति निर्बन्धं कृत्वेत्यर्थः। कथम् ? **इति** एवं प्रकारम्। **त्याज्यानि** परिहार्याणि । कानि ? नवनीतादीनि । कैः ? **धार्मिकैः** धर्ममहिंसालक्षणं चरद्भिः। कस्मात् ? **अत** एतस्माद्धेतोः । यत्किम् ? **यदुदितं** परमागमे प्रतिपादितम्। किं तत् ? **नवनीतम्**। कीदृशम् ? **काङ्क्षाकृद्** गृद्धिकरम्। तथा यदुदितम्। किं तत् ? **मांसम्** । कीदृशम्? **अक्षमदसृट्** । अक्षाणां मदं सृजति जनयति अक्षमदसृट्। इन्द्रियदर्पकारीत्यर्थः। तथा यदुदितम् ? किं तत् ? **मद्यम्** । कीदृशम् ? **प्रसङ्गप्रदम्**। पुनः पुनस्तत्र वृत्तिरगम्यागमनं वा प्रसङ्गः । तं प्रकर्षेण ददाति। तथा यदुदितम्। किं तत् ? **क्षौद्रं** माक्षिकम् । कीदृशम् ? **असंयमार्थम्**। रसविषयानुरागात्मक इन्द्रियासंयमः । रसजजन्तुपीडालक्षणश्च प्राणासंयमः। तन्निमित्तम् असंयमावर्थौ प्रयोजने यस्येत्येवमसंयमार्थमिति विग्रहः। **यच्च** भवन्ति । कानि ? नवनीतादीनि । कीदृशानि ? **संमूर्छालसवर्णजन्तुनिचितानि**। कियन्त्यपि ? **चत्वार्यपि** चतुःसंख्यानि। संमूर्छालाः संमूर्छनप्रभवाः । सवर्णाः स्वस्य योनिद्रव्येण समानवर्णाः। संमूर्छालाश्च ते सवर्णाश्च ते संमूर्छालसवर्णाः। ते च ते जन्तवश्च प्राणिनः । तैर्निचितानि व्याप्तानि । **यदपि** यच्च भवन्ति । कानि ? नवनीतादीनि। किंविशिष्टानि ? **महाविकृतयो** महाविकृतिसंज्ञानि ।

कस्मात् ? उच्चैर्मनोविक्रियाहेतुत्वाद् महाचेतोविकारकारणत्वात् । उक्तं च—

> [1]चत्तारि महाविगडीउ होंति णवणीदमज्जमंसमहू ।
> कंखापसंगदं याऽसंजमकारीओ एदाओ ॥
> [2]आणाभिकंखिणाऽवज्जभीरुणा तवसमाधिकामेण।
> ताओ जावज्जीवं निज्जूडाओ पुरा चेव ॥

सर्वदा रसपरित्यागं किमित्यभ्यस्येत् ? इत्यत्राह-हि यस्मान्न स्यान्न भवेत् । किं तत् ? विकृत्यङ्गं विकारकारणम् । कस्यै ? शान्त्यै कल्याणार्थम् । किं विशिष्टम् ? श्रितमाश्रितम् । कियत् ? तन्वपि । किं वत् ? दूषीविषवद् मन्दप्रभावविषमिव । दूषीविषलक्षणं यथा—

> जीर्णं विषघ्नौषधिभिर्हतं वा दावाग्निवातातपशोषितं वा ।
> स्वभावतो वा न गुणैरुपेतं दूषीविषाख्यं विषमभ्युपैति ॥

रसपरित्यागः ।

अथ विविक्तशय्यासनस्य तपसो लक्षणं फलं चोपदिशति—

> विजन्तुविहिताबलाद्यऽ विषये मनोविक्रिया,—
> निमित्तरहिते रतिं ददति शून्यसद्मादिके ।
> स्मृतं शयनमासनाद्यथ विविक्तशय्यासनं,
> तपोऽर्तिहतिवर्णिताश्रुतसमाधिसंसिद्धये ॥ ३० ॥

स्मृतमाम्नातं पूर्वसूरिभिः । किं तत् ? तपः । किमाख्यम् ? विविक्तशय्यासनं विविक्ते प्रासुकादिस्थाने शय्या चासनं च विविक्तशय्यासनम् । किंरूपम् ? शयनम् । न केवलम्, आसनाद्यथ उपवेशनोद्भावस्थाना-

---

१—चत्वारि महाविकृतयो भवन्ति नवनीतमद्यमांसमधु ।
काङ्क्षाप्रसङ्गदं चासंयमकारीणि एतानि ॥

२—आज्ञाभिकाङ्क्षिणाऽवद्यभीरुणा तपःसमाधिकामेन ।
ता यावज्जीवं त्यक्ताः पुरा चैव ॥

दि च। अथेति समुच्चये। क? **शून्यसद्मादिके** विजनगृहगुहावृक्षमूलादिके। किं विशिष्टे? **विजन्तुविहिताबलाद्यविषये**। विगता जन्तवः प्राणिनो यस्मात्तद्विजन्तु प्रासुकम्। विहितमुद्गमादिदोषरहितम्। ते च पिण्डशुध्युक्ता यथास्वमत्र चिन्त्याः। अबलाद्यविषयः स्त्रीपशुनपुंसकगृहस्थक्षुद्रजीवानामगोचरः। विजन्तु च तद्विहितं विजन्तुविहितम्। तच्च तदबलाद्यविषयश्च विजन्तुविहिताबलाद्यविषयस्तस्मिन्। पुनः किंविशिष्टे? **मनोविक्रियानिमित्तरहिते**। मनोविक्रियानिमित्तान्यशुभसंकल्पकराः शब्दाद्यर्थाः। तै रहिते त्यक्ते। किं कुर्वति च? **ददति** संपादयति च। काम्? **रतिं** मनसोन्यत्र गमनौत्सुक्यनिवृत्तिम्। कस्मै स्मृतं? **अर्तिहतिवर्णिताश्रुतसमाधिसंसिद्धये**। अर्तिहतिराबाधापगमः। वर्णिनो ब्रह्मचारिणो भावो वर्णिता ब्रह्मचर्यम्। श्रुतं शास्त्र चिन्ता। समाधिरेकाग्रचिन्तानिरोधः अर्तिहतिश्च वर्णिता च श्रुतं च समाधिश्च अर्तिहतिवर्णिताश्रुतसमाधयः। तेषां संसिद्धिः सम्यग्निष्पत्तिस्तदर्थम्।

विविक्तवसतिमध्युषितस्य साधोरसाधुलोकसंसर्गादिप्रभवदोषसंक्लेशाभावं भावयति—

**असभ्यजनसंवासदर्शनोत्थैर्न मथ्यते।**
**मोहानुरागविद्वेषैर्विविक्तवसतिं श्रितः॥ ३१॥**

**न मथ्यते** न पीड्यते साधुः। कै? **मोहानुरागविद्वेषैः**। मोहोऽज्ञानं ममत्वं च। अनुरागोऽनुगतप्रीतिः विद्वेषो विरोधः मोहश्चानुरागश्च विद्वेषश्च तैः। किंविशिष्टैः? **असत्यजनसंवासदर्शनोत्थैः**। सभायां साधवः सभ्याः। न सभ्या असभ्याः असभ्याश्च ते जनाश्चासभ्यजना अशिष्टलोकाः। संगतं वसनं संवासः। दर्शनमवलोकनम्। संवासश्च दर्शनं च संवासदर्शने। असभ्यजनानां संवासदर्शने असभ्यजनसंवासदर्शने। ताभ्यामुत्था उत्थानं येषां ते असभ्यजनसंवासदर्शनोत्थास्तैः। किंविशिष्टः साधुः। **श्रित** आश्रितः। काम्? **विविक्तवसतिम्**। तल्लक्षणं यथा—

**यत्र न चेतोविकृतिः शब्दाद्येषु प्रजायतेर्थेषु।**
**स्वाध्यायध्यानहतिर्न यत्र वसतिर्विविक्ता सा॥**

अपि च—

हिंसाकषायशब्दादिवारकं ध्यानभावनापथ्यम् ।
निर्वेदहेतुबहुलं शयनासनमिष्यते यतिभिः ॥

तन्निवासगुणश्च—

कलहो रोलं झञ्झा व्यामोहः संकरो ममत्वं च ।
ध्यानाध्ययनविघातो नास्ति विविक्ते मुनेर्वसतः ॥

रोलः शब्दबहुलता । झञ्झा संक्लेशः । संकरोऽसंयतैः सह मिश्रणम् । ध्यानमेकस्मिन् प्रमेये निरुद्धा ज्ञानसंततिः । अध्ययनमनेकप्रमेये संचारी स्वाध्यायः । विविक्तशय्यासनम् ।

अथ कायक्लेशतपो लक्षयित्वा तत्प्रति नियुङ्क्ते—

ऊर्ध्वार्काद्ययनैः शवादिशयनैर्वीरासनाद्यासनैः,
स्थानैरेकपदाग्रगामिभिरनिष्ठीवाग्रिमावग्रहैः ।
योगैश्चातपनादिभिः प्रशमिना संतापनं यत्तनोः,
कायक्लेशमिदं तपोऽर्त्युपनतौ सद्ध्यानसिद्ध्यै भजेत् ॥ ३२ ॥

भजेत् सेवेत मुमुक्षुः । किं तत् ? इदं तपः । किमाख्यम् ? कायक्लेशं कायक्लेशाख्यम् । कायः शरीरं क्लिश्यतेऽनेनेति । "हलः । २ । ३ । १०२ ।" इति पुंसि संज्ञायां घञ् । कस्यै भजेत् ? सद्ध्यानसिद्ध्यै प्रशस्तध्याननिष्पत्त्यर्थम् । कस्यां सत्याम् ? अर्त्युपनतौ अर्तेः पीडाया दुःखस्योपनतिः प्राप्तिस्तस्याम् । उक्तं च—

अदुःखभावितं ज्ञानं क्षीयते दुःखसन्निधौ ।
तस्माद्यथाबलं दुःखैरात्मानं भावयेन्मुनिः ॥

यत्किम् ? यत्क्रियते । केन ? प्रशमिना तपस्विना । किं तत् ? संतापनं कदर्थनम् । कस्याः ? तनोः शरीरस्य । कैः ? ऊर्ध्वार्काद्ययनैः शिरोगतादित्याभिमुखादित्यादिग्रामान्तरगमनप्रत्यागमैः । ऊर्ध्वमुपरि अर्के आदित्यो यत्र तदूर्ध्वार्कं शरीरोपरिगतादित्यम् । ऊर्ध्वार्कमादिर्येषामभिमु-

स्वादित्यतिर्यग्गतादित्यादीनां तान्यूर्ध्वार्कादीनि । तानि च तानि अयनानि च ग्रामान्तरगमनप्रत्यागमनानि ऊर्ध्वार्काद्ययनानि, तैः । न केवलं, **शवादिशयनैर्मृ**तकदण्डलगडैकपार्श्वादिशय्याभिः । शवो मृतक आदिर्येषां दण्डादीनां ते शवादयः । तदाकाराणि शयनानि शय्याः शवादिशयनानि, तैः । न केवलं, **वीरासनाद्यासनै**र्वीरासनमकरमुखासनोत्कुटिकासनादिभिः । वीरासनमादिर्येषां तानि वीरासनादीनि । तान्येवासनानि वीरासनाद्यासनानि, तैः । न केवलं, **स्थानैः** कायोत्सर्गैः । किंविशिष्टः ? **एकपदाग्रगामिभिः** । एकपदमग्रगामि पुरःसरं येषां समपादप्रसारितभुजादीनां तान्येकपदाग्रगामीणि, तैः । न केवलम्, **अनिष्ठीवाग्रिमावग्रहैः** । अनिष्ठीवो निष्ठीवनाऽकरणमग्रिमो मुख्यो येषामकण्डूयनादीनां तेऽनिष्ठीवाग्रिमाः । ते च तेऽवग्रहाश्च धर्मोपकारहेतवोऽभिप्रायास्तैः । न केवलं, **योगैश्च** । किंविशिष्टः ? **आतपनादिभिः** । आतपनमातापनं ग्रीष्मे गिरिशिखरेऽभिसूर्यमवस्थानम् । एवं वर्षासु वृक्षमूले, शीतकाले च चतुष्पथे । आतपनमादिर्येषां ते आतपनादयस्तैः । उक्तं च—

ठाणसयणासणेहिं[१] विविहेहिमऽओग्गाहेहिं[१] बहुगेहिं[१] ।
अणुवीची परिताओ कायकिलेसो हवदि एसो ॥

अपि च—

अनुसूर्यं प्रतिसूर्यं तिर्यक्सूर्यं तथोर्ध्वसूर्यं च ।
तद्भ्रमकेणापि गतं प्रत्यागमनं पुनर्गत्वा ॥
साधारं सविचारं ससन्निरोधं तथा विसृष्टाङ्गम् ।
समपादमेकपादं गृद्ध्रस्थित्यायतेः स्थानम् ॥
समपर्यङ्कनिषद्योऽसमयुतगोदोहिकास्तथोत्कुटिका ।
मकरमुखहस्तिहस्तौ गोशय्या चार्धपर्यङ्कः ॥
वीरासनदण्डाद्या यतोर्ध्वशय्या च लगडशय्या च ।
उत्तानमवाक्शयनं शवशय्या चैकपार्श्वशय्या च ॥

---

१ स्थानशयनासनैर्विविधैरवगाहैर्बहुकैः ।
अनुवीचिपरितापः कायक्लेशो भवति एषः ॥

**अभ्रावकाशशय्या निष्ठीवनवर्जनं न कण्डूया ।**
**तृणफलकशिलेलास्वावसेवनं केशलोचं च ॥**
**स्वापवियोगो रात्रावस्नानमदन्तघर्षणं चैव ।**
**कायक्लेशतपोदः शीतोष्णातापनाप्रभृति ॥**

तद्विवरणं यथा, साधारं सावष्टम्भम् । स्तम्भादिकमाश्रित्येत्यर्थः । सविचारं ससंक्रमम् । देशाद्देशान्तरं गत्वेत्यर्थः । ससंनिरोधं निश्चलम् । विसृष्टाङ्गं सकायोत्सर्गम् । गृद्ध्रस्थित्या गृद्ध्रस्योर्ध्वगमनमिव बाहू प्रसार्येत्यर्थः । समयुतं स्फिक्पिण्डसमकरणेनासनम् । गोदोहिका गोदोहे आसनमिवासनम् । उत्कुटिका ऊर्ध्वं संकुटितमासनम् । मकरमुखं मकरस्य मुखमिव पादौ कृत्वासनम् । हस्तिहस्तो हस्तिहस्तप्रसारणमिवैकं पादं प्रसार्यासनम् । हस्तं प्रसार्येत्यपरे । गोशय्या गवासनमिव । वीरासनं जङ्घे विप्रकृष्टदेशे कृत्वासनम् । लगडशय्या संकुचितगात्रस्य शयनम् । अवाग् नीचमस्तकम् । अभ्रावकाशशय्या बहिर्निरावरणदेशे शयनम् ॥

एवं षड्विधं बहिरङ्गं तपो व्याख्याय तत्तावदेवाभ्यन्तरं व्याकर्तुमिदमाह—

**बाह्यद्रव्यानपेक्षत्वात् स्वसंवेद्यत्वतः परैः ।**
**अनध्यासात्तपः प्रायश्चित्ताद्यभ्यन्तरं भवेत् ॥ ३३ ॥**

**भवेत्** । किं तत् ? **तपः** । किंविशिष्टम् ? **अभ्यन्तरम**न्तरङ्गं मध्यमभिगतम् । किंभेदम् ? **प्रायश्चित्तादि** । कस्मात् ? **बाह्यद्रव्यानपेक्षत्वा**दन्तःकरणव्यापारप्रधानत्वात् । न केवलं, **स्वसंवेद्यत्वतः** आत्मना संवेद्यमानत्वात् अनधिष्ठीयमानत्वात् । कैः ? **परै**स्तैर्थिकान्तरैः ।

प्रायश्चित्तं लक्षयितुमाह—

**यत्कृत्याकरणे वर्ज्याऽवर्जने च रजोर्जितम् ।**
**सोतिचारोत्र तच्छुद्धिः प्रायश्चित्तं दशात्म तत् ॥ ३४ ॥**

भवति । कोसौ ? **सोतिचारः** । यत्किम् ? **यद्रजः** पापम् । किंविशिष्टम् ? **अर्जित**मुपार्जितम् । **कृत्याऽकरणे** कृत्यस्यावश्यकरणीयस्या-

वश्यकादेरकरणेऽनाचरणे । न केवलं, **वर्ज्याऽवर्जने च** वर्ज्यस्याऽकर्तव्यस्य हिंसादेरवर्जनेऽत्यागे आवर्जने वाऽनुष्ठाने । भवति । किं तत् ? **प्रायश्चित्तम्** । क्व ? अत्राभ्यन्तरे तपसि । किंरूपम् ? **तच्छुद्धिः** । तस्यातीचारस्य शुद्धिः शोधनमपगमस्तच्छुद्धिः । शुद्ध्यत्यनया वा शुद्धिः । तस्य शुद्धिस्तच्छुद्धिः । तच्च दशात्म दशरूपं स्यात् । उक्तं च—

पायच्छित्तं ति तओ जेण विसुज्झदि हु पुव्वकयपावं ।
पायच्छित्तं पत्तो ति तेण सुत्तं दसविहं तु ॥[1]

पायच्छित्तं पत्तोति प्रायश्चित्तमपराधं प्राप्तः सन् । परे त्वेवमाहुः—

अकुर्वन् विहितं कर्म निन्दितं च समाचरन् ।
प्रसजंश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः ॥

किमर्थं प्रायश्चित्तमनुष्ठीयते इति श्लोकद्वयमाह—

**प्रमाददोषविच्छेदममर्यादाविवर्जनम् ।**
**भावप्रसादं निःशल्यमनवस्थाव्यपोहनम् ॥ ३५ ॥**
**चतुर्द्वाराधनं दार्ढ्यं संयमस्यैवमादिकम् ।**
**सिसाधयिषताऽऽचर्यं प्रायश्चित्तं विपश्चिता ॥३६॥ (युग्मम्)**

**आचर्यम**नुष्ठेयम् । किं तत् ? **प्रायश्चित्तम्** । केन ? **विपश्चिता** दोषज्ञेन । किं चिकीर्षता ? **सिसाधयिषता** साधयितुमिच्छता । किं किम्? **प्रमाददोषविच्छेदम्** । प्रमादाच्चारित्रेऽनवधानादुत्पन्नदोषोतीचारः प्रमाददोषः । तस्य विच्छेदो व्युपरमस्तम् । न केवलम्, **अमर्यादाविवर्जनम्** । अमर्यादा प्रतिज्ञातव्रतलङ्घनम् । तस्य विवर्जनं त्यजनम् । उक्तं च—

महातपस्तडागस्य संभृतस्य गुणाम्भसा ।
मर्यादापालिबन्धेऽल्पावप्युपेक्षिष्ट मा क्षतिम् ॥

न केवलं, **भावप्रसादं** भावस्य संक्लेशपरिणामस्य प्रसादः प्रसत्तिस्तम् ।

---

१ प्रायश्चित्तमिति तपो येन विशुद्ध्यति खलु पूर्वकृतपापम् ।
प्रायश्चित्तं प्राप्त इति तेन सुक्तं दशविधं तु ॥

न केवलं, **नैःशल्यं** शल्यस्यान्तःस्खलतोऽतीचारस्यापगमम् । न केवलम्, **अनवस्थाव्यपोहनम**ऽनवस्थाया उपर्युपर्यपराधकरणस्य व्यपोहनं निराकरणम् । न केवलं, **चतुर्धाराधनं** सम्यग्दर्शनज्ञानचारित्रतपसामुद्द्योतनादिकम् । न केवलं **दार्ढ्यं** बलापादनम् । कस्य ? **संयमस्य** सम्यग्दर्शनादियौगपद्यप्रवृत्तैकाग्र्यस्य । **एवमादिकमन्यदपि** साधर्मिकप्रत्ययादिकम् ।

प्रायश्चित्तशब्दस्य निर्वचनार्थमाह—

**प्रायो लोकस्तस्य चित्तं मनस्तच्छुद्धिकृत्क्रिया ।**
**प्राये तपसि वा चित्तं निश्चयस्तन्निरुच्यते ॥ ३७ ॥**

**निरुच्यते**ऽर्थानुगतं कथ्यते नैरुक्तैः । किं तत् ? **तत्** प्रायश्चित्तम् । किंरूपम् ? **क्रिया** कर्म । किंविशिष्टम् ? **तच्छुद्धिकृत्** स्वयूथ्यवर्गमनःप्रसत्तिकारी । कथम् ? उच्यते । कोसौ ? **प्रायः** । किमुच्यते ? **लोकः**, प्रकरणात् स्वयूथ्यवर्गः । उच्यते च । किं तत् ? **चित्तम्** । पुनः कस्य ? **तस्य** प्रायस्य । **वा** अथवा उच्यते प्रायश्चित्तम् । किं तत् ? **चित्तम्** । कोर्थः ? **निश्चयो**ऽनुष्ठेयतया श्रद्धानम् । क्व ? **प्राये** । कोर्थः ? **तपसि** यथास्वमुपवासादौ । यथाह—

**प्राय इत्युच्यते लोकस्तस्य चित्तं मनो भवेत् ।**
**एतच्छुद्धिकरं कर्म प्रायश्चित्तं प्रचक्षते ॥**

यथा वा—

**प्रायो नाम तपः प्रोक्तं चित्तं निश्चयनं युतम् ।**
**तपो निश्चयसंयोगात् प्रायश्चित्तं निगद्यते ॥**

यदि वा प्रायस्य साधुलोकस्य चित्तं यस्मिन्कर्मणि तत् प्रायश्चित्तम् । प्रायस्यापराधस्य चित्तं शुद्धिर्वा प्रायश्चित्तमित्यपि ग्राह्यम् ।

प्रायश्चित्तस्यालोचनप्रतिक्रमणतदुभयविवेकव्युत्सर्गतपश्छेदमूलपरिहारश्रद्धानलक्षणेषु दशसु भेदेषु मध्ये प्रथममालोचनाख्यं तद्भेदं निर्दिशति—

सालोचनाद्यस्तद्भेदः प्रश्रयाद्धर्मसूरये ।
यद्दशाकम्पिताद्यूनं स्वप्रमादनिवेदनम् ॥ ३८ ॥

भवति । कासौ ? **सा आलोचना** । किं भवति ? **तद्भेदस्तस्य** प्रायश्चित्तस्य विकल्पः । किंविशिष्टः ? **आद्यः** प्रथमः । यत्किम् ? **यत्** क्रियते तपस्विना । किं तत् ? **स्वप्रमादनिवेदनं** निजप्रमादं ज्ञापनम् । कस्मै ? **धर्मसूरये** धर्माचार्याय । कस्मात् ? **प्रश्रयाद्विनयात्** । किंविशिष्टम् ? **दशाकम्पिताद्यूनं** दशभिराकम्पितादिभिर्दोषैः परिहीनम् । उक्तं च—

मस्तकविन्यस्तकरः कृतिकर्म विधाय शुद्धचेतस्कः ।
आलोचयति सुविहितः सर्वान् दोषांस्त्यजन् रहसि ॥

किं च,—पुरुषस्यैकान्ते, द्व्याश्रयं स्त्रियाः प्रकाशे त्र्याश्रयमालोचनं प्रतिपत्तव्यम् ।

आलोचनाया देशकालविधाननिर्णयार्थमाह—

प्राह्णेऽपराह्णे सद्देशे बालवत् साधुनाखिलम् ।
स्वागस्त्रिरार्जवाद्वाच्यं सूरेः शोध्यं च तेन तत् ॥ ३९ ॥

**वाच्यं** वक्तव्यम् । किं तत् ? **स्वागः** स्वयंकृतापराधः पापं वा । केन ? **साधुना** सिद्धिसाधनोद्यतेन । किंविशिष्टम् ? **अखिलम्** । कथम् ? **त्रिस्त्रीन्वारान्** । स्मृत्वेत्यध्याहारः । उक्तं च—

इयमुजुभावमुपगदो संवेदो सेसरिं तु तिक्खंतो ।
लेस्साहि विसुज्झंतो उवेदि सल्लं समुद्धरिदुं ॥

कस्माद्वाच्यम् ? **आर्जवादकुटिलभावात्** । **बालवत्** शिशुना तुल्यम् । उक्तं च—

जह बालो जप्पंतो कज्जमकज्जं च उज्जुगं भणदि ।
तह आलोचेदव्वं मायामोसं च मोत्तूणं ॥

कस्याग्रे वाच्यम् ? **सूरेर्धर्माचार्यस्य** । क्व ? **सद्देशे** प्रशस्तस्थाने । यथाह-

अर्हत्सिद्धसमुद्राब्जसरःक्षीरफलाकुलम् ।
तोरणोद्यानसद्माहियक्षवेश्मबृहद्गृहम् ॥

सुप्रशस्तं भवेत्स्थानमन्यदप्येवमादिकम् ।
सूरिरालोचनां तत्र प्रतीच्छत्यस्य शुद्धये ॥

सद्देश इत्युपलक्षणात्सुलग्नेपि । उक्तं च—

आलोचणादिआ पुण होदि पसत्थेवि सुद्धभावं सा ।
पुव्वह्णे अवरह्णे सोम्मतिहीरिक्खवेलाए ॥

क्व काले ? प्राह्णे पूर्वाह्णे । न केवलम्, अपराह्णे वा । वेत्यध्याहारः । शोध्यं च सुनिरूपितप्रायश्चित्तदानेन निराकार्यम् । किं तत् ? तत् स्वागः । केन ? तेन सूरिणा ।

एकदेशविराधितमार्गेणाकम्पितादिदशदोषवर्जां पदविभागिकामालोचनां कृत्वा तपोनुष्ठेयमस्मर्यमाणबहुदोषेण च्छिन्नव्रतेन वा पुनरौघीमिति श्लोकपञ्चकेनाचष्टे—

आकम्पितं गुरुच्छेदभयादावर्जनं गुरोः ।
तपःशूरस्तवात्तत्र स्वाऽशक्त्याख्यानुमापितम् ॥ ४० ॥
यद् दृष्टं दूषणस्यान्यदृष्टस्यैव प्रथा गुरोः ।
बादरं बादरस्यैव सूक्ष्मं सूक्ष्मस्य केवलम् ॥ ४१ ॥
छन्नं कीदृक्चिकित्से दृग्दोषे पृष्ट्वेति तद्विधिः ।
शब्दाकुलं गुरोः स्वागः शब्दनं शब्दसंकुले ॥ ४२ ॥
दोषो बहुजनं सूरिदत्तान्यक्षुण्णतत्कृतिः ।
बालाच्छेदग्रहोऽव्यक्तं समात्तत्सेवितं त्वसौ ॥ ४३ ॥
दशेत्युज्झन् मलान्मूलाप्राप्तः पदविभागिकाम् ।
प्रकृत्यालोचनां मूलप्राप्तश्चौघीं तपश्चरेत् ॥ ४४॥ (पञ्चकम्)

चरेदनुतिष्ठेन्मुमुक्षुः । किं तत् ? तपः । किंविशिष्ट ? मूलाप्राप्तो मूलं सर्वोच्छेदमनापन्नः । एकदेशविराधितमार्ग इत्यर्थः । किं कृत्वा ? प्रकृत्य प्रविधाय । काम् ? आलोचनाम् । किंविशिष्टाम् ? पदविभा-

**गिकां** विशेषालोचनां, दीक्षाग्रहणात्प्रभृति यो यत्र यदा यथाऽपराधः कृतस्तस्य तत्र तदा तथा प्रकाशनात्। न केवलं मूलाप्राप्तः **पदविभागिकामालोचनां प्रकृत्य** तपश्चरेद् यावता मूलाप्राप्तः **औघीं** सामान्यालोचनां प्रकृत्य तपश्चरेन्मुमुक्षुरिति संबन्धः। उक्तं च—

**ओघेन पदविभागेन द्वेधालोचना समुद्दिष्टा।**
**मूलं प्राप्तस्यौघी पादविभागी ततोन्यस्य॥**
**स्मरणपथमनुसरन्ति प्रायो नागांसि मे विपुण्यस्य।**
**सर्वं छेदः समजनि ममेति वालोचयेदौघीम्॥**
**प्रव्रज्यादिसमस्तं क्रमेण यद्यत्र येन भावेन।**
**सेवितमालोचयतः पादविभागी तथा तत्तत्॥**

किं कुर्वन्? उज्झन् त्यजन्। कान्? **मलान्** आकम्पिताद्यालोचनादोषान्। कति? **दश**। कथम्? **इति** एवम्। तानेव लक्षणतः प्रस्तौति। (१) भवति तावद् **आकम्पितम्** आकम्पितनामालोचनादोषः। किम्? **आवर्जनम्** उपकरणदानादिनात्मनोऽल्पप्रायश्चित्तदानार्थमनुकूलनम्। कस्य? **गुरोः** आचार्यस्य। कस्मात्? **गुरुच्छेदभयात्** महाप्रायश्चित्तशङ्कातः। (२) तथा भवत्यनु**मापितम्** अनुमापितं नामालोचनादोषः, गुरुः प्रार्थितः स्वल्पप्रायश्चित्तदानेन ममानुग्रहं करिष्यतीत्यनुमानेन ज्ञात्वा स्वापराधप्रकाशनात्। किंरूपम्? **स्वाशक्त्याख्या** आत्मनोऽसामर्थ्यप्रकाशनं गुरोरग्रे। क्व? **तत्र** तपसि। कस्मात्? **तपःशूरस्तवाद्** धन्यास्ते ये वीरपुरुषाचरितमुत्कृष्टं तपः कुर्वन्तीति व्यावर्णनात्। (३) तथा **यद्दृष्टं** यद् दृष्टाख्य आलोचनादोषः स्यात्। या किम्? **या प्रथा** प्रकाशना। कस्याग्रे? **गुरोः**। कस्य? **दूषणस्य**। किंविशिष्टस्य? **अन्यदृष्टस्यैव** परादृष्टं स्वदोषं छादयित्वेति भावः। (४) तथा **बादरं** बादराख्य आलोचनादोषः स्यात्। यत्किम्? यत्प्रथा प्रकाशनं गुरोरग्रे। कस्य? दोषस्य। किंविशिष्टस्य? **बादरस्यैव** स्थूलस्यैव दूषणस्य प्रकाशनम्। सूक्ष्मस्य तु प्रच्छादनमित्यर्थः। (५) तथा **सूक्ष्मं** सूक्ष्माख्य आलोचनादोषः स्यात्। यत्किम्? यत्प्रथा गुरोरग्रे दूषणस्य। किंविशिष्टस्य? **सूक्ष्मस्य केवलम्**। सूक्ष्मस्यैव प्रकाशनं स्थूलस्य प्रच्छादनमित्यर्थः। (६) तथा **छन्नं**

छन्नाख्य आलोचनादोषः स्यात् । यः किम् ? **यस्तद्विधिः** प्रायश्चित्तकरणम् । किं कृत्वा ? **पृष्ट्वा गुरुम्** । कथम् ? **इति** । किमिति ? **कीदृक्** कीदृशी **चिकित्सा** प्रतीकारः स्यात् । क्व ? **ईदृग्दोषे** । ईदृशे दोषे सति, कीदृशं प्रायश्चित्तं क्रियते इति स्वदोषोद्देशेन गुरुं पृष्ट्वा तदुक्तं प्रायश्चित्तं कुर्वतश्छन्नं नामालोचनादोषः स्यादित्यर्थः । ( ७ ) तथा **शब्दाकुलं** शब्दाकुलाख्य आलोचनादोषः स्यात् । किम् ? **स्वागःशब्दनं** निजापराधकथनम् । कस्याग्रे ? **गुरोः** । क्व ? **शब्दसंकुले** पक्षाद्यतीचारशुद्धिकालेषु बहुजनशब्दबहुले स्थाने । ( ८ ) तथा **बहुजनं** बहुजनाख्यो दोष आलोचनागतः स्यात् । या किम् ? **या सूरिदत्तान्यक्षुण्णतत्कृतिः** सूरिणा स्वगुरुणा दत्तं प्रथमं वितीर्णं पश्चादन्यैः प्रायश्चित्तकुशलैः क्षुण्णं चर्वितं तत्प्रायश्चित्तम् । तस्य कृतिरनुष्ठानम् । ( ९ ) तथा **अव्यक्तमव्यक्ताख्योसौ** आलोचनदोषः स्यात् । यः किम् ? **यश्छेदग्रहः** प्रायश्चित्तग्रहणम् । कस्मात् ? **बालाद्** ज्ञानेन संयमेन वा हीनात् । ( १० ) तथा **तत्सेवितं** तत्सेविताख्योसावालोचनादोषः स्यात् । तेन समेन प्रायश्चित्तप्रदायिना पार्श्वस्थेन सेव्यमानत्वात् । यः किम् ? यश्छेदग्रहः । कस्मात् ? **समात्** आत्मसदृशात् पार्श्वस्थात् प्रायश्चित्तग्रहणमित्यर्थः । **तुर्विशेषे** ।

आलोचनां विना महदपि तपो न संवरसहभाविनीं निर्जरां करोति । कृतायामपि चालोचनायां विहितमनाचरन्न दोषविजयी स्यात् । अतः सर्वदा लोच्यं गुरूक्तं च तदुचितमाचर्यमिति शिक्षणार्थमाह—

**सामौषधवन्महदपि न तपोऽनालोचनं गुणाय भवेत् ।**
**मन्त्रवदालोचनमपि कृत्वा नो विजयते विधिमकुर्वन् ॥४५॥**

**न भवेत्** । किं तत् ? **तपः** । किंविशिष्टम् ? **महदपि** पक्षोपवासादिकमपि । कस्मै ? **गुणाय** उपकाराय । संवरसहभाविनिर्जरार्थमित्यर्थः । किंविशिष्टं तपः ? **अनालोचनं** यथोक्तलक्षणालोचनारहितम् । किंवत् ? **समौषधवत्** सामदोषप्रयुक्तमौषधं महदपि गुणाय आरोग्याय यथा न भवति । किंविशिष्टम् ? अनालोचनमनालोच्य प्रयुक्तम् । अथाह,—

यः पिबत्यौषधं मोहात् सामे तीव्ररुजि ज्वरे।
प्रसुप्तं कृष्णसर्पं स कराग्रेण परामृशेत्॥

तथा **नो विजयते** न दोषविजयी भवति तपस्वी। किं कुर्वन्? **अकुर्वन्**। कम्? **विधिं** विहिताचरणम्। किं कृत्वा? **अपि कृत्वा** विधायापि। किं तत्? **आलोचनम्**। किंवत्? **मन्त्रवद्** यथा कर्मणामारंभोपायः पुरुषद्रव्यसंपद्देशकालविभागो विनिपातप्रतीकारः कार्यसिद्धिश्चेति पञ्चाङ्गं गुप्तभाषणं कृत्वापि राजा विहिताचरणमकुर्वाणो नो विजयते न शत्रुविजयी भवतीत्यर्थः।

सद्गुरुप्रायश्चित्तोचितचित्तस्य दीप्त्यतिशयं दृष्टान्तेनाचष्टे—

**यथादोषं यथाम्नायं दत्तं सद्गुरुणा वहन्।**
**रहस्यमन्तर्भात्युच्चैः शुद्धादर्श इवाननम्॥ ४६॥**

**भाति** दीप्यते। कोसौ? तपस्वी। कथम्? **उच्चै**रतिशयेन। किं कुर्वन्? **वहन्** धारयन्। किं तत्? **रहस्यं** प्रायश्चित्तम्? क्व? **अन्त**रध्यात्मम्। किंविशिष्टम्? **दत्तं** वितीर्णम्। केन? **सद्गुरुणा** सम्यगाचार्येण। कथम्? **यथादोषं** यो यो दोषोपराधस्तमुद्दिश्य। कथम्? **यथाम्नाय**मागमस्यानतिक्रमेण। क इव? **शुद्धादर्श इव**। यथा निर्मलदर्पणोऽन्तर्मध्ये **आननं** मुखं वहन्नुच्चैर्भाति तथा प्रकृतोपीत्यर्थः॥ आलोचनम्।

अथ प्रतिक्रमणमाह—

**मिथ्या मे दुष्कृतमिति प्रायोऽपायैर्निराकृतिः।**
**कृतस्य संवेगवता प्रतिक्रमणमागसः॥ ४७॥**

भवति। किं तत्? **प्रतिक्रमणम्**। या किम्? या **निराकृति**र्निराकरणं क्रियते। कस्य? **आगसो**ऽपराधस्य। किंविशिष्टस्य? **कृतस्य** आचरितस्य। केन क्रियते? **संवेगवता** संसारभीरुतायुक्तेन। उपलक्षणान्निर्वेदयुक्तेन च। कैर्निराकृतिः क्रियते? **मिथ्या मे दुष्कृतमिति प्रायोऽपायैः** मिथ्या निष्फलं मम दुरनिष्ठितमस्तु शान्तं पापं मे भवतु इत्याद्युपक्रमैः। प्रायशब्दोत्र सदृशार्थम्। "प्रायो वयस्यनशने मृतौ बाहुल्य-

तुल्ययो''रित्यभिधानात् । तेन मिथ्या मे दुष्कृतमिति प्रायैर्मिथ्या मे दुष्कृतमिति सदृशैरित्यादिशब्देन प्रकारार्थेन व्याख्यातं बोद्धव्यम् । उक्तं च—

''आस्थितानां योगानां धर्मकथादिव्याक्षेपहेतुसन्निधानेन विस्मरणे सति पुनरनुष्ठायकस्य संवेगनिर्वेदपरस्य गुरुविरहितस्याल्पापराधस्य पुनर्न करोमि मिथ्या मे दुष्कृतमित्येवमादिभिर्दोषान्निवर्तनं प्रतिक्रमणमिति''। अन्यस्त्वाह—दोषमुच्चार्योच्चार्य मिथ्या मेस्तु दुष्कृतमित्येवमाद्यभिव्यक्तः प्रतीकारः प्रतिक्रमणम् । एतदाचार्यानुज्ञातेन शिष्येणैव कर्तव्यम्'' इति । प्रतिक्रमणम् ।

अथ तदुभयं लक्षयति—

**दुःस्वप्नादिकृतं दोषं निराकर्तुं क्रियेत यत् ।**
**आलोचनप्रतिक्रान्तिद्वयं तदुभयं तु तत् ॥ ४८ ॥**

भवति । किं तत् ? तदुभयमालोचनप्रतिक्रमणयोर्द्वितयम् । तुर्विशेषे । यत्किम् ? यत्क्रियेत मुमुक्षुणा । किं तत् ? आलोचनप्रतिक्रान्तिद्वयम् । किं कर्तुम् ? निराकर्तुं निराकरिष्यामीत्यध्यवसायः । कम् ? दोषम् । किंविशिष्टम् ? दुःस्वप्नादिकृतं दुष्टस्वप्नसंक्लेशादिजनितम् । किं च, आलोचनं प्रतिक्रमणपूर्वं गुरुणाभ्यनुज्ञातं शिष्येणैव कर्तव्यम् आलोचनां प्रदाय प्रतिक्रमणमाचार्येणैव कर्तव्यं तदुभयमिति विशेषः । तदुभयम्

अथ विवेकलक्षणमाह—

**संसक्तेन्नादिके दोषान्निवर्तयितुमप्रभोः ।**
**यत्तद्विभजनं साधोः स विवेकः सतां मतः ॥ ४९ ॥**

मतः संमतः । कोसौ ? स विवेकः । केषाम् ? सतां साधूनाम् । यत्किम् ? यत्तद्विभजनं संसक्तान्नपानोपकरणादेर्वियोजनम् । कस्य ? साधोः संयतस्य । किंविशिष्टस्य ? अप्रभोरसमर्थस्य । किं कर्तुम् ? निवर्तयितुं निराकर्तुम् । कान् ? दोषान् । क ? अन्नादिके । किंविशिष्टे ? संसक्ते स्वसंबद्धे संमूर्छिते वा ।

भङ्ग्यन्तरेण पुनर्विवेकं लक्षयति—

**विस्मृत्य ग्रहणेऽप्रासोर्ग्राहणे वाऽपरस्य वा।**
**प्रत्याख्यातस्य संस्मृत्य विवेको वा विसर्जनम् ॥ ५० ॥**

**वा** अथवा **विवेको** भण्यते। किं तत्? **विसर्जनं** त्यजनम्। कस्य? **अप्रासोः** सचित्तस्य। क्व सति? **ग्रहणे** उपादाने **ग्राहणे वा**। किं कृत्वा? **विस्मृत्य** अन्तर्धाय। **वा** अथवा विवेको भण्यते। किं तत्? विसर्जनम्। कस्य? **अपरस्य** प्रासुकस्याचित्तस्य। किंविशिष्टस्य? **प्रत्याख्यातस्य** निराकृतस्य। किं कृत्वा? **संस्मृत्य** सम्यक् प्रतिग्रहपूर्वकं स्मृत्वा। उक्तं च—

"शक्त्यनिगूहनेन प्रयत्नेन परिहरतः कुतश्चित्कारणादप्रासुकग्रहणग्राहणयोः प्रासुकस्यापि प्रत्याख्यातस्य विस्मरणात् प्रतिग्रहे च स्मृत्वा पुनस्तदुत्सर्जनं विवेक इति।" अन्यस्त्वाह-"शुद्धस्याप्यशुद्धत्वेनैव यत्र संदेहविपर्ययावऽशुद्धस्य शुद्धत्वेन निश्चयो वा यत्र प्रत्याख्यातं सद्भाजने मुखे वा प्रासं यत्र वा गृहीते कषायादिकमुत्पद्यते तस्य सर्वस्य विवेकस्त्याग इति"। विवेकः।

अथ व्युत्सर्गस्वरूपमाह—

**स व्युत्सर्गो मलोत्सर्गाद्यतीचारेऽवलम्ब्य सत्।**
**ध्यानमन्तर्मुहूर्तादि कायोत्सर्गेण या स्थितिः ॥ ५१ ॥**

भवति कोसौ? **स व्युत्सर्गः**। या किम्? **या स्थितिरूर्ध्वीभावः**। केन? **कायोत्सर्गेण** देहममत्वत्यागेन। कियत्? **अन्तर्मुहूर्तादि** अन्तर्मुहूर्तं आदिर्यत्र कालावस्थाने तदन्तर्मुहूर्तादि। किं कृत्वा? **अवलम्ब्य** आश्रित्य। किं तत्? **ध्यानम्**। किंविशिष्टं सत्? **प्रशस्तम्**। क्व सति? **मलोत्सर्गाद्यतीचारे**। मलोत्सर्ग आदिर्यस्य दुःस्वप्नादेरसौ मलोत्सर्गादिः तस्यातिचारस्तस्मिन्। उक्तं च—

दुःस्वप्नदुश्चिन्तनमलोत्सर्जनसूत्रातीचारनदीमहाटवीतरणादिभिरन्यैश्चाप्यतीचारे सति ध्यानमवलम्ब्य कायमुत्सृज्य अन्तर्मुहूर्तदिवसपक्षमासादिकालावसानं व्युत्सर्ग इत्युच्यते इति।

अन्यस्त्वाह—व्युत्सर्गो नियतकालः कायवाङ्मनसां त्याग इति ।

अथ तपःसंज्ञं प्रायश्चित्तं लक्षयति—

**कृतापराधः श्रमणः सत्त्वादिगुणभूषणः ।**
**यत्करोत्युपवासादिविधिं तत्क्षालनं तपः ॥ ५२ ॥**

भवति । किं तत् ? **क्षालनं** प्रायश्चित्तम् । क्षाल्यते शोध्यते मलिनं चित्तमनेनेति क्षालनम् । किमाख्यम् ? **तप**स्तपःसंज्ञम् । यत्किम् ? **यत्करोति** विधत्ते । कोसौ ? **श्रमण**स्तपस्वी । किंविशिष्टः ? **सत्त्वादिगुणभूषणः** सत्त्वधैर्यादिगुणालंकरणः । किंविशिष्टः सन् ? **कृतापराधः** कृतोपराधो विहिताचरणातिक्रमो येन स एवम् । कं करोति ? **उपवासादिविधिम्** । उपवास आदिर्यस्यैकस्थानाचाम्लनिर्विकृत्यादेः सोयमुपवासादिः । स चासौ विधिश्च । विधीयते इति विधिः प्रायश्चित्तशास्त्रोक्तमाचरणं बाह्यं तप इत्यर्थः ।

आलोचनादिप्रायश्चित्तविधेर्विषयमाह—

**भयत्वराशक्त्यबोधविस्मृतिव्यसनादिजे ।**
**महाव्रतातिचारेमुं षोढा शुद्धिविधिं चरेत् ॥ ५३ ॥**

**चरे**दनुतिष्ठेत्तपस्वी । कम् ? **अमु**मालोचनप्रतिक्रमणतदुभयविवेकव्युत्सर्गतपोलक्षणं **शुद्धिविधिं** शास्त्रोक्तं प्रायश्चित्तम् । कतिधा ? **षोढा** षट्प्रकारम् । क्व ? **महाव्रतातीचारे** । किंविशिष्टे ? **भयत्वराशक्त्यबोधविस्मृतिव्यसनादिजे** । भयत्वरा भीत्वा पलायनम् । अशक्तिरसामर्थ्यम् । अबोधोऽज्ञानम् । विस्मृतिर्विस्मरणम् । व्यसनं तुरुष्काद्यातङ्कः । आदिशब्देन रोगाभिभवादिः । भयत्वरा चाशक्तिश्चाबोधश्च विस्मृतिश्च व्यसनादिश्च । तेभ्यो जाते ।

किंच, आचार्यमपृष्ट्वातापनादिकरणे पुस्तकपिच्छादिपरोपकरणग्रहणे परपरोक्षे प्रमादत आचार्यादिवचनाकरणे संघनाथमपृष्ट्वा संघनाथप्रयोजनेन गत्वागमने परसंघादपृष्ट्वा स्वसंघगमने देशकालनियमेनावश्यकर्तव्यव्रतविशे-

षस्य धर्मकथादिव्यासङ्गेन विस्मरणे सति पुनः करणे अन्यत्रापि चैवंरूपे आलोचनमेव प्रायश्चित्तम् । षडिन्द्रियवागादिदुष्परिणामे आचार्यादिषु हस्तपादादिसंघट्टने व्रतसमितिगुप्तिषु स्वल्पाचारे पैशून्यकलहादिकरणे वैयावृत्त्यस्वाध्यायादिप्रमादे गोचरगतस्य लिङ्गोत्थाने अन्यसंक्लेशकरणादौ च प्रतिक्रमणं दिवसरात्र्यन्ते भोजनगमनादौ च प्रसिद्धम् । लोचनखच्छेदस्वप्नेन्द्रियातिचाररात्रिभोजनेषु पक्षमाससंवत्सरादिदोषादौ चोभयम् । मौनादिना विनालोचनकरणे उदरकृमिनिर्गमे हिमदंशमशकादिमहावातादिसंघर्षातीचारे स्निग्धभूहरिततृणपङ्कोपरिगमने जानुमात्रजलप्रवेशान्यनिमित्तवस्तुस्वोपयोगकरणे नावा नदीतरणे पुस्तकप्रतिमापातनपञ्चस्थावरविघातादृष्टदेशतनुमलविसर्गादिषु पक्षादिप्रतिक्रमणक्रियान्तव्याख्यानप्रवृत्त्यन्तादिषु कायोत्सर्ग एव प्रायश्चित्तम् । उच्चारप्रस्रवणादौ च प्रसिद्धः कायोत्सर्गः । अनशनादिकरणस्थानमागमाद्बोद्धव्यम् ॥ तपः ।

अथ छेदं निर्दिशति—

**चिरप्रव्रजितादृप्तशक्तशूरस्य सागसः ।**
**दिनपक्षादिना दीक्षाहापनं छेदमादिशेत् ॥ ५४ ॥**

**आदिशेत्** कथयेदाचार्यः । कम् ? **छेदम्** । किंरूपम् ? **दीक्षाहापनं** प्रव्रज्यात्याजनम् । केन ? **दिनपक्षादिना** दिवसपक्षमासादिविभागेन । कस्य ? **चिरप्रव्रजितादृप्तशक्तशूरस्य** । अदृप्तोऽगर्वितः । शक्तः समर्थः । शूरो विक्रांतः । चिरप्रव्रजितश्चासावदृप्तश्च चिरप्रव्रजितादृप्तः । स चासौ शक्तश्च चिरप्रव्रजितादृप्तशक्तः । स चासौ शूरश्च, तस्य । किंविशिष्टस्य सतः ? **सागसः** सापराधस्य । छेदः ।

अथ मूललक्षणमाह—

**मूलं पार्श्वस्थसंसक्तस्वच्छन्देष्ववसन्नके ।**
**कुशीले च पुनर्दीक्षादानं पर्यायवर्जनात् ॥ ५५ ॥**

**मूलं** नाम प्रायश्चित्तं भवति । किंरूपम् ? **पुनर्दीक्षादानं** भूयः प्रव्र-

ज्यावितरणम् । कस्मात् ? **पर्यायवर्जनात्** । अपरमितापराधत्वेन सर्वं पर्यायमपहाप्येत्यर्थः । केषु ? **पार्श्वस्थसंसक्तस्वच्छन्देषु** । न केवलम्, **अवसन्नके** । न केवलं, **कुशीले च** । संक्षेपतस्तल्लक्षणानि यथा—

**वृत्तेऽलसोऽवसन्नः पार्श्वस्थो मलिनी परदृशोष्टनिष्टे ।**
**संसक्तो मृगचरितः स्वकल्पिते प्रकटकुचरितस्तु कुशीलः ॥**

विस्तरतो यथा—

पार्श्वस्थो यो वसतिषु प्रतिबद्ध उपकरणोपजीवी वा श्रमणानां पार्श्वे तिष्ठति । उक्तं च—

**वसंदीसु[1] अ पडिबद्धो अहवा उवकरणकारओ भणिओ ।**
**पासत्थो समणाणं पासत्थो णाम सो होई ॥**

संसक्तो यो वैद्यकमन्त्रज्योतिषोपजीवी राजादिसेवकश्च स्यात् । उक्तं च—

**वेज्जेण[2] व मंतेण व जोइसकुसलत्तणेण पडिबद्धो ।**
**रायादी सेवंतो संसत्तो णाम सो होइ ॥**

स्वच्छन्दो यस्त्यक्तगुरुकुल एकाकित्वेन स्वच्छन्दविहारी जिनवचनदूषको मृगचारित्र इति यावत् । उक्तं च—

**आयरियकुलं[3] मुच्चा विहरदि एगागिणो य जो समणो ।**
**जिणवयणं णिंदंतो सच्छन्दो हवइ मिगचारी ॥**

अवसन्नो यो जिनवचनानभिज्ञो मुक्तचारित्रभारो ज्ञानाचरणभ्रष्टः करणालसश्च स्यात् । उक्तं च—

---

१—वसतिषु च प्रतिबद्धः अथवोपकरणकारको भणितः ।
पार्श्वस्थः श्रमणानां पार्श्वस्थो नाम स भवति ॥

२—वैद्यकेन वा मन्त्रेण वा ज्योतिषकुशलत्वेन प्रतिबद्धः ।
राजादिं सेवमानः संसक्तो नाम स भवति ॥

३—आचार्यकुलं मुक्त्वा विहरति एकाकी च यः श्रमणः ।
जिनवचनं निन्दन् स्वच्छन्दो भवति मृगचारी ॥

**जिणवयणमयाणंतो मुक्कधुरो णाणचरणपरिभट्ठो ।**
**करणालसो भवित्ता सेवदि ओसण्णसेवाओ ॥**

कुशीलो यः क्रोधादिकषायकलुषितात्मा व्रतगुणशीलैः परिहीनः संघस्यानयकारी च स्यात् । उक्तं च—

**कोहादिकलुसिदप्पा वयगुणसीलेहिं चावि परिहीणो ।**
**संघस्स अणयकारी कुसीलसमणोत्ति णायव्वो ॥ (मूलम्)**

अथ परिहारस्य लक्षणं विकल्पांश्चाह—

**विधिवद्दूरात्त्यजनं परिहारो निजगणानुपस्थानम् ।**
**सपरगणोपस्थानं पारञ्चिकमित्ययं त्रिविधः ॥ ५६ ॥**

भवति । कोसौ ? **परिहारः** परिहारो नाम प्रायश्चित्तम् । किंरूपम् ? **त्यजनं** परिवर्जनम् । कस्मात् ? **दूराद्** दूरतः । किंवत् ? **विधिवत्** शास्त्रोक्तविधानेन दिवसादिविभागेनैव । उक्तं च—दिवसादिविभागेनैव दूरतः परिवर्जनं परिहार इति । अयं च परिहारस्त्रिविधस्त्रिप्रकारो भवति । कथम् ? इति एवम् । भवति तावत्परिहारः । किंभेदः ? **निजगणानुपस्थानं** स्वसंघान्निर्वासनम् । किंविशिष्टम् ? **सपरगणोपस्थानम्** । सहपरगणोपस्थानेन परसंघानुसरणेन वर्तते इति सपरगणोप्रस्थानम् । तथा **पारञ्चिकं** च । इतो विस्तरः—प्रमदादन्यमुनिसंबन्धिनमृषिं छात्रं वा परपाषण्डिप्रतिबद्धचेतनाचेतनद्रव्यं वा परस्त्रियं वा स्तेनयतो मुनीन् प्रहरतो वा अन्यदप्येवमादि विरुद्धाचरितमाचरतो नवदशपूर्वधरस्यादित्रिकसंहननस्य जितपरीषहस्य दृढकर्मणो धीरस्य भवभीतस्य निजगणानुपस्थानं नाम प्रायश्चित्तं भवति । तेन ऋष्याश्रमाद् द्वात्रिंशद्दण्डान्तरविहितविहारेण बालमुनीनपि वन्दमानेन प्रतिवन्दनाविरहितेन गुरुणा समालोचयता शेषजनेषु

---

१–जिनवचनमजानन् मुक्तधुरो ज्ञानचरणपरिभ्रष्टः ।
करणालसो भूत्वा सेवते अवसन्नसेवः ॥

२–क्रोधादिकलुषितात्मा व्रतगुणशीलैर्वापि परिहीनः ।
संघस्यानयकारी कुशीलश्रमण इति ज्ञातव्यः ॥

कृतमौनव्रतेन विधृतपराङ्मुखपिच्छेन जघन्यतः पञ्च पञ्चोपवासा उत्कृष्टतः षण्मासोपवासाः कर्तव्याः । उभयमप्या द्वादशवर्षादिति । दर्पात्पुनरनन्तरोक्तान् दोषानाचरतः परगणोपस्थानं नाम प्रायश्चित्तं भवति । स सापराधः स्वगणाचार्येण परगणाचार्यं प्रति प्रहेतव्यः । सोऽप्याचार्यस्तस्यालोचनमाकर्ण्य प्रायश्चित्तमदत्त्वा आचार्यान्तरं प्रस्थापयति सप्तमं यावत् । पश्चिमश्च प्रथमालोचिताचार्यं प्रति प्रस्थापयति । स एव पूर्वः पूर्वोक्तप्रायश्चित्तेनैनमाचारयति । एवं परिहारस्य प्रथमभेदोऽनुपस्थापनाख्यो द्विविधः । द्वितीयस्त्वयं पाराञ्चिकाख्यः । स एष तीर्थकरगणधरगणिप्रवचनसंघाद्यासादनकारकस्य नरेन्द्रविरुद्धाचरितस्य राजानभिमतोऽमात्यादीनां दत्तदीक्षस्य नृपकुलवनितासेवितस्यैवमादिभिरन्यैश्च दोषैर्धर्मदूषकस्य स्यात् । तद्यथा, चातुर्वर्ण्यश्रमणसंघः संभूय तमाहूय एष महापापी पातकी समयबाह्यो न वन्द्य इति घोषयित्वा दत्त्वानुपस्थानं प्रायश्चित्तं देशान्निर्घाटयति । सोपि स्वधर्मविरहितक्षेत्रे गणिदत्तं प्रायश्चित्तमाचरतीति ॥ परिहारः ।

अथ श्रद्धानाख्यं प्रायश्चित्तविकल्पमाह—

**गत्वा स्थितस्य मिथ्यात्वं यद्दीक्षाग्राहणं पुनः ।**
**तच्छ्रद्धानमिति ख्यातमुपस्थापनमित्यपि ॥ ५७ ॥**

**ख्यातं** कथितम् । किं तत्? **तत्** प्रायश्चित्तम् । किंलक्षणम् ? **श्रद्धानमिति** श्रद्धानाख्यम् । न केवलम्, **उपस्थापनमित्यपि** उपस्थापनाख्यं च । यत्किम् ? यत्क्रियते सूरिणा । किं तत् ? **दीक्षाग्राहणं** प्रव्रज्याप्रापणम् । कथम् ? **पुनर्भूयः** । कस्य ? **स्थितस्य** तिष्ठतः । किं कृत्वा ? **गत्वा** प्राप्य । किं तत् ? **मिथ्यात्वं** सौगतादिमताभिनिवेशम् । अन्यस्त्वाह—महाव्रतानां मूलच्छेदनं कृत्वा पुनर्दीक्षाप्रापणमुपस्थापनेति । श्रद्धानम् ।

प्रायश्चित्तविकल्पदशकस्य यथापराधं प्रयोगविधिमाह—

**सैषा दशतयी शुद्धिर्बलकालाद्यपेक्षया ।**
**यथादोषं प्रयोक्तव्या चिकित्सेव शिवार्थिभिः ॥ ५८ ॥**

प्रयोक्तव्या अनुष्ठेया । कासौ ? सा पूर्वोक्ता एषा अनन्तरोक्ता शुद्धिः प्रायश्चित्तम् । किंविशिष्टा ? दशतयी दशावयवा । कैः ? शिवार्थिभिर्निः श्रेयसकामैः । कथम् ? यथादोषं यो योऽतीचारस्तमुद्दिश्य । कया ? बलकालाद्यपेक्षया । बलं च कालश्च बलकालौ । तावादी येषां सत्त्वसंहननादीनां तानि बलकालादीनि । तेषामपेक्षा विवक्षा, तया । केव ? चिकित्सेव । यथा प्रयुज्यते । कासौ ? चिकित्सा । कैः ? शिवार्थिभिरारोग्यकामैः । कथम् ? यथादोषं दोषस्य वातादेरनतिक्रमेण । कया ? बलकालाद्यपेक्षया बलकालदूष्यादीनपेक्ष्य । उक्तं च—

दूष्यं देशबलं कालमनलं प्रकृतिं वयः ।
सत्त्वं सात्म्यं तथाहारमवस्थाश्च पृथग्विधाः ॥
सूक्ष्मसूक्ष्माः समीक्ष्यैषां दोषौषधिनिरूपणे ।
यो वर्तते चिकित्सायां स न स्खलति जातुचित् ॥

एवं दशधा प्रायश्चित्तं व्यवहारनयाद् व्याख्याय निश्चयनयात्तद्भेदपरिमाणनिर्णयार्थमाह—

व्यवहारनयादित्थं प्रायश्चित्तं दशात्मकम् ।
निश्चयात्तदसंख्येयलोकमात्रभिदिष्यते ॥ ५९ ॥

भवति । किं तत् ? प्रायश्चित्तम् । किंविशिष्टम् ? दशात्मकं दशविकल्पम् । कथम् ? इत्थमनन्तरोक्तेन प्रकारेण । कस्मात् ? व्यवहारनयादुपचारनयादेशात् । इष्यते च । किं तत् ? तत् प्रायश्चित्तम् । किंविशिष्टम् ? असंख्येयलोकमात्रभिद् । असंख्येयलोकमात्रा भिदो विकल्पा यस्य तदेवम् । कस्मात् ? निश्चयात् परमार्थनयाद्, व्यक्ताव्यक्तप्रमादानां तावतामेव सूत्रे निर्णयात् । लोकः प्रमाणविशेषः । उक्तं च—

पल्लो सायर ई सुपदरो य घणंगुलो य जगसेढी ।
लोगपदरो य लोगो अट्ठपमाणा मुणेदव्वा ॥

---

१ पल्यः सागरः सूची प्रतरश्च घनाङ्गुलश्च जगच्छ्रेणिः ।
लोकप्रतरश्च लोकः अष्टौ प्रमाणानि मन्तव्यानि ॥

असंख्येयाः संख्यातीताश्च ते लोकाश्च असंख्येयलोकाः । ते परिमाणमासामित्यसंख्येयलोकमात्राः ता भिदो यस्येति विग्रहः । प्रायश्चित्तम् ।

अथ विनयाख्यतपोविशेषलक्षणार्थमाह—

**स्यात् कषायहृषीकाणां विनीतेर्विनयोथवा ।**
**रत्नत्रये तद्वति च यथायोग्यमनुग्रहः ॥ ६० ॥**

**स्याद्** भवेत् । कोसौ ? **विनयः** । कुतः ? **विनीतेर्**विहिते प्रवर्तनात् सर्वथा विरोधाद्वा । केषाम् ? **कषायहृषीकाणां** क्रोधादिकषायाणां स्पर्शनादीन्द्रियाणां च । अथवा स्याद्विनयः । कोसौ ? **अनुग्रह** उपकारः । क ? **रत्नत्रये** सम्यग्दर्शनादौ । न केवलं, **तद्वति च** रत्नत्रययुक्ते पुंसि चकाराद्रत्नत्रयतद्भावकानुग्राहीणि नृपादौ च । कथम् ? **यथायोग्यं** यथोचितम् ।

विनयशब्दनिर्वचनपुरस्सरं तत्फलमुपदर्शयंस्तस्यावश्यकर्तव्यतामुपदिशति—

**यद्विनयत्यपनयति च कर्मासत्तं निराहुरिह विनयम् ।**
**शिक्षायाः फलमखिलक्षेमफलश्चेत्ययं कृत्यः ॥ ६१ ॥**

**निराहुर्**निरुक्तिगोचरी कुर्वन्ति नैरुक्ताः । कम् ? **तं विनयम्** । क ? **इह** मोक्षप्रकरणे । यत्किम् ? **यद्विनयति** । कोर्थः ? **अपनयति** । कोसौ ? विनयः । किं तत् ? **कर्म** । किंविशिष्टम् ? **असद**ऽप्रशस्तम् । **च** शब्दाद्विशेषेण स्वर्गापवर्गौ नयति च । **अयं च** विनयः **कृत्यो**ऽवश्यकरणीयो मुमुक्षुभिः । कुतः ? **इति** हेतोः । यतश्च भवति । कोसौ ? विनयः । कथंभूतः ? **फलं** साध्यम् । कस्याः ? **शिक्षाया** जिनवचनविद्योपादानस्य । न केवलम्, **अखिलक्षेमफलश्च** । अखिलानि सकलानि क्षेमाणि कल्याणानि फलं यस्य स एवम् ।

विनयस्य शिष्टाभीष्टगुणैकसाधनत्वमाह—

**सारं सुमानुषत्वेऽर्हद्रूपसंपदिहार्हती ।**
**शिक्षास्यां विनयः सम्यगस्मिन् काम्याः सतां गुणाः ॥**

वर्तते। कासौ ? **अर्हद्रूपसंपद्** आचेलक्यादिलिङ्गविकल्पः। किम् ? **सारमुपादेयम्**। इष्टफलमिति यावत्। क ? **सुमानुषत्वे** आर्यत्वकुलीनत्वादिगुणोपेते मनुष्यत्वे। इह चार्हद्रूपसंपदि **आर्हती** जैनी **शिक्षा सारं स्यात्**। **अस्यां** चार्हत्यां शिक्षायां **सम्यग्विनयः सारं स्यात्**। **अस्मिंश्च** सम्यग्विनये **गुणाः** समाध्यादयः स्युः। किंविशिष्टाः ? **काम्याः** स्पृहणीयाः। केषाम् ? **सतां** सत्पुरुषाणाम्।

विनयहीनस्य शिक्षाया विफलत्वमाह—

**शिक्षाहीनस्य नटवल्लिङ्गमात्मविडम्बनम्।**
**अविनीतस्य शिक्षापि खलमैत्रीव किंफला ॥ ६३ ॥**

भवति। किं तत् ? **लिङ्गमाचेलक्यादि**। किंविशिष्टम् ? **आत्मविडम्बनं** तस्यापहसनीयम्। कस्य ? **शिक्षाहीनस्य**। किंवत् ? **नटव**न्नर्तकस्य यथा। **किंफला** निष्फला अनिष्टफला वा स्यात्। कासौ ? **शिक्षापि**। कस्य ? **अविनीतस्य**। विनयहीनस्य। किंवत् ? **खलमैत्रीव** दुर्जनस्य सख्यं यथा।

विनयस्य तत्त्वार्थमतेन चातुर्विध्यमाचारादिशास्त्रमतेन च पञ्चविधत्वं स्यादित्युपदिशति—

**दर्शनज्ञानचारित्रगोचरश्चौपचारिकः।**
**चतुर्धा विनयोऽवाचि पञ्चमोपि तपोगतः ॥ ६४ ॥**

**अवाचि** उक्तस्तत्त्वार्थचिन्तकैः। कोसौ ? **विनयः**। कतिधा ? **चतुर्धा** कस्कः ? **दर्शनज्ञानचारित्रगोचरो** दर्शनाश्रयो ज्ञानाश्रयश्चारित्राश्रयश्चेत्यर्थः। न केवलम्, **औपचारिकश्च** उपचारे धार्मिके चित्तानुग्रहे भवस्तत्प्रयोजनो वा उपचार एवौपचारिक इति वा, "विनयादेः" इत्यनेन स्वार्थिके ठणि सति। न केवलं चतुर्धा विनयोऽवाचि। **पञ्चमोपि** पञ्चमश्चाचारादिशास्त्रचिन्तकैरुक्तः। कथंभूतः ? **तपोगत**स्तपस्याश्रयः। तपोविनय इत्यर्थः। उक्तंच—

**दंसणणाणे[1] विणओ चरित्त तव ओवचारिओ विणओ ।**
**पंचविहो खलु विणओ पंचमगइणायगो भणिओ ॥**

सम्यक्त्वविनयं लक्षयन्नाह–

**दर्शनविनयः शङ्काद्यसन्निधिः सोपगूहनादिविधिः ।**
**भक्त्यर्चावर्णावर्णहृत्यनासादना जिनादिषु च ॥ ६५ ॥**

भवति । कोसौ ? **दर्शनविनयः** । किंरूपः ? **शङ्काद्यसन्निधिः** शङ्काकाङ्क्षाविचिकित्सापरदृष्टिप्रशंसानायतनसेवानां मलानामसन्निधिः दूरीकरणम् वर्जनमित्यर्थः । किंविशिष्टः ? **सोपगूहनादिविधिः** सहोपगूहनस्थितीकरणवात्सल्यप्रभावनाभिर्विधिभिः प्रकारैर्वर्तमानः शङ्कादिदूरीकरणमुपगूहनादिगुणाश्च दर्शनविनयः स्यादित्यर्थः । न केवलं, **भक्त्यर्चावर्णावर्णहृत्यनासादनाश्च** । केषु ? **जिनादिषु** अर्हत्सिद्धादिषु । भक्तिरर्हदादीनां गुणानुरागः । तथाऽर्चा द्रव्यभावपूजा । तथा वर्णो विदुषां परिषदि युक्तिबलाद्यशोजननम् । तथा अवर्णहृतिर्माहात्म्यसमर्थनेनासद्भूतदोषोद्भावनाशनम् । तथाऽनासादना अवज्ञानिवर्तनम् । आदरकरणमित्यर्थः । भक्तिश्चार्चा च वर्णश्चावर्णहृतिश्चानासादना च भक्त्यर्चावर्णावर्णहृत्यनासादनाः पञ्च । उक्तं च—

**अरहंतसिद्धचेइ[2] य सुदेव धम्मे य साधुवग्गे य ।**
**आइरियउवज्झाए सुपवयणे दंसणे चावि ॥**
**भत्ती पूआ वण्णजणणं च णासणमवण्णवादस्स ॥**
**आसादणपरिहारो दंसणविणओ समासेण ।**

---

१ दर्शनज्ञाने विनयश्चारित्रं तप औपचारिको विनयः
पञ्चविधः खलु विनयः पञ्चमगतिनायको भणितः ॥

२ अर्हत्सिद्धचैत्ये च सुदेवधर्मे च साधुवर्गे च ।
आचार्ये उपाध्याये सुप्रवचने दर्शने चापि ॥
भक्तिः पूजा वर्णजननं च नाशनमवर्णवादस्य ।
आसादनपरिहारो दर्शनविनयः समासेन ॥

दर्शनविनयाद्दर्शनाचारस्य को विशेष इत्यनुयोगे सत्याचष्टे—

**दोषोच्छेदे गुणाधाने यत्नो हि विनयो दृशि ।**
**दृगाचारस्तु तत्त्वार्थरुचौ यत्नो मलात्यये ॥ ६६ ॥**

हि यस्माद्भवति । कोसौ ? **विनयः** । कस्याम् ? **दृशि** दर्शने । किंरूपः ? **यत्नः** प्रयत्नः । क ? **दोषोच्छेदे** मलनिर्मूलने । न केवलं, **गुणादाने** गुणापादने च । **दृगाचारस्तु** दर्शनाचारः पुनर्भवति । कोसौ ? **यत्नः** । कस्याम् ? **तत्त्वार्थरुचौ** तत्त्वार्थश्रद्धाने । क सति ? **मलात्यये** शङ्काद्यभावे सति । सम्यग्दर्शनादीनां हि निर्मलीकरणे यत्नं विनयमाहुः । तेष्वेव च निर्मलीकृतेषु यत्नमाचारमाचक्षते ।

अष्टधा ज्ञानविनयं विधेयतयोपदिशति—

**शुद्धव्यञ्जनवाच्यतद्द्वयतया गुर्वादिनामाख्यया,**
**योग्यावग्रहधारणेन समये तद्भाजि भक्त्यापि च ।**
**यत्काले विहिते कृताञ्जलिपुटस्याव्यग्रबुद्धेः शुचेः,**
**सच्छास्त्राध्ययनं स बोधविनयः साध्योष्टधापीष्टदः ६७ ॥**

**स बोधविनयो** ज्ञानविनयः **साध्यो** निर्वर्त्तनीयः स्याच्छिवार्थिभिः । किंविशिष्टः ? **इष्टदः** । इष्टमभ्युदयनिःश्रेयसलक्षणं फलं ददातीति । कतिधापि ? **अष्टधापि** अष्टप्रकारोपि । यत् किम् ? **यत् सच्छास्त्राध्ययनं** युक्त्यनुगृहीतपरमागमपाठः । उपलक्षणाद्गुणनं व्याख्यानं शास्त्रदृष्ट्याचरणं च । क ? **काले** । किंविशिष्टे ? **विहिते** स्वाध्यायवेलालक्षणे । कस्य ? **साधोः** । किंविशिष्टस्य ? **कृताञ्जलिपुटस्य** मुकुलीकृतसपिच्छहस्तयुगलस्य । पुनः किंविशिष्टस्य ? **अव्यग्रबुद्धेरे**काग्रचित्तस्य । पुनरपि किंविशिष्टस्य ? **शुचेर्**मनोवाक्कायशुद्धिमतः । कया ? **शुद्धव्यञ्जनवाच्यतद्द्वयतया** । व्यञ्जनं श्रुतवचनम् । वाच्यं श्रुतार्थः । तद्द्वयं व्यञ्जनवाच्ययोरुभयम् । व्यञ्जनं च वाच्यं च तद्द्वयं च व्यञ्जनवाच्यतद्द्वयानि । शुद्धानि निरवद्यानि व्यञ्जनवाच्यतद्द्वयानि यस्य सोयं

शुद्धव्यञ्जनवाच्यतद्द्वयः । तस्य भावस्तत्ता, तया । शब्दार्थतदुभया-वैपरीत्येनेत्यर्थः । न केवलं, **गुर्वादिनामाख्यया** उपाध्यायचिन्तापकाध्येतव्यनामधेयकथनेन । गुरुरुपाध्याय आदिर्येषां चिन्तापकादीनां ते गुर्वादयः । तेषां नाम । तस्याख्या कथनं, तया । न केवलं, **योग्यावग्रहधारणेन** यो यत्र सूत्रेऽध्येतव्ये तपोविशेष उक्तस्तदवलम्बनेन । योगाय श्रुतसंबन्धाय प्रभवतीति योग्यः । स चासाववग्रहश्च । तस्य धारणं तेन । न केवलं, **भक्त्यापि** अनुरागेण । क्व ? **समये** प्रवचने । न केवलं, **तद्भाजि च** । तं समयं भजते इति तद्भाक्, तस्मिन् तद्भाजि । श्रुतधरे चेत्यर्थः ।

ज्ञानविनयाज्ज्ञानाचारस्य को भेद इति पृच्छन्तं प्रत्याह—

**यत्नो हि कालशुद्ध्यादौ स्याज्ज्ञानविनयोत्र तु ।**
**सति यत्नस्तदाचारः पाठे तत्साधनेषु च ॥ ६८ ॥**

हि यस्मात् **स्यात्** । कोसौ ? **ज्ञानविनयः** । किंलक्षणः ? **यत्नः** । क्व ? **कालशुद्ध्यादौ** कालशुद्धौ व्यञ्जनादिशुद्धौ गुर्वादिनामाख्यादौ च । **अत्र तु** कालशुद्ध्यादौ पुनः **सति यत्नस्तदाचारो** ज्ञानाचारः स्यात् । क्व यत्नः ? **पाठे** श्रुताध्ययने । न केवलं, **तत्साधनेषु च** पुस्तकादिषु ।

चारित्रविनयं व्याचष्टे—

**रुच्याऽरुच्यहृषीकगोचररतिद्वेषोज्झनेनोच्छलत्,-**
**क्रोधादिच्छिदयाऽसकृत्समितिषूद्योगेन गुप्त्यास्थया ।**
**सामान्येतरभावनापरिचयेनापि व्रतान्युद्धरन्,**
**धन्यः साधयते चरित्रविनयं श्रेयःश्रियः पारयम् ॥ ६९ ॥**

**धन्यः** सुकृती **साधयते** जनयति । कम् ? **चरित्रविनयम्** । किंविशिष्टम् ? **पारयं** समर्थं पोषकं वा । कस्याः ? **श्रेयःश्रियः** स्वर्गापवर्गलक्ष्म्याः । किं कुर्वन् ? **उद्धरन्** निर्मलीकुर्वन् । कानि ? **व्रतानि** अहिंसादीनि । केन ? **रुच्यारुच्यहृषीकगोचररतिद्वेषोज्झनेन** । रुच्या

मनोज्ञाः। अरुच्या अमनोज्ञाः। रुच्याश्चारुच्याश्च रुच्यारुच्याः। ते च ते हृषीकगोचराश्चेन्द्रियार्थाः। तेषु रतिद्वेषौ रागद्वेषौ। रुच्येषु विषयेषु रागोऽरुच्येषु च द्वेष इत्यर्थः। तयोरुज्झनं त्यागस्तेन। न केवलम्, उच्छलत्क्रोधादिच्छिदया उन्मीलत्क्रोधमानमायालोभखण्डनया। लाक्षणिकोत्र च्छिदाशब्दः। न केवलम्, उद्योगेन उत्साहेन। कासु? समितिषु। कथम्? असकृद्वारं वारम्। न केवलं, गुप्त्यास्थया शुभमनोवाक्कायक्रियास्वादरेण। न केवलं सामान्येतरभावनापरिचयेनापि। सामान्यं चेतरो विशेषश्च सामान्येतरौ। ताभ्यां भावनाः संस्काराः सामान्येतरभावनाः। सामान्येन मा भूत्कोपीह दुःखीत्यादिना। विशेषेण निगृह्णतो वाङ्मनसी इत्यादिना ग्रन्थेन प्रागुक्ताः। सामान्येतरभावनाभिः परिचयः संबन्धस्तेन। अपिः समुच्चये।

चारित्रविनयाच्चारित्राचारस्य को विशेष इति प्रश्ने सत्याचष्टे—

समित्यादिषु यत्नो हि चारित्रविनयो मतः।
तदाचारस्तु यस्तेषु सत्सु यत्नो व्रताश्रयः॥ ७०॥

हि यस्मान्मतः। कोसौ? चारित्रविनयः। किंरूपः? यत्नः। केषु? समित्यादिषु। तदाचारस्तु चारित्राचारः पुनर्मतः पूर्वसूरिभिः। यः किम्? यः स्यात्। कोसौ? यत्नः। किंविशिष्टो? व्रताश्रयः। केषु सत्सु? तेषु समित्यादिषु।

प्रत्यक्षपूज्यविषयस्यौपचारिकविनयस्य कायिकभेदं सप्तप्रकारं व्याकर्तुमाह—

अभ्युत्थानोचितवितरणोच्चासनाद्युज्झनानु,—
व्रज्या पीठाद्युपनयविधिः कालभावाङ्गयोग्यः।
कृत्याचारः प्रणतिरिति चाङ्गेन सप्तप्रकारः,
कार्यः साक्षाद्गुरुषु विनयः सिद्धिकामैस्तुरीयः॥ ७१॥

कार्यः कर्तव्यः। कोसौ? विनयः। किंविशिष्टः? तुरीयश्चतुर्थः। औपचारिक इत्यर्थः। कैः? सिद्धिकामैः स्वात्मोपलब्धिमिच्छद्भिः। केषु?

साक्षाद्गुरुषु प्रत्यक्षेष्वाराध्येषु। किंविशिष्टः? **सप्तप्रकारः**। केन? **अङ्गेन** शरीरेण। कथम्? **अभ्युत्थानोचितवितरणोच्चासनाद्युज्झनानुव्रज्याः**। अभ्युत्थानमादरेणासनादेरुत्थानम्। उचितवितरणमुचितस्य योग्यस्य पुस्तकादेर्दानम्। उच्चासनाद्युज्झनमुच्चविष्टरोपवेशस्थानगमनादिवर्जनम्। अनुव्रज्या प्रस्थितेन सह किंचिद्गमनम्। अभ्युत्थानं चोचितवितरणं चोच्चासनाद्युज्झनं चानुव्रज्या च ताश्चतस्रः। न केवलं, **पीठाद्युपनयविधिः**। पीठमासनमादिर्यस्य शयनादेस्तत्पीठादि। तस्योपनयविधिरुपढौकनकरणम्। न केवलं, **कृत्याचारः** कर्माचरणम्। किंविशिष्टः? **कालभावाङ्गयोग्यः**। कालयोग्य उष्णकालादिषु शीतादिक्रिया भावयोग्यः प्रेषणादिकरणम्। अङ्गयोग्यः शरीरबलयोग्यं मर्दनादिः। कालश्च भावश्चाङ्गं च कालभावाङ्गानि। तेषां योग्यः। उक्तं च—

**पडिरूवकायफासणदाणं पडिरूवकालकिरिया य।**
**पेसणकरणं सत्थारकरणमुपकरणपडिलिहणं॥**[1]

न केवलं, **प्रणतिः** प्रणामश्च। च शब्दोत्र भिन्नप्रक्रमः समुच्चयार्थोत्र योज्यः। इति शब्दादेवं प्रकारोन्योपि संमुखगमनादिर्बोद्धव्यः।

औपचारिकविनयस्य वाचिकभेदमाह—

**हितं मितं परिमितं वचः सूत्रानुवीचि च।**
**ब्रुवन् पूज्यांश्चतुर्भेदं वाचिकं विनयं भजेत्॥ ७२॥**

भजेन्मुमुक्षुः। कम्? **विनयम्**। किंविशिष्टम्? **वाचिकं** वाचि भवम्। पुनः किंविशिष्टम्? **चतुर्भेदं** चत्वारो भेदा यस्य तम्। किं कुर्वन्? **ब्रुवन्** वदन्। किं तत्? **हितादि वचः**। कान्? **पूज्यान्** आराध्यान् गुर्वादीन्। **हितं** धर्मसंयुक्तम्। **मितम्** अल्पाक्षरबह्वर्थम्। **परिमितं** कारणसहितम्। **सूत्रानुवीचि** आगमार्थाविरुद्धम्। **च** शब्दाद्भगवन्नित्यादिपूजापुरस्सरं वचनं वाणिज्याद्यवर्णकं वाक्यं च।

---

[1] प्रतिरूपकायस्पर्शनदानं प्रतिरूपकालक्रिया च।
प्रेषणकरणं संस्तरकरणमुपकरणप्रतिलेखनम्॥

औपचारिकविनयस्य मानसभेदमाह—

**निरुन्धन्नशुभं भावं कुर्वन् प्रियहिते मतिम् ।**
**आचार्यादेरवाप्नोति मानसं विनयं द्विधा ॥ ७३ ॥**

**अवाप्नोति** लभते तपस्वी । कम् ? **विनयम्** । किंविशिष्टम् ? **मानसं** मनसि भवम् । कतिधा ? **द्विधा** द्विप्रकारम् । किं कुर्वन् ? **रुन्धन्** निगृह्णन् । कम् ? **भावं** परिणामम् । किंविशिष्टम् ? **अशुभं** सम्यक्त्वविराधनप्राणिवधादिकम् । न केवलं, **कुर्वन्** । काम् ? **मतिं** बुद्धिम् । क्व **प्रियहिते** प्रियं धर्मोपकारकम् । हितं सम्यक्त्वज्ञानादिकम् । प्रियं च हितं च प्रियहितं तस्मिन् । कस्य संबन्धित्वेन ? **आचार्यादेः** सूर्युपाध्यायस्थविरप्रवर्तकगणधरादेः । उक्तं च—

**अह[1] उपचरिओ खलु जो विणओ तिविहो समासदो भणिओ ।**
**सो सग चउविह दुविहो बोधव्वो आणुपुव्वीए ॥**

परोक्षगुर्वादिगोचरमौपचारिकविनयं त्रिविधं प्रति प्रयुङ्क्ते—

**वाङ्मनस्तनुभिः स्तोत्रस्मृत्यञ्जलिपुटादिकम् ।**
**परोक्षेष्वपि पूज्येषु विदध्याद्विनयं त्रिधा ॥ ७४ ॥**

**विदध्यात्** कुर्यान्मुमुक्षुः । किम् ? **विनयम्** । कतिधा ? **त्रिधा** । किंविशिष्टम् ? **स्तोत्रस्मृत्यञ्जलिपुटादिकम्** । काभिः ? **वाङ्मनस्तनुभिः** । वाचा स्तवनजयवादआशीर्वादादिकम् । मनसा स्मरणगुणचिन्तनादिकम् । कायेन हस्तयोजनप्रणामादिकम् । केषु विदध्यात् ? **पूज्येषु** दीक्षागुरुश्रुतगुरुतपोधिकेषु । किंविशिष्टेषु ? **परोक्षेषु** इन्द्रियाविषयेषु । अपिशब्दात्तपोगुणवयःकनिष्ठेष्वार्येषु श्रावकेषु च यथार्हविनयकरणं लक्षयति । यथाहुः—

---

१—अथ उपचरितः खलु यो विनयस्त्रिविधः समासतो भणितः ।
स सप्तचतुर्विविधद्विविधो बोद्धव्य आनुपूर्व्या ॥

रादिणिए[1] उणरादिणिएसु अ अज्जाणु चेव गिहिवग्गे ।
विणओ जहारिहो सो कायव्वो अप्पमत्तेण ॥

रादिणिए राव्यधिके दीक्षागुरौ श्रुतगुरौ तपोधिके चेत्यर्थः । उणरादिणिएसु ऊनरात्रेषु तपसा गुणैर्वयसा च कनिष्ठेषु साधुष्वित्यर्थः ।

तपोविनयमाह—

**यथोक्तमावश्यकमावहन् सहन्,**
**परीषहानग्रगुणेषु चोत्सहन् ।**
**भजंस्तपोवृद्धतपांस्यहेलयन्,**
**तपोलघूनेति तपोविनीतताम् ॥ ७५ ॥**

एति गच्छति तपस्वी । काम् ? **तपोविनीततां** तपोविनयम् । किं कुर्वन्? **आवहन्** भजन् । किं तत्? **आवश्यकम्** । किंविशिष्टम्? **यथोक्त**मुक्तस्यानतिक्रमेण । अवश्यं कर्म व्याध्यादिपरवशेनापि क्रियते इति कृत्वा । अथवा अवश्यस्य रागादिभिरनायत्तीकृतस्य कर्म इति विगृह्य "द्वन्द्वमनोज्ञादेः ॥३।४।१२३॥" इत्यनेन वुञ् । तथा **सहन्** सहमानः । कान् ? **परीषहान्** क्षुदादीन् । तथो**त्सहन्** उत्सहमानः । केषु ? **अग्रगुणे**षूत्तरगुणेष्वातापनादिषु संयमविशेषेषु वा उपरिमगुणस्थानेषु वा । तथा **भजन्** सेवमानः । कानि ? **तपोवृद्धतपांसि** । तपांसि वृद्धान्यधिकानि येषां ते तपोवृद्धाः । न पुनस्तपसा वृद्धा इति, "भाया ओजः सहोम्भस्तपोऽस ॥४।३।१२२॥" इत्यनुषङ्गात् । तपांस्यनशनादीनि । तपोवृद्धाश्च तपांसि चेति द्वन्द्वः । तथा**ऽहेलयन्** अनवजानन् अवज्ञाविषयानकुर्वन् । कान् ? **तपोलघून्** । तपो लघु अल्पं येषां ते तपोलघवस्तान् । स्वस्मात्तपसा हीनानपि यथास्वं संभावयन्नित्यर्थः । चशब्दो भिन्नप्रक्रमोऽत्र समुच्चयार्थो योज्यः ।

विनयभावनायाः फलमाह—

**ज्ञानलाभार्थमाचारविशुद्ध्यर्थं शिवार्थिभिः ।**
**आराधनादिसंसिद्ध्यै कार्यं विनयभावनम् ॥ ७६ ॥**

---

१—रात्र्यधिके ऊनरात्रेषु च आर्यान्......गृहवर्गे ।
विनयो यथार्हः स कर्तव्योऽप्रमत्तेन ॥

**कार्यं** कर्तव्यं शिवार्थिभिः । किं तत् ? **विनयभावनं** विनयस्यासकृत्प्रवर्तनम् । किमर्थम् ? **ज्ञानलाभार्थं** तथा **आचारविशुद्ध्यर्थम्** । पञ्चानामाचाराणां निर्मलीकरणार्थम् । तथा **ऽऽराधनादिसंसिद्ध्यै** । आराधनायाः सम्यग्दर्शनादिनिर्मलीकरणादिलक्षणायाः । आदिशब्दाद्वक्ष्यमाणार्थस्य च संसिद्ध्यै सम्यग् निर्वृत्त्यर्थम् ।

आराधनादीत्यत्रादिशब्दसंगृहीतमर्थजातं व्याकर्तुमाह—

**द्वारं यः सुगतेर्गणेशगणयोर्यः कार्मणं यस्तपो,-**
**वृत्तज्ञानऋजुत्वमार्दवयशःसौचित्यरत्नार्णवः ।**
**यः संक्लेशदवाम्बुदः श्रुतगुरूद्योतैकदीपश्च यः,**
**स क्षेप्यो विनयः परं जगदिनाज्ञापारवश्येन चेत् ॥ ७७ ॥**

**स विनयः परं** केवलं **चेद्** यदि । **क्षिप्यः** कुत्स्यो व्यपोह्यो वाऽनात्मनीनैः । केन ? **जगदिनाज्ञापारवश्येन** । जगतां लोकानामिनो नाथो जगदिनो विश्वनाथः । तस्याज्ञा शासनम् । तत्र पारवश्यं परवशता, तेन । विनयो हि वर्तमानो विश्वनाथाज्ञापरायत्तः स्यात् । अनेन काकुवचनेन विनयस्यावश्यकरणीयतां लक्षयति । तदेव समर्थयमानः प्राह द्वारमित्यादि । यो विनयः स्यात् । कीदृशः ? **द्वार**मुपायः । कस्याः ? **सुगते**र्मोक्षस्य, सकलकर्मक्षयहेतुत्वात् स्वर्गस्य वा प्रचुरपुण्यास्रवनिमित्तत्वात् । तथा यो विनयः **कार्मणं** वशीकरणं स्यात् । कयोः ? **गणेशगणयोः** संघनाथसंघयोः । तथा यो विनय**स्तपोवृत्तज्ञानऋजुत्वमार्दवयशःसौचित्यरत्नार्णवः** स्यात् । सौचित्यं गुर्वाद्यनुग्रहणवैमनस्यनिवृत्तिः । तपोवृत्तादीनि व्याख्यातार्थानि । तपश्च वृत्तं च ज्ञानं चर्जुत्वं च मार्दवं च यशश्च सौचित्यं च । तान्येव रत्नानि दुर्लभत्वादनर्घत्वाच्च । तेषामर्णवः समुद्रः संभूतिहेतुत्वात् । तथा यो विनयः **संक्लेशदवाम्बुदः** स्यात् । संक्लेशो रागादिपरिणामः । स एव दवो दावाग्निः । तत्राम्बुदो मेघः, प्रशमहेतुत्वात् । तथा यो विनयः **श्रुतगुरूद्योतैकदीपश्च** स्यात् । श्रुतमत्राऽऽचारोक्तक्रमज्ञत्वं कल्पज्ञत्वं च गृह्यते । गुरुः सदाम्नायोपदेष्टा च । श्रुतं च गुरुश्च श्रुतगुरू । तयोरुद्योतः प्रकाशः । तत्रैक उत्कृष्टो दीपः प्रदीपो, गृहस्येव श्रुतगुर्वोः प्रकाशहेतुत्वात् ॥ विनयः ।

अथ निर्वचनलक्षितलक्षणे वैयावृत्त्ये तपसि मुमुक्षुं प्रयुङ्क्ते—

**क्लेशसंक्लेशनाशायाचार्यादिदशकस्य यः ।**
**व्यावृत्तस्तस्य यत्कर्म तद्वैयावृत्त्यमाचरेत् ॥ ७८ ॥**

आचरेदनुतिष्ठेन्मुमुक्षुः । किं तत् ? **तद्वैयावृत्त्यं** नामाभ्यन्तरतपोविशेषः । यत्किम् ? **यत्कर्म** मनोवाक्कायव्यापारः । कस्य ? **तस्य** तपस्विनः श्रावकस्य वा । यः किम् ? यस्तपस्वी श्रावको वा भवति । किंविशिष्टः ? **व्यावृत्तः** प्रवृत्तः । कस्मै ? **क्लेशसंक्लेशनाशाय** । क्लेशः कायपीडा । संक्लेशो दुष्परिणामः । आर्तरौद्रध्याने इति यावत् । क्लेशश्च संक्लेशश्च क्लेशसंक्लेशौ । तयोर्नाशो विच्छेदस्तस्मै । कस्य संबन्धित्वेन ? **आचार्यादिदशकस्य** आचार्यादीनामाचार्योपाध्यायतपस्विशैक्षग्लानगणकुलसंघसाधुमनोज्ञानां दशकं दशतयं, तस्य । आचरन्ति तस्माद्व्रतानीत्याचार्यः । मोक्षार्थं शास्त्रमुपेत्य तस्मादधीयते इत्युपाध्यायः । महोपवासाद्यनुष्ठायी तपस्वी । शिक्षाशीलः शैक्षः । रुजादिक्लिष्टशरीरो ग्लानः । स्थविरसंततिर्गणः । दीक्षकाचार्यशिक्षसंस्त्यायस्त्रीपुरुषसंतानरूपः कुलम् । चातुर्वर्ण्यं श्रमणनिवहः संघः । चिरप्रव्रजितः साधुः । लोकसंमतो मनोज्ञः ।

वैयावृत्त्यफलमाह—

**मुक्त्युद्युक्तगुणानुरक्तहृदयो यां कांचिदप्यापदं,**
**तेषां तत्पथघातिनीं स्ववदवस्यन्योङ्गवृत्त्याथवा ।**
**योग्यद्रव्यनियोजनेन शमयत्युद्घोपदेशेन वा,**
**मिथ्यात्वादिविषं विकर्षति स खल्वार्हन्त्यमप्यर्हति ॥७९॥**

**स** महात्मा **खलु** निश्चयेनार्हति अधिकरोति । प्राप्नोतीत्यर्थः । किं तत् ? **आर्हन्त्यं** तीर्थकरत्वम् । **अपि**शब्दः का गणनेन्द्राहमिन्द्रचक्रवर्तित्वादिपदानामित्येवमर्थः । यः किम् ? **यः शमयति** निराकरोति । काम् ? **यां कांचिदपि** दैवीं मानुषीं तैरश्चीमचेतनकृतां वाऽऽपदम् । किंविशिष्टः सन् ? **मुक्त्युद्युक्तगुणानुरक्तहृदयः** । मुक्तावुद्युक्ता उद्यताः साधवो मुक्त्युद्युक्ताः । तेषां गुणाः संयमविकल्पाः । तेष्वनुरक्तमासक्तं हृदयं मनो यस्य

स एवम् । किंविशिष्टाम् ? तत्पथघातिनीं मुक्तिमार्गोच्छेदिनीम् । केषाम् ? तेषां मुक्त्युद्युक्तानाम् । किं कुर्वन् ? अवस्यन् निश्चिन्वन् । किंवत् ? स्ववत् आत्मन इव । साधूनां विपदं स्वस्यैव जानन्नित्यर्थः । कया शमयति ? अङ्गवृत्त्या कायचेष्टया अथवा योग्यद्रव्यनियोजनेन संयमाविरोध्यौषधान्नवसत्यादिप्रयोगेण । वा अथवा यो विकर्षति दूरीकरोति । किं तत् ? मिथ्यात्वादिविषं मिथ्यादर्शनमिथ्याज्ञानाविरतिप्रमादकषाययोगगरलम् । केन ? उद्घोपदेशेन विस्तीर्णशिक्षाप्रयोगेण ।

साधर्मिकविपदुपेक्षिणो दोषं प्रकाश्य वैयावृत्त्यस्य तपोहृदयत्वं समर्थयते—

सधर्मापदि यः शेते स शेते सर्वसंपदि ।
वैयावृत्त्यं हि तपसो हृदयं ब्रुवते जिनाः ॥ ८० ॥

यः पुमान् शेते स्वपिति निर्व्यापारो भवति । कस्याम् ? सधर्मापदि । समानो धर्मो रत्नत्रयलक्षणो येषां ते सधर्माणः । तेषामापदि विपदि । स शेते स्वपिति । कस्याम् ? सर्वसंपदि । सर्वा चासौ संपच्च पुरुषार्थसंपत्तिस्तस्याम् । हि यस्माद् ब्रुवते कथयन्ति । के ? जिना अर्हन्तः । किं तत् ? वैयावृत्त्यम् । किंविशिष्टम् ? हृदयमन्तस्तत्त्वम् । कस्य ? तपसो बाह्यस्याभ्यन्तरस्य च ।

भूयोपि वैयावृत्त्यसाध्यमाह—

समाध्याधानसानाथ्ये तथा निर्विचिकित्सता ।
सधर्मवत्सलत्वादि वैयावृत्त्येन साध्यते ॥ ८१ ॥

साध्यते जन्यते ज्ञाप्यते वा । केन ? वैयावृत्त्येन । किं किम् ? समाध्याध्यानसानाथ्ये समाधेरेकाग्रचिन्तानिरोधस्याधानमापादनम् । सनाथस्य भावः सानाथ्यं सस्वामिकत्वम् । समाध्याधानं च सानाथ्यं च ते तथा निर्विचिकित्सता निःसूकत्वम् । तथा सधर्मवत्सलत्वादि साधर्मिकवात्सल्यम् । आदिशब्देन वक्ष्यमाणार्थग्रहणम् । उक्तं च—

गुणाढ्ये पाठके साधौ कृशे शैक्षे तपस्विनि ।
सपक्षे समनुज्ञाते संघे चैव कुले गणे ॥

शय्यायामासने चोपगृहीते पठने तथा ।
आहारे चौषधे काये मलोज्झोत्थापनादिषु ॥
मारीदुर्भिक्षचौराध्वव्यालराजनदीषु च ।
वैयावृत्त्यं यतेरुक्तं सपरिग्रहरक्षणम् ॥
बालवृद्धाकुले गच्छे तथा गुर्वादिपञ्चके ।
वैयावृत्त्यं जिनैरुक्तं कर्तव्यं सर्वशक्तितः ॥

गुणाढ्ये गुणाधिके । कृशे व्याध्याक्रान्ते । शय्यायां वसतौ । उपगृहीते उपकारे आचार्यादिस्वीकृते वा । सपरिग्रहरक्षणं संगृहीतरक्षणोपेतम् । अथवा गुणाढ्यादीनामागतानां संग्रहो रक्षा च कर्तव्येत्यर्थः । बाला नवकप्रव्रजिताः । वृद्धास्तपोगुणवयोभिरधिकाः । गच्छे सप्तपुरुषसंताने गुर्वादिपञ्चके आचार्योपाध्यायप्रवर्तकस्थविरगणधरेषु । वैयावृत्त्यम् ।

अथ मुमुक्षोः स्वाध्याये नित्याभ्यासविधिपूर्वकं निरुक्तिमुखेन स्वाध्यायशब्दार्थमाह—

नित्यं स्वाध्यायमभ्यस्येत्कर्मनिर्मूलनोद्यतः ।
स हि स्वस्मै हितोऽध्यायः सम्यग्वाध्ययनं श्रुतेः ॥ ८२ ॥

अभ्यस्येदसकृत्प्रवर्तयेन्मुमुक्षुः । कम् ? स्वाध्यायम् । कथम् ? नित्यं शश्वत् । किंविशिष्टः सन् ? कर्मनिर्मूलनोद्यतः कर्मणां ज्ञानावरणादीनां मनोवाक्कायक्रियाणां वा उच्छेदनोद्युक्तः । हि यस्माद्भवति । कोसौ ? स स्वाध्यायः । किंविशिष्टः ? अध्यायोऽध्ययनम् । कस्याः ? श्रुतेः परमागमस्य । किंविशिष्टः ? हित उपकारकः । कस्मै ? स्वस्मै आत्मने संवरनिर्जराहेतुत्वात् । वा अथवा सु सम्यगा केवलज्ञानोत्पत्तेः श्रुतस्याध्ययनं पाठः स्वाध्याय इत्यन्वर्थाश्रयणात् ।

सम्यक्शब्दार्थकथनपुरस्सरं स्वाध्यायस्याद्यं वाचनाख्यं भेदमाह—

शब्दार्थशुद्धता द्रुतविलम्बिताद्यूनता च सम्यक्त्वम् ।
शुद्धग्रन्थार्थोभयदानं पात्रेस्य वाचना भेदः ॥ ८३ ॥

---

१ 'श्रुतेः' इति मूलोक्तः पाठः ।

उच्यते **सम्यक्त्वम्**। किम् ? **शब्दार्थशुद्धता** शब्दार्थयोः शुद्धिः। न केवलं, **द्रुतविलम्बिताद्यूनता च** । द्रुतमपरिभाव्य झटित्युच्चरितम्। विलम्बितमस्थाने विश्रम्य विश्रम्योच्चरितम् । आदिशब्देनाक्षरपदच्युतादिदोषग्रहः । द्रुतं च विलम्बितं च द्रुतविलम्बिते । ते आदी येषामक्षरच्युतादिदोषाणां ते द्रुतविलम्बितादयः । तैरूनं हीनं द्रुतविलम्बिताद्यूनम्। तस्य भावस्तत्ता। अथ वाचनालक्षणमाह। भवति। कासौ ? **वाचना**। किम् ? **भेदो** विकल्पः। कस्य ? **अस्य** स्वाध्यायस्य। किम् ? **शुद्धग्रन्थार्थोभयदानम्**। ग्रन्थः शास्त्रम् । अर्थस्तदभिधेयम् । उभयं ग्रन्थार्थद्वयम्। ग्रन्थश्चार्थश्चोभयं च ग्रन्थार्थोभयानि । शुद्धानि निरवद्यानि च तानि ग्रन्थार्थोभयानि च शुद्धग्रन्थार्थोभयानि। तेषां दानं त्यागः। क ? **पात्रे** विनयादिगुणयुक्ते पुंसि।

स्वाध्यायस्य प्रच्छनाख्यं द्वितीयं भेदं लक्षयति—

**प्रच्छनं संशयोच्छित्त्यै निश्चितद्रढनाय वा।**
**प्रश्नोऽधीतिप्रवृत्त्यर्थत्वादधीतिरसावपि ॥ ८४ ॥**

उच्यते। किं तत् ? **प्रच्छनम्**। किम् ? प्रश्नोनुयोगः। कस्यै ? **संशयोच्छित्त्यै** ग्रन्थेर्थे तदुभये वा किमिदमित्थमन्यथा वेति संदेहमुच्छेत्तुम्। न केवलं, **निश्चितद्रढनाय वा** इदमित्थमेवेति निश्चितेर्थे बलमाधातुम्। कथं प्रश्नस्याध्ययनत्वं स्याद्येन लक्षणस्याव्याप्तिर्न भवेदिति शङ्कायामधीतीत्याद्याह। भवति। कोसौ ? **असावपि** प्रश्नोपि। किंभवति ? **अधीतिर**ध्ययनम्। कस्माद् ? **अधीतिप्रवृत्त्यर्थत्वात्** । अधीतेरध्ययनस्य प्रवृत्तिः प्रवर्तनमधीतिप्रवृत्तिः। तस्या अर्थो निमित्तमधीतिप्रवृत्त्यर्थः। तस्य भावस्तत्त्वं तस्मात्। अध्ययनप्रवृत्तिनिमित्तत्वेन प्रश्नोप्यध्ययनमित्युच्यते । इति न सामान्यलक्षणस्याव्याप्तिः। इति भावः।

अथवा मुख्य एव प्रश्ने स्वाध्यायव्यपदेश इत्याह—

**किमेतदेवं पाठ्यं किमेषोर्थोस्येति संशये।**
**निश्चितं वा द्रढयितुं पृच्छन् पठति नो न वा ॥ ८५ ॥**

**वा** अथवा **नो न पठति** । पठत्येवेत्यर्थः । द्वौ नञौ प्रकृतमर्थं गमयतः । किं कुर्वन् ? **पृच्छन्** प्रश्नं कुर्वन् । क सति ? **संशये** । कथम् ? **इति** एवम् । हे भगवन्, किं **पाठ्यं** पठनीयं किं **तदेतत्** अक्षरं पदं वाक्यादि वा । कथम् ? **एवमनेन** प्रकारेण आहोस्विदन्यथा वा । एष शब्दविषयः संशयः । तमर्थविषयमाह—**किं स्यात्** । कोसौ ? एष निरूप्यमाणोर्थो **वाच्यम्** । कस्य ? **अस्य** पदादेः । उतस्विदन्यार्थोस्ति । **वा** अथवा **नो न पठति** । किंकुर्वन् ? पृच्छन् । किं कर्तुम् ? **द्रढयितुं** द्रढीकर्तुं द्रढयिष्यामीत्यध्यवसाय । किम् ? **निश्चितं** निर्णीतं शब्दमर्थं वा ।

अनुप्रेक्षाख्यं तद्विकल्पं लक्षयति—

**सानुप्रेक्षा यदभ्यासोधिगतार्थस्य चेतसा ।**
**स्वाध्यायलक्ष्म पाठोन्तर्जल्पात्मात्रापि विद्यते ॥ ८६ ॥**

**सा अनुप्रेक्षा** स्वाध्यायभेदो भण्यते । यत्किम् ? **यदभ्यासो** योग्या (?) । कस्य ? **अधिगतार्थस्य** निश्चितवाच्यस्य । केन ? **चेतसा** मनसा । **विद्यते** चास्ति प्रतीयते वा । कोसौ ? **पाठोऽध्ययनम्** । कथंभूतः ? **स्वाध्यायलक्ष्म** स्वाध्यायस्य लक्षणम् । किमात्मा ? **अन्तर्जल्पात्मा** अन्तर्जल्परूपः । क ? **अत्रापि** एतस्यामप्यनुप्रेक्षायां, वाचनादिषु बहिर्जल्पवत् । आचारटीकाकारस्तु 'पृच्छनं शास्त्रश्रवणमऽनुप्रेक्षा वाऽनित्यत्वाद्यनुचिन्तनम्' इत्यनुप्रेक्षाख्यं स्वाध्यायविकल्पं व्याचष्टे ।

आम्नायं धर्मोपदेशं च स्वाध्यायभेदावाह—

**आम्नायो घोषशुद्धं यद्वृत्तस्य परिवर्तनम् ।**
**धर्मोपदेशः स्याद्धर्मकथा सस्तुतिमङ्गला ॥ ८७ ॥**

भण्यते **आम्नायः** । यत्किम् ? **यत्परिवर्तनमनूद्यवचनम्** । गुणनिकेत्यर्थः । कस्य ? **वृत्तस्य** पठितस्य शास्त्रस्य । कथं यथा भवति **घोषशुद्धम्** । घोष उच्चारणं शुद्धो द्रुतविलम्बितादिदोषरहितो यत्र । परिवर्तनविशेषणं चेदम् । तथा **धर्मोपदेशः** स्वाध्यायविकल्पः स्यात् । किंलक्षणः ? **धर्मकथा** धर्मस्य प्रबन्धकल्पना । किंविशिष्टा ? **सस्तुति-**

मङ्गला । स्तुतिर्देववन्दना । मङ्गलं च नमस्काराशीःशान्त्यादिवचनादि । स्तुतिश्च मङ्गलं च स्तुतिमङ्गले । सह ताभ्यां वर्तमाना । उक्तं च—

परियट्टणा[1] य वायण पच्छणमणुवेहणा य धम्मकहा ।
थुतिमंगलसंजुत्तो पंचविहो होइ सज्झाओ ॥

धर्मकथेति त्रिषष्टिशलाकापुरुषचरितानीत्याचारटीकायाम् ।

धर्मकथायाश्चातुर्विध्यं दर्शयन्नाह—

आक्षेपणीं स्वमतसंग्रहणीं समेक्षी,
विक्षेपणीं कुमतनिग्रहणीं यथार्हम् ।
संवेजनीं प्रथयितुं सुकृतानुभावं,
निर्वेदनीं वदतु धर्मकथां विरक्त्यै ॥ ८८ ॥

**वदतु** कथयतु शिवार्थी । किंविशिष्टः सन् ? **समेक्षी** सर्वत्र तुल्यदर्शी । उपेक्षाशील इत्यर्थः । काम् ? **धर्मकथाम्** । कीदृशीम् ? **आक्षेपणीम्** । किंलक्षणाम् ? **स्वमतसंग्रहणी**मनेकान्तसंग्रहपराम् । कथम् ? **यथार्हं** यो योऽर्हो योग्यस्तमुद्दिश्य । तथा समेक्षी धर्मकथां वदतु । कीदृशीम् ? **विक्षेपणीम्** । किंलक्षणाम् ? **कुमतनिग्रहणीं** क्षणिकैकान्तादिवादनिग्रहपराम् । कथम् ? **यथार्हम्** । तथा समेक्षी धर्मकथां वदतु । कीदृशीम् ? **संवेजिनीं** संवेगपराम् । किं कर्तुम् ? **प्रथयितुं** प्रकाशयितुम् । कम् ? **सुकृतानुभावं** पुण्यफलसंपदम् । कथम् ? यथार्हम् । तथा समेक्षी धर्मकथां वदतु । कीदृशीम् ? **निर्वेदनीं** निर्वेदपराम् । कस्यै ? **विरक्त्यै** भवभोगशरीरेषु वैराग्यं जनयितुम् । कथम् ? यथार्हम् ।

स्वाध्यायसाध्यान्यभिधातुमाह—

प्रज्ञोत्कर्षजुषः श्रुतस्थितिपुषश्चेतोक्षसंज्ञामुषः,
संदेहच्छिदुराः कषायभिदुराः प्रोद्यत्तपोमेदुराः ।

---

१ परिवर्तना च वाचनपृच्छनमनुप्रेक्षा च धर्मकथा ।
स्तुतिमङ्गलसंयुक्तः पञ्चविधो भवति स्वाध्यायः ॥

**संवेगोल्लसिताः सदध्यवसिताः सर्वातिचारोज्झिताः,**
**स्वाध्यायात् परवाद्यऽशङ्कितधियः स्युः शासनोद्भासिनः ८९**

**स्युर्भवेयुः** । के ? मुमुक्षवः । कस्मात् ? **स्वाध्यायात्** । कीदृशाः स्युः ? **प्रज्ञोत्कर्षजुषः** । प्रज्ञाया ऊहापोहात्मिकाया बुद्धेरुत्कर्षमतिशयं जुषन्ते प्रीत्या सेवन्ते । तथा **श्रुतस्थितिपुषः** । श्रुतस्य परमागमस्य स्थितिमविच्छेदं पुष्णन्ति पोषयन्ति । तथा **चेतोक्षसंज्ञामुषः** । चेतश्चाक्षाणि च संज्ञाश्चाहारभयमैथुनपरिग्रहाभिलाषाः ता मुष्णन्ति स्तेनयन्ति प्रतिबध्नन्ति तथा **संदेहच्छिदुराः** संशयं छेत्तारः । तथा **कषायभिदुराः** क्रोधादीन् भेत्तारः । तथा **प्रोद्यत्तपोमेदुराः** प्रोद्यता अहरहर्वर्धमानेन तपसा पुष्टाः । तथा **संवेगोल्लसिताः** । संवेगः संसारभीरुता उल्लसिता उद्गता येषां संवेगेन वोल्लसिता उत्कृष्टशोभिताः । तथा **सदध्यवसिताः** । सत् प्रशस्तमध्यवसितमध्यवसायो येषां ते प्रशस्तपरिणामा इत्यर्थः । अथवा सद् उत्पादव्ययध्रौव्ययुक्तं वस्तु अध्यवसितं निश्चितं यैस्ते । तथा **सर्वातिचारोज्झिताः** सर्वैर्दर्शनादिगोचरैरतीचारैर्मलैरुज्झितास्त्यक्ताः । तथा **परवाद्यशङ्कितधियः** परवादिभ्यः सौगतादिभ्योऽशङ्किता अत्रस्ता धीर्बुद्धिर्येषाम् । तथा **शासनोद्भासिनो** निजमतप्रभावकाः ।

स्तुतिलक्षणस्वाध्यायफलमाह—

**शुद्धज्ञानघनार्हदद्भुतगुणग्रामग्रहव्यग्रधी,—**
**स्तद्व्यक्त्युद्धुरनूतनोक्तिमधुरस्तोत्रस्फुटोद्गारगीः ।**
**मूर्तिं प्रश्रयनिर्मितामिव दधत्तत्किंचिदुन्मुद्रय,—**
**त्यात्मस्थाम कृती यतोरिजयिनां प्राप्नोति रेखां धुरि ॥९०॥**

**कृती** विद्वान् **तत्किञ्चिदनिर्वचनीयमात्मस्थाम** स्ववीर्यमुन्मुद्रयति उन्मीलयति । कीदृशः सन् ? **शुद्धेत्यादि** । शुद्धं निर्मलम् । तच्च तज्ज्ञानं च शुद्धज्ञानम् । तेन घनो निर्भरभृतोऽर्हन् जिनेन्द्रः । तस्याद्भुता विस्मयनीया गुणाः । तेषां ग्रामः संघातः । तत्र ग्रहोभिनिवेशः । तेन व्यग्रा व्यासङ्गिनी धीर्बुद्धिर्यस्य स एवम् । तथा **तदित्यादि** । तस्य शुद्धज्ञानघनार्हदद्भुतगुण-

ग्रामस्य व्यक्तिराविर्भावस्तद्व्यक्तिः । तयोद्धुराण्युद्भटानि तद्व्यक्त्युद्धुराणि । तानि च तानि नूतनोक्तिमधुराणि च प्रत्यग्रवचनस्वादूनि । तानि च तानि स्तोत्राणि स्तवनानि च तद्व्यक्त्युद्धुरनूतनोक्तिमधुरस्तोत्राणि । तैः स्फुटः प्रकट उद्गारो लक्षणया उल्लासो यस्याः सा तद्व्यक्त्युद्धुरनूतनोक्तिमधुरस्तोत्रस्फुटोद्गारा । तथाविधा गीर्वाक् यस्य स एवम् । किं कुर्वन् ? दधद् धारयन् । काम् ? मूर्तिं शरीरयष्टिम् । कीदृशीमिव ? प्रश्रयनिर्मितामिव विनयमयीं यथा । यतो येन प्राप्नोति कृती । काम् ? रेखां लेखाम् । क्व ? धुरि अग्रे । केषाम् ? अरिजयिनां मोहस्य जेतॄणाम् ।

पञ्चनमस्कारस्य परममङ्गलत्वमुपपाद्य तज्जपनस्योत्कृष्टस्वाध्यायरूपतां निरूपयति—

मलमखिलमुपास्त्या गालयत्यङ्गिनां य,—
च्छिवफलमपि मङ्गं लाति यत्तत्पराध्यम् ।
परमपुरुषमन्त्रो मङ्गलं मङ्गलानां,
श्रुतपठनतपस्यानुत्तरा तज्जपः स्यात् ॥ ९१ ॥

यद् यस्मात्कारणात् परमपुरुषमन्त्रः पञ्चत्रिंशदक्षरोऽपराजितमन्त्रो गालयति नाशयति । किं तत् ? मलं पापम् । किं विशिष्टम् ? अखिलं समस्तमुपात्तमागामि च । कया ? उपास्त्या वाङ्मनसजपकरणलक्षणाराधनेन । केषाम् ? अङ्गिनां प्राणिनाम् । यदपि यच्च लाति आदत्ते स्वीकरोति ददाति वा वितरति । किं तत् ? मङ्गं पुण्यम् । कीदृशम् ? शिवफलमभ्युदयनिःश्रेयसप्रयोजनम् ।

उक्तं च–

मलं पापमिति प्रोक्तमुपचारसमाश्रयात् ।
तद्धि गालयतीत्युक्तं मङ्गलं पण्डितैर्जैनैः ॥

तथा,

मङ्गशब्दोयमुद्दिष्टः पुण्यार्थस्याभिधायकः ।
तल्लातीत्युच्यते सद्भिर्मङ्गलं मङ्गलार्थिभिः ॥

तत् तस्मात्कारणाद्भवति। कोसौ ? परमपुरुषमन्त्रः। किम् ? **मङ्गलं,** मलं गालयति मङ्गं च लातीति मङ्गलशब्दस्य व्युत्पादनात्। किंविशिष्टं मङ्गलं भवति ? **पराध्यं** प्रधानम्। केषां मध्ये ? **मङ्गलानां** लौकिक कल्याणानाम्। यथाह—

**एसो[1] पंचणमोकारो सव्वपावप्पणासणो।**
**मंगलाणं च सव्वेसिं पढमं होइ मंगलं॥**

स्यात् च। कोसौ ? **तज्जपस्तस्य** परमपुरुषमन्त्रस्य जपो वाचिको मानसो वा जप्यः। किं स्यात् ? **श्रुतपठनतपस्या** स्वाध्यायाख्यं तपः। किंविशिष्टा ? **अनुत्तरा** परमा। नास्त्युत्तरमुत्कृष्टं यस्याः सानुत्तरा। यथाह—

**स्वाध्यायः परमस्तावज्जपः पञ्चनमस्कृतेः।**
**पठनं वा जिनेन्द्रोक्तशास्त्रस्यैकाग्रचेतसा॥**

आशीःशान्त्यादिवचनरूपस्यापि मङ्गलस्यार्हद्ध्याननिष्ठस्य श्रेयस्करत्वं कथयति—

**अर्हद्ध्यानपरस्यार्हन् शं वो दिश्यात्सदास्तु वः।**
**शान्तिरित्यादिरूपोपि स्वाध्यायः श्रेयसे मतः॥ ९२॥**

**मतो**भिप्रेतः पूर्वाचार्यैः। कोसौ ? **स्वाध्यायः**। कस्मै ? **श्रेयसे** पुण्याय परम्परया मोक्षाय च। कस्य ? **अर्हद्ध्यानपरस्य**। अर्हद्ध्यानं परं प्रधानं यस्य तस्य। किंविशिष्टः ? **अर्हन् शं वो दिश्या**दिति **सदास्तु वः शान्ति**रिति चादिर्यस्य जयवादादेः सोयमर्हन् शं वो दिश्यात्सदास्तु वः शान्तिरित्यादिः। स एव रूपं लक्षणं यस्य स तथोक्तः। **अपि**शब्दो 'न केवलं वाचनादिरूपः स्वाध्यायः श्रेयसे मतः। किं तर्हि ? आशीर्वचनशान्तिवचनजयवादादिरूपोपि' इत्येवमर्थः। दिश्याद् देयात्। कोसौ ? **अर्हन्** अर्हद्भट्टारकः। किं तत् ? शं श्रेयः। केभ्यः ? वो युष्मभ्यम्। तथा **अस्तु** भवतु। कासौ ? शान्तिः। केषाम् ? वो युष्माकम्। कथम् ? सदा सर्वकालम्। शान्तिलक्षणं यथा—

---

१ एष पञ्चनमस्कारः सर्वपापप्रणाशनः।
मङ्गलानां च सर्वेषां प्रथमं भवति मंगलम्॥

सुखतद्धेतुसंप्राप्तिर्दुःखतद्धेतुवारणम् ।
तद्धेतुहेतवश्चान्यदपीदृक् शान्तिरिष्यते ॥

जयवादो यथा—

जयन्ति निर्जिताशेषसर्वथैकान्तनीतयः ।
सत्यवाक्याधिपाः शश्वद्विद्यानन्दा जिनेश्वराः ॥

तथा,—

जयन्ति विधुताशेषबन्धना धर्मनायकाः ।
त्वं धर्मविजयी भूत्वा तत्प्रसादाज्जयाखिलम् ॥

तथा,—

जयत्वसौ श्रीवृषभो जिनेश्वरः,
सुरावधूतासितचामरावली ।
बभौ यदङ्गे प्रतिबिम्बिताभितो,
रवेरिवान्तश्चलदिन्दुसंहतिः ॥

तथा,—

नतामरशिरोरत्नप्रभाप्रोतनखत्विषे ।
नमो जिनाय दुर्वारमारवीरमदच्छिदे ॥

तथा, "स्वस्ति त्रिलोकगुरवे जिनपुङ्गवाय" इत्यादि[1] । स्वाध्यायः ।

अथ व्युत्सर्गं द्विभेदमुक्त्वा द्विधैव तद्भावनामाह—

**बाह्यो भक्तादिरुपधिः क्रोधादिश्चान्तरस्तयोः ।**
**त्यागं व्युत्सर्गमस्वन्तं मितकालं च भावयेत् ॥ ९३ ॥**

**भावयेत्** पुनः पुनश्चेतसि निवेशयेन्मुमुक्षुः । कम् ? **व्युत्सर्गं** व्युत्सर्गाख्यं तपः । कियन्तं कालम् ? **अस्वन्तं** प्राणान्तम् । यावज्जीवमित्यर्थः । असवः प्राणा अन्ते यस्य सोऽस्वन्तः । न केवलं, **मितकालं च**

१ स्वस्ति स्वभावमहिमोदयसुस्थिताय । स्वस्ति प्रसन्नललिताद्भुतवैभवाय । स्वस्ति त्रिकालसकलायतविस्तृताय ॥ इति चरणत्रयमग्रे ।

मुहूर्तादिनियतसमयम् । मितः परिमितः कालो मुहूर्तादिनियतः समयो यत्र तत् । किंलक्षणं व्युत्सर्गं भावयेत् ? त्यागं त्यजनम् । कयोः ? तयोः । तयोरिति कोर्थः ? यः किम् ? यः स्यादुपधिः परिग्रहः । किंविशिष्टः ? बाह्यो बहिर्भव आत्मनानुपात्तः । तेन सहैकत्वमनापन्न इत्यर्थः । किंरूपोऽसौ ? भक्तादिः आहारवसत्यादिः । न केवलं बाह्यः, अन्तरश्चान्तर्भव आत्मनोपात्तः । तेन सहैकत्वमापन्न इत्यर्थः । किंरूपोसौ ? क्रोधादिः । उक्तं च—

व्युत्सर्गः सङ्गते धर्मे प्रायश्चित्ते तपस्यपि ।
पुंशक्त्यपेक्षयाऽन्वाख्यदुत्साहाय यथोत्तरम् ॥

व्युत्सर्गशब्दार्थं निरुक्त्या व्यनक्ति—

**बाह्याभ्यन्तरदोषा ये विविधा बन्धहेतवः ।**
**यस्तेषामुत्तमः सर्गः स व्युत्सर्गो निरुच्यते ॥ ९४ ॥**

हि यस्मात् स व्युत्सर्गो निरुच्यते निर्वचनगोचरीक्रियते नैरुक्तैः । यः किम् ? यः सर्गः । किंविशिष्टः ? उत्तम उत्कृष्टः । केषाम् ? तेषाम् । ये किम् ? ये बाह्याभ्यन्तरदोषाः । बाह्या पितृकलत्रादिसंसर्गलक्षणाः । अभ्यन्तरा ममकारादिलक्षणाः । बाह्याश्च अभ्यन्तराश्च बाह्याभ्यन्तराः । ते च ते दोषाश्च बाह्याभ्यन्तरदोषाः । किंविशिष्टाः ? बन्धहेतवो बन्धस्य कारणानि । कतिविधाः ? विविधा विचित्रा द्वयेपि । विविधानां दोषाणामुत्तमः प्राणान्तिको लाभादिनिरपेक्षश्च सर्गः सर्जनं त्यजनं व्युत्सर्ग इति व्युत्पादना । उक्तं च—

अशेषमद्वैतमभोग्यभोग्यं निवृत्तिवृत्त्योः परमार्थकोट्याम् ।
अभोग्यभोग्यात्मविकल्पबुद्ध्या निवृत्तिमभ्यस्यतु मोक्षकाङ्क्षी ॥
निवृत्तिं भावयेद्यावन्निवर्त्यं तदभावतः ।
न वृत्तिर्न निवृत्तिश्च तदेव पदमव्ययम् ॥
रागद्वेषौ प्रवृत्तिः स्यान्निवृत्तिस्तन्निषेधनम् ।
तौ च बाह्यार्थसंबद्धौ तस्मात्तान् सुपरित्यजेत् ॥

व्युत्सर्गस्वामिनमुत्कर्षतो निर्दिशति—

**देहाद्विविक्तमात्मानं पश्यन् गुप्तित्रयीं श्रितः।**
**स्वाङ्गेपि निस्पृहो योगी व्युत्सर्गं भजते परम् ॥ ९५॥**

**योगी** सद्ध्याननिष्ठो यतिः **परमुत्कृष्टं व्युत्सर्गं भजते**नुभवति। किंविशिष्टः? **श्रित** आश्रितः। काम्? **गुप्तित्रयीं** मयोवाक्कायानां सम्यग्योगनिग्रहम्। किं कुर्वन्? **पश्यन्** अनुभवन्। कम्? **आत्मानम्**। किंविशिष्टम्? **विविक्तं** भिन्नम्। कस्मात्? **देहात्**। पुनः किंविशिष्टः? **निस्पृहो** निरीहः। क्व? **स्वाङ्गे** स्वशरीरे। न केवलं, बहिरर्थे इत्यपिशब्दार्थः। उक्तं च—

अतिसुतपसामाशावल्लीशिखा तरुणायते,
भवति हि मनोमूले यावन्ममत्वजलार्द्रता।
इति कृतधियः कृच्छ्रारम्भैश्चरन्ति निरन्तरं,
च्चिरपरिचिते देहेप्यस्मिन्नतीवगतस्पृहाः॥

प्रकारान्तरेणान्तरङ्गोपधिव्युत्सर्गमाह—

**कायत्यागश्चान्तरङ्गोपधिव्युत्सर्ग इष्यते।**
**स द्वेधा नियतानेहा सार्वकालिक इत्यपि ॥ ९६ ॥**

**इष्यते** पूर्वसूरिभिः। कोसौ? **कायत्यागश्च** कायत्यागोपि। किंविशिष्टः? **अन्तरङ्गोपधिव्युत्सर्गः**। **स** च कायत्यागो **द्वेधा** भवति। किंविशिष्टः? **नियतानेहाः** परिमितकालः। न केवलं, **सार्वकालिक इत्यपि** सर्वस्मिन् काले भव इति च।

परिमितिकालस्य द्वौ भेदावाह—

**तत्राप्याद्यः पुनर्द्वेधा नित्यो नैमित्तिकस्तथा।**
**आवश्यकादिको नित्यः पर्वकृत्त्यादिकः परः ॥ ९७ ॥**

**तत्रापि** परिमितकालसार्वकालिकयोर्मध्ये **आद्यः** प्रथमः परिमितकालः कायत्यागः **पुनर्द्वेधा** द्विद्विप्रकारो भवति। कस्कः? **नित्यो नैमित्तिकस्तथा**। तयोर्लक्षणमाह—भवति। कोसौ? **नित्यः** कायत्यागः।

किंविशिष्टः ? आवश्यकादिक आवश्यकमलोत्सर्गाद्याश्रयः । परो नैमित्तिकः कायत्यागो भवति । किंविशिष्टः ? पर्वकृत्यादिकः पार्वण-क्रियानिषद्याक्रियापुरस्सरः पर्वस्वष्टम्यादिषु कृतिः क्रिया पर्वकृतिः ।

प्राणान्तिककायत्यागस्य त्रैविध्यमाह—

**भक्तत्यागेङ्गिनीप्रायोपयानमरणैस्त्रिधा ।**
**यावज्जीवं तनुत्यागस्तत्राद्योऽर्हादिभावभाक् ॥ ९८ ॥**

भवति । कोसौ ? तनुत्यागः कायत्यागः । कथम् ? यावज्जीवम् सार्वकालिक इत्यर्थः । कतिधा ? त्रिधा त्रिप्रकारः । कैः ? भक्तत्यागेङ्गिनीप्रायोपयानमरणैः । भक्तत्यागमरणं भक्तप्रत्याख्यानमरणम् इङ्गिनीमरणं स्ववैयावृत्त्यसापेक्षपरवैयावृत्त्यनिरपेक्षम् । प्रायोपयानमरणं स्वपरवैयावृत्त्य-निरपेक्षम् । प्रायोपगमनमरणमित्यर्थः । प्रायो लोकादपयानमपगमनमप-सरणं प्रायोपयानम् । भक्तत्यागश्चेङ्गिनी च प्रायोपयानं च भक्तत्यागेङ्गिनी-प्रायोपयानानि । तान्येव मरणानि प्राणत्यागः । प्रायः सर्वसङ्गपरित्यागे सति चतुर्विधाहारपरिहारः 'संन्यासवत्यनशने पुमान् प्राय' इत्यभिधा-नात् । प्रायस्योपयानमुपगमनं स्वीकारो यस्मिन्मरणे तत् प्रायोपया-नम् । प्रायोपगमनमिति रूढम् । तदेव पादोपगमनमित्याख्यायते पादाभ्यामुपगमनं ढौकनं संघान्निर्गत्य योग्यदेशस्याश्रयणम् । तेन प्रव-र्तितं मरणं पादोपगमनमरणम् । स्वपरवैयावृत्त्यनिरपेक्षः प्राणत्याग उच्यते रूढिवशात्, तदेव च प्रायोपवेशनमित्याम्नायते । प्रायेण पूर्वोक्तलक्षणेनोपवि-शत्यस्मिंस्तपोनिधिरित्यन्वर्थाश्रयणात् । उक्तं च—

**"ततः कालात्यये धीमान् श्रीप्रभाद्रौ समुन्नते ।**
**प्रायोपवेशनं कृत्वा शरीराहारमत्यजत् ॥**
**रत्नत्रयमयीं शय्यामधिशय्य तपोनिधिः ।**
**प्रायेणोपविशत्यस्मिन्नित्यन्वर्थत्वमापिबत् ॥" इति ।**

तत्र तेषु भक्तत्यागेङ्गिनीप्रायोपयानेषु मध्ये आद्यः प्रथमो भक्तत्यागो भवति । किं विशिष्टः ? अर्हादिभावभाक् । अर्हादिभावानर्हल्लिङ्गादि-पदार्थान् भजति श्रयत्यर्हादिभावभाक् । अर्हादिभावं वा अर्हादित्वं भजति तद्वान् भवतीत्यर्थः । तद्यथा—

अर्हो लिङ्गं तथा शिक्षा विनयश्च समाधिता
विहारो नियमेनैव परिणामस्ततः परः ॥
उपध्युज्झा श्रितिश्चैव भावना च ततः परा ।
सल्लेखनादिशा क्षान्तिः शिष्टिश्चर्या परे गणे ॥
मार्गणासु स्थितश्चोपसर्पणं च परीक्षणम् ।
निरूपणं तथा प्रश्नः प्रतिपृच्छ्यैकसंग्रहः ॥
गुरोरालोचना चैव गुणदोषास्तथैव च ।
वसतिः संस्तरश्चैव निर्यापकपरिग्रहः ॥
प्रकाशनं तथा हानिः प्रत्याख्यानं क्षमापणम् ।
क्षमणं चानुशिष्टिश्च सारणा कवचं तथा ॥
समता च तथा ध्यानं लेश्या चैव फलं ततः ।
आराधकशरीरस्य त्यागश्चेति समुच्चयः ॥

अर्हः सविचारभक्तप्रत्याख्यानस्य योग्यः । लिङ्गं चिह्नम् । शिक्षा श्रुताध्ययनम् विनयो मर्यादा । ज्ञानादिभावना व्यवस्था हि ज्ञानादिविनयतया प्रागुक्ता । उपास्तिर्वा विनयः । समाधिः समाधानम् शुभोपयोगे वा मनस एकताकरणम् । अनियतविहारोऽनियतक्षेत्रावासः । परिणामः स्वकार्यपर्यालोचनम् । उपध्युज्झा परिग्रहपरित्यागः । श्रितिरारोहणम् । भावनाऽभ्यासः । सल्लेखना कायस्य कषायाणां च सम्यक्कृशीकरणम् । दिशा एलाचार्यः । क्षान्तिर्गणक्षमापणा । शिष्टिः सूत्रानुसारेण गणस्य शिक्षादानम् । चर्या परे गणे अन्यस्मिन्संघे गमनम् । मार्गणा आत्मनो रत्नत्रयशुद्धिं समाधिमरणं च संपादयितुं समर्थस्य सूरेरन्वेषणम् । सुस्थित आचार्यः । परोपकारकरणे स्वप्रयोजने च सम्यक् स्थितत्वात् । उपसर्पणमुपसंपत् । आचार्यस्यात्मसमर्पणम् । परीक्षणं परीक्षा गणपरिचारकादिगोचरा । निरूपणमाराधना निर्विघ्नसिद्ध्यर्थं देशराज्यादिकल्याणगवेषणम् । प्रश्नः किमयमस्माभिरनुग्रहीतव्यो न वेति संघमुद्दिश्य पृच्छा । प्रतिपृच्छ्यैकसंग्रहः संघं पुनः पृष्ट्वा तदनुमतेनैकस्य क्षपकस्य स्वीकारः । गुरोरालोचना सूरेः स्वदोषनिवेदनम् । गुणदोषा गुणा दोषाश्च, प्रत्यासत्तेरालोचनाया एव । शय्या वसतिः संस्तरः प्रस्तरः । निर्यापकपरिग्रहः आराधकस्य समाधिसहायपरिवर्गः । प्रकाशनं चरमाहारप्रकटनम् । हानिः

क्रमेणाहारत्यागः। प्रत्याख्यानं त्रिविधाहारपरित्यागः । क्षमापणमाचार्यादीनां क्षमाग्राहणम्। क्षमणं स्वस्यान्यकृतापराधक्षमा । अनुशिष्टिर्निर्यापकाचार्येणाराधकस्य शिक्षणम् । सारणा दुःखाभिभवान्मोहं गतस्य चेतनाप्रापणा। कवचं धर्माद्युपदेशेन दुःखनिवारणम् । समता जीवितमरणादिषु रागद्वेषयोरकरणम्। ध्यानमेकाग्रचिन्तानिरोधः। लेश्या कषायानुरञ्जितयोगप्रवृत्तिः । फलमाराधनासाध्यम् । आराधकशरीरस्य त्यागः क्षपकदेहोज्झनम्।

अत्रत्येदानींतनसाधुवृन्दारकानात्मनः प्रशममर्थयते—

भक्तत्यागविधेः सिसाधयिषया येऽर्हाद्यवस्थाः क्रमा,—
च्चत्वारिंशतमन्वहं निजबलादारोढुमुद्युञ्जते ।
चेष्टाजल्पनचिन्तनच्युतचिदानन्दामृतस्रोतसि,
स्नान्तः सन्तु शमाय तेऽद्य यमिनामत्राग्रगण्या मम ॥ ९९ ॥

सन्तु भवन्तु । के ? ते यमिनां यावज्जीवं व्रतधारिणामग्रगण्या अग्रे गण्यमानाः अग्रेसरा इत्यर्थः। कस्मै ? शमाय प्रशमार्थम् । कस्य ? मम। क्व वर्तमानाः ? अत्रेह क्षेत्रे । कदा ? अद्य अधुना । किं कुर्वन्तः ? स्नांतो मज्जन्तः शुद्धिं विदधानाः । क्व ? चेष्टेत्यादि। चेष्टा कायकृतो व्यापारः। जल्पनं वचनम्। चिन्तनं चिन्ता। चेष्टा च जल्पनं च चिन्तनं च। तेभ्यश्च्युतः किंचिदपेत ईषदुन्मिषत् क्षयोपशमभावमापन्नः। चिदानन्दो ज्ञानानन्दः । स एवामृतस्रोतः सुधाप्रवाहस्तस्मिन् चेष्टाजल्पनचिन्तनच्युतचिदानन्दामृतस्रोतसि। ये किम् ? ये उद्युञ्जते उत्सहन्ते। किं कर्तुम् ? आरोढुं प्रकर्षं प्रापयितुं । काः ? अर्हाद्यवस्था अर्हल्लिङ्गादिपर्यायान्। कति ? चत्वारिंशतं द्विविंशतिसंख्याः। कस्मात् ? निजबलात् स्वसामर्थ्यात्। कथम् ? अन्वहमनुदिनम् । कस्मात् ? क्रमात् क्रममाश्रित्य । एतेन दीक्षा शिक्षा गणपोषणमात्मसंस्कारः सल्लेखना उत्तमार्थश्चेति षोढा कालक्रमं लक्षयति। कया ? सिसाधयिषया साधयितुमिच्छया । कस्य ? भक्तत्यागविधेः भक्तप्रत्याख्यानप्रतिज्ञावतः ।

कान्दर्पादिसंक्लिष्टभावनापरिहारेणात्मसंस्कारकाले तपःश्रुतसत्त्वैकत्वधृति-भावनाः प्रयुञ्जानस्य परीषहविजयमुपदिशति—

**कान्दर्पीप्रमुखाः कुदेवगतिदाः पञ्चापि दुर्भावना,—**
**स्त्यक्त्वा दान्तमनास्तपःश्रुतसदाभ्यासादबिभ्यद्भृशम् ।**
**भीष्मेभ्योपि समिद्धसाहसरसो भूयस्तरां भावय,—**
**न्नेकत्वं न परीषहैर्धृतिसुधास्वादे रतस्तप्यते ॥ १०० ॥**

**न तप्यते** न संक्लिश्यते तपस्वी । कैः ? **परीषहैः** क्षुदादिभिः । किंविशिष्टः सन् ? **रत** आसक्तः । क्व ? **धृतिसुधास्वादे** । धृतिः स्वरूपधारणा । संतोष इति यावत् । धृतिरेव सुधा अमृतं धृतिसुधा । तस्याः स्वादश्चर्वणं, तस्मिन् । किं कुर्वन् ? **भावयन्** । किं तत् ? **एकत्वम्** । कथम् ? **भूयस्तरां** पुनः पुनः । किं कुर्वन् ? **अबिभ्यद्** भयमगच्छन् । केभ्योपि ? **भीष्मेभ्योपि** ? भयानकेभ्योपि वेतालादिभ्यः । कथम् । **भृशम**त्यर्थम् । किंविशिष्टो यतः ? **समिद्धसाहसरसः** संततदीप्तसाहसिकभावः । सत्त्वभावनां भजन्नित्यर्थः । किंविशिष्टः ? **दान्तमना** दमितचित्तः । कस्मात् ? **तपःश्रुतसदाभ्यासात्** तपःश्रुतयोर्नित्यभावनातः । किं कृत्वा ? **त्यक्त्वा** । काः ? **दुर्भावनाः** । किंविशिष्टाः ? **कान्दर्पीप्रमुखाः** । कियन्तीः ? **पञ्चापि** । कीदृशीस्ताः ? **कुदेवगतिदा** भाण्डतौरिककाहारशौनिककुकुरप्रायदेवदुर्गतिप्रदाः । तथा चोक्तम्—

कान्दर्पी कैल्विषी चैव भावना चाभियोगजा ।
दानवी चापि संमोहा त्याज्या पञ्चतयी च सा ॥
कन्दर्पं कौत्कुच्यं विहेतनं हासनर्मणी विदधत् ।
परविस्मयं च सततं कान्दर्पी भावनां भजते ॥
केवलिधर्माचार्यश्रुतसाधूनामवर्णवादपरः ।
मायावी च तपस्वी कैल्बिषिकीं भावनां कुरुते ॥
मन्त्राभियोगकौतुकभूतक्रीडादि कर्म कुर्वाणः ।
सातरसर्द्धिनिमित्तादभियोगां भावनां भजते ॥
अनुबद्धरोषविग्रहसंसक्ततया निमित्तसंसेवी ।

निष्करुणो निरनुशयो दानवभावं मुनिर्धत्ते ॥
सन्मार्गप्रतिकूलो दुर्मार्गप्रकथने पटुप्रज्ञः ।
मोहेन मोहयन्नपि संमोहां भावनां श्रयति ॥
आभिश्च भावनाभिर्विराधको देवदुर्गतिं लभते ।
तस्याः प्रच्युतमात्रः संसारमहोदधिं भ्रमति ॥

तप इत्यादि । उक्तं च—

तपसः श्रुतस्य सत्त्वस्य भावनैकत्वभावना ज्ञेया ।
धृतिबलविभावनापि च सैषा श्रेष्ठापि पञ्चविधा ॥
दान्तादिसुभावनया तपसस्तस्येन्द्रियाणि यान्ति वशम् ।
इन्द्रिययोग्यं च मनः समाधिहेतुं समाचरति ॥

इन्द्रिययोग्यमिति इन्द्रियवश्यतापरिकर्म ।

श्रुतभावनया सिध्यन्ति बोधचारित्रदर्शनतपांसि ।
प्रकृतासन्धां तस्मात् सुखमव्यथितः समापयति ॥
रात्रौ दिवा च देवैर्विभीष्यमाणो भयानकै रूपैः ।
साहसिकभावरसिको वहति धुरं निर्भयः सकलाम् ॥
एकत्वभावरसिको न कामभोगे गणे शरीरे वा ।
सजति हि विरागयोगी स्पृशति सदानुत्तरं धर्मम् ॥
सकलपरीषहपृतनामागच्छन्तीं सहोपसर्गौघैः ।
दुर्धरपथकरवेगां भयजननीमल्पसत्त्वानाम् ॥
धृतिनिबिडबद्धकक्षो विनिहन्ति निराकुलो मुनिः सहसा ।
धृतिभावनया शूरः संपूर्णमनोरथो भवति ॥

भक्तप्रत्याख्यानस्य लक्षणं सल्लेखनायाः प्रभृत्युत्कर्षतो जघन्यतश्च कालमुपदिशति—

**यस्मिन् समाधये स्वान्यवैयावृत्त्यमपेक्ष्यते ।**
**तद्द्वादशाब्दानीषेन्तर्मुहूर्तं चाशनोज्झनम् ॥ १०१ ॥**

ईषे इष्टं पूर्वाचार्यैः । किं तत्? अशनोज्झनं भक्तप्रत्याख्यानमरणम् । कान्? अब्दान् संवत्सरान् । कति? द्वादश ।

न केवलम्, अन्तर्मुहूर्तं च। उत्कर्षतो द्वादशवर्षाणि जघन्यतोन्तर्मुहूर्तं चेत्यर्थः। यस्मिन् किम्? यस्मिन्नपेक्ष्यते समाधिकामैः। किं तत्? स्वान्यवैयावृत्त्यम्। कस्मै? समाधये रत्नत्रयैकाग्रतार्थम्। स्वपरवैयावृत्त्यसापेक्षं भक्तप्रत्याख्यानमरणमित्यर्थः।

व्युत्सर्गतपसः फलमाह—

**नैःसङ्ग्यं जीविताशान्तो निर्भयं दोषविच्छिदा।**
**स्याद्व्युत्सर्गाच्छिवोपायभावनापरतादि च॥ १०२॥**

स्यात्। किं तत्? नैःसङ्ग्यादि। कस्मात्? व्युत्सर्गात्। नैःसङ्ग्यं नैर्ग्रन्थ्यम्। जीविताशान्तो जीविताशाया नाशः। निर्भयं भयाभावः। दोषविच्छिदा रागादिदोषविच्छेदः। शिवोपायभावनापरता रत्नत्रयाभ्यासप्राधान्यम्। आदिशब्दादभ्युदयनिःश्रेयसे च। व्युत्सर्गः।

अथ दुर्ध्यानविधानपुरस्सरं सद्ध्यानविधानमभिधाय तेन विना केवलक्रियानिष्ठस्य मुक्त्यभावं भावयन्नाह—

**आर्तं रौद्रमिति द्वयं कुगतिदं त्यक्त्वा चतुर्धा पृथग्,**
**धर्म्यं शुक्लमिति द्वयं सुगतिदं ध्यानं जुषस्वानिशम्।**
**नो चेत्क्लेशनृशंसकीर्णजनुरावर्ते भवाब्धौ भ्रमन्,**
**साधो सिद्धिवधूं विधास्यसि मुधोत्कण्ठामकुण्ठश्चिरम् १०३**

हे साधो सिद्धिसाधनोद्यत, जुषस्व प्रीत्या सेवस्व त्वमनिशं नित्यम्। किं तत्? ध्यानम्। कीदृशम्? द्वयम्। कथम्? धर्म्यं शुक्लं चेति। कतिधा? चतुर्धा। कथम्? पृथक् प्रत्येकम्। आज्ञापायविपाकसंस्थानविचयविकल्पाच्चतुर्विधं धर्म्यम्। पृथक्त्ववितर्कवीचारमेकत्ववितर्कावीचारं सूक्ष्मक्रियाप्रतिपाति व्युपरतक्रियानिवर्ति चेति शुक्लमपि चतुर्विधम्। किंविशिष्टमुभयमपि? सुगतिदं सुदेवत्वसुमानुषत्वमुक्तिप्रदम्। किं कृत्वा? त्यक्त्वा। किं तत्? ध्यानम्। कीदृशम्? द्वयम्। कथम्? आर्तं रौद्रं चेति। कतिधा? चतुर्धा। कथम्? पृथक् आर्तममनोज्ञस्य संप्रयोगे तद्विप्रयोगाय स्मृतिसमन्वाहारो, मनोज्ञस्य विप्रयोगे तत्संप्रयोगाय स्मृतिसमन्वाहारो, वेदनायाः उपनिपतिते तदपनीतये स्मृतिसमन्वाहारो,

निदानं च, इति चतुर्विधम् । रौद्रमपि हिंसानृतस्तेयविषयसंरक्षणेभ्यः स्मृतिसमन्वाहारश्चतुर्धा । किंविशिष्टमुभयमपि ? कुगतिदं तिर्यङ्नारककुदेवकुमानुषत्वप्रदम् । नो चेद् यद्यनिशं ध्यानं धर्म्यं शुक्लं च न जोषिष्यसे तर्हि साधो विधास्यसि करिष्यसि त्वम् । काम् ? सिद्धिवधूं मुक्तिकान्ताम् । किंविशिष्टाम् ? मुधोत्कण्ठां विफलोत्कलिकाम् । किंविशिष्टः सन् ? अकुण्ठः । कुण्ठो मन्दः क्रियासु यः । न कुण्ठोऽकुण्ठः । श्रेयोर्थक्रियासूद्यत इत्यर्थः । किं कुर्वन् ? भ्रमन् पर्यटन् । क ? भवाब्धौ संसारसमुद्रे । किंविशिष्टे ? क्लेशनृशंसकीर्णजनुरावर्ते । जनूंषि जन्मान्येवावर्ता जलभ्रमणानि जनुरावर्ताः । क्लेशा एव नृशंसाः क्रूरकर्मकरा मकरादिजलचराः क्लेशनृशंसाः । तैः कीर्णाः संकुलाः क्लेशनृशंसकीर्णाः । तथाविधा जनुरावर्ता यस्मिन् स एवम् । कियद्भ्रमन् ? चिरं बहुतरकालम् । सद्ध्यानविहीनस्य शुभकर्मसु तत्परस्य सिद्धिवधूरुत्कण्ठमानापि चिरकालभाविनी भविष्यति ध्यानैकसाध्यत्वात्तस्या इति भावः ।

तथा चोक्तम्—

सपयत्थं तित्थयरं अधिगदबुद्धिस्स सुत्तरोइस्स ।
दूरतरं णिव्वाणं संजमपदसंपदं तस्स ॥

ध्यानम् ।

तपस उद्द्योतनाद्याराधनापञ्चकं प्रपञ्चयंस्तत्फलमाह—

**यस्त्यक्त्वा विषयाभिलाषमभितो हिंसामपास्यंस्तप,—**
**स्यागूर्णो विशदे तदेकपरतां बिभ्रत्तदेवोद्गतिम् ।**
**नीत्वा तत्प्रणिधानजातपरमानन्दो विमुञ्चत्यसून् ,**
**स स्नात्वाऽमरमर्त्यशर्मलहरीष्वीर्ते परां निर्वृतिम् ॥१०४॥**

ईर्ते गच्छति । कोसौ ? स साधुः । काम् ? निर्वृतिं मुक्तिम् । किंविशिष्टाम् ? परां परमाम् । जीवन्मुक्तिमनुभूय परममुक्तिमासादयतीत्यर्थः । किं कृत्वा ? स्नात्वा आप्लुत्य । कासु ? अमरमर्त्यशर्मलहरीषु । अमराश्चमर्त्याश्चामरमर्त्याः । तेषां शर्माणि सुखानि । तेषां लहर्यः परम्परास्तासु । यः किम् । यो विमुञ्चति विधिपूर्वकं त्यजति । कान् ? असून्

प्राणान्। किंविशिष्टः सन्? **तत्प्रणिधानजातपरमानन्दः**। तत्र विशदे तपसि प्रणिधानं समाधानमेकलोलीभावस्तत्प्रणिधानम्। तेन जातः संपन्नः परमानन्द उत्कृष्टः प्रमोदो यस्य स एवम्। किं कृत्वा? **नीत्वा** प्रापय्य। किं तत्? **तदेव** विशदं तप एव। काम्? **उद्गतिं** समुन्नतिं ध्यानावसानम्। तपः कृत्वेत्यर्थः। किं कुर्वन्? **बिभ्रद्** धारयन्। काम्? **तदेकपरताम्**। तद् विशदं तप एकमद्वितीयं परं प्रधानं यस्यासौ तदेकपरः। तस्य भावस्तत्ता, ताम्। कथंभूतो भूत्वा? **आगूर्णः** उद्यतः। क्व? **तपसि**। किंविशिष्टे? **विशदे** निर्मले। किं कुर्वन्? **अपास्यन्** निराकुर्वन्। काम्? **हिंसाम्**। कथम्? **अभित** उभयतः। द्रव्यहिंसां भावहिंसां च निरस्यन्नित्यर्थः। किं कृत्वा? **त्यक्त्वा** विहाय। कम्? **विषयाभिलाषमिन्द्रियार्थस्पृहाम्**। त्यक्त्वा विषयाभिलाषमभितो हिंसामपास्यन्नित्युद्योतनोक्तिरियम्। तपस्यागूर्णो विशदे इत्युद्यवनोपदेशोयम्। तदेकपरतां बिभ्रदिति निर्वहणभणतिरियम्। तदेवोद्गतिं नीत्वेति साधनाभिधानमिदम्। तत्प्रणिधानजातपरमानन्दो विमुञ्चत्यसूनिति निस्तरणनिरूपणेयम्। इति भद्रम्। (ग्रन्थसंख्या १२५६)

योधर्मामृतमुद्दधार सुमनस्तृप्त्यै जिनेन्द्रागम,—<br>
क्षीरोदं शिवधीर्निमथ्य जयतात्स श्रीमदाशाधरः।<br>
भव्यात्मा हरदेव इत्यभिधया ख्यातश्च नन्द्यादिमं,<br>
टीकाशुक्तिमचीकरत्सुखमिमां तस्योपयोगाय यः॥

इत्याशाधरविरचितायां स्वोपज्ञधर्मामृतानगारधर्मटीकायां<br>
भव्यकुमुदचन्द्रिकासंज्ञायां तपस्याराधनाविधानीयो<br>
नाम सप्तमोऽध्यायः॥ ७॥



# अथ अष्टमोऽध्यायः ॥ ८ ॥

इदानीं तपसो विनयभावेन यथोक्तमावश्यकमावहन्नित्युपक्षिप्तषडावश्यकानुष्ठानमासूत्रयति—

**अयमहमनुभूतिरितिस्ववित्तिविषजत्तथेतिमतिरुचिते ।**
**स्वात्मनि निःशङ्कमवस्थातुमथावश्यकं चरेत् षोढा ॥ १ ॥**

**अथेति** मङ्गलेऽधिकारे वा । इत आवश्यकमधिक्रियते इत्यर्थः । **चरे**-दनुतिष्ठेत् तपस्वी । किं तत् ? **आवश्यकं** वक्ष्यमाणलक्षणम् । कतिधा ? **षोढा** षट्प्रकारम् । किं कर्तुम् ? **अवस्थातुमवस्थानं** कर्तुम् । प्रतिक्षणमुत्पादव्ययध्रौव्यैकत्वलक्षणां वृत्तिमवलम्बितुमित्यर्थः । कथं यथा भवति ? **निःशङ्कं** निश्चितं शं सुखं यत्र तन्निःशङ्कम् । शेषाद्वा कः । अथवा शङ्कायाः संशयान्निष्क्रान्तं निःशङ्कं कृत्वा । लक्षणया निश्चलमित्यर्थः । क्वावस्थातुम् ? **स्वात्मनि** स्वस्वरूपे । कीदृशे ? **अयमहमनुभूतिरितिस्ववित्तिविषजत्तथेति मतिरुचिते** । यथा येन शुद्धज्ञानघनत्वलक्षणेन प्रकारेणावस्थितिः स्वात्मा तथा तेन प्रकारेणानुभवामीति मतिः श्रद्धा तथेतिमतिः । मतिशब्दोऽत्र श्रद्धानार्थो, 'मतिबुद्धिपूजार्थेभ्यः क्तः' इत्यभिधानात् । तथा प्रतीतिरित्यर्थः । अयं स्वसंवेदनप्रत्यक्षेणालभ्यमानोऽहमहमित्युल्लेखेनानुभूयमानश्चास्मि । कीदृशः ? **अनुभूतिरनुभवः** स्वपरज्ञप्तिरूप इत्येवंलक्षणा स्ववित्तिरात्मसंवेदनम् अयमहमनुभूतिरितिस्ववित्तिः । तया विषजन्ती संगच्छमाना अशक्यविवेचनत्वेनैकलोलीभवन्ती तथेतिमतिरयमहमनुभूतिरिति स्ववित्तिविषजत्तथेतिमतिः । तथा रुचितः श्रद्धित आत्मनात्मनि निश्चितः सोयं तथोक्तः ॥

मुमुक्षोः षडावश्यककर्मनिर्माणसमर्थनार्थं चतुर्दशभिः पद्यैः स्थलशुद्धिं विधत्ते । तत्र तावदात्मदेहान्तरज्ञानेन वैराग्येण चाभिभूततत्सामर्थ्यो विषयोपभोगो न कर्मबन्धाय प्रभवतीति दृष्टान्तावष्टम्भेनाचष्टे—

**मन्त्रेणेव विषं मृत्यवै मध्वरत्या मदाय वा ।**
**न बन्धाय हतं ज्ञप्त्या न विरक्त्यार्थसेवनम् ॥ २ ॥**

न भवति । किं तत् ? **अर्थसेवनं** विषयोपभोगः । कस्मै ? **बन्धाय** पुंसः कर्मबन्धनार्थम् । किंविशिष्टं सत् ? **हतं** प्रतिबद्धकर्मबन्धनसामर्थ्यम् । कया ? **ज्ञप्त्या** आत्मदेहान्तरज्ञानेन । किमिव ? **विषमिव** । इव-शब्दो यथार्थे । यथा न भवति । किं तत् ? विषम् । कस्यै ? **मृत्यवे** मरणार्थम् । किंविशिष्टं स्यात् ? हतं प्रतिबद्धमरणसामर्थ्यम् । केन ? **मन्त्रेण** । तथा प्रकृतेपीत्यर्थः । तथा न च भवति ? किं तत् ? अर्थसेवनम् । कस्मै ? बन्धाय । किंविशिष्टं सत् ? हतं प्रतिबद्धकर्मबन्धनसामर्थ्यम् । कया ? **विरक्त्या** आत्मदेहान्तरज्ञानोत्थवैराग्येण । किमिव ? **मधु वा** । वा शब्दो यथार्थे । यथा न भवति । किं तत् ? मधु मद्यम् । कस्मै ? **मदाय** क्षीवतार्थम् । किंविशिष्टं सत् ? हतं प्रतिबद्धमदकरणसामर्थ्यम् । कया ? **अरत्या** मधुविषयाऽप्रीतिभावेन । तथा प्रकृतमपीत्यर्थः । उक्तं च—

**जह विसमुव[1]भुंजंता विज्जापुरुषा दु ण मरणमुवेंति ।**
**पोग्गलकम्मस्सुदअं तह भुंजदि णेव भुंजए णाणी ॥**
**जह मज्जं पिवमाणो अरईभावेण मज्जदि ण पुरिसो ।**
**दव्वुव भोगे अरदो णाणी वि ण मज्झदि तहेव ॥**

अपि च—

**धात्रीबालाऽसतीनाथपद्मिनीदलवारिवत् ।**
**दग्धरज्जुवदाभासाद् भुञ्जन् राज्यं न पापभाक् ॥**

तथा,—

**बन्धो जन्मनि येन येन निबिडं निष्पादितो वस्तुना,**
**बाह्यार्थैकरतेः पुरा परिणतप्रज्ञात्मनः सांप्रतम् ।**
**तत्तत्तन्निधनाय साधनमभूद्वैराग्यकाष्ठास्पृशो,**
**दुर्बोधं हि तदन्यदेव विदुषामप्राकृतं कौशलम् ॥**

---

१ यथा विषमुपभुञ्जन्तो विद्यापुरुषा न मरणमुपयान्ति ।
पुद्गलकर्मण उदयं तथा भुङ्क्ते नैव भुंक्ते ज्ञानी ॥
यथा मद्यं पिबन्नरतिभावेन माद्यति न पुरुषः ।
द्रव्योपभोगे अरतो ज्ञानी अपि न बध्यते तथैव ॥

ज्ञानिनो विषयोपभोगः स्वरूपेण सन्नपि विशिष्टफलाभावान्नास्तीति दृष्टान्तेन दृढयति—

**ज्ञो भुञ्जानोपि नो भुङ्क्ते विषयांस्तत्फलात्ययात् ।**
**यथा परप्रकरणे नृत्यन्नपि न नृत्यति ॥ ३ ॥**

**नो भुङ्क्ते** उपयोगवैमुख्यान्नानुभवति । कोसौ ? **ज्ञः** । जानातीति ज्ञो ज्ञाता आत्मज्ञानोपयुक्तः पुमान् । कान् ? **विषयान्** इन्द्रियार्थान् । किं कुर्वाणोपि ? **भुञ्जानोपि** चेष्टामात्रेणानुभवन् विषयान् । न केवलम्, अभुञ्जान इत्यपिशब्दार्थः । कस्मात् ? **तत्फलात्ययात्** तस्य विषयभोजनस्य फलं साध्यं तत्फलम् । तथाविधबुद्धिपूर्वकरागादिजनितकर्मबन्धोद्यादिमेव लोके श्लाघ्यतमः यस्येदृक्कल्याणप्रवृत्तिः इत्याभिमानिकरसानुविद्धप्रीत्यनुबन्धश्च । तस्यात्ययोऽभावस्तथाविधविषयोपभोगफलाभावस्तस्मात् । इममेवार्थं दृष्टान्तेनावष्टभ्नाति—यथेत्यादि । **यथा न नृत्यति** उपयोगवैमुख्यान्न नटति । कोसौ ? पुरुषः । किं कुर्वन्नपि ? **नृत्यन्नपि** चेष्टामात्रेण नटन्नपि नानटन् । क्व **परप्रकरणे** परस्यान्यस्य प्रकरणं विवाहाद्युत्सवस्तस्मिन् । कस्मात् ? **तत्फलात्ययात्** । उक्तं च—

**सेवंतोपि[१] ण सेवइ असेवमाणोवि सेवओ कोवि ।**
**पयरणचेट्ठा कस्सवि ण य पायरणोत्ति सो होइ ॥**

ज्ञान्यज्ञानिनोः कर्मबन्धं विशिनष्टि—

**नाबुद्धिपूर्वा रागाद्या जघन्यज्ञानिनोपि हि ।**
**बन्धायालं तथा बुद्धिपूर्वा अज्ञानिनो यथा ॥ ४ ॥**

**हि** यस्मान्न भवन्ति । के ? **रागाद्याः** । किंविशिष्टाः ? **अबुद्धिपूर्वाः** । न बुद्धिरात्मदृष्टिः पूर्वं कारणं येषां त एवम् । कथम् ? **अलं** समर्थाः । कस्मै ? **बन्धाय** कर्मबन्धार्थम् । कस्य ? **जघन्यज्ञानिनो** हीनज्ञानवतः

---

१ सेवमानोपि न सेवते असेवमानोपि सेवकः ।
प्रकरणचेष्टा कस्यापि न च प्राकृत इति स भवति ॥

पुंसः । न मध्यमज्ञानिन उत्कृष्टज्ञानिनो वेत्यपिशब्दार्थः । कथम् ? तथा तेन अवश्यभोक्तव्यसुखदुःखफलत्वलक्षणेन प्रकारेण । यथाह—

रागद्वेषकृताभ्यां जन्तोर्बन्धः प्रवृत्त्यऽवृत्तिभ्याम् ।
तत्त्वज्ञानकृताभ्यां ताभ्यामेवेष्यते मोक्षः ॥

यथावश्यभोक्तव्यसुखदुःखफलत्वलक्षणेन प्रकारेण बुद्धिपूर्वा रागाद्या अज्ञानिनो बन्धायालं भवन्ति ।

अनादिसंतत्या प्रवर्तमानमात्मनः प्रमादाचरणमनुशोचति—

मत्प्रच्युत्य परेहमित्यवगमादाजन्म रज्यन् द्विषन्,
प्राङ्मिथ्यात्वमुखैश्चतुर्भिरपि तत्कर्माष्टधा बन्धयन् ।
मूर्तैर्मूर्तमहं तदुद्भवभवैर्भावैरसंचिन्मयै,—
र्योजं योजमिहाद्ययावदसदं ही मां न जात्वासदम् ॥५॥

असदमवसादमगममहं खेदं गतोस्मीत्यर्थः । कथम् ? अद्ययावदिदं दिनावधि । क ? इह संसारे । किं कृत्वा ? योजं योजं परिणम्य परिणम्य कैः ? भावैर्भावमिथ्यात्वरागादिभिः । कीदृशैः ? तदुद्भवभवैः । तस्य मूर्तकर्मण उद्भव उद्भूतिरुदयस्तदुद्भवः । तस्माद्भवन्ति तदुद्भवभवास्तैः । मूर्तकर्मोदयार्थैरित्यर्थः । पुनः कीदृशैः ? असंचिन्मयैः स्वसंविदितैरपि परार्थसंचेतनशून्यत्वेनाज्ञानमयैः । किं कुर्वन् ? बन्धयनात्मानमात्मना बध्नन् प्रयुञ्जानः । उक्तं च—

अप्पा[1] कुणदि सहावं तत्थ गदा पुग्गला सहावेहिं ।
गच्छंति कम्मभावं अण्णुण्णागाढमोगाढा ॥

अपि च,—

जीवकृतं परिणामं निमित्तमात्रं प्रपद्य पुनरन्ये
स्वयमेव परिणमन्तेत्र पुद्गलाः कर्मभावेन ॥

---

१ आत्मा करोति स्वभावं तत्र गताः पुद्गलाः स्वभावैः ।
गच्छन्ति कर्मभावमन्योन्यागाढमवगाढाः ॥

किंतत्? **तत्** प्रसिद्धं ज्ञानावरणादिकर्म । कतिधापि ? **अष्टधापि** अष्टविधं प्रतिसमयमायुर्वर्जज्ञानावरणादि सप्तविधं कर्म । कदाचिदष्टप्रकारं बन्धयन्नपीत्यपिशब्दार्थः । कीदृशं कर्म? **मूर्तं** पौद्गलिकत्वात् स्पर्शरसगन्धवर्णयुक्तम् । कैः कर्तृभिर्बन्धयन्? **प्राङ्मिथ्यात्वमुखैः** पूर्वोपात्तमिथ्यात्वासंयमकषाययोगैः । मिथ्यात्वं मुखमादिर्येषां तानि मिथ्यात्वमुखानि । प्रागुपात्तानि मिथ्यात्वमुखानि प्राङ्मिथ्यात्वमुखानि, तैः । कीदृशैः ? **मूर्तैः** द्रव्यरूपत्वात्पौद्गलिकैः । कतिभिः ? **चतुर्भिः** प्रमादस्याविरतावन्तर्भावाच्चतुःसंख्यैः । उक्तं च—

**सामंण्ण[1] पच्चया खलु चदुरो भणंति बंधकत्तारो ।**
**मिच्छत्तं अविरमणं कसाय जोगा य बोद्धव्वा ॥**

किं कुर्वन्? **रज्यन्**निष्टार्थे प्रीतिं कुर्वन् । तथा **द्विषन्** अनिष्टार्थे अप्रीतिं कुर्वन् । कियत्कालम्? **आजन्म** आसंसारम् । कस्मात्? **अहमित्यवगमात्** अहमिति ज्ञानात् । क्व ? **परे** शरीरादौ । शरीरादिकमहमिति निश्चिन्वन्नित्यर्थः । किं कृत्वा ? **प्रच्युत्य** पराङ्मुखीभूय । कस्मात् ? **मत्** मत्तश्चिच्चमत्कारमात्रस्वभावादात्मनः । **जातु** कदाचिदपि **नासदं** न प्रापमहम् । न प्राप्तोस्मीत्यर्थः । कम् ? **मां** चिच्चमत्कारमात्रस्वभावमात्मानम् । कथम्? **हा** कष्टम् ।

भेदविज्ञानात्पूर्वं व्यवहारादेव परं प्रत्यात्मनः कर्तृत्वभोक्तृत्वे परमार्थतश्च ज्ञातृत्वमात्रमनुचिन्त्य भेदविज्ञानाच्छुद्धस्वात्मानुभूतये प्रयत्नं प्रतिजानीते—

**स्वान्यावऽप्रतियन् स्वलक्षणकलानैयत्यतोऽस्वेऽहमि—**
**त्यैक्याध्यासकृतेः परस्य पुरुषः कर्ता परार्थस्य च ।**
**भोक्ता नित्यमहंतयानुभवनाज्ज्ञातैव चार्थात्तयो,—**
**स्तत्स्वान्यप्रविभागबोधबलतः शुद्धात्मसिद्ध्यै यते ॥ ६ ॥**

अस्ति । कोसौ ? **पुरुष** आत्मा । कीदृशः ? **कर्ता** । कस्य ? **परस्य**

१ सामान्यं प्रत्ययान् खलु चतुरो भणन्ति बन्धकर्तॄन् ।
मिथ्यात्वमविरमणं कषाययोगाश्च बोद्धव्याः ॥

कर्मादेः । न केवलं, भोक्ता चास्ति । कस्य ? परार्थस्य कर्मादिफलस्य । कस्याः ? अहमित्यैक्याध्यासकृतेरहमित्येकत्वाध्यारोपकरणात् । क ? अस्वेऽनात्मनि । परस्मिन् शरीरादौ व्यवहारादेव कर्तृत्वभोक्तृत्वे भजन्नि-त्यर्थः । किं कुर्वन् ? अप्रतियन् प्रतीतिविषयावकुर्वन् । कौ ? स्वान्यौ आत्म-नात्मकौ । कस्मात् ? स्वलक्षणकलानैयत्यतः स्वं प्रतिनियतं लक्षणं स्वरूपं स्वलक्षणम् । तस्य कला विशेषः । तस्या नैयत्यं नियमस्तस्मात् । प्रतिनियत-स्वरूपविशेषनियमात् तदाश्रित्य । तर्हि कीदृशः स्वरूपतः पुरुष इत्याह—नित्यमित्यादि । अस्ति च पुरुषः । कीदृशः ? ज्ञातैव ज्ञायक एव । कयोः ? तयोः कर्मादितत्फलयोः । कस्मात् ? अर्थात् परमार्थतः । कस्मात् ? अनु-भवनात् संवेदनात् । कया ? अहंतया अहमित्यस्य भावोऽहंता, तया । अहमित्युल्लेखेनेत्यर्थः । कथम् ? नित्यं सर्वदा । यथाह—

मा कर्तारममी स्पृशन्तु पुरुषं सांख्या इवा ह्यार्हताः,
कर्तारं कलयन्तु तं किल सदा भेदावबोधादधः ।
ऊर्ध्वं तूद्धतबोधधामनियतं प्रत्यक्षमेनं स्वयं,
पश्यन्तु च्युतकर्तृभावमचलं ज्ञातारमेकं परम् ॥

यत एवं तत् तस्मात्कारणाद् यते संप्रति यत्नं करोम्यहम् । कस्यै ? शुद्धात्मसिद्ध्यै निर्मलस्वात्मसंप्राप्त्यर्थम् । कस्मात्? स्वान्यप्रविभागबो-धबलतः । स्वश्चान्यश्च स्वान्यौ आत्मानात्मानौ । स्वान्ययोः प्रविभागो भेदः स्वान्यप्रविभागः । तस्य बोधो ज्ञानम् । तस्य बलं सामर्थ्यं, तस्मात् । अन्यच्छरीरमन्योहमित्यादिभेदज्ञानावष्टम्भादित्यर्थः ।

आत्मनः सम्यग्दर्शनरूपतामनुसंधत्ते—

यदि टङ्कोत्कीर्णैकज्ञायकभावस्वभावमात्मानम् ।
रागादिभ्यः सम्यग्विविच्य पश्यामि सुदृगस्मि ॥ ७ ॥

तदा अस्मि भवाम्यहम् । कीदृशः ? सुदृक् सम्यग्दर्शनरूपः । यदि किम् ? यदि पश्याम्यनुभवाम्यहम् । कम् ? आत्मानम् । कीदृशम् ? टङ्कोत्कीर्णैकज्ञायकभावस्वभावम् । टङ्कः पाषाणदारणः । टङ्केनोत्कीर्ण इव टङ्कोत्कीर्णो निश्चलसुव्यक्ताकारः । एकः कर्तृत्वभोक्तृत्वरहितः । टङ्कोत्की-र्णश्चासावेकश्च टङ्कोत्कीर्णैकः । स चासौ ज्ञायकश्च ज्ञाता टङ्कोत्कीर्णैकज्ञायकः ।

तस्य भावस्तद्भावः । स एव स्वभावो यस्य स एवम् । किं कृत्वा ? **विविच्य** पृथक्त्वेनानुभूय । केभ्यः ? **रागादिभ्यो** रागद्वेषमोहक्रोधमानमायालोभ-कर्मनोकर्ममनोवचनकायेन्द्रियेभ्यः । कथम् ? **सम्यग**विपरीतम् ।

रागादिभ्यः स्वात्मनो विभक्तत्वं समर्थयते—

**ज्ञानं जानत्तया ज्ञानमेव रागो रजत्तया ।**
**राग एवास्ति नत्वन्यत्तच्चिद्रागोस्म्यचित् कथम् ॥ ८ ॥**

**अस्ति** । किं तत् ? **ज्ञानम्** । किमस्ति ? **ज्ञानमेव** । कया ? **जानत्तया** जानद्रूपतया । स्वपरावभासकस्वभावतयेत्यर्थः । **न त्वस्ति** । किं तत् ? ज्ञानम् । किं नास्ति ? **अन्यद्** वस्त्वन्तरम् । राग इत्यर्थः । तथास्ति । कोसौ ? **रागः** । किमस्ति ? **राग एव** । कया ? **रजत्तया** रज्यद्रूपतया । इष्टविषय-प्रीत्युत्पादकस्वभावतयेत्यर्थः । न त्वस्ति । कोसौ ? रागः । किं नास्ति ? अन्यद् वस्त्वन्तरम् । ज्ञानमित्यर्थः । यत एवं **तत्** तस्मात्**कथमस्मि** ? कोसौ ? अहं **चित्** चिद्रूपः । स्वपरावभासकज्ञानस्वभावत्वात् । किमस्मि ? रागः । किंरूपो रागः ? **अचित्** स्वसंविदितोपि परस्वरूपवेदनशून्यत्वादचे-तनः । उपलक्षणमेतत् । तेन द्वेषादिभ्योप्येवमात्मा विवेच्यः । तथा हि,—

अस्ति । किं तत् ? ज्ञानम् । किमस्ति ? ज्ञानमेव । कया ? जानत्तया जान-द्रूपतया । स्वपरावभासकस्वभावतयेत्यर्थः । न त्वस्ति किं तत् ? ज्ञानम् । किं नास्ति ? अन्यद् वस्त्वन्तरम् । द्वेष इत्यर्थः । तथास्ति । कोसौ ? द्वेषः । किमस्ति ? द्वेष एव । कया ? द्विषत्तया अनिष्टार्थाप्रीत्युत्पादकस्वभावतयेत्यर्थः । न त्वस्ति । कोसौ ? द्वेषः । किं नास्ति ? अन्यद् वस्त्वन्तरम् । ज्ञानमित्यर्थः । यत एवं तत् तस्मात्कथमस्मि ? कोसौ ? अहं चित् चिद्रूपः । स्वपरावभास-कज्ञानस्वभावत्वात् । किमस्मि ? द्वेषः । किंरूपो द्वेषः ? अचित् स्वसंवि-दितोपि परस्वरूपसंचेतनशून्यत्वादचेतनः । एवं मोहादावपि योज्यम् ।

एतदेव स्पष्टयितुं दिङ्मात्रमाह—

**नान्तरं वाङ्मनोप्यस्मि किं पुनर्बाह्यमङ्गगीः ।**
**तत कोऽङ्गसङ्गजेष्वैक्यभ्रमो मेऽङ्गाऽङ्गजादिषु ॥ ९ ॥**

**नास्मि** न भवाम्यहम् । किं तत् ? **वाङ्मनोपि** । वाक् च मनश्च वाङ्मन इति समाहारद्वन्द्वः । किं विशिष्टम् ? **आन्तरम्** अन्तर्भवम् । अन्तर्जल्पविकल्परूपमित्यर्थः । वाङ्मन इति 'सान्तो विधिरनित्य' इत्यभिधानात्, "स्त्रीधेनुवाग्दारात् पुमनडुन्मनोगोभ्यः ॥ ४।२।७३ ॥" इत्यनेन न समासान्तः । किं पुनरस्मि भवाम्यहम् । किंविशिष्टम् ? **अङ्गगीर्देहवाचम्** । अङ्गं च गीश्चेति समाहारः । किंविशिष्टम् ? **बाह्यं** बहिर्भवम् । देहस्य द्रव्यवाचश्च पौद्गलिकत्वादेवमुच्यते । यत एवं **तत्** तस्मात् **कः** । न कोपि स्यात् । कोसौ ? **ऐक्यभ्रम** एकत्वभ्रान्तिः । कस्य ? **मे** मम । केषु ? **अङ्गजादिषु** पुत्रकलत्रमातापित्रादिषु । किंविशिष्टेषु ? **अङ्गसङ्गजेषु** शरीरसंसर्गजातेषु । 'शरीरं मत्तो भिन्नम् । पुत्रा मत्तो भिन्नाः । कलत्रादयोपि मत्तो भिन्नाः । तेभ्योहमपि तत्त्वतो भिन्नः' इत्येवमध्यवस्यामीत्यर्थः । अङ्गेतिप्रियत्वामन्त्रणे ॥

आत्मनोष्टाङ्गसद्दृष्टिरूपतामन्वाचष्टे—

**यत्कस्मादपि नो बिभेति न किमप्याशंसति क्वाप्युप,—**
**क्रोशं नाश्रयते न मुह्यति निजाः पुष्णाति शक्तीः सदा ।**
**मार्गान्न च्यवतेञ्जसा शिवपथं स्वात्मानमालोकते,**
**माहात्म्यं स्वमभिव्यनक्ति च तदस्म्यष्टाङ्गसद्दर्शनम् ॥ १०**

**अस्मि** भवाम्यहम् । किं तत् ? **तदष्टाङ्गसद्दर्शनम्** । अष्टावङ्गानि निःशङ्कितत्वादीनि यस्य तदष्टाङ्गम् । तच्च तत्सद्दर्शनं च तत्त्वार्थश्रद्धानम् । यत्किम् ? **यन्नो बिभेति** न शङ्कते न त्रस्यति । कस्मात् ? **कस्मादपि** कुतश्चिदिहलोकभयं परलोकभयमत्रातृभयमगुप्तिभयं मरणभयं वेदनाभयमकस्माद्भयमित्येवंविधभयनिमित्तात् । उक्तं च—

**रूपैर्भयंकरैर्वाक्यैर्हेतुदृष्टान्तसूचिभिः ।**
**जातु क्षायिकसम्यक्त्वो न क्षुभ्यति विनिश्चलः ॥**

निःशङ्कितत्वोक्तिरियम् । एवं क्रमेणोत्तरवाक्यैर्निःकाङ्क्षितत्वादीनि सप्त बोद्धव्यानि । तथा **यन्नाशंसति** न काङ्क्षति । किं तत् ? **किमपि** इह

जन्मनि भोगादिकं परत्र शक्रत्वादिकं परसमयं च। तथा यन्नाश्रयते नालम्बते। कम्? उपक्रोशं जुगुप्साम्। विचिकित्सामित्यर्थः। क्व? क्वापि पुरीषादिद्रव्ये क्षुदादिभावे च। तथा यन्न मुह्यति न विपर्येति। क्व? क्वापि क्वचिद्देवताभासादौ। क्वापीत्यनुवृत्त्यात्रापि योज्यम्। तथा यत् पुष्णाति पोषयति। काः? शक्तीः। किंविशिष्टाः? निजाः कर्मसंवरण-निर्जरणमोक्षणाभ्युदयप्रापणदुर्गतिनिवारणादिलक्षणाः। सदेति मध्यदीपकत्वात् सर्ववाक्येषु योज्यम्। तथा यन्न च्यवते न चलति न भ्रश्यति। कस्मात्? मार्गात् पथो रत्नत्रयलक्षणात्। तथा यदालोकते पश्यति। कम्? स्वात्मानं निजचिद्रूपम्। किंविशिष्टम्? शिवपथं निर्वाणमार्गम्। कथम्? अञ्जसा परमार्थेन। तथा यदभिव्यनक्ति समन्ततः प्रकाशयति। किं तत्? माहात्म्यं महिमानमचिन्त्यशक्तिविशेषम्। किंविशिष्टम्? स्वमात्मीयम्। नैसर्गिकमित्यर्थः। उक्तं च—

किं पलविएण[1] बहुणा सिद्धा जे णरवरा गए काले।
सिज्झिहहिँ जे वि भविया तं जाणह सम्ममाहप्पं॥

एवंविधाष्टाङ्गसम्यग्दर्शनं भवामीत्यर्थः।

आत्मनो ज्ञानविषयरत्यादिपरिणतिं परामृशति—

**सत्यान्यात्माशीरनुभाव्यानीयन्ति चैव यावदिदम्।**
**ज्ञानं तदिहास्मि रतः संतुष्टः संततं तृप्तः॥ ११॥**

भवन्ति। कानि? आत्माशीरनुभाव्यानि। आत्मा पुरुषः। आशीरनागतस्येष्टस्यार्थस्याशातनमाशंसनम्। अनुभाव्यमनुभवनीयम्। आत्मा चाशीश्चानुभाव्यं चात्माशीरनुभाव्यानि। कथंभूतानि भवन्ति? सत्यानि परमार्थसन्ति। कियन्ति? इयन्ति चैव एतावन्त्येव। यावत्किम्? यावद् यन्मात्रमिदं स्वयं प्रतीयमानं ज्ञानम्। तथा हि—एतावानेव सत्य आत्मा यावदिदं स्वयं संवेद्यमानं ज्ञानम्। तथैतावत्येव सत्या आशीर्यावदिदं स्वयं

---

१ किं प्रलपितेन बहुना सिद्धा ये नरवरा गते काले।
सेत्स्यन्ति येपि भविकास्तज्जानीहि सम्यग्माहात्म्यम्॥

संवेद्यमानं ज्ञानम्। तथैतावदेव सत्यमनुभवनीयं यावदिदं स्वयं संवेद्यमानं ज्ञानम्। यत एवं तत् तस्मादस्मि भवाम्यहम्। किंविशिष्टः? रत आसक्तः। क? इह ज्ञाने। कथम्? संततं नित्यम्। तथेह ज्ञाने संततं संतुष्टोस्मि संतोषं गतोस्मि। तथेह ज्ञाने संततं तृप्तः सुखीभूतोस्मि।

भेदज्ञानादेव बन्धोच्छेदे सति मोक्षलाभादनन्तं सुखं स्यादित्यनुशास्ति—

**क्रोधाद्यास्रवविनिवृत्तिनान्तरीयकतदात्मभेदविदः।**
**सिध्यति बन्धनिरोधस्ततः शिवं शं ततोऽनन्तम् ॥ १२ ॥**

सिध्यति निष्पद्यते। कोसौ? बन्धनिरोधः कर्मबन्धविनाशः। कस्याः सकाशात्? क्रोधादीत्यादि। अत्रादिशब्दो व्यवस्थाभवनः। तेन पुंसः पारतन्त्र्यनिमित्तानां रागद्वेषमोहानां वादरेतरयोगानामघातिकर्मतीव्रमन्दोदययोः कालविशेषस्य च ग्रहणम्। कर्मास्रवत्यनेनेत्यास्रवः। क्रोधादिश्चासावास्रवश्च क्रोधाद्यास्रवः। तस्य विशेषेण निवृत्तिः क्रोधाद्यास्रवविनिवृत्तिः। तया नान्तरीयकी अविनाभूता क्रोधाद्यास्रवविनिवृत्तिनान्तरीयकी। संवरसहभाविनीत्यर्थः। तच्छब्देन क्रोधाद्यास्रवः परामृश्यते। आत्मशब्देन च चेतनः। स क्रोधाद्यास्रवश्चात्मा च तदात्मानौ। तयोर्भेदो विवेकः। तस्य विद् ज्ञानं तदात्मभेदवित्। क्रोधाद्यास्रवविनिवृत्तिनान्तरीयकी चासौ तदात्मभेदविच्च क्रोधाद्यास्रवविनिवृत्तिनान्तरीयकतदात्मभेदवित्, तस्यास्ततः। उक्तं च—

भेदविज्ञानतः सिद्धाः सिद्धा ये किल केचन।
अस्यैवाभावतो बद्धा बद्धा ये किल केचन ॥

ततश्च बन्धनिरोधात् सिध्यति। किं तत्? शिवं मोक्षः। ततोपि शिवाच्छं सुखं सिध्यति। कीदृशम्? अनन्तं शाश्वतम्।

प्रकृतमुपसंहरन् शुद्धात्मसंविल्लाभादधःक्रियामूरीकरोति—

**इतीदृग्भेदविज्ञानबलाच्छुद्धात्मसंविदम्।**
**साक्षात्कर्मोच्छिदं यावल्लभे तावद्भजे क्रियाम् ॥ १३ ॥**

भजे सेवे। कोसौ? अहम्। काम्? क्रियां सम्यग्ज्ञानपूर्वकमावश्य-

कम् । कथम् ? **तावद्** । यावत्किम् ? **यावल्लभे** प्राप्नोम्यहम् । काम् ? **शुद्धात्मसंविदम्** । शुद्धः सर्वविवर्तोत्तीर्णः । स चासावात्मा च शुद्धात्मा। तस्य संवित् संवित्तिः शुद्धात्मसंवित्, ताम् । कीदृशीम् ? **साक्षात्कर्मोच्छिदम्** । साक्षादव्यवधानेन कर्माणि घातीनि अघातीनि च उच्छिनत्ति उन्मूलयति साक्षात्कर्मोच्छित्, ताम् । कस्मात् ? **इतीदृग्भेदविज्ञानबलात्** । इत्येवं स्वरूपम्, ईदृगीदृशं सूत्रे यथोपदिष्टं भेदविज्ञानमितीदृग्भेदविज्ञानम् । तस्य बलं सामर्थ्यं, तस्मात् । सैषा न्यग्भावितज्ञानक्रियाप्रधाना मुमुक्षोरधस्तनभूमिका परिकर्मतयोपदिष्टा । यथाह—

यावत्पाकमुपैति कर्मविरतिर्ज्ञानस्य सम्यङ्‌ न सा,
कर्मज्ञानसमुच्चयोपि विहितस्तावन्न काचित् क्षतिः ।
किन्त्वत्रापि समुल्लसत्यवशतो यत्कर्मबन्धाय त,—
न्मोक्षाय स्थितमेकमेव परमं ज्ञानं विमुक्तं स्वतः ॥

ननु च मुमुक्षुश्च बन्धनिबन्धनक्रियापरश्चेति विप्रतिषिद्धमेतत् इत्यत्र समाधत्ते—

**सम्यगावश्यकविधेः फलं पुण्यास्रवोपि हि ।**
**प्रशस्ताध्यवसायोंहश्छित् किलेति मतः सताम् ॥१४॥**

**किल** इत्यागमोक्तौ । आगमे ह्येवं श्रूयते । **हि** यस्माद्भवति । कोसौ ? **प्रशस्ताध्यवसायः** शुभपरिणामः । कीदृशो भवति ? **अंहश्छित्** अंहसः पापस्यापनेता । कीदृशोपि ? **पुण्यास्रवोपि** पुण्यास्रवणकारणमपि । किंरूपोसौ ? **फलं** साध्यम् । कस्य ? **सम्यगावश्यकविधेः** । आवश्यकस्य विधिर्विधानमावश्यकविधिः । सम्यगविपरीतश्चासावावश्यकविधिश्च सम्यगावश्यकविधिस्तस्य । **इति** हेतोर्**मतो** मन्यते । कोसौ ? प्रशस्ताध्यवसायः । केषाम् ? **सतां** साधूनाम् । सद्भिरिष्यते इत्यर्थः । उक्तं च—

आवश्यकं न कर्तव्यं नैष्फल्यादित्यसांप्रतम् ।
प्रशस्ताध्यवसायस्य फलस्यात्रोपलब्धितः ॥
प्रशस्ताध्यवसायेन संचितं कर्म नाश्यते ।
काष्ठं काष्ठान्तकेनेव दीप्यमानेन निश्चितम् ॥

ननु मुमुक्षोः पापबन्ध इव पुण्यबन्धोपि कथमनुरोद्धव्यः स्यादिति वदन्तं प्रत्याह—

**मुमुक्षोः समयाकर्तुः पुण्यादभ्युदयो वरम्।**
**न पापाद्दुर्गतिः सह्यो बन्धोपि ह्यक्षयश्रिये ॥ १५ ॥**

**वरं** मनागिष्टः स्यात्। कोसौ? **अभ्युदयः** स्वर्गादिपदप्राप्तिः। कस्मात्? **पुण्या**द्धेतोः। कस्य? **मुमुक्षो**र्मोक्तुमिच्छोः। किंविशिष्टस्य? **समयाकर्तुः** कालं यापयतः। समया[1]सपत्रेत्यादिना साधुः। अथवा, अयो बोधः। समो रागद्वेषाभ्यामपरिणतः। समश्चासावयश्च समय उदासीनज्ञानम्। शकन्ध्वादित्वात् समशब्दस्य पररूपम्। करोतीत्येवंशीलः कर्ता। न कर्ता अकर्ता। समयमकर्ता समयाकर्ता। तस्य समयाकर्तुः। उदासीनज्ञानाकरणशीलस्येत्यर्थः। **न वरं** न मनागपीष्टा स्यात्। कासौ? **दुर्गति**र्नरकादिगतिर्मिथ्याज्ञानं दारिद्र्यं वा। कस्मात्? **पापा**द्धेतोः। यथाह—

**वरं व्रतैः पदं दैवं नाव्रतैर्बत नारकम्।**
**छायातपस्थयोर्भेदः प्रतिपालयतोर्महान् ॥**

अत्र समर्थनमाह–सह्य इत्यादि। **हि** यस्मात्सह्यः सोढुं योग्यः। कोसौ? **बन्धोपि** प्रकृतत्वात्पुण्यबन्धः। कस्यै? **अक्षयश्रिये** शाश्वतलक्ष्म्यर्थम्। अयमत्राभिप्रायः—यथा निर्व्याजभक्तिभाजोऽनुजीविनः स्वामिना कथमपि निगडिताः सन्तः पुनस्ततः शाश्वतीं श्रियमिच्छन्तस्तद्भक्तिमेवोपचिन्वन्ति, तथा मुमुक्षवोपि शुद्धस्वात्मानुभूतिमविन्दन्तो जिनभक्तिभाविताः सन्तस्तदुपदिष्टां क्रियां चरन्तस्तन्निबन्धनं पुण्यबन्धमपवर्गलक्ष्मीसिद्ध्यङ्गध्यानसाधनसमर्थोत्तमसंहननादिनिमित्तत्वादभ्युपगच्छन्ति।

एवं कर्तव्यतया व्यवस्थापितस्यावश्यकस्य निर्वचनद्वारेणावतार्य लक्षणमुपलक्षयति—

**यद्व्याध्यादिवशेनापि क्रियतेऽक्षावशेन तत्।**
**आवश्यकमवश्यस्य कर्माहोरात्रिकं मुनेः ॥ १६ ॥**

१ समयासपत्रानिष्पत्रानिष्कुलासुखाप्रियादुःखाशूलासत्याभद्रामद्राः ॥ (४। २। ६४)

तन्मुनेः संयतस्य **कर्म आवश्यकं** भण्यते । किं विशिष्टम् ? **आहोरात्रिकमहोरात्रे** भवम् । कालाट्ठण् । किंविशिष्टस्य ? **अवश्यस्य** व्याध्युपसर्गाद्यभिभूतस्येन्द्रियायत्तस्य वा । वश्यः स्वाधीनः । न वश्योऽवश्यः पराधीनः । व्याध्युपसर्गाद्यभिभूत इत्यर्थः । अथवा वश्य इन्द्रियायत्तः । न वश्योऽवश्य इन्द्रियानायत्त इत्यर्थः । अवश्यस्य कर्मावश्यकमिति । द्वन्द्वमनोज्ञादेः ॥ ३ । ४ । १२३ ॥ इति वुञ् । अमुमेवार्थं समर्थयमानः प्राह—यदित्यादि । यत्किम् ? **यत्क्रियतेऽक्षावशेन** मुनिना । किं तत् ? **आहोरात्रिकं** कर्म । किं विशिष्टेन ? **व्याध्यादिवशेन** । न केवलं, स्वस्थेनेत्यपिशब्दार्थः । अथवा व्याध्यादिवशेन अक्षावशेनापि इन्द्रियानायत्तेन चेति योज्यमपिशब्दस्य विकल्पार्थत्वादव्ययानामनेकार्थत्वात् ।

आवश्यकस्य भेदोद्देशार्थमाह—

**सामायिकं चतुर्विंशतिस्तवो वन्दना प्रतिक्रमणम् ।**
**प्रत्याख्यानं कायोत्सर्गश्चावश्यकस्य षड् भेदाः ॥ १७ ॥**

भवन्ति । के ? **भेदा** विकल्पाः । कति ? **षट्** । कस्य ? **आवश्यकस्य** विभाग उद्देशे एवान्तर्भवतीति न पृथगुक्तिः । किं किम् ? "सामायिकं चतुर्विंशतिस्तवो वन्दना प्रतिक्रमणं प्रत्याख्यानं कायोत्सर्गश्च ।" चः समुच्चये ।

निक्षेपविरहितं शास्त्रं व्याख्यायमानं वक्तुः श्रोतुश्चोत्पथोत्थानं कुर्यात् इति नामादिषु षट्सु पृथक् पृथग् निक्षिप्तानां सामायिकादीनां षण्णामप्यनुष्ठेयतामुपदिशति—

**नामस्थापनयोर्द्रव्यक्षेत्रयोः कालभावयोः ।**
**पृथग्निक्षिप्य विधिवत्साध्याः सामायिकादयः ॥ १८ ॥**

**साध्या** व्याख्येयाः सूरिभिः । के ते ? **सामायिकादयः** । किं कृत्वा ? **निक्षिप्य** न्यस्य । किंवत् ? **विधिवद्** आवश्यकनिर्युक्तिनिरूपितविधानेन । कयोः ? **नामस्थापनयोः** । न केवलं, **द्रव्यक्षेत्रयोः** । न केवलं, **कालभावयोश्च** । चशब्दोत्र लुप्तनिर्दिष्टो द्रष्टव्यः । कथम् ?

**पृथक्** । अन्तर्नीतवीप्सार्थोत्र पृथक्शब्दो बोद्धव्यः । पृथक् पृथगित्यर्थः । अत्र नामादिषु प्रत्येकं निक्षिप्य विधिवत् साध्याः सामायिकादयः । नामसामायिकं स्थापनासामायिकं द्रव्यसामायिकं क्षेत्रसामायिकं कालसामायिकं भावसामायिकं चेति सामायिकं षोढा । एवं चतुर्विंशतिस्तवादयोपि निक्षेप्तव्याः । एवमेते समुदिताः षट्त्रिंशन्निक्षेपाः स्युः ।

सामायिकस्य निरुक्त्या लक्षणमालक्षयति—

**रागाद्यबाधबोधः स्यात् समायोस्मिन्निरुच्यते ।**
**भवं सामायिकं साम्यं नामादौ सत्यऽसत्यपि ॥ १९ ॥**

**स्यात्** । कोसौ ? **समायः** । किंविशिष्टः ? **रागाद्यबाधबोधः** । रागाद्यबाधो रागद्वेषाभ्यामबाध्यमानः समो भण्यते । बोधस्त्वयः । रागाद्यबाधश्चासौ बोधश्च रागाद्यबाधबोधः समायो भवेदित्यर्थः ।

अस्मिन्नित्यादि । **निरुच्यते** अर्थानुगतं कथ्यते । किं तत् ? **सामयिकम्** । किं विशिष्टम् ? **भवं** भवतीति भवमुपलभ्यमानम् । क्व ? **अस्मिन्** समाये । उपयुक्तनोआगमभावसामायिकाख्ये तत्परिणतनोआगमभावसामायिकाख्यमित्यर्थः । किं रूपम् ? **साम्यं** समस्य कर्म । शुद्धचिन्मात्रसंचेतनमित्यर्थः । क्व साम्यम् ? **नामादौ** नामस्थापनादौ । किंविशिष्टे ? **सति** प्रशस्ते, **असति** चाप्रशस्ते । तथा हि—नामसामायिकं शुभाशुभनामानि श्रुत्वा रागद्वेषवर्जनम् । स्थापनासामायिकं यथोक्तमानोन्मानादिगुणमनोहरास्वितरासु च स्थापनासु रागद्वेषनिषेधः । द्रव्यसामयिकं सुवर्णमृत्तिकादिद्रव्येषु रम्यारम्येषु समदर्शित्वम् । क्षेत्रसामयिकमारामकण्टकवनादिषु शुभाशुभक्षेत्रेषु समभावः । कालसामायिकं वसन्तग्रीष्मादिषु ऋतुषु दिनरात्रिसितासितपक्षादिषु च यथास्वं चार्वचारुषु रागद्वेषानुद्भवः । भावसामयिकं सर्वजीवेषु मैत्रीभावोऽशुभपरिणामवर्जनं वा । तथा अपिशब्दस्यानुक्तसमुच्चयार्थत्वादयमप्यर्थोत्र वक्तव्यः ।

जातिद्रव्यक्रियागुणनिरपेक्षं संज्ञाकरणं सामायिकशब्दमात्रं वा नामसामायिकम् । सामायिकावश्यकपरिणतस्य तदाकारेऽतदाकारे वा वस्तुनि गुणारोपणं स्थापनासामायिकम् । द्रव्यसामायिकं भविष्यत्परिणामाभिमुख-

स्वमतीततत्परिणामं वा वस्तु द्रव्यं तस्य सामायिकम्। तच्च द्विविधमागमद्रव्यसामायिकं नोआगमद्रव्यसामायिकं चेति। सामायिकवर्णकप्राभृतज्ञायी जीवोऽनुपयुक्त आगमद्रव्यसामायिकम्। नोआगमद्रव्यसामायिकं तु त्रिविधं सामायकवर्णकप्राभृतज्ञायिकशरीरभाविजीवतद्व्यतिरिक्तभेदेन। ज्ञातुः शरीरं त्रिविधं भूतवर्तमानभविष्यद्भेदात्। भूतमपि त्रिधा, च्युतं च्यावितं त्यक्तं चेति। पक्कफलमिव स्वयमेवायुषः क्षयेण पतितं च्युतम्। कदलीघातेन पतितं च्यावितम्। त्यक्तं पुनस्त्रिधा, भक्तप्रत्याख्यानेङ्गिनीपादोपगमनमरणैः। भक्तप्रत्याख्यानमपि त्रिधा उत्कृष्टमध्यमजघन्यभेदात्। उत्कृष्ट भक्तत्यागस्य प्रमाणं द्वादशवर्षाणि। जघन्यस्यान्तर्मुहूर्तम्। तयोरन्तरालं मध्यमस्य। भाविकाले सामायिकप्राभृतज्ञायिजीवो भाविनोआगमद्रव्यसामायिकम्। तद्व्यतिरिक्तं तु द्विविधं कर्मनोकर्मभेदेन। सामायिकपरिणतजीवेनार्जिततीर्थकरादिशुभप्रकृतिस्वरूपं नोआगमद्रव्यकर्मतद्व्यतिरिक्तं द्रव्यसामायिकम्। नोकर्मतद्व्यतिरिक्तं तु द्रव्यसामायिकं त्रिविधं सचित्ताचित्तमिश्रभेदात्। सचित्तमुपाध्यायः। अचित्तं पुस्तकम्। उभयस्वरूपं मिश्रम्। क्षेत्रसामायिकं सामायिकपरिणतजीवाधिष्ठितं स्थानमूर्जयन्तचम्पापुरादि। कालसामायिकं तु यस्मिन्काले सामयिकस्वरूपेण परिणतो जीवः स कालः पूर्वाह्णमध्याह्नापराह्णादिभेदभिन्नः। भावसामायिकमुच्यते—वर्तमानपर्यायोपलक्षितं द्रव्यं भावः तस्य सामायिकं भावसामायिकम्। तच्च द्विविधमागमभावसामायिकं नोआगमभावसामायिकं चेति। सामायिकवर्णकप्राभृतकज्ञायक उपयुक्तो जीव आगमभावसामायिकम्। नोआगमभावसामायिकं पुनर्द्विविधमुपयुक्ततत्परिणतभेदात्। सामायिकप्राभृतकेन विना सामायिकार्थेषूपयुक्तो जीवः उपयुक्तनोआगमभावसामायिकम्। रागद्वेषाद्यभावस्वरूपेण परिणतो जीवस्तत्परिणतनोआगमभावसामायिकम्। एष न्यायो यथास्वमुत्तरेष्वपि योज्यः। एषां षण्णामपि मध्ये आगमभावसामायिकेन नोआगमभावसामायिकेन च प्रयोजनमिति।

निरुक्त्यन्तरेण पुनर्भावसामायिकं लक्षयन्नाह—

**समयो दृग्ज्ञानतपोयमनियमादौ प्रशस्तसमगमनम्।**
**स्यात्समय एव सामायिकं पुनः स्वार्थिकेन ठणा ॥२०॥**

तत्र समितिप्राशस्त्ये एकीभावे च विवक्षितः अय इति गमने। आदि-शब्देन परीषहकषायेन्द्रियजयसंज्ञादुर्लेश्यादुर्ध्यानवर्जनादिपरिग्रहः **समं** समानमेकमित्यर्थः। स्यात्। कोसौ? **समयः**। कोर्थः? **प्रशस्तसमगमनम्**। प्रशस्तं समत्वेनैकत्वेन गमनम् तथा परिणमनं प्रशस्तसमगमनम्। क्व? **दृग्ज्ञानतपोयमनियमादौ**। दृक् च ज्ञानं च तपश्च यमश्च नियमश्च दृग्ज्ञानतपोयमनियमाः। ते आदयो यस्य परीषहजयादेः सोयं दृग्ज्ञानतपोयमनियमादिस्तस्मिन्। **स्याच्च**। कोसौ? **समय एव**। किम्? **सामायिकम्**। केन? **ठणा** ठण् प्रत्ययेन "विनयादेष्ठण् ॥ ४।२।४०॥" इत्यनेन विहितेन। किंविशिष्टेन? **स्वार्थिकेन** स्वार्थे भवेन। सामायिकमित्यत्र "अनुशतिकादेः॥ ५।२ २५॥" इत्यनेनोभयत्र ऐप्[1]। **पुनरिति** निर्वचनान्तरेणेत्यर्थः। उक्तं च मूलाचारे—

**सम्मत्तणाण[2]संजमतवेहिं जं तं पसत्थसमगमणं।**
**समयं तु तं तु भणिदं तमेव सामाइयं जाणे॥** इत्यादि।

अथ पञ्चदशभिः श्लोकैः सामायिकाश्रयणविधिमभिधातुकामः प्रथमं तावन्नामसामायिकं भावयन्नाह—

**शुभेऽशुभे वा केनापि प्रयुक्ते नाम्नि मोहतः।**
**स्वमवाग्लक्षणं पश्यन्न रतिं यामि नारतिम्॥ २१॥**

**न याम्यहम्**। काम्? **रतिं** प्रीतिम्। न च याम्यहम्। काम्? **अरतिम**प्रीतिम्। क्व सति? **नाम्नि** अभिधाने। किंविशिष्टे? **शुभे** प्रशस्ते **अशुभे वा** अप्रशस्ते। पुनः किंविशिष्टे? **प्रयुक्ते** उच्चारिते। केन? **केनापि** केनचित्पुंसा। सुहृदा शुभे द्विषता चाशुभे इत्यर्थः। कस्मात्? **मोहतो**ऽज्ञानात्। मां शब्दाविषयमजानतेत्यर्थः। किं कुर्वन्नहम्? **पश्यन्** अनुभवन्। कम्? **स्वमा**त्मानम्। किंविशिष्टम्? **अवाग्लक्षणम्**। लक्ष्यते इति लक्षणं

१ जैनेन्द्रव्याकरणे वृद्धिसंज्ञास्थाने ऐप् संज्ञास्ति।

२ सम्यक्त्वज्ञानसंयमतपोभिर्यत्तत् प्रशस्तसमगमनम्॥
समयस्स तु भणितस्तमेव सामायिकं जानीहि॥

लक्षणीयम् । विषय इति यावत् । "युङ्व्या बहुलम् ॥२।३।९४॥" इत्यनेन कर्मणि युट् । वाचां लक्षणं वाग्लक्षणम् । न वाग्लक्षणमवाग्लक्षणम् । वाचामविषय इत्यर्थः । यथाह—

यज्जानन्नपि बुद्धिमानपि गुरुः शक्तो न वक्तुं गिरा,
प्रोक्तं चेन्न तथापि चेतसि नृणां सम्माति चाकाशवत् ।
यत्र स्वानुभवस्थितेपि विरला लक्ष्यं लभन्ते चिरात्,
तन्मोक्षैकनिबन्धनं विजयते चित्तत्वमत्यद्भुतम् ॥

अथवा न वाक् शब्दो लक्षणं स्वरूपं यस्य सोऽवाग्लक्षणस्तम् । अशब्दात्मकमित्यर्थः । यथाह—

अरसं[1]मरूवमगंधं अव्वत्तं चेदणागुणमसद्दं ।
जाणमलिंगग्गहणं जीवमणिद्दिट्ठसंठाणं ॥

स्थापनासामायिकं भावयन्नाह—

**यदियं स्मरयत्यर्चा न तदप्यस्मि किं पुनः ।**
**इयं तदस्यां सुस्थेति धीरसुस्थेति वा न मे ॥ २२ ॥**

यदर्हदादिरूपं कर्म इयं दृश्यमाना **अर्चा** प्रतिमा कर्त्री यथोक्तमानोन्मानादियुक्तत्वात्, **स्मरयति** मां स्मरन्तं प्रयोजयति तदप्यर्हदादिरूपं **नास्मि** न भवाम्यहम् । किं **पुनरियमर्चा** भवाम्यहम् । सर्वथा न भवामीत्यर्थः । यत एवं **तत्** तस्मान्न भवति । कासौ ? **धी**र्बुद्धिः । कस्य ? **मे** मम । कस्याम् ? **अस्यामर्चायाम्** । कथं कृत्वा ? **सुस्थेति** सम्यग् यथोक्तलक्षणादिभेदेन तिष्ठतीति सुस्था इति धीर्न मेस्ति । **वा** अथवा **असुस्थेति** यथोक्तलक्षणविपरीता धीर्न मेस्ति ।

द्रव्यसामायिकं भावयन्नाह—

**साम्यागमज्ञतद्देहौ तद्विपक्षौ च यादृशौ ।**
**तादृशौ स्तां परद्रव्ये को मे स्वद्रव्यवद्ग्रहः ॥ २३ ॥**

१—अरसमरूपमगन्धमव्यक्तं चेतनागुणमशब्दम् ।
जानीहि अलिङ्गग्रहणं जीवमनिर्दिष्टसंस्थानम् ॥

साम्यागमज्ञो—

"जीवियमरणे लाहालाहे संजोयविप्पओएण।
बंधुअरिसुहदुहेवि य समदा सामाइयं णाम॥"

इत्यादि सामायिकप्राभृतकस्य ज्ञाता जीवस्तदनुपयुक्तः। तद्देहस्तस्य साम्यागमज्ञस्य देहः शरीरं साम्यागमज्ञश्च तद्देहश्च साम्यागमज्ञतद्देहौ। तद्विपक्षौ। तयोः साम्यागमज्ञतद्देहयोर्विपक्षौ विसदृशौ तद्विपक्षौ। भाविजीवः। कर्मनोकर्मद्वयं चेत्यर्थः। तत्र भाविजीवो ज्ञास्यमानसाम्यागमः। कर्म पुनः साम्ययुक्तेनार्जितं तीर्थकरत्वादिकम्। नोकर्म तु साम्यागमोपाध्यायस्तत्पुस्तकस्तद्युक्तोपाध्यायश्चेत्यादि। यादृशौ तादृशौ शुभावशुभौ वेत्यर्थः। स्तां भवताम्। कौ? साम्यागमज्ञतद्देहौ। न केवलं, तद्विपक्षौ च। किंविशिष्टौ स्ताम्? यादृशौ तादृशौ। कः? न कोपि ग्रहः शुभाशुभाभिनिवेशोस्ति। कस्य? मे मम सामायिकपरिणतस्य। क्व? परद्रव्ये परस्यान्यस्य द्रव्यं परद्रव्यम्। किंवत्? स्वद्रव्यवद् आत्मद्रव्ये यथा। अन्वयमुखेन व्यतिरेकमुखेन वा दृष्टान्तोयम्। आरब्धयोगस्यैव हि स्वद्रव्यमात्रेभिनिवेशोभ्यनुज्ञायते, निष्पन्नयोगस्य तु तत्रापि तत्प्रतिषेधात्। तथा चोक्तम्—

मुक्त इत्यपि न कार्यमञ्जसा कर्मजालकलितोहमित्यपि।
निर्विकल्पपदवीमुपाश्रयन् संयमी हि लभते परं पदम्॥

अपि च,—

यद्यदेव मनसि स्थितं भवेत्तत्तदेव सहसा परित्यजेत्।
इत्युपाधिपरिहारपूर्णता सा यदा भवति तत्पदं तदा॥

तथा,—

अन्तरङ्गबहिरङ्गयोगतः कार्यसिद्धिरखिलेति योगिना।
आशितव्यमनिशं प्रयत्नतः स्वं परं सदृशमेव पश्यता॥

अन्वयदृष्टान्तपक्षे यथा स्वद्रव्ये ग्रहो मेस्ति तथा परद्रव्ये को ग्रहः? न कश्चिदित्यर्थः। व्यतिरेकदृष्टान्तपक्षे तु यथा स्वद्रव्ये को ग्रहः? न कोपि, तथा परद्रव्येपीति व्याख्येयम्।

क्षेत्रसामायिकं भावयन्नाह—

**राजधानीति न प्रीये नारण्यानीति चोद्विजे ।**
**देशो हि रम्योऽरम्यो वा नात्मारामस्य कोपि मे ॥ २४ ॥**

**न प्रीये** न रज्याम्यहम् । कथं कृत्वा ? **राजधानीति** राजानो धीयन्ते ऽस्यामिति राजधानीति संकल्प्य न रागं गच्छामीत्यर्थः । **न चोद्विजे** नोद्वेगं याम्यहम् । कथं कृत्वा ? **अरण्यानीति** । महदरण्यमिति संकल्प्य न द्वेषं गच्छामीत्यर्थः । **हि** यस्मान्न **कोपि** न कश्चिद्देशः क्षेत्रं **रम्यो** रमयिता **अरम्यो वा** नारमयितास्ति । कस्य ? **मे** । किंविशिष्टस्य ? **आत्मारामस्य** आत्मैवाराम उद्यानं रतिस्थानं यस्य, अन्यत्र गतिप्रतिबन्धकत्वात् । यथाह—

यो यत्र निवसन्नास्ते स तत्र कुरुते रतिम् ।
यो यत्र रमते तस्मादन्यत्र स न गच्छति ॥

तथा,—

ग्रामोऽरण्यमिति द्वेधा निवासोऽनात्मदर्शिनाम् ।
दृष्टात्मनां निवासस्तु विविक्तात्मैव निश्चलः ॥

अथवा आत्मनोपि सकाशादारामो निवृत्तिर्यस्येत्यात्माराम इति ग्राह्यम् । वस्तुतः स्वात्मन्यपि रते-रागरूपतया मोक्षप्रतिबन्धकत्वेन मुमुक्षुभिरनादरणीयत्वात् ।

कालसामायिकं भावयन्नाह—

**नामूर्तत्वाद्धिमाद्यात्मा कालः किं तर्हि पुद्गलः ।**
**तथोपचर्यते मूर्तस्तस्य स्पृश्यो न जात्वहम् ॥ २५ ॥**

**न** भवति । कोसौ ? **कालः** । कीदृशः ? **हिमाद्यात्मा** शीतोष्णवृष्टिलक्षणः । हिमादयः शीतोष्णवृष्टय आत्मानः स्वभावा यस्येति विग्रहः । कस्मात् ? **अमूर्तत्वात्** स्पर्शरसगन्धरूपरहितत्वात् । तर्हि किं कालत्वेन लोकैर्व्यवह्रियते इत्याह—किमित्यादि । **किं तर्हि ? लोकैरुपचर्यते** व्यव-

ह्रियते । कोसौ ? पुद्गलो रूपिद्रव्यम् । किंविशिष्टः ? मूर्तः स्पर्शरसगन्धवर्णवान् । कथम् ? तथा तेन काल इति व्यपदेशप्रकारेण । तस्य च कालत्वेनोपचरितस्य मूर्तात्मकस्य पुद्गलस्य न जातु कदाचिदप्यहं स्पृश्यः स्पर्शनार्हः, शुद्धनिश्चयनयादेशाच्चिदेकरूपत्वान्मम 'सव्वे सुद्धा हु सुद्धाणया' इति वचनात् ।

एवं नामस्थापनाद्रव्यक्षेत्रकालसामायिकानि क्रमेणाभिधाय भावसामायिकमात्मसात्कुर्वन्नाह—

**सर्वे वैभाविका भावा मत्तोऽन्ये तेष्वतः कथम् ।**
**चिच्चमत्कारमात्रात्मा प्रीत्यप्रीती तनोम्यहम् ॥ २६ ॥**

भवन्ति । के ? भावाः । किंविशिष्टाः ? अन्ये भिन्नाः । कस्मात् ? मत्तश्चिदात्मनः । किमात्मानः ? वैभाविकाः परनिमित्तका जीवितमरणादय औदयिकौपशमिकक्षायिकक्षायोपशमिका वा चत्वारः । कियन्तः ? सर्वे सकलाः । अत एतस्मात्कारणात्कथं केन प्रकारेण तनोमि विस्तृणाम्यहम् । के ? प्रीत्यप्रीती रागद्वेषौ । केषु ? तेषु वैभाविकेषु भावेषु । मध्यस्थोहं तेषु भवामीत्यर्थः । तत्त्वतः किंरूपोऽहम् ? चिच्चमत्कारमात्रात्मा । चिदेव चमत्कारोऽत्यद्भुतं रूपं चिच्चमत्कारः । स एव तन्मात्रं आत्मा स्वरूपं यस्य स एवम् । पारिणामिकभावस्वभाव इत्यर्थः । परिणामलक्षणैकावस्थत्वाच्छुद्धनयादेशात्सर्वदा जीवस्य ।

नवभिः श्लोकैर्भावसामायिकमेव प्रपञ्चयन्नाह—

**जीविते मरणे लाभेऽलाभे योगे विपर्यये ।**
**बन्धावरौ सुखे दुःखे साम्यमेवाभ्युपैम्यहम् ॥ २७ ॥**

अभ्युपैमि अभ्युपगच्छाम्यहम् । किं तत् ? साम्यमेव रागद्वेषयोः परित्यागमेव । क्व विषये ? जीविते रागं मरणे च द्वेषं परित्यजामीत्यर्थः । एवं लाभे इष्टप्राप्तौ रागमलाभे इष्टप्राप्त्यभावे द्वेषं च परित्यजामि । योगे इष्टसंयोगे रागम् । विपर्यये प्रत्यासत्तेर्योगस्यैव । वियोगे इत्यर्थः । इष्टवियोगे द्वेषं च परित्यजामि । बन्धावुपकारके बान्धवे रागमरौ अपकारके

शत्रौ द्वेषं च परित्यजामि। सुखे आह्लादनाकारे रागं दुःखे तद्विपरीते द्वेषं च परित्यजामि।

जीविताशां मरणभयं च प्रत्याचष्टे—

कायकारान्दुकायाहं स्पृहयामि किमायुषे।
तद्दुःखक्षणविश्रामहेतोर्मृत्योर्बिभेमि किम्॥ २८॥

किमिति प्रश्नवितर्के। किं स्पृहयामि किमिच्छाम्यहम्। कस्मै? आयुषे भवधारणकारणाय कर्मणे। किंविशिष्टाय? कायकारान्दुकाय। काय एव कारा वन्दिकुटी, निरन्तरदुःखहेतुत्वात्। कायकारायां अन्दुको निगड इष्टगतिप्रतिबन्धकत्वात् कायकारान्दुकस्तस्मै। तथा किं बिभेमि किं त्रस्याम्यहम्। कस्मात्? मृत्योः। किंविशिष्टात्? तद्दुःखक्षणविश्रामहेतोः। तद्दुःखं कायकारापीडा। तस्याः क्षणमेकं समयं द्वौ त्रीन्वा क्षणान् विश्रामो निवृत्तिर्विग्रहगतौ जीवस्य एकं द्वौ त्रीन्वा समयानौदारिकवैक्रियिकशरीरद्वारायास्तद्दुःखासंभवात्। तद्दुःखस्य क्षणं क्षणौ क्षणान्वा विश्रामस्तद्दुःखक्षणविश्रामः। तस्य हेतुः कारणं, तस्मात्।

लाभालाभयोर्हर्षविषादौ प्रतिषेधति—

लाभे दैवयशःस्तम्भे कस्तोषः पुमधस्पदे।
को विषादस्त्वलाभे मे दैवलाघवकारणे॥ २९॥

जन्मान्तरार्जितं शुभाशुभं कर्म दैवम्। कस्तोषो हर्षो मे। न कोपीत्यर्थः। क्व? लाभे। किंविशिष्टे? दैवयशःस्तम्भे दैवस्य पुण्यस्य कर्मणः कीर्तिचिह्ने। पुनः किंविशिष्टे? पुमधस्पदे पुंसः पुरुषस्याधस्पदे निन्द्यस्थाने, दैवैकनिबन्धनत्वादभिमतप्राप्तेः। तथा कस्तु कः पुनर्विषादो मेस्ति। क्व? अलाभे। किंविशिष्टे? दैवलाघवकारणे दैवस्य पूर्वार्जितकर्मणः, सामर्थ्यात्पापस्य, लाघवमपकर्षः। तस्य कारणं, पापापकर्षहेतुत्वादीप्सिताप्राप्तेर्विपाकान्तत्वात्कर्मणाम्। अथवा सुप्रयुक्तोपायस्य पुंसोभीष्टफलमलभमानस्य नास्ति जनापवादः। किं तर्हि? दैवस्य वैषम्यात्। इति दैवस्य माहात्म्यहानिहेतुरलाभः। यदाहुः—

**असमसाहससुव्यवसायिनः सकललोकचमत्कृतिकारिणः ।**
**यदि भवन्ति न वाञ्छितसिद्धयो हतविधेरयशो न नरस्य तत् ॥**

इष्टसंयोगानिष्टवियोगतद्विपर्ययाणां सांकल्पिकमेव सुखदुःखहेतुत्वं चिन्तयन्नाह—

**योगो ममेष्टैः संकल्पात् सुखोऽनिष्टैर्वियोगवत् ।**
**कष्टश्चेष्टैर्वियोगोन्यैर्योगवन्न तु वस्तुतः ॥ ३० ॥**

अस्ति । कोसौ ? **योगः** संयोगः । कैः सह ? **इष्टैः** प्रियैः । किंविशिष्टः ? **सुखः** सुखहेतुः । कस्य ? **मम** । कस्मात् ? **संकल्पा**न्मनस्कारात् । **न** त्वस्ति इष्टैः संयोगो मम सुखहेतुः । कस्मात् ? **वस्तुतो** वस्तुवृत्त्या । तात्त्विक इत्यर्थः । किंवत् ? **अनिष्टैर्वियोगवद्** अप्रियैः सह वियोगो यथा । सोपि हि संकल्पान्मम सुखहेतुर्न तु वस्तुतः । **कष्टश्च** दुःखहेतुर्ममास्ति । कोसौ ? इष्टैः सह **वियोगः** । कस्मात् ? संकल्पात् । न तु वस्तुतः । क इव ? **अन्यै**रनिष्टैः सह **योगवत्** संयोगो यथा । सोपि हि संकल्पाद्दुःखहेतुर्न तु वस्तुतः । इष्टसंयोगादेर्विकल्प्यमानस्य सुखदुःखहेतुत्वप्रतीतेरवास्तवत्वमित्यर्थः ।

बन्धुशत्रुविषयौ रागद्वेषौ प्रतिषेधयन्नाह—

**ममकारग्रहावेशमूलमन्त्रेषु बन्धुषु ।**
**को ग्रहो विग्रहः को मे पापघातिष्वरातिषु ॥ ३१ ॥**

**को** न कश्चिद्**ग्रहो** रागोस्ति **मे** । केषु ? **बन्धुषु** । किंविशिष्टेषु ? **ममकारग्रहावेशमूलमन्त्रेषु** । ममकारो ममत्वं ममामी उपकारका इति बुद्धिः । स एव ग्रहावेशो ब्रह्मराक्षसादिग्रहसंक्रमणं विकृतचेष्टानिबन्धनत्वात् । तत्र मूलमन्त्रो ग्रहावेशवन्ममकारस्य प्रधानकारणत्वात् । मन्त्रः पठितसिद्धोत्र । मूलं च तन्मन्त्रश्च स मूलमन्त्र इति समासः । तथा **को** न कोपि **विग्रहो** विरुद्धो ग्रहो विग्रहो विरागो द्वेषो मेस्ति । केषु ? **अरातिषु** शत्रुषु । किंविशिष्टेषु ? **पापघातिषु** दुःखोत्पादनद्वारेण पापक्षपणहेतुषु । **पापं** घातयन्ति निर्जरयन्ततीति पापघातिनः ॥

ऐन्द्रियिकसुखदुःखे प्रतिक्षिपन्नाह—

**कृतं तृष्णानुषङ्गिण्या खसौख्यमृगतृष्णया ।**
**खिद्ये न दुःखे दुर्वारकर्मारिक्षययक्ष्मणि ॥ ३२ ॥**

कृतं पर्याप्तं मम । धिगिमामित्यर्थः । कया ? **खसौख्यमृगतृष्णया ।** खसौख्यमिन्द्रियसुखमेव मृगतृष्णा मध्याह्नार्कमरीचिका, तया । किंविशिष्टया ? **तृष्णानुषङ्गिण्या ।** तृष्णाया वाञ्छायाः पिपासाया इवानुषङ्गोऽस्याः अस्तीति तृष्णानुषङ्गिणी, तया । यथा मृगतृष्णा पिपासामनुषञ्जयति तथेन्द्रियसुखवाञ्छामित्यर्थः । तथा **न खिद्ये** न दैन्यं याम्यहम् । क ? **दुःखे ।** किंविशिष्टे ? **दुर्वारकर्मारिक्षययक्ष्मणि ।** दुर्वारा वारयितुमशक्या कर्मारयः कर्मशत्रवः सामर्थ्यादसातावेदनीयादयो दुर्वारकर्मारयः । तेषां क्षययक्ष्मा क्षयव्याधिर्निर्जरणकारणत्वात्, तस्मिन् । स्वकाले विपच्यमानानां कर्मणां दुर्वारत्वं सुप्रसिद्धमेव । उक्तं च—

कर्माण्युदीर्यमाणानि स्वकीये समये सति ।
प्रतिषेद्धुं न शक्यन्ते नक्षत्राणीव केनचित् ॥

बाह्या अप्याहुः—

एष पार्थरथः कर्ण श्वेताश्वः कृष्णसारथिः ।
दुर्वारः परसैन्यानां विपाकः कर्मणामिव ॥

प्रेक्षावतां दुःसहसंसारदुःखानुभव एव रत्नत्रयानुबन्धाय स्यादित्युपदेशार्थमाह—

**दवानलीयति न चेज्जन्मारामेऽत्र धीः सताम् ।**
**तर्हि रत्नत्रयं प्राप्तुं त्रातुं चेतुं यतेत कः ॥ ३३ ॥**

**चेद्** यदि **न दवानलीयति** दवाग्नाविवाचरति । कासौ ? **धीर्बुद्धिः ।** केषाम् ? **सतां** धीमताम् । क ? **अत्र** एतस्मिन् **जन्मारामे** जन्म संसार आराम इव, मूढात्मनां प्रीतिनिमित्तविषयबहुलत्वात् । **तर्हि** तदा **को** न कोऽपि सत्सु मध्ये **यतेत** प्रयत्नं कुर्यात् । किं कर्तुम् ? **प्राप्तुं** लब्धुं, **त्रातुं** रक्षितुं, **चेतुं** च वर्धयितुम् । किं तत् ? **रत्नत्रयं** सम्यग्दर्शनज्ञानचारित्रं ॥

साम्यस्य सकलसदाचारमूर्धाभिषिक्तत्वात् तस्यैव भावनायामात्मानमासञ्जयन्नाह—

**सर्वसत्त्वेषु समता सर्वेष्वाचरणेषु यत् ।**
**परमाचरणं प्रोक्तमतस्तामेव भावये ॥ ३४ ॥**

यद् यस्मात्प्रोक्तं पूर्वाचार्यैः । किम् ? आचरणम् । किंविशिष्टम् ? परमुत्कृष्टम् । केषु मध्ये ? आचरणेषु । किंविशिष्टेषु ? सर्वेषु । कासौ ? समता साम्यम् । केषु ? सर्वसत्त्वेषु सकलप्राणिषु सर्वद्रव्येषु वा । यत एवमतो भावये पुनः पुनश्चेतसि निवेशयाम्यहम् । काम् ? तामेव समताम् । न किंचिदन्यत् ।

एवं भावसामायिकमवश्यसेव्यतया संप्रधार्य तदारूढमात्मानं ख्यापयन्नाह—

**मैत्री मे सर्वभूतेषु वैरं मम न केनचित् ।**
**सर्वसावद्यविरतोस्मीति सामायिकं श्रयेत् ॥ ३५ ॥**

श्रयेदाश्रयेन्मुमुक्षुः । किं तत् ? सामायिकम् । कथम् ? इति शुभेऽशुभे वा केनापीत्यादिप्रबन्धोक्तेन प्रकारेण । तच्छेषमाह–अस्मि । कासौ ? मैत्री मा भूत्कोपीह दुःखीत्यादिनोक्ता । केषु ? सर्वभूतेषु सर्वजीवेषु । कस्य ? मे मम । नास्ति । किं तत् ? वैरं विरोधः । केन सह ? केनचित् केनापि स्वपक्षेण परपक्षेण वा । कस्य ? मम । तथा अस्मि भवाम्यहम् । कीदृशः ? सर्वसावद्यविरतः । सावद्या हिंसादिपातकयुक्ता मनोवाक्कायव्यापाराः । सर्वे च ते सावद्याश्च सर्वसावद्याः । तेभ्यो विरतो निवृत्तः । एतेन भावसामायिकं सर्वजीवेषु मैत्रीभावोऽशुभपरिणामवर्जनं वेति प्रागुक्तं भावसामायिकं प्रतीतिदार्ढ्यार्थं पुनरुक्तं प्रतिपत्तव्यम् । पंचदशकम् ।

अनन्यसामान्यं सामायिकमाहात्म्यमादर्शयंस्तत्प्रति सुधियः प्रयतेरन्निति शिक्षार्थमाह—

**एकत्वेन चरन्निजात्मनि मनोवाक्कायकर्मच्युतेः,**
**कैश्चिद्विक्रियते न जातु यतिवद्यद्भागपि श्रावकः ।**

**येनार्हच्छ्रुतलिङ्गवानुपरिमग्रैवेयकं नीयतेऽ—**
**भव्योप्यद्भुतवैभवेत्र न सजेत् सामायिके कः सुधीः ॥३६॥**

कः सुधीः सद्बुद्धिर्न सजेन्नासक्तो भवेत् । क्व ? अत्र एतस्मिन् सामायिके । किंविशिष्टे ? अद्भुतवैभवे । अद्भुतमाश्चर्यं विस्मयनीयं वैभवं माहात्म्यं यस्य, तस्मिन् । सर्वोपि प्रेक्षापूर्वकारी आसक्तो भवेदित्यर्थः । यद्भाग् यत् सामायिकं सेवमानोपि श्रावको देशसंयतोपि । न केवलं संयत इत्यपि शब्दार्थः । न जातु न कदाचिद्विक्रियते विकारं नीयते । कैः ? कैश्चिद् बाह्यैरभ्यन्तरैर्वा विकारकारणैः । किंवत् ? यतिवद्, हिंसादिषु सर्वेष्वनासक्तचित्तोभ्यन्तरप्रत्याख्यानसंयमघातिकर्मोदयजनितमन्दाविरतिपरिणामे सत्यपि महाव्रत इत्युपचर्यते, इति कृत्वा यतिना तुल्यं वर्तमानः । किं कुर्वन् ? चरन् प्रवर्तमानः । केन ? एकत्वेन । एकस्यासहायस्य कर्तृत्वभोक्तृत्वव्यतिरेकेण ज्ञायकस्य भाव एकत्वं, तेनैकत्वेन । ज्ञातृत्वमात्रेणेत्यर्थः । क्व ? निजात्मनि निजो नित्यः स्वश्चात्मा निजात्मा तस्मिन् । नित्यस्वात्मनीत्यर्थः । कुतः ? मनोवाक्कायकर्मच्युतेः । मनश्च वाक् च कायश्च मनोवाक्कायाः । तेषां कर्माण्यात्मप्रदेशपरिस्पन्दा मनोवाक्कायकर्माणि । तेभ्यश्च्युतिश्च्यवनमनीहितेन वृत्तिस्तस्या मनोवाक्कायकर्मच्युतेः । आगमभावसामायिकाभ्यासपूर्वकं नोआगमभावसामायिकेन परिणममानस्य स्वविषयेभ्यो निवृत्त्य कायवाङ्मनःकर्मणामात्मना सह वर्तनादित्यर्थः । उक्तं च—

सामायियम्हि[1] दु कदे समणो इव सावओ हवदि जह्मा ।
एदेण कारणेण दु बहुसो सामाइयं कुज्जा ॥

तथा येन सामायिकेन नीयते प्राप्यते । कोसौ ? अभव्योपि । किं पुनर्भव्य इत्यपिशब्दार्थः । किं तत् ? उपरिमग्रैवेयकम् । अष्टानां ग्रैवेयकविमानानामुपरि भवमुपरिमम् । तच्च तद् ग्रैवेयकं च नवानुदिशप्रस्तारादधोवर्तिविमानम् । किंविशिष्टः सन् ? अर्हच्छ्रुतलिङ्गवान् । श्रुतं चैकादशाङ्गलक्षणं लिङ्गं च द्रव्यनिर्ग्रन्थचिह्नं श्रुतलिङ्गे । अर्हतः श्रुतलिङ्गे अर्हच्छ्रुत-

---

१—सामायिके तु कृते श्रमण इव श्रावको भवति यस्मात् ।
एतेन कारणेन तु बहुशः सामायिकं कुर्यात् ॥

लिङ्गे। ते अस्य स्त इत्यर्हच्छ्रुतलिङ्गवान्। निन्दायां मतुः[1]। उक्तं चारित्र-सारे—

"एवं कृत्वा अभव्यस्यापि निर्ग्रन्थलिङ्गधारिण एकादशाङ्गाध्यायिनो महाव्रतपरिपालनादसंयमभावस्याप्युपरिमग्रैवेयकविमानवासिता उपपन्ना भवति" इति।

एवं सामायिकं व्याख्यायेदानीं चतुर्विंशतिस्तवं नवभिः पद्यैर्व्याख्यातु-कामः पूर्वं तल्लक्षणमाह—

कीर्तनमर्हत्केवलिजिनलोकोद्द्योतधर्मतीर्थकृताम्।
भक्त्या वृषभादीनां यत्स चतुर्विंशतिस्तवः षोढा॥३७॥

कीर्तनं प्रशंसनम् अर्हन्तोऽरेर्जन्मनश्च हन्तृत्वात् पूजाद्यर्हत्वाच्च। उक्तं च–

अरिहंति[2] वंदणणमंसणाणि अरिहंति पूयसक्कारं।
अरिहंति सिद्धिगमणं अरिहंता तेण वुच्चंति॥

केवलिनः सर्वद्रव्यपर्यायसाक्षात्कारिणः। जिना अनेकभवगहनविषमव्यसन-प्रापणहेतून् कर्मारातीन् जितवन्तः। लोकोद्द्योता नामादिनवप्रकारलोकस्य भावेनोद्द्योतकाः। ज्ञातार इत्यर्थः। नवधा लोको यथा—

णामं[3] ठवणं दव्वं खेत्तं चिण्हं कसाय लोओ य।
भवलोगभावलोगं पज्जयलोगो य णादव्वो॥

अत्र यानि कान्यपि लोके शुभान्यशुभानि वा नामानि स नामलोकः। तथा यत्किंचिल्लोके कृत्रिममकृत्रिमं चास्ति स स्थापनालोकः। तथा षड्-द्रव्यप्रपञ्चो द्रव्यलोकः। उक्तं च—

---

१—भूमनिन्दाप्रशंसासु नित्ययोगेतिशायने।
संबन्धेस्ति विवक्षायां भवन्ति मतुबादयः॥

२—अर्हन्ति वन्दननमसनानि अर्हन्ति पूज्यसत्कारम्।
अर्हन्ति सिद्धिगमनमर्हन्तस्तेन उच्यन्ते॥

३ नाम स्थापना द्रव्यं क्षेत्रं चिह्नं कषायलोकश्च।
भवलोकभावलोकं पर्यायलोकश्च ज्ञातव्यः॥

परिणामि जीव मुत्तं सपदेसं एय खेत्त किरिया य ।
णिच्चं कारण कत्ता सव्वगदिदरम्हि यपएसो ॥

परिणामोन्यथाभावः । स चात्र व्यञ्जनपर्यायः । तद्वन्तौ जीवपुद्गलावेव, तिर्यगादिगतिषु भ्रमणोपलम्भाल्लोष्टादिभावेन परिणमनप्रतीतेश्च । शेषाणि चत्वारि धर्मादिद्रव्याण्यपरिणामीनि, व्यञ्जनपर्यायाभावात् । अर्थपर्यायापेक्षया पुनः षडपि परिणामीन्येव । जीवश्चेतनालक्षण आत्मैव, ज्ञातृत्वद्रष्टृत्वात् । पञ्चान्येऽजीवाः । मूर्तं पुद्गलद्रव्यं, रूपादिमत्त्वात् । पञ्चान्ये त्वमूर्ताः । सप्रदेशा जीवादयः पञ्च, प्रदेशवत्त्वदर्शनात् । कालाणवः परमाणुश्चाप्रदेशाः, प्रचयबन्धाभावात् । एकरूपाणि धर्माधर्माकाशानि, सर्वदा प्रदेशविघटनाभावात् । संसारिजीवपुद्गलकालास्त्वनेकरूपाः, प्रदेशानां भेदोपलम्भात् । क्षेत्रमाकाशं, सर्वेषामाधारत्वात् पञ्चान्येऽक्षेत्राण्यावगाहनलक्षणाभावात् । क्रिया जीवपुद्गलयोः गतिमत्त्वात् । अन्ये त्वक्रियाः । नित्या धर्माधर्माकाशकाला व्यञ्जनपर्यायापेक्षया विनाशाभावात् । अन्यावनित्यौ । कारणानि जीववर्जानि पञ्च, जीवं प्रति उपकारकत्वात् । जीवस्त्वकारणं स्वतन्त्रत्वात् । कर्ता जीवः शुभाशुभफलभोक्तृत्वात् । पञ्चान्येऽकर्तारः । सर्वगतमाकाशम् । पञ्चान्ये त्वसर्वगताः । इतरेष्वप्यपरिणामित्वादिधर्मेषु जीवादीनां प्रवेशो व्याख्यात एव । सप्रदेशमधस्तिर्यगूर्ध्वलोकविभक्तमाकाशं क्षेत्रलोकः । द्रव्यगुणपर्यायाणां संस्थापनं चिह्नलोकः । क्रोधादय उदयमागताः कषायलोकः । नारकादियोनिगताः सत्त्वा भवलोकः । तीव्ररागद्वेषादयो भावलोकः । द्रव्यगुणादिभेदाच्चतुर्धा पर्यायलोकः । उक्तं च—

दव्वगुणखेत्तपज्जय भवाणुभावो य भावपरिणामो ।
जाण चउव्विहमेयं पज्जयलोगं समासेण ॥

तत्र द्रव्यगुणा जीवस्य ज्ञानादयः पुद्गलस्य स्पर्शादयो धर्माधर्माकाश-

---

१ परिणामी जीवः मूर्तः सप्रदेश एकक्षेत्रक्रियाश्च ।
नित्यः कारणं कर्ता सर्वगत इतरस्मिन्नप्रवेशः ॥

२ द्रव्यगुणः क्षेत्रपर्यायः भवानुभावश्च भावपरिणामः ।
जानीहि चतुर्विधमेनं पर्यायलोकं समासेन ॥

कालानां च गतिस्थित्यवगाहहेतुत्ववर्तनादयः। क्षेत्रपर्याया रत्नप्रभाजम्बूद्वीपर्जुविमानादयः। भवानुभाव आयुषो जघन्यमध्यमोत्कृष्टविकल्पाः। भावपरिणामोऽसंख्येयलोकप्रमाणः शुभाशुभजीवभावः कर्मादानपरित्यागसमर्थः इति। धर्मतीर्थकृतो धर्मस्य वस्तुयाथात्म्यस्योत्तमक्षमादेर्वा तीर्थं शास्त्रं कृतवन्त उपदिष्टवन्तः। चतुर्विंशतिस्तवोनेकतीर्थंकरदेवगुणव्यावर्णनं, चतुर्विंशतिशब्दस्यानेकोपलक्षणत्वात्। भवति। कोसौ? **स चतुर्विंशतिस्तवः**। कतिधा? **षोढा** षट्प्रकारः। यत्किम्? **यत्कीर्तनम्**। केषाम्? **वृषभादीनाम्**। किंविशिष्टानाम्? **अर्हत्केवलिजिनलोकोद्द्योतधर्मतीर्थकृताम्**। अर्हन्तश्च केवलिनश्च जिनाश्च लोकोद्द्योताश्च धर्मतीर्थकृतश्चार्हत्केवलिजिनलोकोद्द्योतधर्मतीर्थकृतस्तेषामऽर्हतां केवलिनां जिनानां लोकोद्द्योतानां धर्मतीर्थकृतां च सर्वेषां वृषभादीनाम्। कया कीर्तनम्? **भक्त्या** नामादिस्तवभेदात्।

व्यवहारनिश्चयाभ्यां विभजन्नाह—

**स्युर्नामस्थापनाद्रव्यक्षेत्रकालाश्रयाः स्तवाः।**
**व्यवहारेण पञ्चार्थादेको भावस्तवोऽर्हताम्॥ ३८॥**

**स्युर्**भवेयुः। के ते? **स्तवाः**। केषाम्? **अर्हतां** चतुर्विंशतितीर्थंकराणाम्। कति? **पञ्च**। केन? **व्यवहारेण**। किंविशिष्टास्ते? **नामाद्याश्रयाः**। **अर्थात्** परमार्थतोऽर्हता**मेको भावस्तवः** स्यात्।

नामस्तवस्वरूपमाह—

**अष्टोत्तरसहस्रस्य नाम्नामन्वर्थमर्हताम्।**
**वीरान्तानां निरुक्तं यत्सोत्र नामस्तवो मतः॥ ३९॥**

**सोत्र** नामाद्याश्रयेषु मध्ये **नामस्तवो मत** इष्टः। यत्किम्? **यन्निरुक्तं** निर्वचनं क्रियते। किंविशिष्टम्? **अन्वर्थ**मभिधेयानुगतम्। कस्य? **अष्टोत्तरसहस्रस्य**। केषाम्? **नाम्नाम्**। केषां संबन्धित्वेन? **अर्हताम्**। किंविशिष्टानाम्? **वीरान्तानां** नाम्नामिति श्रीमदादिसंज्ञानाम्। तानि चार्षे पञ्चविंशतितमे पर्वणि—

"श्रीमान् स्वयंभूर्वृषभः शंभवः शंभुरात्मभूः ।
स्वयंप्रभः प्रभुर्भोक्ता विश्वभूरपुनर्भवः ॥" इत्यादिना ।
"शुभंयुः सुखसाद्भूतः पुण्यराशिरनामयः ।
धर्मपालो जगत्पालो धर्मसाम्राज्यनायकः ॥"

इत्यन्तेन प्रबन्धेनोक्तानि प्रतिपत्तव्यानि । अन्वर्थमर्थमनुगतम् । तद्यथा—श्रीरन्तरङ्गा अनन्तज्ञानादिलक्षणा बहिरङ्गा च समवसरणाष्टमहाप्रातिहार्यादिस्वभावा लक्ष्मीरस्यातिशयेन हरिहराद्यसंभवित्वेनास्तीति श्रीमान् । तथा स्वयं परोपदेशमन्तरेण मोक्षमार्गमवबुध्यानुष्ठाय चानन्तचतुष्टयरूपतया भवतीति स्वयंभूः । तथा वृषेण धर्मेण भातीति वृषभः । तथा शं सुखं भवत्यस्माद्भव्यानामिति शंभवः । एवमन्येषामपि यथाम्नायमन्वर्थता चिन्त्या । तथा हि,—

ध्यानद्रुघणनिर्भिन्नघनघातिमहातरुः ।
अनन्तभवसंतानजयादासीरनन्तजित् ॥
त्रैलोक्यनिर्जयावाप्तदुर्दर्पमतिदुर्जयम् ।
मृत्युराजं विजित्यासीज्जिन मृत्युञ्जयो भवान् ॥ इत्यादि ।

व्यावहारिकत्वं च नामस्तवस्य स्तुत्यस्य परमात्मनो वाचामगोचरत्वात् । तथा चोक्तमार्षे—

गोचरोपि गिरामासां त्वमवाग्गोचरो मतः ।
स्तोतुस्तथाप्यसंदिग्धं त्वत्तोभीष्टफलं भवेत् ॥

तथा,—

संज्ञासंज्ञद्वयावस्थाव्यतिरिक्तामलात्मने ।
नमस्ते वीतसंज्ञाय नमः क्षायिकदृष्टये ॥

वीरान्तानामिति वृषभादिवर्धमानान्तानां तीर्थकराणां चतुर्विंशतेः । सामान्यविवक्षया चायं नामस्तवश्चतुर्विंशतेरपि तीर्थकृतां श्रीमदादिसंज्ञावाच्यत्वाविशेषात् । विशेषापेक्षया तु वृषभादिचतुर्विंशतेः पृथङ्नाम्नां निर्वचनमुच्चारणं वा नामस्तवः । यथा सर्वभक्तिभाक् 'थोस्सामि'

इत्यादिस्तवः। 'चउवीसं तित्थयरे' इत्यादिर्वा। 'ऋषभोऽजितनामा च' इत्यादिर्वा।

स्थापनास्तवमाह—

**कृत्रिमाकृत्रिमा वर्णप्रमाणायतनादिभिः।**
**व्यावर्ण्यन्ते जिनेन्द्रार्चा यदसौ स्थापनास्तवः॥ ४०॥**

**असौ स्थापनास्तवः** स्यात्। यत्किम्? **यद्व्यावर्ण्यन्ते** स्तूयन्ते। काः? **जिनेन्द्रार्चाः**। किंविशिष्टाः? **कृत्रिमाकृत्रिमाः**। करणेन निर्वृत्ताः कृत्रिमाः तद्विपरीता अकृत्रिमाः। कृत्रिमाश्चाकृत्रिमाश्चेति द्वन्द्वः कैर्व्यावर्ण्यन्ते? **वर्णप्रमाणायतनादिभिः**। वर्णो रूपम्। प्रमाणमुत्सेधः। आयतनं चैत्यालयः। आदिशब्देन संस्थानदीप्त्यादिग्रहः। वर्णश्च प्रमाणं चायतनं च वर्णप्रमाणायतनानि तान्यादयो येषां ते वर्णादयस्तैः। जिनेन्द्रार्चा इति जिनेन्द्राणां तीर्थकराणां चतुर्विंशतेरपरिमितानां वा अर्चाः प्रतिमाः। तत्र चतुर्विंशतेः कृत्रिमा इतरेषां चाकृत्रिमा इति योज्यम्। उक्तं चाचारटीकायां—चतुर्विंशतितीर्थकराणामपरिमितानां वा कृत्रिमाकृत्रिमा-स्थापनानां स्तवनं चतुर्विंशतिस्थापनास्तव इति। अथवा अकृत्रिमा इत्युपचारादुभयत्रापि योज्यम्।

द्रव्यस्तवमाह—

**वपुर्लक्ष्मगुणोच्छ्रायजनकादिमुखेन या।**
**लोकोत्तमानां संकीर्तिश्चित्रो द्रव्यस्तवोस्ति सः॥ ४१॥**

**सोस्ति द्रव्यस्तवः**। किंविशिष्टः? **चित्रो** नानाप्रकार आश्चर्यभूतो वा। या किम्? **या संकीर्तिः** सम्यक्कीर्तनम्। केषाम्? **लोकोत्तमानाम्**। केन? **वपुर्लक्ष्मगुणोच्छ्रायजनकादिमुखेन**। वपुश्च लक्ष्माणि च गुणाश्चोच्छ्रायश्च जनकादयश्च। तेषां मुखेन द्वारेणोपायेन प्राधान्येन वा। वपुर्मुखेन यथा—

**सनवव्यञ्जनशतैरष्टाग्रशतलक्षणैः।**
**विचित्रं जगदानन्दि जयतादर्हतां वपुः॥**

अपि च,—

जिनेन्द्रान्नौमि तान्येषां शारीराः परमाणवः।
विद्युतामिव मुक्तानां स्वयं मुञ्चन्ति संहतिम्॥

लक्ष्माणि श्रीवृक्षादिलक्षणानि वृषभादिलाञ्छनानि च। तत्राष्टोत्तरशतं लक्षणानि, व्यञ्जनानि नवशतान्यार्षे पञ्चदशे पर्वणि। तानि श्रीवृक्षशङ्खाब्जेत्यादिना व्यञ्जनान्यपराण्यासन् शतानि नवसंख्यया इत्यन्तेन प्रबन्धेनोक्तानि वेदितव्यानि। चिह्नानि यथा—

गौर्गजोऽश्वः कपिः कोकः सरोजं स्वस्तिकः शशी।
मकरः श्रीयुतो वृक्षो गण्डो महिषशूकरौ॥
सेधा वज्रं मृगश्छागः पाठीनः कलशस्तथा।
कच्छपश्चोत्पलं शंखो नागराजश्च केशरी॥
इत्येतान्युक्तदेशेषु लाञ्छनानि प्रयोजयेत्।

गुणा निःस्वेदत्वादयो वर्णादयश्च। निःस्वेदत्वादिमुखेन यथा—

निःस्वेदत्वमनारतं विमलता संस्थानमाद्यं शुभं,
तद्वत्संहननं भृशं सुरभिता सौरूप्यमुच्चैः परम्।
सौलक्षण्यमनन्तवीर्यमुदितिः पथ्या प्रियाऽसृक् च यः,
शुभ्रं चातिशया दशेह सहजाः सन्त्वर्हदङ्गानुगाः॥

वर्णमुखेन यथा—

श्रीचन्द्रप्रभनाथपुष्पदशनौ कुन्दावदातच्छवी,
रक्ताम्भोजपलाशवर्णवपुषौ पद्मप्रभद्वादशौ।
कृष्णौ सुव्रतयादवौ च हरितौ पार्श्वः सुपार्श्वश्च वै,
शेषाः सन्तु सुवर्णवर्णवपुषो मे षोडशाऽघच्छिदे॥

उच्छ्राय उत्सेधः। तन्मुखेन यथा—

नाभेयस्य शतानि पञ्च धनुषां मानं परं कीर्तितं,
सद्भिस्तीर्थकराष्टकस्य निपुणं पञ्चाशदूनं हि तत्।
पञ्चानां च दशोनकं भुवि भवेत्पञ्चोनकं चाष्टके,
हस्ताः स्युर्नवसप्त चान्त्यजिनयोर्येषां प्रमा नौमि तान्॥

जनकादीनि। जनकश्च जननी च जनकौ मातापितरौ। मातृद्वारेण यथा—

वंशः क्षायिकदृक् समिद्धसुधियां योस्मिन्मनूनामभूद्,
ये चेक्ष्वाकुकुरूग्रनाथहरियुग्वंशाः पुरा वेधसाः।
आधानादिविधिप्रबन्धमहिताः सृष्टास्तदुत्थार्यभू,
भर्तृस्वामिकजीविताः सुकुलजा जैन्यो जयन्त्यम्बिकाः॥

आदिशब्देन मातृस्वप्नमुखेन यथा—

मात्रा तीर्थङ्कराणां परिचरणपरश्रीप्रभृत्योद्धवादि—
श्रीसंभेदाग्रदूता रजनिविरमणे स्वप्नभाजेक्षिता ये।
श्रीभोक्षेभारिमास्त्रक्शशिरविझषकुम्भाब्जषण्डाब्धिपीठ-
द्योयानाशीविषौको वसुचयशिखिनः सन्तु ते मङ्गलं नः॥

कान्त्यादिद्वारेण यथा —

कान्त्यैव स्नपयन्ति ये दश दिशो धाम्ना निरुन्धन्ति ये
धामोद्दाममहस्विनां जनमनो मुष्णन्ति रूपेण ये।
दिव्येन ध्वनिना सुखं श्रवणयोः साक्षात्क्षरन्तोमृतं
वन्द्यास्तेष्टसहस्रलक्षणधरास्तीर्थेश्वराः सूरयः॥
येभ्यर्चिता मुकुटकुण्डलहाररत्नैः
शक्रादिभिः सुरगणैः स्तुतपादपद्माः।
ते मे जिनाः प्रवरवंशजगत्प्रदीपा—
स्तीर्थङ्कराः सततशान्तिकरा भवन्तु॥

दीक्षावृक्षमुखेन यथा—

न्यग्रोधो मदगन्धिसर्जमसनश्यामे शिरीषोर्हता—
मेते ते किल नागसर्जजटिनः श्रीतिन्दुकः पाटलाः।
जम्बश्वत्थकपित्थनन्दिकविटाम्रा वंजुलश्चम्पको
जीयासुर्वकुलोत्र वांशिकधवौ शालश्च दीक्षाद्रुमाः॥

लोकोत्तमानामिति परभागप्राप्तप्रभुत्वभाक्त्वात्तीर्थकृताम्। यदाह—

तित्थयराण पहुत्तं णेहो बलदेव केसवाणं च।
दुःखं च सवत्तीणं तिण्णि वि परभागपत्ताइं॥

क्षेत्रस्तवमाह—

**क्षेत्रस्तवोर्हतां स स्यात्तत्स्वर्गावतरादिभिः ।**
**पूतस्य पूर्वनाद्र्यादेर्यत्प्रदेशस्य वर्णनम् ॥ ४२ ॥**

अर्हतां स क्षेत्रस्तवः स्यात् । यत्किम् ? यद्वर्णनम् । कस्य ? प्रदेशस्य । किंविशिष्टस्य ? पूर्वनाद्र्यादेः पुरोऽयोध्यादयः । वनानि सिद्धार्थादीनि । अद्रयः कैलासादयः । पुरश्च वनानि चाद्रयश्च पूर्वनाद्रयः । ते आदयो यस्य नद्यादेरसौ पूर्वनाद्र्यादिस्तस्य । पुनः किंविशिष्टस्य ? पूतस्य पवित्रस्य । कैः ? तत्स्वर्गावतरादिभिः स्वर्गादवतरो भूमाववतरणं स्वर्गावतरः । स आदिर्येषां जन्मनिष्क्रमणज्ञाननिर्वाणानां तानि स्वर्गावतरादीनि । तेषामर्हतां स्वर्गावतरादीनि तत्स्वर्गावतरादीनि, तैः ।

कालस्तवमाह—

**कालस्तवस्तीर्थकृतां स ज्ञेयो यदनेहसः ।**
**तद्गर्भावतराद्युद्धक्रियादृप्तस्य कीर्तनम् ॥ ४३ ॥**

स तीर्थकृतां कालस्तवो ज्ञेयो बोद्धव्यः । यत्किम् ? यत्कीर्तनं क्रियते । कस्य ? अनेहसः कालस्य । किंविशिष्टस्य ? तद्गर्भावतराद्युद्धक्रियादृप्तस्य तेषां तीर्थकृतां गर्भावताराद्युद्धक्रिया गर्भावतरणप्रसवननिष्क्रमणज्ञाननिर्वाणप्रशस्तक्रियास्तद्गर्भावतराद्युद्धक्रियाः । ताभिर्दृप्तस्य लक्षणया गर्वितस्य ॥

भावस्तवमाह—

**वर्ण्यन्तेनन्यसामान्या यत्कैवल्यादयो गुणाः ।**
**भावकैर्भावसर्वस्वदिशां भावस्तवोस्तु सः ॥ ४४ ॥**

अस्तु भवतु स भावस्तव । केषाम् ? भावसर्वस्वदिशां जीवादिपदार्थाश्रितद्रव्यगुणपर्ययसंपदुपदेशिनाम् । भावानां जीवादिपदार्थानां सर्वस्वं द्रव्यादिसंपदं दिशन्ति ये तेषाम् । यत्किम् ? यद्वर्ण्यन्ते । के ? गुणाः । किंविशिष्टाः ? कैवल्यादयः केवलज्ञानदर्शनादयः । पुनः किंवि-

शिष्टाः ? अनन्यसामान्याः । नास्त्यन्यत् सामान्यं साधारणं येषां तेऽनन्यसामान्याः अनन्यसदृशा इत्यर्थः । कैः ? भावकै—र्भावनानिष्ठैर्भव्यैः । सोऽस्मत्कृतो यथा—

विवर्तैः स्वैर्द्रव्यं प्रतिसमयमुद्यद् व्ययदपि,
स्वरूपादुल्लोलैर्जलमिव मनागप्यविचलत् ।
अनेहोमाहात्म्याहितनवनवीभावमखिलं,
प्रमिन्वानाः स्पष्टं युगपदिह नः पान्तु जिनपाः ॥

एष एव भगवतां वास्तवस्तवः केवलज्ञानादिगुणानां तद्वतां चाव्यतिरेकादैक्यसंभवात् । यथाह—

तं[1] णिच्छएण जुंजइ ण सरीरगुणेहिं हुंति केवलिणो ।
केवलिगुणे थुणइ जो सो सच्चं केवली थुणइ ॥

व्यवहारनिश्चयस्तवयोः फलविभागं प्ररूपयन्नुपयोगाय प्रेरयति—

लोकोत्तराभ्युदयशर्मफलां सृजन्त्या,
पुण्यावलीं भगवतां व्यवहारनुत्या ।
चित्तं प्रसाद्य सुधियः परमार्थनुत्या,
स्तुत्ये नयन्तु लयमुत्तमबोधिसिद्ध्यै ॥ ४५ ॥

नयन्तु प्रापयन्तु । के ? सुधियः । किम् ? चित्तं मनः । कं नयन्तु ? लयमासक्तिम् । क ? स्तुत्ये शुद्धचिद्रूपस्वरूपे । कया ? परमार्थनुत्या निश्चयस्तवनेन । केषाम् ? भगवतां परमाराध्यतीर्थकराणाम् । कस्यै ? उत्तमबोधिसिद्ध्यै निश्चयरत्नत्रयसंप्राप्त्यर्थम् । किं कृत्वा ? प्रसाद्य प्रसन्नीकृत्य । किं तत् ? चित्तम् । कया ? व्यवहारनुत्या व्यवहारस्तवनेन । केषाम् ? भगवताम् । किं कुर्वत्या ? सृजन्त्या जनयन्त्या । काम् ? पुण्यावलीं सुकृतश्रेणीम् । किंविशिष्टाम् ? लोकोत्तराभ्युदयशर्मफलाम् ? लोकोत्तरोऽ-

---

१ तं निश्चयेन योजयत न शरीरगुणैर्भवन्ति केवलिनः ।
केवलिगुणान् स्तौति यः स सत्यं केवलिनं स्तौति ॥

लौकिकोऽभ्युदयः पूजार्थाज्ञैश्वर्यादिविभूत्यतिशयः । तस्य शर्म सुखम् । तदेव फलं यस्याः सैवम् ।

अथैकादशभिः पद्यैर्वन्दनां व्याचिख्यासुरादितस्तावल्लक्षणमाह—

**वन्दना नतिनुत्याशीर्जयवादादिलक्षणा ।**
**भावशुद्ध्या यस्य तस्य पूज्यस्य विनयक्रिया ॥ ४६ ॥**

भवति । कासौ ? **वन्दना** । किंरूपा ? **विनयक्रिया** विनयकर्म । कस्य ? **पूज्यस्य** । किंविशिष्टस्य ? **यस्य तस्य** अर्हदादीनां वृषभादीनां चान्यतमस्य । कया ? **भावशुद्ध्या** परिणामप्रसत्त्या । उक्तं च—

'किदियम्मं चिदियम्मं पूजाकम्मं च विणयकम्मं च ।'[1] इति ।

किमात्मिका ? **नतिनुत्याशीर्जयवादादिलक्षणा** । नतिश्च नुतिश्चाशीश्च जयवादादयश्च नतिनुत्याशीर्जयवादाः । ते आद्यो येषां नामनिर्वचनगुणानुध्यानादीनां ते नत्यादयः । त एव लक्षणं स्वरूपं यस्याः सैवम् । प्रणतिर्वन्दनेति कश्चित् । तथा चोक्तं—

कर्मारण्यहुताशानां पञ्चानां परमेष्ठिनाम् ।
प्रणतिर्वन्दनाऽवादि त्रिशुद्धा त्रिविधा बुधैः ॥

को विनय इत्याह—

**हिताहिताप्तिलुप्त्यर्थं तदङ्गानां सदाञ्जसा ।**
**यो महात्म्योद्भवे यत्नः स मतो विनयः सताम् ॥ ४७ ॥**

**स विनयः सतां मतः** । साधुभिरिष्यते इत्यर्थः । यः किम् ? **यो यत्नः**स्तात्पर्यम् । क्व ? **माहात्म्योद्भवे** शक्तिविशेषस्योत्पादे उल्लासे च । कथम् ? **अञ्जसा** निर्व्याजम् । कदा ? **सदा** सर्वदा । केषाम् ? **तदङ्गानां** हितप्राप्त्यहितच्छेदनसाधनानाम् । किमर्थम् ? **हिताहिताप्तिलुप्त्यर्थम्** आप्तिश्च प्राप्तिर्लुप्तिश्च छित्तिराप्तिलुप्ती । हिताहितयोराप्तिलुप्ती हिताहिताप्तिलुप्ती हितप्राप्त्यहितच्छेदने, ताभ्यां तदर्थम् ।

---

१—कृति कर्म चितिकर्म पूजाकर्म च विनयकर्म च ।

विनयस्य पञ्चविधत्वमनुवर्ण्य मोक्षार्थस्य तस्य निर्जरार्थिनामवश्यकर्तव्यतामुपदिशति—

**लोकानुवृत्तिकामार्थभयनिश्रेयसाश्रयः ।**
**विनयः पञ्चधावश्यकार्योन्त्यो निर्जरार्थिभिः ॥ ४८ ॥**

**विनयः पञ्चधा** पञ्चप्रकारः स्यात् । कथंभूतः ? **लोकानुवृत्तीत्यादि** । लोकानुवृत्तिर्व्यवहारजनानुकूलाचरणं आभिमानिकरसानुविद्धा । यतः सर्वेन्द्रियप्रीतिः स कामः । यतः सर्वप्रयोजनसिद्धिः सोर्थः । भयं भीतिः । निःश्रेयसं मोक्षः । लोकानुवृत्तिश्च कामश्चार्थश्च भयं च निःश्रेयसं च । तान्याश्रयो विषयो यस्य स एवम् । तत्रान्त्यो मोक्षविनयः स्यात् । किंविशिष्टः ? **अवश्यकार्यो** नियमेन कर्तव्यः । कैः ? **निर्जरार्थिभिः** । स च दर्शनादिभेदात्पञ्चधा प्राक् प्रपञ्चितः । तथा चोक्तम्—

लोकानुवर्तनाहेतुस्तथा कामार्थहेतुकः
विनयो भयहेतुश्च पञ्चमो मोक्षसाधनः ॥
उत्थानमञ्जलिः पूजाऽतिथेरासनढौकनम् ।
देवपूजा च लोकानुवृत्तिकृद्विनयो मतः ॥
भाषाछन्दानुवृत्तिं च प्रदानं देशकालयोः ।
लोकानुवृत्तिरर्थाय विनयश्चाञ्जलिक्रिया ॥
कामतन्त्रे भये चैव ह्येवं विनय इष्यते ।
विनयः पञ्चमो यस्तु तस्यैषा स्यात्प्ररूपणा ॥

नामादिनिक्षेपभेदात् षोढा वन्दनां निर्दिशन्नाह—

**नामोच्चारणमर्चाङ्गकल्याणावन्यनेहसाम् ।**
**गुणस्य च स्तवाश्चैकगुरोर्नामादिवन्दना ॥ ४९ ॥**

भवन्ति । काः ? **नामादिवन्दनाः** । कस्य ? **एकगुरोरेकस्यार्हदादी**नामन्यतमस्य गुरोः पूज्यस्य । कथम् ? **नामोच्चारणम्** । न केवलं, **स्तवाश्च** स्तवनानि । केषाम् ? **अर्चाङ्गकल्याणावन्यनेहसाम्** । न केवलं, **गुणस्य च** । अवनिश्चानेहा चावन्यनेहसौ । कल्याणानां गर्भावतरणादिसंबन्धिनाम-

वन्यनेहसौ कल्याणावन्यनेहसौ । गर्भावतरणादिकल्याणानां भूमिः कालश्चेत्यर्थः । अर्चा प्रतिमा । अङ्गं शरीरम् । अर्चा चांगं च कल्याणावन्यनेहसौ चार्चाङ्गकल्याणावन्यनेहसस्तेषाम् । तत्र नामोच्चारणं नामवन्दना । अर्चास्तवनं स्थापनावन्दना । शरीरस्तवनं द्रव्यवन्दना । कल्याणभूमिस्तवनं क्षेत्रवन्दना । कल्याणकालस्तवनं कालवन्दना । गुणस्तवनं भाववन्दना ।

अवान्तरवन्द्यान् वन्दारुं च निर्दिशति—

**सूरिप्रवर्त्युपाध्यायगणिस्थविररात्निकान् ।**
**यथार्हं वन्दतेऽमानः संविग्नोऽनलसो यतिः ॥ ५० ॥**

सूरिः सारणवारणकारी । प्रवर्ती प्रवर्तकः । उपाध्यायः पाठकः । गणी गणरक्षको राजसभादिविदितः । स्थविरो मर्यादाकारकः । रात्निको रत्नत्रयाधिकः । **वन्दते** विनयकर्मणा संभावयति । कोसौ ? **यतिः** श्रमणः । किंविशिष्टः ? **अमानो**ऽगर्वः । पुनः किंविशिष्टः ? **संविग्नः** संसारभीरुः । पुनरपि किंविशिष्टः ? **अनलस** आलस्यरहितः । कान् ? **सूर्यादीन्** । कथम् ? **यथार्हम्** अर्हस्य योग्यस्यानतिक्रमेण । सूरिश्च प्रवर्ती चोपाध्यायश्च गणी च स्थविरश्च रात्निकश्च, तान् ।

विधिवन्दनाया विप्रकर्षवशाद्विषयविभागार्थमाह—

**गुरौ दूरे प्रवर्त्याद्या वन्द्या दूरेषु तेष्वपि ।**
**संयतः संयतैर्वन्द्यो विधिना दीक्षया गुरुः ॥ ५१ ॥**

**वन्द्याः** । के ? **प्रवर्त्याद्याः** प्रवर्तकादयः । कैः ? **संयतैः** । क्व सति ? **गुरौ** आचार्ये । किंविशिष्टे ? **दूरे** देशाद्यन्तरिते । केन ? **विधिना** क्रियाकाण्डोक्तविधानेन । **तेष्वपि** प्रवर्त्यादिषु **दूरेषु** सत्सु संयतैर्विधिना वन्द्यः । कोसौ ? **संयतः** सुविहितः । किंविशिष्टः ? **गुरु**र्ज्येष्ठः । कया ? **दीक्षया** प्रव्रज्यया ।

सागारेतरयत्योरवन्दनीयान्निर्दिशति—

**श्रावकेणापि पितरौ गुरू राजाप्यसंयताः ।**
**कुलिङ्गिनः कुदेवाश्च न वन्द्याः सोपि संयतैः ॥ ५२ ॥**

**न वन्द्याः** । के ? पित्रादयः । किंविशिष्टाः ? **असंयताः** । केन ? **श्रावकेणापि** यथोक्तानुष्ठाननिष्ठेन सागारेणापि किं पुनरनगारेणेत्यपि शब्दार्थः । माता च पिता च **पितरौ** । गुरुश्च गुरुश्च **गुरू** । दीक्षागुरुः शिक्षागुरुश्च । **राजापि** । किं पुनरमात्यादिरित्यपिशब्दार्थः । **कुलिङ्गिन**स्तापसादयः पार्श्वस्थादयश्च । **कुदेवा** रुद्रादयः शासनदेवतादयश्च । तथा **सोपि** शास्त्रोपदेशाधिकारी श्रावकोपि न वन्द्यः । कैः ? **संयतै**र्यतिभिः ।

संयतेपि वन्दनाविधिनियमार्थमाह—

**वन्द्यो यतोप्यनुज्ञाप्य काले साध्वासितो न तु ।**
**व्याक्षेपाहारनीहारप्रमादविमुखत्वयुक् ॥ ५३ ॥**

**वन्द्यः** । कोसौ ? **यतोपि** संयतोपि । कैः ? संयतैः । क्व ? **काले** । किंविशिष्टः सन् ? **साध्वासितः** सम्यगुपविष्टः । किं कृत्वा ? **अनुज्ञाप्य** भगवन्, वन्देऽहमिति विज्ञापनया वन्दस्वेत्यनुज्ञां कारयित्वा । उक्तं च—

आसने ह्यासनस्थं च शान्तचित्तमुपस्थितम् ।
अनुज्ञाप्यैव मेधावी कृतिकर्म निवर्तयेत् ॥

**न तु** न पुनर्यतोपि वन्द्यः । किंविशिष्टः ? व्याक्षेपेत्यादि । व्याक्षेपो व्याकुलत्वम् । आहारो भोजनम् । नीहारो विण्मूत्रोत्सर्गः । प्रमादोऽनवधानम् । विमुखत्वं पराङ्मुखत्वम् । व्याक्षेपश्चाहारश्च नीहारश्च प्रमादश्च विमुखत्वं च तानि युनक्ति आत्मना संबध्नातीति व्याक्षेपादियुक् । उक्तं च—

व्याक्षिप्तं च पराचीनं मा वन्दिष्ठाः प्रमादिनम् ।
कुर्वन्तं सन्तमाहारं नीहारं चापि संयतम् ॥

काल इति व्याचष्टे—

**वन्द्या दिनादौ गुर्वाद्या विधिवद्विहितक्रियैः ।**
**मध्याह्ने स्तुतदेवैश्च सायं कृतप्रतिक्रमैः ॥ ५४ ॥**

**वन्द्याः** । के ? **गुर्वाद्या** आचार्यादयः । क्व ? **दिनादौ** प्रातः । किंवत् ? **विधिवत्** क्रियाकाण्डोक्तविधानेन । कैः ? **विहितक्रियैः** कृत-

प्राभातिकानुष्ठानैर्यतिभिः । तथा गुर्वादयो विधिवन्मध्याह्ने यतिभिर्वन्द्याः । किंविशिष्टैः ? स्तुतदेवैः कृतदेववन्दनैः । तथा गुर्वादयो विधिवत्सायं संध्यायां यतिभिर्वन्द्याः । किंविशिष्टैः ? कृतप्रतिक्रमैः प्रतिक्रमणं कृतवद्भिः । चशब्दोत्र नैमित्तिकक्रियानन्तरं विधिवन्दनासमुच्चयार्थः ।

आचार्यशिष्ययोः शेषयतीनां च वन्दनाप्रतिवन्दनयोर्विषयविभागनिर्णयार्थमाह—

सर्वत्रापि क्रियारम्भे वन्दनाप्रतिवन्दने ।
गुरुशिष्यस्य साधूनां तथा मार्गादिदर्शने ॥ ५५ ॥

कर्तव्ये इत्यध्याहारः । के ? वन्दनाप्रतिवन्दने । कस्य ? गुरुशिष्यस्य । गुरुश्च शिष्यश्च गुरुशिष्यं, तस्य । शिष्येण गुरुर्वन्द्य आचार्येण च शिष्यः प्रतिवन्द्य इत्यर्थः । क्व ? क्रियारम्भे कृतिकर्मोपक्रमे । किंविशिष्टे ? सर्वत्रापि । नित्ये नैमित्तिके चेत्यर्थः । तथा वन्दनाप्रतिवन्दने साधूनां शेषयतीनां कर्तव्ये यथायोग्यम् । क्व ? मार्गादिदर्शने मार्गे दृष्टेषु यतिषु । आदिशब्दान्मलोत्सर्गोत्तरकालं कायोत्सर्गानन्तरदर्शनेपि ।

सामायिकादित्रयस्य व्यवहारानुसारेण प्रयोगविधिं दर्शयति—

सामायिकं णमो अरहंताणमिति प्रभृत्यथ स्तवनम् ।
थोसामीत्यादि जयति भगवानित्यादिवन्दनां युंज्यात् ५६

युंज्यात् संयतो देशसंयतो वा प्रयोजयेत् । किं तत् ? सामायिकं सामायिकदण्डकम् । कीदृशम् ? णमो अरहंताणं इति प्रभृति । तथानन्तरं युञ्ज्यात् । किं तत् ? स्तवनं चतुर्विंशतिस्तवनं स्तवदण्डकम् । कीदृशम् ? थोसामि इत्यादि । अथ अनन्तरं युञ्ज्यात् । काम् ? जयति भगवानित्यादिवन्दनाम् । अत्रैक आदिशब्दो लुप्तनिर्दिष्टो द्रष्टव्यः । तेन अर्हत्सिद्धादिवन्दना गृह्यते ।

अथ प्रतिक्रमणस्य लक्षणविकल्पनिर्णयार्थमाह—

अहर्निशापक्षचतुर्मासाब्देर्योत्तमार्थभूः ।
प्रतिक्रमस्त्रिधा ध्वंसो नामाद्यालम्बनागसः ॥ ५७ ॥

भवति। कोसौ? **प्रतिक्रमः** प्रतिक्रमणम्। किंलक्षणः? **ध्वंसः** प्रध्वंस आत्मनोऽपसारणम्। कस्य? **नामाद्यालम्बनागसो** नामस्थापना-षट्काश्रितस्यापराधस्य पापस्य वा। नाम आदिर्यस्य स्थापनादेस्तन्नामादि नामस्थापनाद्रव्यक्षेत्रकालभावषट्कम्। तद् आलम्बनमाश्रयो यस्य तन्नामाद्यालम्बनम्। तच्च तदागोऽपराधः पापं वा नामाद्यालम्बनागस्त-त्तस्य। कथम्? **त्रिधा** मनोवाक्कायैः कृतकारितानुमतैश्च। अथवा निन्द-नगर्हणालोचनैर्मनोवाक्कायैर्वा। नामाद्याश्रयस्यागसो ध्वंसः। उक्तं च—

**विनिन्दनालोचनगर्हणैरहं, मनोवचःकायकषायनिर्मितम्।**
**निहन्मि पापं भवदुःखकारणं, भिषग्विषं मन्त्रगुणैरिवाखिलम्॥**

तदेतत्प्रतिक्रमणलक्षणम्। उक्तं च—

**प्रमादप्राप्तदोषेभ्यः प्रत्यावृत्त्य गुणावृतिः।**
**स्यात्प्रतिक्रमणा यद्वा कृतदोषविशोधना॥**

किं विकल्पोसौ प्रतिक्रमः? अहरित्यादि। अहर्दिनम्। निशा रात्रिः। पक्षः पञ्चदशाहोरात्रः। चतुर्मासं मासचतुष्टयम्। अब्दः संवत्सरः। ईर्या ईर्यापथः। उत्तमार्थो निःशेषदोषालोचनपूर्वकाङ्गविसर्गसमर्थो यावज्जीवं चतुर्विधाहारपरित्यागः। अहश्च निशा च पक्षश्च चतुर्मासं चाब्दश्चेर्या चोत्त-मार्थश्च अहर्निशापक्षचतुर्मासाब्देर्योत्तमार्थाः। तेषु सप्तसु भवत्यहरादयो वा सप्त भुवो विषया यस्य स एवम्। आह्निकादिभेदात्सप्तविध इत्यर्थः। प्रति-क्रमणभेदकथनमिदम्। उक्तं च—

**ऐर्यापथिकरात्र्युत्थं प्रतिक्रमणमाह्निकम्।**
**पाक्षिकं च चतुर्मासवर्षोत्थं चोत्तमार्थिकम्॥**

तथालोचनापूर्वकत्वात्प्रतिक्रमणायाः सापि तद्वत्सप्तधा स्यादित्यपि बोद्ध-व्यम्। उक्तं च—

**आलोचणं दिवसियं राइय इरियावहं च बोद्धव्वं।**[1]
**पक्खय चादुम्मासिय संवच्छरमुत्तमट्ठं च॥**

---

१ आलोचनं दिवसिकं रात्रिकमीर्यावृतं च बोद्धव्यम्।
पाक्षिकं चातुर्मासिकं सांवत्सरमुत्तमार्थं च॥

एवमाचारशास्त्रमतेन सप्तविधं प्रतिक्रमणमभिधाय शास्त्रान्तरोक्ततद्भेदान्तराणामत्रैवान्तर्भावप्रकाशनार्थमाह—

**सोन्त्ये गुरुत्वात् सर्वातीचारदीक्षाश्रयोऽपरे ।**
**निषिद्धिकेर्यालुञ्चाशब्दोषार्थश्च लघुत्वतः ॥ ५८ ॥**

अन्तर्भवतीत्यध्याहारः । स प्रतिक्रमः सर्वातीचारदीक्षाश्रयोऽन्तर्भवति । क्व ? अन्त्ये उत्तमार्थे । कस्मात् ? गुरुत्वाद् भक्त्युच्छ्वासदण्डकपाठबहुलत्वात् । सर्वातीचारा दीक्षाग्रहणात्प्रभृति संन्यासग्रहणकालं यावत्कृता दोषाः । दीक्षा व्रतादानम् । सर्वातीचाराश्च दीक्षा च सर्वातीचारदीक्षाः । ता आश्रयो विषयो यस्य प्रतिक्रमस्य सोयं सर्वातीचारदीक्षाश्रयः । सर्वातीचाराश्रयो दीक्षाश्रयश्चेत्यर्थः । सर्वातीचारप्रतिक्रमणा व्रतारोपणप्रतिक्रमणा चोत्तमार्थप्रतिक्रमणायां गुरुत्वादन्तर्भवत इत्यर्थः । एतेन बृहत्प्रतिक्रमणाः सप्त भवन्तीत्युक्तं भवति । ताश्च यथा—व्रतारोपणी पाक्षिकी कार्तिकान्तचातुर्मासी फाल्गुनान्तचातुर्मासी आषाढान्तसांवत्सरी सार्वातीचारी उत्तमार्थी चेति । आतिचारी सार्वातीचार्यां त्रिविधाहारव्युत्सर्जनी चोत्तमार्थ्यां प्रतिक्रमणायामन्तर्भवतः । तथा पञ्च संवत्सरान्ते विधेया यौगान्ती प्रतिक्रमणा संवत्सरप्रतिक्रमायामन्तर्भवति । उक्तं च—

**व्रतादाने च पक्षान्ते कार्तिके फाल्गुने शुचौ ।**
**स्यात्प्रतिक्रमणा गुर्वी दोषे संन्यासने मृतौ ॥**

तथा स प्रतिक्रमो निषिद्धिकेर्यालुञ्चाशदोषार्थश्चान्तर्भवति । क्व ? अपरे आह्निकादौ प्रतिक्रमे । कस्मात् ? लघुत्वतो भक्त्युच्छ्वासदण्डकपाठाल्पत्वात् । निषिद्धिकायामीर्या गमनं निषिद्धिकेर्या । निषिद्धिकागमनमित्यर्थः । लुञ्चो दीक्षाग्रहणोत्तरकालं द्वित्रिचतुर्मासविधेयं हस्तेन केशोत्पाटनम् । अशनमाशो भोजनम् गोचर इत्यर्थः दोषो दुःस्वप्नाद्यतीचारः । निषिद्धिकेर्या च लुञ्चश्चाशश्च दोषश्च निषिद्धिकेर्यालुञ्चाशदोषाः । ते चत्वारोऽर्था निमित्तानि यस्य प्रतिक्रमस्य स तथोक्तः । इदमत्र तात्पर्यं, निषिद्धिकागमनप्रतिक्रमणा लुञ्चप्रतिक्रमणा गोचारप्रतिक्रमणा अतीचारप्रतिक्रमणा चैर्यापथिकादिप्रतिक्रमणासु लघुत्वादन्तर्भवन्ति । तत्राद्या पन्थातीचारप्रति-

क्रमणायामन्त्या रात्रिप्रतिक्रमणायां शेषे द्वे दैवसिकप्रतिक्रमणायां चान्ते भवन्तीति विभागः। एतेन सह लघुप्रतिक्रमणा भवन्तीत्युक्तं भवति। उक्तं च—

लुञ्चे रात्रौ दिने भुक्ते निषेधिकागमने पथि।
स्यात् प्रतिक्रमणा लघ्वी तथा दोषे तु सप्तमी॥

नामादिप्रतिक्रमणाः षट् श्लोकद्वयेन विवृण्वन्नाह—

**स्यान्नामादिप्रतिक्रान्तिः परिणामनिवर्तनम्।**
**दुर्नामस्थापनाभ्यां च सावद्यद्रव्यसेवनात्॥ ५९॥**
**क्षेत्रकालाश्रिताद्रागाद्याश्रिताच्चातिचारतः।**
**परिणामनिवृत्तिः स्यात् क्षेत्रादीनां प्रतिक्रमः॥६०॥ युग्मम्।**

**स्यात्** भवेत्। कासौ? **नामादिप्रतिक्रान्तिः**। नामप्रतिक्रमणा स्थापनाप्रतिक्रमणा द्रव्यप्रतिक्रमणा च यथाक्रमं भवेदित्यर्थः। किंलक्षणा? **परिणामनिवर्तनं** परिणामस्यान्यथाभावस्य निवृत्तिः। काभ्याम्? **दुर्नामस्थापनाभ्याम्**। न केवलं, **सावद्यद्रव्यसेवनाच्च**। नाम च स्थापना च नामस्थापने। दुष्टे पापे नामस्थापने दुर्नामस्थापने, ताभ्याम्। पापहेतोर्नाम्नः सरागस्थापनायाश्चेत्यर्थः। सहावद्येन हिंसादिपापेन वर्तते इति सावद्यं हिंसादिपापयुक्तम्। तच्च तद्द्रव्यं च भोज्यादि वस्तु। तस्य सेवनमुपयोगः सावद्यद्रव्यसेवनं, तस्मात्। तथा स्यात्। कोसौ? **प्रतिक्रमः क्षेत्रादीनाम्**। क्षेत्रप्रतिक्रमणा कालप्रतिक्रमणा भावप्रतिक्रमणा चेत्यर्थः। किंलक्षणा? **परिणामनिवृत्तिः**। कस्मात्? **अतिचारतो** दोषात्। किंविशिष्टात्? **क्षेत्रकालाश्रितात्**। क्षेत्रसंबन्धिनः कालसंबन्धिनश्चेत्यर्थः। क्षेत्रं च कालश्च क्षेत्रकालौ। तदाश्रितोऽधिष्ठितः क्षेत्रकालाश्रितस्तस्मात्। न केवलं, **रागाद्याश्रिताच्च** रागद्वेषमोहसंबन्धिन इत्यर्थः। रागादिनाश्रितो रागाद्याश्रितस्तस्मात्। क्षेत्रातीचारपरिणामनिवृत्तिः क्षेत्रप्रतिक्रमः। कालातीचारपरिणामनिवृत्तिः कालप्रतिक्रमः। रागाद्यतीचारपरिणामनिवृत्तिश्च भावप्रतिक्रम इत्यर्थः॥

प्रतिक्रान्तिक्रियायाः कर्तृकर्मकरणाधिकरणकारकाणि लक्षयति—

**स्यात् प्रतिक्रमकः साधुः प्रतिक्रम्यं तु दुष्कृतम् ।**
**येन यत्र च तच्छेदस्तत्प्रतिक्रमणं मतम् ॥ ६१ ॥**

**स्यात्** । कोसो ? **साधुर्यतिः** । किंविशिष्टः ? **प्रतिक्रमकः** प्रतिक्रमति प्रतिगच्छति द्रव्यादिविषयादतीचारान्निवर्तते दोषनिर्हरणे वा प्रवर्तते इति प्रतिक्रमकः । पञ्चमहाव्रतादिश्रवणधारणदोषनिर्हरणतत्पर इत्यर्थः । एतत् कर्तृकारकलक्षणम् । तथा स्यात् । किं तत् ? **दुष्कृतं** मिथ्यात्वाद्यतीचाररूपं पापं तन्निमित्तद्रव्यादिकं वा । किं विशिष्टम् ? **प्रतिक्रम्यं** परित्याज्यम् । **तु**र्विशेषे । एतत् कर्मकारकलक्षणम् । तथा **तन्मत**मिष्टम् । किं तत् ? **प्रतिक्रमणम्** । येन किम् ? **येन** स्यात् । कोसौ ? **तच्छेद**स्तस्य दुष्कृतस्य निर्हरणम् । केन ? येन करणभूतेन मिथ्यादुष्कृताभिधानाभिव्यक्तपरिणामेनाक्षरकदम्बकेन वा । तथा तच्छेदः स्यात् । क्व । **यत्रा**धिकरणभूते यस्मिन् व्रतशुद्धिपूर्वकत्वरूपे व्रतशुद्धिपरिणते वा जीवे । एते करणाधिकरणकारकलक्षणे । उक्तं च—

**जीवो दु[१] वडिक्कमओ दव्वे खेत्ते य काल भावे य ।**
**पडिगच्छदि जेणुज्जहिं तं तस्स भवे पडक्कमणं ॥**
**पडिकमिदव्वं दव्वं सच्चित्ताचित्तमिस्सियं तिविहं ।**
**खेत्तं च गिहादीयं कालो दिवसादिकालम्हि ॥**
**मिच्छत्ते पडिकमणं तह चेव असंजमे पडिक्कमणं ।**
**कसाएसु पडिक्कमणं जोगेसु य अप्पसत्थेसु ॥**

---

१ जीवस्तु प्रतिक्रमको द्रव्ये क्षेत्रे च काले भावे च ।
प्रतिगच्छति येनो...तत्तस्य भवेत्प्रतिक्रमणम् ॥
प्रतिक्रमितव्यं द्रव्यं सच्चित्ताचित्तमिश्रकं त्रिविधम् ।
क्षेत्रं च गृहादिकं कालो दिवसादिकाले ॥
मिथ्यात्वे प्रतिक्रमणं तथा चैव असंयमे प्रतिक्रमणम् ।
कषायेषु प्रतिक्रमणं योगेषु च अप्रशस्तेषु ॥

प्रतिक्रमणप्रयोगविधिमाह—

**निन्दागर्हालोचनाभियुक्तो युक्तेन चेतसा।**
**पठेद्वा शृणुयाच्छुद्ध्यै कर्मघ्नान्नियमान् समान् ॥ ६२ ॥**

**पठेत्** उच्चरेत् साधुः **शृणुयाद्वा** आचार्यादिभ्य आकर्णयेत्। कान्? **नियमान्** प्रतिक्रमणदण्डकान्। किंविशिष्टान्? **समान्** सर्वान्। व्यवहाराविरोधेन पठेच्छृणुयाद्वेति संबन्धः। पुनः किंविशिष्टान्? **कर्मघ्नान्** आवृत्त्या समान् कर्मघ्नानित्यपि योज्यं, सर्वेषां कर्मणां हन्तृत्वोपदेशार्थम्। केन करणभूतेन विशेषणभूतेन वा? **चेतसा** मनसा। किंविशिष्टेन? **युक्तेन** समाहितेन। तदर्थनिष्ठेनेत्यर्थः। किंविशिष्टः सन्? **निन्दागर्हालोचनाभियुक्तः**। कृतदोषस्यात्मसाक्षिकं हा दुष्टं कृतमिति चेतसि भावनं निन्दा। तदेव गुरुसाक्षिकं गर्हा। गुरोर्दोषनिवेदनमालोचनम्। निन्दा च गर्हा चालोचनं च निन्दागर्हालोचनानि। तेष्वभियुक्तोऽभ्युत्थितः। उद्यत इति यावत्। तैर्वा अभि समन्ताद् युक्तः परिणतः। भावप्रतिक्रमणसमाहित इत्यर्थः। स एवं निन्दागर्हालोचनाभियुक्तः। तथा चोक्तम्—

**आलोयण णिंदणगरहणाहिं अब्भुट्ठिओ अकरणाए।**
**तं भावपडिक्कमणं सेसं पुण दव्वदो भणिदं ॥**[1]

किमर्थं पठेच्छृणुयाद्वा? **शुद्ध्यै** विपुलकर्मनिर्जरार्थम्। सर्वातीचारविशुद्ध्यर्थमित्यर्थः। उक्तं च—

**भावयुक्तोऽर्थतन्निष्ठः सदा सूत्रं तु यः पठेत्।**
**स महानिर्जरार्थाय कर्मणो वर्तते यतिः ॥**

इदमत्र तात्पर्यं, यस्मादैदंयुगीना दुःखमाकालानुभावाद्वक्रजडीभूताः स्वयमपि कृतं व्रताद्यतीचारं न स्मरन्ति चलचित्तत्वाच्चासकृत्प्रायशोऽपराध्यन्ति तस्मादीर्यादिषु दोषो भवतु वा मा भवतु, तैः सर्वातीचारविशुद्ध्यर्थं सर्वे प्रतिक्रमणदण्डकाः प्रयोक्तव्याः। तेषु यत्र क्वचिच्चित्तं स्थिरं भवति

---

१ आलोचननिन्दनगर्हणाभिरभ्युत्थितः अकरणे।
तद्भावप्रतिक्रमणं शेषं पुनर्द्रव्यतो भणितम् ॥

तेन सर्वोपि दोषो विशोध्येत । ते हि सर्वेपि कर्मघातसमर्थाः । तथा चोक्तम्—

स प्रतिक्रमणो धर्मो जिनयोरादिमान्त्ययोः ।
अपराधे प्रतिक्रान्तिर्मध्यमानां जिनेशिनाम् ॥
यदोपजायते दोष आत्मन्यन्यतरत्र वा ।
तदैव स्यात्प्रतिक्रान्तिर्मध्यमानां जिनेशिनाम् ॥
ईर्यागोचरदुःस्वप्नप्रभृतौ वर्ततां नवा ।
पौरस्त्यपश्चिमाः सर्वं प्रतिक्रामन्ति निश्चितम् ॥
मध्यमा एकचित्ता यदमूढदृढबुद्धयः ।
आत्मनानुष्ठितं तस्माद्गर्हमाणाः सृजन्ति तम् ॥
पौरस्त्यपश्चिमा यस्मात्समोहाश्चलचेतसः ।
ततः सर्वं प्रतिक्रान्तिरन्धोश्वोत्र निदर्शनम् ॥

प्रतिक्रमणादेरधस्तनभूमिकायामनुष्ठाने मुमुक्षोरुपकारः स्यादननुष्ठाने चापकारो भवेत् । उपरिमभूमिकायां तु तदनुष्ठानेपकार एव भवेदित्युपदेशार्थमाह—

**प्रतिक्रमणं प्रतिसरणं परिहरणं धारणा निवृत्तिश्च ।**
**निन्दा गर्हा शुद्धिश्चामृतकुम्भोन्यथापि विषकुम्भः ॥६३॥**

**प्रतिक्रमणं** दण्डकोच्चारणलक्षणं द्रव्यरूपम् । **प्रतिसरणं** गुणेषु प्रवृत्तिलक्षणा सारणा । **परिहरणं** दोषेभ्यो व्यावृत्तिलक्षणा हारणा । धारणा चित्तस्थिरीकरणम् । निवृत्तिरन्यत्र गतचित्तस्य पुनर्व्यावर्तनम् । शुद्धिः प्रायश्चित्तादिनात्मनः शोधनम् । भवति । कोसौ ? **अमृतकुम्भः** प्रतिक्रमणाद्यष्टकमधस्तनभूमिकायाममृतकुम्भ इव चित्तप्रसादाल्हादविधानात् । कस्य ? साधोः । किं किम् ? **प्रतिक्रमणं, प्रतिसरणं, परिहरणं, धारणा, निवृत्तिर्निन्दा, गर्हा, शुद्धिश्चेत्यष्टौ** । पूर्वश्चः पादपूरणे । उत्तरश्चः समुच्चये । तथा भवति । कोसौ ? **विषकुम्भः** । कथम् ? **अन्यथा** अप्रतिक्रमणादिप्रकारेण यतेर्वृत्ते, पापानुबन्धनिबन्धनत्वेन मोहसंतापादिविधानात् । **अपि**शब्दादुपरितनभूमिकायां प्रतिक्रमणादिरपि

विषकुम्भः, पुण्यास्रवणकारणत्वेन विभवोत्पादनान्मदमतिमोहादिविधानात्। यथाहुः—

पुंण्णेण होइ विहओ विहवेण मओ मएण मइमोहो।
मइमोहेण य पावं तं पुण्णं अम्ह मा होउ॥

किंच, प्रतिक्रमणमित्यत्र ककाररेफसंयोगपरत्वेन प्रागिकारस्तद्गुरुत्वाद्दार्याछन्दोभङ्गो न शङ्क्यः शिथिलोच्चारणस्य विवक्षितत्वात्। यथेह—

वित्तैर्येषां प्रतिपदमियं पूरिता भूतधात्री,
निर्जित्यैतद्भुवनवलयं ये विभुत्वं प्रपन्नाः।
तेप्येतस्मिन् गुरुवचह्रदे बुद्बुदस्तम्बलीलां,
धृत्वा धृत्वा सपदि विलयं भूभुजः संप्रयाताः॥

तथा—

भ्रमति भ्रमरकान्ता नष्टकान्ता वनान्ते।
शत्रोरपत्यानि प्रियंवदानि नोपेक्षितव्यानि बुधैः कदाचित्।
जिनवरप्रतिमानां भावतोहं नमामि। इत्यादौ च।

मुमुक्षोः सकलकर्मसंन्यासभावनापुरस्सरं सकलकर्मफलसंन्यासभावनामभिनयति—

**प्रतिक्रमणमालोचं प्रत्याख्यानं च कर्मणाम्।**
**भूतसद्भाविनां कृत्वा तत्फलं व्युत्सृजेत् सुधीः॥ ६४॥**

सुधीः सम्यग्ज्ञानभावनानिष्ठः साधुर्व्युत्सृजेत्। किं तत्? तत्फलं तेषां कर्मणां ज्ञानावरणादीनां फलं तत्फलं ज्ञानप्रच्छादकत्वादि। किं कृत्वा? कृत्वा विधाय। किं तत्? प्रतिक्रमणम्। न केवलम्, आलोचनम्। न केवलं, प्रत्याख्यानं च तेषां कर्मणां ज्ञानावरणादीनाम्। किंविशिष्टानाम्? भूतसद्भाविनां वृत्तवर्तमानवर्तिष्यमाणानाम्। भूतानि च सन्ति च भावीनि च भूतसद्भावीनि, तेषाम्। इतो विस्तरः—प्रतिक्रमणं

१ पुण्येन भवति विभवो विभवेन मदो मदेन मतिमोहः।
मतिमोहेन च पापं तत्पुण्यमस्मभ्यं मा भवतु॥

भूतकर्मणां पूर्वोपार्जितशुभाशुभकर्मविपाकभवेभ्यो भावेभ्यः स्वात्मानं विनिवर्त्यात्मना तत्करणभूतप्राक्तनकर्मनिवर्तनम् । आलोचनं सत्कर्मणां वर्तमानशुभाशुभकर्मविपाकानामात्मनोत्यन्तभेदेनोपलम्भनम् । प्रत्याख्यानं भाविकर्मणां शुभाशुभस्वपरिणामनिमित्तोत्तरकर्मनिरोधनम् । भूतादिकर्मणां प्रतिक्रमणादिकं कृत्वा तत्फलं सुधीर्व्युत्सृजेदिति संबन्धः । तथाहि—'यदहमकार्षं यदचीकरं यत्कुर्वन्तमप्यन्यं समन्वज्ञासं मनसा च वाचा च कायेन च तन्मिथ्या मे दुष्कृतम्' इत्येवं समस्तव्यस्तैः करणैरेकान्नपञ्चाशता क्रियापदैश्चावर्तनीयम् । यथाह—

कृतकारितानुमननैस्त्रिकालविषयं मनोवचःकायैः ।
परिहृत्य कर्म सर्वं परमं नैष्कर्म्यमवलम्बे ॥

अपि च—

मोहाद्यदहमकार्षं समस्तमपि कर्म तत्प्रतिक्रम्य ।
आत्मनि चैतन्यात्मनि निष्कर्मणि नित्यमात्मना वर्ते ॥

तथा न करोमि, न कारयामि, न कुर्वन्तमप्यन्यं समनुजानामि, मनसा च वाचा च कायेन च इत्यादिपूर्ववत् समस्तव्यस्तैः करणैरेकान्नपञ्चाशता क्रियापदैश्चावर्तनीयमित्यर्थः । यथाह—

मोहविलासविजृम्भितमिदमुदयत् कर्म सकलमालोच्य ।
आत्मनि चैतन्यात्मनि निष्कर्मणि नित्यमात्मना वर्ते ॥

तथा न करिष्यामि, न कारयिष्यामि, न कुर्वन्तमप्यन्यं समनुज्ञास्यामि मनसा च वाचा च कायेन चेत्यादि पूर्ववत् समस्तव्यस्तैः करणैरेकान्नपञ्चाशता क्रियापदैरावर्तनीयमित्यर्थः । यथाह—

प्रत्याख्याय भविष्यत्कर्म समस्तं निरस्तसंमोहः ।
आत्मनि चैतन्यात्मनि निष्कर्मणि नित्यमात्मना वर्ते ॥

एवं चेदमभ्यसनीयम्—

समस्तमित्येवमपास्य कर्म त्रैकालिकं शुद्धनयावलम्बी ।
विलीनमोहो रहितं विकारैश्चिन्मात्रमात्मानमथावलम्बे ॥

तत्फलं ज्ञानावरणादिकर्मफलं व्युत्सृजेद्द्विविधमुत्कृष्टं त्यजेत् । तथा हि—नाहं मतिज्ञानावरणीयफलं भुञ्जे चैतन्यात्मानमात्मानमेव संचेतये । एवं नाहं श्रुतज्ञानावरणीयफलं, नाहमवधिज्ञानावरणीयफलं, इत्यादि समस्तकर्मप्रकृतिष्वावर्तनीयम् । यथाह—

विगलन्तु कर्मविषतरुफलानि मम भुक्तिमन्तरेणैव ।
संचेतयेऽहमचलं चैतन्यात्मानमात्मानम् ॥

अपि च,—

निःशेषकर्मफलसंन्यसनान्ममैवं,
सर्वक्रियान्तरविहारनिवृत्तिवृत्तेः ।
चैतन्यलक्ष्म भजतो भृशमात्मतत्त्वं,
कालावलीयमचलस्य वहत्वनन्ता ॥
यः पूर्वभावकृतकर्मविषद्रुमाणां,
भुङ्क्ते फलानि न खलु स्वत एव तृप्तः ।
आपातकालरमणीयमुदर्करम्यं,
निष्कर्मशर्ममयमेति दशान्तरं सः ॥

अत्यन्तं भावयित्वा विरतिमविरतं कर्मणस्तत्फलाच्च,
प्रस्पष्टं नाटयित्वा प्रलयनमखिलाज्ञानसंचेतनायाः ।
पूर्णं कृत्वा स्वभावं स्वरसपरिगतं ज्ञानसंचेतनां स्वां,
सानन्दं नाटयन्तः प्रशमरसमितः सर्वकालं पिबन्तु ॥

उक्तं च—

कर्मभ्यः कर्मकार्येभ्यः पृथग्भूतं चिदात्मकम् ।
आत्मानं भावयेन्नित्यं नित्यानन्दपदप्रदम् ॥

तथा चोक्तं समयसारे—

कम्मं[१] जं पुव्वकयं सुहासुहमणेयवित्थरविसेसं ।
तं दोसं जो चेयइ सो खलु आलोयणं चेया ॥

---

१ कर्म यत्पूर्वकृतं शुभाशुभमनेकविस्तरविशेषम् ।
तद्दोषं यःचेतयति स खलु आलोचनं चेता ॥
नित्यं प्रत्याख्यानं करोति नित्यं च प्रतिक्रामति यश्च ।
नित्यमालोचयति च स खलु चारित्रं भवति चेतयिता ॥

णिच्चं पच्चक्खाणं कुव्वइ णिच्चं च पडिकमइ जो य ।
णिच्चं आलोचेइय सो हु चरित्तं हवइ चेया ॥

इयं चात्र भावार्थसंग्रहकारिका नित्यमध्येतव्या—

ज्ञानस्य संचेतनयैव नित्यं, प्रकाशते ज्ञानमतीव शुद्धम् ।
अज्ञानसंचेतनया तु धावन् बोधस्य शुद्धिं निरुणद्धि बन्धः ॥

इमे चोक्तार्थसंग्रहश्लोका नित्यं भावनीयाः—

सर्वथात्तं प्रतिक्रामन्नुद्यदालोचयन् सदा ।
प्रत्याख्यान् भाविसदसत्कर्मात्मा वृत्तमस्ति चित् ॥ १ ॥
नैष्फल्याय क्षिपे त्रेधा कृतकारितसंमतम् ।
कर्म स्वाच्चेतयेऽत्यन्तभिदोद्यद्रुन्ध उत्तरम् ॥ २ ॥
अहमेवाहमित्येव ज्ञानं तच्छुद्धये भजे ।
शरीराद्यहमित्येवाज्ञानं तच्छेत्तृ वर्जये ॥ ३ ॥

अथैते मन्दमतिसुखप्रतिपत्त्यर्थं विव्रियन्ते । तद्यथा,—

सदसत्कर्म सच्छुभं कर्म सद्वेद्यशुभायुर्नामगोत्रलक्षणं पुण्यमसच्चाशुभं ज्ञानावरणादिलक्षणं पापं सर्वथा सर्वेण समस्तव्यस्तकरणक्रियावर्तनलक्षणेन प्रकारेण आत्तं योगकषायवशाज्जीवेन गृहीतं बद्धं सदा नित्यं प्रतिक्रामन् 'मिथ्या मे दुष्कृतम्' इत्याद्युपायैरुदयाप्राप्तानामेव निराकुर्वन् चित् चिन्मात्रमात्माहंप्रत्ययसंवेद्यो वृत्तं चारित्रमस्मि । स्वस्मिन्नेवाखण्डज्ञानस्वभावे निरन्तरचरणाच्चारित्रं भवाम्यहमित्यर्थः । चारित्रं तु भवन् स्वस्य ज्ञानमात्रस्य चेतनात्स्वयमेव ज्ञानचेतना भवामीति भावः । तथा यथोक्तं कर्म उद्यद्विपच्यमानं सदाऽऽलोचयन्नात्मनोऽत्यन्तभेदेनोपलभमानश्चिन्मात्रमात्मा चारित्रमस्मि । स्वस्मिन्नेवेत्यादि भाव इत्यन्तमत्रापि योज्यम् । तथा यथोक्तं भावि भविष्यत्कर्म नित्यं प्रत्याख्यान् प्रत्याचक्षाण आस्रोष्यन् निरुन्धानश्चिन्मात्रमात्मा चारित्रमस्मि । स्वस्मिन्नेवेत्यादि भाव इत्यन्तमत्रापि च योज्यम् । तदेव विस्पष्टयन्नाह—नैष्फल्यायेत्यादि । त्रेधा मनसा च वाचा च कायेन च । उपलक्षणादेकशो द्विशो वा । कृतकारितसंमतं कृतं वा कारितं वानुमतं वा शुभाशुभं कर्म नैष्फल्याय फलाभावाय क्षिपे प्रतिक्रमाम्यहम् ।

तथा यथोक्तं कर्म उद्यद्विपच्यमानं स्वादात्मनोऽत्यन्तभिदा अत्यन्तभेदेन चेतये उपलभेहम्। तथा यथोक्तं कर्म उत्तरमाश्रोष्यद्रुन्धे निरुन्धेहम्। नित्यप्रवृत्तवर्तमानस्य विवक्षितत्वान्नित्यं क्षिपे। यद्यथोक्तं कर्म नित्यं चेतये नित्यं च रुन्धे इति नित्यमिति विशेषणेन विशेष्टव्यम्। ततश्च किं करोमीत्याह। अहमेवाहमित्यादि। भजे सेवे भावयाम्यहम्। किं तत्? ज्ञानम्। कथम्? अहमेवाहमित्येव, न शरीरादिकम्। किमर्थम्? तच्छुद्धये ज्ञानशुद्ध्यर्थम्। तथा वर्जये प्रत्याचक्षेहम्। किं तत्? अज्ञानम्। कथम्? शरीराद्यहमित्येव शरीरादि परद्रव्यमहमस्मि, न ज्ञानमित्येव। किंविशिष्टम्? तच्छेत्तृ ज्ञानशुद्धिच्छेदनशीलम्। एतच्च विस्तरेण ठक्कुरामृतचन्द्रविरचितसमयसारटीकायां द्रष्टव्यम्।

अथ पञ्चभिः पद्यैः प्रत्याख्यानं व्याख्यातुकामो नामादिषड्विधनिक्षेपविभक्तं तत्तावल्लक्षयन्नाह—

**निरोद्धुमागो यन्मार्गच्छिदो निर्मोक्षुरुज्झति।**
**नामादीन् षडपि त्रेधा तत्प्रत्याख्यानमामनेत्॥ ६५॥**

**आमनेत्** कथयेदाचार्यः। किं तत्? तदयोग्यनामाद्युज्झनलक्षणं **प्रत्याख्यानम्**। यत्किम्? यन्निर्मोक्षुर्मोक्षार्थी उज्झति त्यजति। कान्? **नामादीन्** नामस्थापनादीन्। किंविशिष्टान्? **मार्गच्छिदो** रत्नत्रयविरोधिनः। कियतः? **षडपि**। कथम्? **त्रेधा** मनोवाक्कायैः। किं कर्तुम्? **निरोद्धुं** निवारयितुम्। किं तत्? **आगः** पापम्। उक्तं च—

नामादीनामयोग्यानां षण्णां त्रेधा विवर्जनम्।
प्रत्याख्यानं समाख्यातमागम्यागोनिषिद्धये॥

तथाहि—अयोग्यानि पापकारणानि नामानि न कर्तव्यानि न कारयितव्यानि नानुमन्तव्यानि इति नामप्रत्याख्यानं प्रत्याख्याननाममात्रं वा। तथा पापबन्धहेतुभूता मिथ्यात्वादिप्रवर्तिका मिथ्यादेवतादिस्थापनाः। पापकारणद्रव्यप्रतिरूपाणि च न कर्तव्यानि न कारयितव्यानि नानुमन्तव्यानि। इति स्थापनाप्रत्याख्यानं प्रत्याख्यानपरिणतप्रतिबिम्बं वा। सद्भावरूपं तत्स्यात्। पापार्थं सावद्यं द्रव्यं निरवद्यमपि च तपोर्थं त्यक्तं न भोज्यं न

भोजयितव्यं नानुमन्तव्यम्। इति द्रव्यप्रत्याख्यानमथवा प्रत्याख्यानप्राभृतज्ञानुपयुक्तस्तच्छरीरं भाविजीवस्तद्व्यतिरिक्तं च तत्स्यात् । असंयमादिहेतुभूतस्य क्षेत्रस्य त्यजनं त्याजनं त्यज्यमानस्यानुमोदनं च क्षेत्रप्रत्याख्यानं प्रत्याख्यानसेवितप्रदेशो वा । असंयमादिनिमित्तस्य कालस्य त्यजनादिकं कालप्रत्याख्यानं प्रत्याख्यानपरिणतेन सेवितः कालो वा । मिथ्यात्वादीनां मनोवाक्कायैस्त्यजनादिकं भावप्रत्याख्यानम् । अथवा प्रत्याख्यानप्राभृतज्ञायकस्तद्विज्ञानं जीवप्रदेशा वेति । किं च, भविष्यद्वर्तमानकालविषयातीचारनिर्हरणं प्रत्याख्यानमित्याचारटीकाकारेण यत्प्रत्याख्यानलक्षणमाख्यायि तदपि 'निरोद्धुमार्ग' इति सामान्यनिर्देशादिह संगृहीतमुन्नेयम् ।

एतदेव संगृह्णन्नाह—

**तन्नाम स्थापनां तां तद्द्रव्यं तत्क्षेत्रमञ्जसा ।**
**तं कालं तं च भावं न श्रयेन्न श्रेयसेऽस्ति यत् ॥ ६६ ॥**

**तन्नाम तां स्थापनां तद्द्रव्यं तत्क्षेत्रं तं कालं तं भावं च न श्रयेन्न** सेवेत मुमुक्षुरञ्जसा परमार्थेन । भावेनेत्यर्थः । यत्किम् ? यन्नास्ति । कस्मै ? श्रेयसे शिवाय । अञ्जसेत्यनेनोपसर्गादिवशादयोग्यश्रयणेऽपि न प्रत्याख्यानहानिरिति बोधयति ।

योग्यनामादिसेविनः परम्परया रत्नत्रयाराधकत्वमवश्यंतया प्रकाशयन्नाह—

**यो योग्यनामाद्युपयोगपूतस्वान्तः पृथक् स्वान्तमुपैति मूर्तेः ।**
**सदाऽस्पृशन्नप्यपराधगन्धमाराधयत्येव स वर्त्म मुक्तेः ॥६७॥**

**स साधुराराधयत्येव** अवश्यं भजति । किं तत् ? **वर्त्म** मार्गम् । कस्याः ? **मुक्तेर्मोक्षस्य** । किं कुर्वन् ? **सदा** नित्यमस्पृशन्नपरामृशन् । कम् ? **अपराधगन्धमपि** । राधः संसिद्धिः । स्वात्मोपलब्धिरित्यर्थः । अपगतो राधोऽपराधः परद्रव्यग्रहः । तस्य गन्धमपि । प्रमादलेशमपीत्यर्थः । यः किम् ? य उपैति स्वीकरोति । कम् ? स्वान्तमात्मस्वरूपम् । कथम् ? पृथग् भिन्नम् । कस्याः ? मूर्तेः शरीरात् । किंविशिष्टः सन् ? योग्यना-

माद्युपयोगपूतस्वान्तः। योगाय शुद्धोपयोगाय प्रभवन्तीति योग्याः। ते च ते नामादयो नामस्थापनाद्रव्यक्षेत्रकालभावाः। तेषामुपयोगः सेवनम्। तेन पूतं पवित्रीकृतं स्वान्तं मनो येन एवम्।

द्रव्यप्रत्याख्यानविशेषं व्यवहारोपयोगितया प्रपञ्चयन् प्रत्याख्येयविशेषं प्रत्याख्यातारं च लक्षयति—

**सावद्येतरसच्चित्ताचित्तमिश्रोपधींस्त्यजेत्।**
**चतुर्धाहारमप्यादिमध्यान्तेष्वाज्ञयोत्सुकः॥ ६८॥**

**त्यजेत्** प्रत्याचक्षीत। कोसौ? साधुः। कान्? **सावद्येतरसच्चित्ताचित्तमिश्रोपधीन्**। न केवलं, **चतुर्धाहारं** चतुर्विधमपि भोजनम्। अपिरनुक्तसमुच्चये। तेन त्रिविधाहारादिमपि त्यजेदित्यर्थः। किंविशिष्टः सन्? **उत्सुक** उपयुक्तः। कया? **आज्ञया** अर्हदाज्ञया गुरुनियोगेन च। अर्हदाज्ञागुरुनियोगयोरुपयुक्तो जिनमतं श्रद्दधत्। गुरूक्तेन प्रत्याचक्षाण इत्यर्थः। अत्राज्ञासामान्यादर्हदाज्ञा गुरुनियोगश्च द्वयं ग्राह्यम्। क्व? **आदिमध्यान्तेषु**। आदौ प्रत्याख्यानग्रहणकाले मध्ये मध्यकाले अन्ते समाप्तौ चेत्यर्थः। सच्चित्तो विद्यमानजीवः। अचित्तोऽविद्यमानजीवः। मिश्रश्चिदचिद्रूपः। सहावद्येन हिंसादिना वर्तते इति सावद्यः। इतरो निरवद्यः। सच्चित्तश्चाचित्तश्च मिश्रश्च सच्चित्ताचित्तमिश्राः। सावद्याश्चेतरे च सावद्येतराः। ते च ते सच्चित्ताचित्तमिश्राश्च सावद्येतरसच्चित्ताचित्तमिश्राः। ते च ते उपधयः परिग्रहाश्च सावद्येतरसच्चित्ताचित्तमिश्रोपधयस्तान्। त्यजेदिति प्रत्याख्यानोक्तिः। उपध्याहारौ तु प्रत्याख्येयौ। उक्तं च—

**आज्ञाज्ञापनयोर्दक्ष आदिमध्यावसानतः।**
**साकारमनाकारं च सुसंतोषोनुपालयन्॥**
**प्रत्याख्याता भवेदेष प्रत्याख्यानं तु वर्जनम्।**
**उपयोगि तथाहारः प्रत्याख्येयं तदुच्यते॥**

बहुविकल्पमुपवासादिप्रत्याख्यानं मुमुक्षोः शक्त्यनतिक्रमेणावश्यकर्तव्यतयोपदिशति—

**अनागतादिदशभिद् विनयादिचतुष्कयुक् ।**
**क्षपणं मोक्षुणा कार्यं यथाशक्ति यथागमम् ॥ ६९ ॥**

**कार्यं** कर्तव्यम्। किं तत्? **क्षपणम्** । केन? **मोक्षुणा** मुमुक्षुणा । किंविशिष्टम्? **अनागतादिदशभित्** । पुनः किंविशिष्टम्? **विनयादिचतुष्कयुक्** । कथम्? **यथाशक्ति** स्वबलवीर्यानतिक्रमेण । कथम्? **यथागम**माम्नायानतिक्रमेण। इतो विस्तरः—अनागतादयो दश संख्या भिदो भेदा यस्य तदऽनागतादिदशभित्। ताश्च। यथा—

**अनागतमतिक्रान्तं कोटीयुतमखण्डितम्।**
**साकारं च निराकारं परिमाणं तथेतरत् ॥**
**नवमं वर्तनीयातं दशमं स्यात् सहेतुकम्।**
**प्रत्याख्यानविकल्पोयमेवं सूत्रे निरुच्यते ॥**

(१) अनागतं चतुर्दश्यादिषु कर्तव्यमुपवासादिकं यत्त्रयोदश्यादिषु क्रियते। (२) अतिक्रान्तं चतुर्दश्यादिषु कर्तव्यमुपवासादिकं यत्प्रतिपदादिषु क्रियते। (३) कोटीयुतं श्वस्तने दिने दिने स्वाध्यायवेलायामतिक्रान्तायां यदि शक्तिर्भविष्यति तदोपवासं करिष्यामि, नो चेन्न करिष्यामीत्यादि संकल्प्य समन्वितं यत्क्रियते। (४) अखण्डितमवश्यकर्तव्यपाक्षिकादिषूपवासकरणम् । (५) साकारं सर्वतोभद्रकनकावल्याद्युपवासविधिभेदसहितम्। (६) निराकारं स्वेच्छयोपवासादिकरणम्। (७) परिमाणं षष्ठाष्टमादिकालपरिच्छेदेनोपवासादिकरणम्। परिमाणविषयत्वात्तथोक्तम्। (८) इतरद् यावज्जीवं चतुर्विधाहारादित्यागोऽपरिशेषमित्युच्यते (९) वर्तनीयातमध्वगतं नाम अटवीनद्यादिषु निष्क्रमणद्वारेणोपवासादिकरणम् । (१०) सहेतुकमुपसर्गादिनिमित्तापेक्षमुपवासादिकरणम्। विनयादीनां चतुष्का विनयादिचतुष्कम्। तद् युनक्त्यात्मना शुद्धतया संबध्नातीति विनयादिचतुष्कयुक् । विनयादिचतुष्टयविशुद्धमित्यर्थः। यथाह—

**कृतिकर्मोपचारश्च विनयो मोक्षवर्त्मनि ।**
**पञ्चधा विनयाच्छुद्धं प्रत्याख्यानमिदं भवेत् ॥**

गुरोर्वचोनुभाष्यं चेच्छुद्धं स्वरपदादिना।
प्रत्याख्यानं तथाभूतमनुवादामलं भवेत् ॥
श्रमातङ्कोपसर्गेषु दुर्भिक्षे काननेपि वा।
प्रपालितं न यद्भग्नमनुपालनयाऽमलम् ॥
रागद्वेषद्वयेनान्तर्यद्भवेन्नैव दूषितम्।
विज्ञेयं भावशुद्धं तत् प्रत्याख्यानं जिनागमे ॥

क्षिप्यतेऽपकृष्यते देहेन्द्रियादिकमशुभकर्म वानेनेति क्षपणमिहोपवासादिप्रत्याख्यानमाख्यायते।

अथ सप्तभिः पद्यैः कायोत्सर्गं व्याचिख्यासुस्तल्लक्षणप्रयोक्तृहेतुविकल्पनिर्णयार्थमिदमादौ निर्दिशति—

मोक्षार्थी जितनिद्रकः सुकरणः सूत्रार्थविद्वीर्यवान्,
शुद्धात्मा बलवान् प्रलम्बितभुजायुग्मो यदास्तेऽचलम्।
ऊर्ध्वज्ञुश्चतुरङ्गुलान्तरसमाग्रांघ्रिर्निषिद्धाभिधा,—
द्याचारात्ययशोधनादिह तनूत्सर्गः स षोढा मतः ॥ ७० ॥

इहावश्यकप्रकरणे स मोक्षार्थित्वादिगुणस्य प्रलम्बितभुजायुग्माद्यवस्थानलक्षणस्तनूत्सर्गः कायोत्सर्गः मतः इष्टः सूरिभिः। तनोः कायस्य तात्स्थ्यात्तनुममत्वस्योत्सर्गस्त्यागस्तनूत्सर्गः। उक्तं च—

ममत्वमेव कायस्थं तात्स्थ्यात् कायोऽभिधीयते।
तस्योत्सर्गस्तनूत्सर्गो जिनबिम्बाकृतेर्यतेः ॥

कतिधा मतः ? षोढा षट्प्रकारः। कस्माद्धेतोः ? निषिद्धाभिधाद्याचारात्ययशोधनात् खरपरुषादिनाममावद्यस्थापनाद्यनुष्ठानजातातिचारशुद्धिहेतोः। अभिधा अभिधानं नाम आदिर्येषां तेऽभिधादयो नामस्थापनाद्रव्यक्षेत्रकालभावाः। निषिद्धा सूत्रे प्रतिषिद्धा अभिधादयो निषिद्धाभिधादयः। तेषामाचारोनुष्ठानकरणं निषिद्धाभिधाद्याचारः। तस्माज्जाता अत्यया अतीचारा निषिद्धाभिधाद्याचारात्ययाः। तेषां शोधनं शुद्धिरपनयनं, तस्मात्। उक्तं च—

आगःशुद्धितपोवृद्धिकर्मनिर्जरणादयः ।
कायोत्सर्गस्य विज्ञेया हेतवो व्रतवर्तिना ॥

षोढेति नामादिभेदेन षट्प्रकारः । तथा हि—सावद्यनामकरणागतदोषविशुद्ध्यर्थं कायोत्सर्गो नामकायोत्सर्गः कायोत्सर्गनाममात्रं वा । पापस्थापनाद्वारागतदोषोच्छेदाय कायोत्सर्गः स्थापनाकायोत्सर्गः कायोत्सर्गपरिणतप्रतिबिम्बं वा । सावद्यद्रव्यसेवनद्वारेणागतातीचारनिर्हरणाय कायोत्सर्गः कायोत्सर्गव्यावर्णणीयप्राभृतज्ञोनुपयुक्तस्तच्छरीरं भाविजीवस्तद्व्यतिरिक्तो वा द्रव्यकायोत्सर्गः । सावद्यक्षेत्रद्वारागतदोषध्वंसनाय कायोत्सर्गः कायोत्सर्गपरिणतक्षेत्रं वा क्षेत्रकायोत्सर्गः । सावद्यकालाचरणद्वारागतदोषपरिहाराय कायोत्सर्गः कायोत्सर्गपरिणतसहितकालो वा कालकायोत्सर्गः । मिथ्यात्वाद्यतीचारशोधनाय कायोत्सर्गः कायोत्सर्गव्यावर्णनीयप्राभृतज्ञ उपयुक्तस्तज्ज्ञानं जीवप्रदेशा वा भावकायोत्सर्ग इति । यत्किम् ? यदास्ते तिष्ठत्येव स्थानं करोति । कोसौ ? मोक्षार्थित्वादि विशेषणविशिष्टः शुद्धात्मा असंयतसम्यग्दृष्ट्यादिभव्यः । कथं कृत्वा ? अचलं निश्चलपादहस्ताधरभ्रूनेत्रादिसर्वाङ्गम् । किंविशिष्टः ? मोक्षार्थी मुक्तिमिच्छन् । तथा जितनिद्रको निद्राजययुक्तः । तथा सुकरणः शोभनं करणं क्रिया परिणामो वा यस्य स एवम् । तथा सूत्रार्थविद् आगमार्थज्ञः । तथा वीर्यवान् नैसर्गिकशक्तियुक्तः । तथा बलवान् आहारादिजन्यशक्तियुक्तः । उक्तं च—

मोक्षार्थी जितनिद्रो हि सूत्रार्थज्ञः शुभक्रियः ।
बलवीर्ययुतः कायोत्सर्गी भावविशुद्धिभाक् ॥

तथा प्रलम्बितभुजायुग्मः प्रलम्बितं प्रशस्ताधोनीतं भुजायुग्मं बाहुयुगलं येन स तथोक्तः । तथा ऊर्ध्वज्ञुरूर्ध्वजानुः । ऊर्ध्वं परलोकं जानानश्च । तथा चतुरङ्गुलान्तरसमाग्राङ्घ्रिः । चत्वार्यङ्गुलानि अन्तरमन्तरालं ययोस्तौ चतुरङ्गुलान्तरौ सममविषममऽग्रोऽग्रभागो ययोस्तौ समाग्रौ । चतुरङ्गुलान्तरौ च तौ समाग्रौ च चतुरङ्गुलान्तरसमाग्रौ । तथाभूतावंघ्री पादौ यस्य स एवम् । उक्तं च—

**बोसरिदबाहुजुयलो चतुरंगुलमंतरेण समपादं ।**
**सव्वंगचलणरहियो काओस्सग्गो विसुद्धो दु ॥**

सतनूत्सर्ग इति लक्ष्यं मोक्षार्थीत्यादिलक्षणः प्रयोक्ता निषिद्धाभिधाद्याचारात्ययशोधनादिति षोढेति च हेतुविकल्पौ ॥

कायोत्सर्गस्योत्तममध्यमजघन्यपरिणामनिरूपणार्थमाह—

**कायोत्सर्गस्य मात्रान्तर्मुहूर्तोऽल्पा समोत्तमा ।**
**शेषा गाथात्र्यंशचिन्तात्मोच्छ्वासैर्नैकधा मिता ॥ ७१ ॥**

**मिता** परिमिता पूर्वाचार्यैः । कासौ ? **मात्रा** परिमाणम् । कस्य ? **कायोत्सर्गस्य** । कीदृशी ? **अल्पा** जघन्या । कियन्मात्रा ? **अन्तर्मुहूर्तः** समयाधिकामावलिकामादिं कृत्वा समयोनमुहूर्तं यावत्कालः तथा कायोत्सर्गस्य मात्रा **उत्तमा** उत्कृष्टा मिता । कियन्मात्रा ? **समा** वर्षम् । तथा कायोत्सर्गस्य मात्रा **शेषा** अन्तर्मुहूर्तो वर्षाभ्यामुद्धरिता मध्यमामिता । कतिधा ? **नैकधा** द्विमुहूर्तप्रहरदिवसाद्यपेक्षया कार्यकालद्रव्यक्षेत्रभावाद्यपेक्षया वाऽनेकप्रकारा । यदाह—

**अस्ति वर्षं समुत्कृष्टो जघन्योन्तर्मुहूर्तगः ।**
**कायोत्सर्गः पुनः शेषा अनेकस्थानगा मताः ॥**

कैः ? **गाथात्र्यंशच्चिन्तात्मोच्छ्वासैः** गाथाया 'णमो अरहंताणं' इत्यादिकायाःत्र्यंशस्त्रिभागो द्वे द्वे एकं च नमस्कारपदं गाथात्र्यंशः । तस्य चिन्ता चिन्तनं गाथात्र्यंशचिन्ता । सा आत्मा स्वरूपं येषां ते गाथात्र्यंशचिन्तात्मानः । ते च उच्छ्वासाश्च प्राणवायोर्गमागमा गाथात्र्यंशचिन्तात्मोच्छ्वासास्तैः । तत्र 'णमो अरहंताणं, णमो सिद्धाणं' इति पदद्वयचिन्तनमेक उच्छ्वासः । एवं 'णमो आइरियाणं, णमो उवज्झायाणं इति चिन्तनं द्वितीयः । तथा 'णमो लोए, सव्वसाहूणं' इति चिन्तनं तृतीयः । एवं गाथायास्त्रिधा चिन्तने त्रय उच्छ्वासाः स्युः । नवधा चिन्तने सप्तविंशतिः । इत्यादिकल्पनया परिगणनीयम् । उक्तं च—

---

१ यः सारितबाहुयुगलश्चतुरङ्गुलमन्तरेण समपादः ।
सर्वांगचलनरहितः कायोत्सर्गो विशुद्धस्तु ॥

सप्तविंशतिरुच्छ्वासाः संसारोन्मूलनक्षमे ।
सन्ति पञ्च नमस्कारे नवधा चिन्तिते सति ॥

एतदुच्छ्वासलक्षणं जघन्योत्कृष्टमात्रयोरपि यथासंभवं योज्यम् । दैवसिकादिप्रतिक्रमणकायोत्सर्गेषूच्छ्वाससंख्याविशेषनिर्णयार्थमाह—

**उच्छ्वासाः स्युस्तनूत्सर्गे नियमान्ते दिनादिषु ।**
**पञ्चस्वष्टशतार्धत्रिचतुःपञ्चशतप्रमाः ॥ ७२ ॥**

**स्युर्**भवेयुः । के ? **उच्छ्वासाः** । क्व ? **तनूत्सर्गे** । किंविशिष्टाः ? **अष्टशतार्धत्रिचतुःपञ्चशतप्रमाः** । केषु ? **दिनादिषु** दिनरात्रिपक्षचतुर्मासस‌ंवत्सरेषु विषयेषु । कतिषु ? **पञ्चसु** । क्व ? **नियमान्ते** वीरभक्तिकरणकाले । अष्टाभिरधिकं शतमष्टशतमित्यर्थः । अर्द्धं प्रत्यासत्तेरष्टोत्तशतस्यैव । चतुःपञ्चाशदित्यर्थः । त्रीणि च चत्वारि च पञ्च च त्रिचतुःपञ्च । तानि च तानि शतानि च त्रिचतुःपञ्चशतानि । अष्टशतं चार्धं च त्रिचतुःपञ्चशतानि च अष्टशतार्धत्रिचतुःपञ्चशतानि तान्येव प्रमा प्रमाणं येषामुच्छ्वासानां ते तथोक्ताः । यथासंख्यम् । उक्तं च—

आह्निकेष्टशतं रात्रिभवेर्धं पाक्षिके तथा ।
नियमान्तेस्ति संस्थेयमुच्छ्वासानां शतत्रयम् ॥
चतुःपञ्चशतान्याहुश्चतुर्मासाब्दसंभवे ।
इत्युच्छ्वासास्तनूत्सर्गे पञ्चस्थानेषु निश्चिताः ॥

प्रस्तावादिप्रतिक्रमणास्वर्हच्छय्यादिवन्दनायां स्वाध्यायादिषु च कायोत्सर्गोच्छ्वाससंख्याविशेषनिश्चयार्थमाह—

**मूत्रोच्चाराध्वभक्तार्हत्साधुशय्याभिवन्दने ।**
**पञ्चाग्रा विंशतिस्तेस्युः स्वाध्यायादौ च सप्तयुक् ॥ ७३ ॥**

**स्युः** । के ते ? उच्छ्वासाः कायोत्सर्गविषयाः । कति ? **विंशतिः** । किंविशिष्टाः ? **पञ्चाग्रा** पञ्च अग्रमुत्तरं यस्याः सा पञ्चाग्रा । पञ्चविंशतिरित्यर्थः ? **मूत्रे**त्यादि । मूत्रं प्रस्रवणम् । उच्चारः पुरीषोत्सर्गः ।

अध्वा ग्रामान्तरगमनम् । भक्तं गोचारः । अर्हच्छय्या जिनेन्द्रनिर्वाणसमवसृतिकेवलज्ञानोत्पत्तिनिष्क्रमणजन्मभूमिस्थानानि । साधुशय्याः श्रमणनिषिद्धिकास्थानानि । अर्हन्तश्च साधवश्चार्हत्साधवः । तेषां शय्या अर्हत्साधुशय्याः । मूत्रं चोच्चारश्चाध्वा च भक्तं चार्हत्साधुशय्याश्च मूत्रोच्चाराध्वभक्तार्हत्साधुशय्याः । तासामभिवन्दनमाभिमुख्येन वन्दना मूत्रोच्चाराध्वभक्तार्हत्साधुशय्याभिवन्दनं, तस्मिन् । तथा ते स्युः । कति ? विंशतिः । किंविविशिष्टा ? **सप्तयुक्** । सप्तविंशतिरित्यर्थः । क्व ? **स्वाध्यायादौ** स्वाध्याय आदिर्यस्य ग्रन्थादिप्रारम्भादेरसौ स्वाध्यायादिस्तस्मिन् । स्वाध्याये ग्रन्थादिप्रारब्धग्रन्थादिसमाप्तौ नित्यवन्दनायां मनोविकारे च तत्क्षणोत्पन्ने । उक्तं च—

ग्रामान्तरेऽन्नपानेर्हत्साधुशय्याभिवन्दने ।
प्रस्रावे च तथोच्चारे उच्छ्वासाः पञ्चविंशतिः ॥
स्वाध्यायोद्देशनिर्देशे प्रणिधानेथ वन्दने ।
सप्तविंशतिरुच्छ्वासाः कायोत्सर्गेभिसंमताः ॥

उद्देशो ग्रन्थादिप्रारम्भः । निर्देशः प्रारब्धग्रन्थादिसमाप्तिः । प्रणिधानं मनोविकारः अशुभपरिणामस्तत्क्षणोत्पन्न इत्यर्थः । यत्तु—

जन्तुघातानृतादत्तमैथुनेषु परिग्रहे ।
अष्टोत्तरशतोच्छ्वासाः कायोत्सर्गाः प्रकीर्तिताः ॥'

इति सूत्रे वचस्तच्चशब्देन समुच्चीयते ।

व्रतारोपण्यादिप्रतिक्रमणासूच्छ्वाससंख्यानिर्देशार्थमाह—

**या व्रतारोपणी सार्वातीचारिक्यातिचारिकी ।**
**औत्तमार्थी प्रतिक्रान्तिः सोच्छ्वासैराह्निकी समा ॥ ७४ ॥**

**सा** भवति । किंविशिष्टा ? **आह्निकीसमा** आह्निक्या दैवसिक्या प्रतिक्रान्त्या समा तुल्या । कैः ? **उच्छ्वासैः** । वीरभक्तिकालेऽष्टोत्तरशतोच्छ्वासकायोत्सर्गे इत्यर्थः । या किम् ? **या प्रतिक्रान्तिः** । कथंभूता ? **व्रतारोपणी** । न केवलं, **सार्वातीचारिकी** । न केवलम्, **अतिचारिकी** न केवलं **औत्तमार्थी** च ।

अहोरात्रस्वाध्यायादिविषयकायोत्सर्गसंख्यासंग्रहार्थमाह—

**स्वाध्याये द्वादशेष्टा षड्वन्दनेऽष्टौ प्रतिक्रमे ।**
**कायोत्सर्गा योगभक्तौ द्वौ चाहोरात्रगोचराः ॥ ७५ ॥**

**इष्टा** अभिमताः सूरिणा । के ? **कायोत्सर्गाः** । किंविशिष्टाः ? **अहोरात्रगोचरा** दिनरात्रिविषयाः । कथम् ? **स्वाध्याये द्वादश षड्वन्दने अष्टौ प्रतिक्रमे योगभक्तौ च द्वौ** । सर्वे मिलिता अष्टाविंशतिः । एते च विभागेनोत्तरत्र व्यवहरिष्यन्ते ।

कायोत्सर्गे ध्यानविशेषमुपसर्गपरीषहसहनं च नियमयन् कर्मनिर्जरणातिशयं फलत्वेनोपदिशति—

**व्युत्सृज्य दोषान् निःशेषान् सद्ध्यानी स्यात्तनूत्सृतौ ।**
**सहेताप्युपसर्गोर्मीन् कर्मैवं भिद्यतेतराम् ॥ ७६ ॥**

**स्यान्**मुमुक्षुः । किंविशिष्टः ? **सद्ध्यानी** धर्म्यं शुक्लं वा ध्यानमाश्रितः । सत् प्रशस्तं ध्यानमतिशयेनास्यास्तीति सद्ध्यानी । क्व ? **तनूत्सृतौ** कायोत्सर्गे । किं कृत्वा ? **व्युत्सृज्य** विविधमुत्कृष्टं त्यक्त्वा । कान् ? **दोषान्** ईर्यापथाद्यतीचारान् कायोत्सर्गमलान्वा । किंविशिष्टान् ? **निःशेषान्** सर्वान् । एतेनालस्याद्यभाव उक्तः स्यात् । उक्तं च—

**कायोत्सर्गस्थितो धीमान् मलमीर्यापथाश्रयम् ।**
**निःशेषं तत्समानीय धर्म्यं शुक्लं च चिन्तयेत् ॥**

न केवलं सद्ध्यानी स्यान्मुमुक्षुः, **सहेतापि** क्षमेत च । कान् ? **उपसर्गोर्मीन्** उपसर्गाश्चोर्मयश्च परीषहा उपसर्गोर्मयस्तान् । क्व ? **तनूत्सृतौ** । एवं कृते किं फलं स्यादित्याह—**भिद्यतेतरां** प्रकृष्टं स्वयमेव विश्लेषं याति । किं तत् ? **कर्म** ज्ञानावरणादिकम् । क्व सति ? **एवमित्थं** कृते सति । स्तवाद्यपेक्षया प्रकर्षोऽत्र । उक्तं च—

**उपसर्गस्तनूत्सर्गं श्रितस्य यदि जायते ।**
**देवमानवतिर्यग्भ्यस्तदा सह्यो मुमुक्षुणा ॥**

साधोस्तं सहमानस्य निष्कम्पीभूतचेतसः ।
पतन्ति कर्मजालानि शिथिलीभूय सर्वतः ॥
यथाङ्गानि विभिद्यन्ते कायोत्सर्गविधानतः ।
कर्माण्यपि तथा सद्यः संचितानि तनूभृताम् ॥
यमिनां कुर्वतां भक्त्या तनूत्सर्गमदूषणम् ।
कर्म निर्जीर्यते सद्यो भवकोटिभ्रमार्जितम् ॥

नित्यनैमित्तिककर्मकाण्डनिष्ठस्य योगिनः परम्परया निःश्रेयसप्रतिलम्भमभिधत्ते—

नित्येनेत्थमथेतरेण दुरितं निर्मूलयन् कर्मणा,
योभ्यासेन विपाचयत्यमलयन् ज्ञानं त्रिगुप्तिश्रितः ।
स प्रोद्बुद्धनिसर्गशुद्धपरमानन्दानुविद्धस्फुर,-
द्विश्वाकारसमग्रबोधशुभगं कैवल्यमास्तिघ्नुते ॥ ७७ ॥

स योगी आस्तिघ्नुते प्राप्नोति । किं तत् ? कैवल्यं निर्वाणम् । किंविशिष्टम् ? प्रोद्बुद्धेत्यादि । प्रकर्षेणापुनर्भवलक्षणेनोद्बुद्धोऽभिव्यक्तो निसर्गशुद्धः स्वभावनिर्मलः परमानन्दानुविद्धः परमप्रशान्तिलक्षणप्रमोदेनानुविद्धो द्रव्यान्तरं नेतुमशक्यत्वलक्षणेनाशक्यविवेचनत्वेन व्यतिकीर्णः । स्फुरन्तः प्रकाशमाना विश्वस्य लोकालोकस्याकारा रूपाणि यत्रासौ स्फुरद्विश्वाकारः । समग्रः सर्वद्रव्यपर्यायनिबद्धो बोधः समग्रबोधः । तेन शुभगमत्यन्तरमणीयम् । यः किम् ? यो विपाचयति विपचते प्रयोजयति । किं तत् ? ज्ञानं स्वपरावभासिबोधम् । केन ? अभ्यासेन असकृत्प्रवृत्त्या । अत्र कर्तरि तृतीया । किं कुर्वन् ? अमलयन् निर्मलीकुर्वन्, ज्ञानमेव । कथंभूतो भूत्वा ? त्रिगुप्तिश्रितस्तिस्रो गुप्तीराश्रितः । सम्यग्निगृहीतमनोवाक्कायव्यापार इत्यर्थः । किं कुर्वन् ? निर्मूलयन् मूलादपि निरस्यन् । किं तत् ? दुरितं पापम् । केन ? कर्मणा क्रियया । किंविशिष्टेन ? नित्येन अथेतरेण नैमित्तिकेन च । कथम् ? इत्थमुक्तन्यायेन । उक्तं च—

नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम् ।
ज्ञानं च विमलीकुर्वन्नभ्यासेन तु पाचयेत् ॥

अभ्यासात् पक्वविज्ञानः कैवल्यं लभते नरः।

आवश्यकप्रकरणम्।

अथ षडावश्यकशेषं संगृह्णन् कृतिकर्मसेवायां श्रेयोर्थिनं व्यापारयति—

**योग्यकालासनस्थानमुद्रावर्तशिरोनति।**
**विनयेन यथाजातः कृतिकर्मामलं भजेत् ॥ ७८ ॥**

योग्याः समाधये प्रभवन्त्यः। यथाविहिता इत्यर्थः। तथैव चोत्तरप्रबन्धेनानुपूर्वशो व्याख्यास्यन्ते। यथाजातो बाह्याभ्यन्तपरिग्रहचिन्ताव्यावृत्तः संयमग्रहणक्षणे निर्ग्रन्थत्वेन पुनरुत्पादात्। कृतिकर्म कृतेः पापकर्मच्छेदनस्य कर्म अनुष्ठानम्। भजेत् सेवेत श्रेयोर्थी। किं तत्? **कृतिकर्म**। केन? **विनयेन** प्रश्रयेण। किंविशिष्टः सन्? **यथाजातः**। किंविशिष्टम्? योग्येत्यादि। कालश्चासनं च स्थानं च मुद्राश्चावर्तश्च शिरश्च नतिश्च कालासनस्थानमुद्रावर्तशिरोनतयः। योग्याः कालादयो यत्र तद् **योग्यकालासनस्थानमुद्रावर्तशिरोनति**। पुनः किंविशिष्टम्? **अमलं** द्वात्रिंशद्दोषरहितम्।

नित्यदेववन्दनायां त्रैकाल्यपरिमाणमाह—

**तिस्रोऽह्नोन्त्या निशश्चाद्या नाड्यो व्यत्यासिताश्च ताः।**
**मध्याह्नस्य च षट्कालास्त्रयोमी नित्यवन्दने ॥ ७९ ॥**

भवन्ति। के? **अमी** अनन्तरनिर्दिष्टाः **कालाः**। कति? **त्रयः**। क्व? **नित्यवन्दने**। तानेवाह—भवन्ति। काः। **नाड्यो** घटिकाः। कति? **तिस्रः**। किंविशिष्टाः? **अन्त्याः**। कस्य? **अह्नो** दिवसस्य। न केवलं, **निशश्च** रात्रेराद्यास्तिस्रो घटिकाः। एवमपराह्णवन्दनायां घटिकाषट्कमुत्कृष्टः कालः। **ताश्च नाड्यो व्यत्यासिता** विपर्यय स्थिताः पूर्वाह्णवन्दनायामुत्कर्षतः कालः दिवसस्य प्रथमास्तिस्रो घटिका रात्रेश्च पश्चिमास्तिस्रः। इति घटिकाषट्कमित्यर्थः। तथा **मध्याह्नस्य च** मध्यन्दिनस्य नाड्यः **षट्**। संध्यावन्दनायामुत्कर्षेण कालः। उक्तं च—

मुहूर्तत्रितयं कालः संध्यानां त्रितये बुधैः ।
कृतिकर्मविधेर्नित्यः परो नैमित्तिको मतः ॥

कृतिकर्मणि योग्यासनावसायार्थमाह—

**वन्दनासिद्धये यत्र येन चास्ते तदुद्यतः ।**
**तद्योग्यमासनं देशः पीठं पद्मासनाद्यपि ॥ ८० ॥**

**वन्दनासिद्धये** वन्दनाया निष्पत्त्यर्थं **तदुद्यतो** वन्दनोद्युक्तः साधुर्यत्र देशे पीठे **चास्ते** तिष्ठति **तद्योग्यमासनं देशः पीठं** च भण्यते । **येन** च पद्मासनादिना वन्दनासिद्धये तदुद्यत आस्ते तद्योग्यमासनं **पद्मासनाद्यपि** भण्यते इत्यर्थः । उक्तं च—

आस्यते स्थीयते यत्र येन वा वन्दनोद्यतैः ।
तदासनं विबोद्धव्यं देशपद्मासनादिकम् ॥

वन्दनायोग्यं प्रदेशमुपदिशति—

**विविक्तः प्रासुकस्त्यक्तः संक्लेशक्लेशकारणैः ।**
**पुण्यो रम्यः सतां सेव्यः श्रेयो देशः समाधिचित् ॥ ८१ ॥**

वन्दनासिद्धये तदुद्यतेन **देशः** प्रदेशः **श्रेय** आश्रयणीयः । कीदृशः ? **विविक्तः** शुद्धोऽसंस्तुतलोकरहितश्च तथा **प्रासुकः** संमूर्छनारहितः । तथा **त्यक्तः** । कैः ? **संक्लेशक्लेशकारणैः** संक्लेशकारणै-रागद्वेषादिभिः क्लेशकारणैश्च परीषहोपसर्गैः । तथा **पुण्यः** सिद्धक्षेत्रादिरूपः । तथा **रम्यश्चित्त**-निर्वृत्तिकरः । तथा **सतां** मुमुक्षूणां **सेव्यः** सेवनीयः । तथा **समाधिचित** प्रशस्तध्यानवर्धकः । उक्तं च—

संसक्तः प्रचुरच्छिद्रस्तृणपाश्वादिदूषितः ।
विक्षोभको हृषीकाणां रूपगन्धरसादिभिः ॥
परीषहकरो दंशशीतपातातपादिभिः ।
असंबद्धजनालापः सावद्यारम्भगर्हितः ॥
आर्द्रीभूतोमनोऽनिष्टः समाधाननिषूदकः ।
योऽशिष्टजनसंचारः प्रदेशं तं विवर्जयेत् ॥

विविक्तः प्रासुकः सेव्यः समाधानविवर्धकः ।
देवर्जुदृष्टिसंपातवर्जितो देवदक्षिणः ॥
जनसंचारनिर्मुक्तो ग्राह्यो देशो निराकुलः ।
नासन्नो नातिदूरस्थो सर्वोपद्रववर्जितः ॥

कृतिकर्मयोग्यं पीठमाचष्टे—

**विजन्त्वशब्दमच्छिद्रं सुखस्पर्शमकीलकम् ।**
**स्थेयस्तार्णाद्यधिष्ठेयं पीठं विनयवर्धनम् ॥ ८२ ॥**

वन्दनासिद्धये तदुद्यतेनाधिष्ठेयमाश्रयणीयम् । किं तत् ? **पीठमास**-**नम्** । किंविशिष्टम् ? **तार्णादि** तृणकाष्ठशिलामयम् । पुनः किंविशिष्टम् ? **विजन्तु** मत्कुणादिप्राणिरहितम् । तथा **अशब्दं** निःशब्दकम् । तथा **अच्छिद्रं** निश्छिद्रम् । तथा **सुखस्पर्शं** सुखोऽकष्टः स्पर्शो यस्य तदेवम् । तथा **अकीलकं** कीलरहितम् । तथा **स्थेयो** निश्चलम् । तथा **विनय**-**वर्धनम्**उन्नतोद्धतत्वादिदोषरहितम् ।

वन्दनायोग्यं पद्मासनादित्रयं लक्षयति—

**पद्मासनं श्रितौ पादौ जङ्घाभ्यामुत्तराधरे ।**
**ते पर्यङ्कासनं न्यस्तावूर्वोर्वीरासनं क्रमौ ॥ ८३ ॥**

**पद्मासनं** भवति । कौ ? **पादौ** । किंविशिष्टौ ? **श्रितौ** संश्लिष्टौ । काभ्याम् ? **जङ्घाभ्याम्** । तथा **पर्यङ्कासनं** भवति । के ? **ते** जङ्घे । किंविशिष्टे ? **उत्तराधरे** उत्तराधर्येण स्थापिते इत्यर्थः । तथा **वीरासनं** भवति । कौ ? **क्रमौ** पादौ । किंविशिष्टौ ? **न्यस्तौ** । कयोः ? **ऊर्वोः** सक्थ्नोरुपरि । उक्तं च—

त्रिविधं पद्मपर्यङ्कवीरासनस्वभावकम् ।
आसनं यत्नतः कार्यं विदधानेन वन्दनाम् ॥
तत्र पद्मासनं पादौ जङ्घाभ्यां श्रयतो यतेः ।
तयोरुपर्यधोभागे पर्यङ्कासनमिष्यते ॥

ऊर्वोरुपरि कुर्वाणः पादन्यासं विधानतः ।
वीरासनं यतिर्धत्ते दुष्करं दीनदेहिनः ॥

अन्ये त्वाहुः—

जङ्घाया जङ्घया श्लिष्टे मध्यभागे प्रकीर्तितम् ।
पद्मासनं सुखाधायि सुसाधं सकलैर्जनैः ॥
बुधैरुपर्यधोभागे जङ्घयोरुभयोरपि ।
समस्तयोः कृते ज्ञेयं पर्यङ्कासनमासनम् ॥
ऊर्वोरुपरि निक्षेपे पादयोर्विहिते सति ।
वीरासनं चिरं कर्तुं शक्यं धीरैर्न कातरैः ॥

अपि च,—

जङ्घाया मध्यभागे तु संश्लेषो यत्र जङ्घया ।
पद्मासनमिति प्रोक्तं तदासनविचक्षणैः ॥
स्याज्जङ्घयोरधोभागे पादोपरि कृते सति ।
पर्यङ्को नाभिगोत्तानदक्षिणोत्तरपाणिकः ॥
वामोंघ्रिर्दक्षिणोरूर्ध्वं वामोरूपरि दक्षिणः ।
क्रियते यत्र तद्धीरोचितं वीरासनं स्मृतम् ॥

वन्दनायां स्थानविशेषनिर्णयार्थमाह—

**स्थीयते येन तत्स्थानं वन्दनायां द्विधा मतम् ।**
**उद्भीभावो निषद्या च तत्प्रयोज्यं यथाबलम् ॥ ८४ ॥**

वन्दारुणा येन करणभूतेन स्थीयते तन्मतम् । किं तत् ? स्थानम् । कतिधा ? द्विधा । कस्याम् ? वन्दनायाम् । किं किमित्याह–उद्भीभाव ऊर्ध्वजानुत्वम् । निषद्या चोपवेशनम् । तत् स्थानं वन्दारुणा प्रयोज्यं प्रयोक्तव्यम् । कथम् ? यथाबलं स्वशक्त्यनतिक्रमेण । उक्तं च—

स्थीयते येन तत्स्थानं द्विप्रकारमुदाहृतम् ।
वन्दना क्रियते यस्मादुद्भीभूयोपविश्य वा ॥

कृतिकर्मयोग्यं मुद्राचतुष्टयं व्याचिख्यासुर्जिनमुद्रायोगमुद्रयोर्लक्षणमुन्मुद्रयति—

**मुद्राश्चतस्रो व्युत्सर्गस्थितिर्जैनीह यौगिकी ।**
**न्यस्तं पद्मासनाद्यङ्के पाण्योरुत्तानयोर्द्वयम् ॥ ८५ ॥**

**मुद्राश्चतस्रो** भवन्ति । **इह** इमासु चतसृषु मुद्रासु मध्ये **जैनी** जिनमुद्रा भवति । किंलक्षणा ? **व्युत्सर्गस्थितिर्व्युत्सर्गेण** कायोत्सर्गेण स्थितिरुद्धीभावः । सा च प्रलम्बितभुजेत्यादिना प्रागुक्ता । उक्तं च—

जिनमुद्रान्तरं कृत्वा पादयोश्चतुरङ्गुलम् ।
ऊर्ध्वजानोरवस्थानं प्रलम्बितभुजद्वयम् ॥

तथेह **योगिकी** योगमुद्रा भवति । किंलक्षणा ? **पद्मासनाद्यङ्के** पद्मासनपर्यङ्कासनवीरासनानामुत्सङ्गे **उत्तानयोः पाण्योर्हस्तयोर्द्वयं न्यस्तं** स्थापितम् । उक्तं च—

जिनाः पद्मासनादीनामङ्कमध्ये निवेशनम् ।
उत्तानकरयुग्मस्य योगमुद्रां बभाषिरे ॥

वन्दनामुद्रां मुक्ताशुक्तिमुद्रां च निर्दिशति—

**स्थितस्याध्युदरं न्यस्य कूर्परौ मुकुलीकृतौ ।**
**करौ स्याद्वन्दनामुद्रा मुक्ताशुक्तिर्युताङ्गुली ॥ ८६ ॥**

**वन्दनामुद्रा स्यात्** । किंलक्षणा ? **करौ** हस्तौ । किंविशिष्टौ ? **मुकुलीकृतौ** मुकुलितौ । कस्य ? पुंसः । किंविशिष्टस्य ? **स्थितस्य** उद्धीभूतस्य । किं कृत्वा ? **न्यस्य** निक्षिप्य । कौ ? **कूर्परौ** कुहनिके । कथम् । **अध्युदर**मुदरस्योपरि । उक्तं च—

मुकुलीकृतमाधाय जठरोपरि कूर्परम् ।
स्थितस्य वन्दनामुद्रा करद्वन्द्वं निवेदिता ॥

तथा **मुक्ताशुक्ति**र्नाम मुद्रा स्यात् । किंलक्षणा ? मुकुलीकृतौ करावेव । किंविशिष्टौ ? **युताङ्गुली** युताः संस्थानविशेषेण संलग्ना अङ्गुलयो ययोस्तौ ।

संलग्नाङ्गुलिकावित्यर्थः। कस्य? **स्थितस्य** । पूर्ववदध्युदरं कूर्परौ न्यस्य। उक्तं च—

**मुक्ताशुक्तिर्मता मुद्रा जठरोपरि कूर्परम्।**
**ऊर्ध्वजानोः करद्वन्द्वं संलग्नाङ्गुलि सूरिभिः॥**

मुद्राणां यथाविषयं प्रयोगनिर्णयार्थमाह—

**स्वमुद्रा वन्दने मुक्ताशुक्तिः सामायिकस्तवे।**
**योगमुद्रास्यया स्थित्या जिनमुद्रा तनूज्झने॥ ८७॥**

प्रयोक्तव्येत्युपस्कारः। प्रयोक्तव्याऽऽवश्यककारिणा। कासौ? **स्वमुद्रा** वन्दनामुद्रा। क? **वन्दने** जयति भगवानित्यादिवन्दनायां क्रियमाणायाम्। तथा **मुक्ताशुक्तिर्मुद्रा** प्रयोक्तव्या। क? **सामायिकस्तवे** सामायिकं 'णमो अरहंताणं' इत्यादि दण्डकं, स्तवः 'थोस्सामि' इत्यादिदण्डकः। सामायिकं च स्तवश्च सामायिकस्तवमिति समाहारद्वन्द्वः। सामायिकदण्डके चतुर्विंशतिस्तवदण्डके च मुक्ताशुक्तिर्मुद्रा प्रयोज्येत्यर्थः। तथा प्रयोक्तव्या। कासौ? **योगमुद्रा**। क? **तनूज्झने** कायोत्सर्गे क्रियमाणे। कया? **आस्यया**। आसमास्या, तया। उपवेशनेनेत्यर्थः। तथा प्रयोक्तव्या। कासौ? **जिनमुद्रा**। क? तनूज्झने क्रियमाणे। कया? **स्थित्या** उद्भीभावेन।

आवर्तस्वरूपनिरूपणार्थमाह—

**शुभयोगपरावर्तानावर्तान् द्वादशाहुराद्यन्ते।**
**साम्यस्य हि स्तवस्य च मनोङ्गगी संयतं परावर्त्यम्॥८८॥**

**आहुर्ब्रुवन्त्याचार्याः**। कान्? **आवर्तान्**। किंलक्षणान्? **शुभयोगपरावर्तान्**। कति? **द्वादश** शुभा हिंसादिरहितत्वात् प्रशस्ता योगा मनोवाक्कायव्यापाराः शुभयोगाः। तेषां परावर्ताः पूर्वावस्थापरित्यागेनावस्थान्तरप्रापणानि शुभयोगपरावर्तास्तान्। अस्यैव समर्थनार्थमाह—आद्यन्त इत्यादि। **हि** यस्मात् **परावर्त्यम**वस्थान्तरं नेतव्यम्। वन्दनोद्यतैरिति शेषः। किं तत्? **मनोङ्गगी**श्चित्तकायवाचम्। मनश्चाङ्गं च गीश्चेति समा-

द्वारद्वन्द्वः। किंविशिष्टम्? **संयतं** निरुद्धपापव्यापारम्। क? **आद्यन्ते** प्रारम्भे समाप्तौ च। आदिश्चान्तश्चेति आद्यन्तं इतिसमाहारः। कस्य? **साम्यस्य** 'णमो अरहंताणं' इत्यादिसामायिकदण्डकस्य। न केवलं, **स्तवस्य च** 'थोस्सामि' इत्यादिदण्डकस्य। मनोङ्गगीःसंयतमिति वा समस्तम्। तत्र मनोङ्गगिरां संयतं संयमनं मनोङ्गगीःसंयतमिति समासः। सामायिकदंडकस्य प्रारम्भे समाप्तौ च मनोङ्गगीः संयतं परावर्त्यम्। स्तवदण्डकस्य च प्रारम्भे समाप्तौ च मनोङ्गगीः संयतं परावर्त्यमित्यर्थः। तद्यथा—

सामायिकदण्डकस्यादौ क्रियाविज्ञापनविकल्पत्यागेन तदुच्चारणं प्रति मनसः प्रणिधानं संयतमनःपरावर्तनमुच्यते। तथा भूमिस्पर्शलक्षणावनतिक्रियावन्दनामुद्रात्यागेन पुनरुत्थितस्य मुक्ताशुक्तिमुद्राङ्कितहस्तद्वयपरिभ्रमणत्रयं संयतकायपरावर्तनमाख्यायते। चैत्यभक्तिकायोत्सर्गं करोमीत्याद्युच्चारणविरामेण 'णमो अरहंताणं, इत्याद्युच्चारणकरणं संयतवाक्परावर्तनमभिधीयते। एवं सामायिकदण्डकस्यादौ शुभयोगपरावर्तलक्षणमावर्तत्रयं विज्ञेयम्। एवमेव च यथास्वं साम्यदण्डकस्यान्ते तत्त्रयं कल्प्यम्। तथैव च स्तवदण्डकस्यादावन्ते च पृथक् तत्त्रयमवसेयम्। इति समुदितानि चत्वारि तत्त्रयाणि द्वादशावर्ता एकस्मिन् कायोत्सर्गे भवन्ति। एतच्च भगवद्वसुनन्दिसैद्धान्तदेवपादैराचारटीकायां 'दुओ णदं जहाजादं, इत्यादिसूत्रे व्याख्यातं द्रष्टव्यम्। तथैव चान्वाख्यातं क्रियाकाण्डेपि—

**द्वे नते साम्यनुत्यादौ भ्रमास्त्रिस्त्रिस्त्रियोगगाः।**
**त्रिस्त्रिर्भ्रमे प्रणामश्च साम्ये स्तवे मुखान्तयोः॥**

एतदेवचामितगतिरप्यन्वाख्यात्–

**कथिता द्वादशावर्ता वपुर्वचनचेतसाम्।**
**स्तवसामायिकाद्यन्तपरावर्तनलक्षणाः॥**

इदं चात्राचारटीका व्याख्यानमवधार्यम्—

चतसृषु दिक्षु चत्वारः प्रणामा एकस्मिन् भ्रमणे। एवं त्रिषु भ्रमणेषु द्वादश भवन्तीति।

वृद्धव्यवहारानुरोधार्थं हस्तपरावर्तनलक्षणानावर्तानुपदिशति—

**त्रिः संपुटीकृतौ हस्तौ भ्रमयित्वा पठेत् पुनः ।**
**साम्यं पठित्वा भ्रमयेत्तौ स्तवेऽप्येतत्तदाचरेत् ॥ ८९ ॥**

**पठेदु**च्चारयेदावश्यककारी । किं तत् ? **साम्यं** 'णमो अरहंताणं' इत्यादि सामायिकदण्डकम् । किं कृत्वा ? **भ्रमयित्वा** परावर्त्य । कौ ? **हस्तौ** । किंविशिष्टौ ? **संपुटीकृतौ** मुकुलितौ । कथम् ? **त्रि**स्त्रीन्वारान् । तथा **भ्रमयेदा**वर्तयेत् । कौ ? **तौ** संपुटीकृतौ हस्तौ । कथम् ? त्रिस्त्रीन् वारान् । कथम् ? **पुनः** पश्चात् । किं कृत्वा ? **पठित्वा** उच्चार्य । किं तत् ? साम्यम् । **एत**च्च विधान**माचरे**त्तपस्वी । क्व ? **स्तवेऽपि** थोस्सामि इत्यादिचतुर्विंशतिस्तवदण्डकेऽपि । त्रिःसंपुटीकृतौ हस्तौ भ्रमयित्वा स्तवं पठेत्, स्तवं पठित्वा पुनस्त्रिः संपुटीकृतौ हस्तौ चावर्तयेदित्यर्थः । उक्तं च चारित्रसारे व्युत्सर्गतपोवर्णनप्रस्तावे—

'क्रियां कुर्वाणो वीर्योपगूहनमकृत्वा शक्त्यनुरूपतः स्थितेन असक्तः सन् पर्यङ्कासनेन वा त्रिकरणशुद्ध्या संपुटीकृतकरः क्रियाविज्ञापनपूर्वकं सामायिकदण्डकमुच्चारयन् तदावर्तत्रयं यथाजातशिरोनमनमेकं भवति । अनेन प्रकारेण सामायिकदण्डकसमाप्तावपि प्रवर्त्य यथोक्तकालं जिनगुणानुस्मरणसहितं कायव्युत्सर्गं कृत्वा द्वितीयदण्डकस्यादावन्ते च तथैव प्रवर्तताम् । एवमेकस्य कायोत्सर्गस्य द्वादशावर्ताश्चत्वारि शिरोवनमनानि भवन्ति' इत्यादि ।

शिरोलक्षणमाह—

**प्रत्यावर्तत्रयं भक्त्या नन्नमत् क्रियते शिरः ।**
**यत्पाणिकुड्मलाङ्कं तत् क्रियायां स्याच्चतुःशिरः ॥ ९० ॥**

**तत् स्यात्** । किं तत् ? **शिरः** । कथम् ? **चतु**श्चतुरो वारान् । सामायिकदण्डकस्यादावन्ते च तथा स्तवदण्डकस्य चावर्तत्रयप्रयोगोत्तरकालं शिरोवनमनविधानात् । अथवा चतुर्णां शिरसां समाहारश्चतुःशिर इति व्याख्येयम् । कस्याम् ? **क्रियायां** चैत्यभक्त्यादिकायोत्सर्गविषये । यत्किम् ?

यत् क्रियते । किं तत् ? शिरो मस्तकम् । किंविशिष्टम् ? पाणिकुड्मलाङ्कं पाण्योर्हस्तयोः कुड्मलो मुकुलाकारतापाणि कुड्मलः । स एवाङ्कश्चिह्नं यस्य तदेवम् । किं कुर्वत् ? नम्रमद् भृशं पुनः पुनर्वा नमत् । प्रणमदिति वा पाठः । कया ? भक्त्या । कथम् ? प्रत्यावर्तत्रयम् आवर्तत्रयमावर्तत्रयं प्रति ।

चैत्यभक्त्यादिषु प्रकारान्तरेणाप्यावर्तशिरसां संभवोद्देशार्थमाह—

**प्रतिभ्रामरि वार्चादिस्तुतौ दिश्येकशश्चरेत् ।**
**त्रीनावर्तान् शिरश्चैकं तदाधिक्यं न दुष्यति ॥ ९१ ॥**

वाशब्देन पक्षान्तरं सूचयति । चरेद्वा अनुतिष्ठेदावश्यककारी । कान् ? आवर्तान् । कति ? त्रीन् । न केवलं, शिरश्च करमुकुलाङ्कितशिरस्करणम् । किंविशिष्टम् ? एकम् । क्व ? अर्चादिस्तुतौ चैत्यादिभक्तौ । कस्याम् ? दिशि पूर्वादौ । कथम् ? एकश एकैकस्याम् । कथम् ? प्रतिभ्रामरि एकैकस्मिन् प्रदक्षिणीकरणे । उक्तं च—

चतुर्दिक्षु विहारस्य परावर्तास्त्रियोगगाः ।
प्रतिभ्रामरि विज्ञेया आवर्ता द्वादशापि च ॥

ननु चैवमावर्तशिरसामाधिक्यं दोषाय भविष्यतीत्याशङ्कायामिदमाह— न दुष्यति न दुष्टं भवति । किं तत् ? तदाधिक्यमावर्तानां शिरसां चोक्तप्रमाणादधिकीकरणं दक्षिणात्रये-तत्संभवात् । उक्तं च चारित्रसारे—

"एकस्मिन् प्रदक्षिणीकरणे चैत्यादीनामभिमुखीभूतस्यावर्तत्रयैकावनमने कृते चतसृष्वपि दिक्षु द्वादशावर्ताश्चतस्रः शिरोवनतयो भवन्ति । आवर्तानां शिरःप्रणतीनामुक्तप्रमाणादाधिक्यमपि न दोषाय" इति ।

अस्यैवार्थस्य समर्थनार्थमाह—

**दीयते चैत्यनिर्वाणयोगिनन्दीश्वरेषु हि ।**
**वन्द्यमानेष्वधीयानैस्तत्तद्भक्ति प्रदक्षिणा ॥ ९२ ॥**

हि यस्माद् दीयते विधीयते । कासौ ? प्रदक्षिणा भ्रामरी । कैः ? संयतैः । किं कुर्वाणैः ? अधीयानैः पठद्भिः । काम् ? तत्तद्भक्ति तां तां

क्रियाकाण्डप्रसिद्धां स्तवनक्रियाम् । केषु सत्सु ? **चैत्यनिर्वाणयोगिनन्दीश्वरेषु** । किं क्रियमाणेषु ? **वन्द्यमानेषु** वन्दनाविषयीक्रियमाणेषु चैत्यवन्दनायां निर्वाणवंदनायां, योगिवंदनायां, नंदीश्वरचैत्यवंदनायां चेत्यर्थः ।

स्वमतेन परमतेन च नतिनिर्णयार्थमाह—

**द्वे साम्यस्य स्तुतेश्चादौ शरीरनमनान्नती ।**
**वन्दनाद्यन्तयोः कैश्चिन्निविश्य नमनान्मते ॥ ९३ ॥**

कार्ये इत्यध्याहारः । कार्ये कर्तव्ये । के ? **नती** । कतिसंख्ये ? **द्वे** । कस्मात् ? **शरीरनमनात्** पञ्चाङ्गप्रणमनात् । भूमिस्पर्शादित्यर्थः । क्व ? **आदौ** प्रथमतः । कस्य ? **साम्यस्य** सामायिकदण्डकस्य । न केवलं**स्तुतेश्च**तुर्विंशतिस्तवस्य । मतान्तरमाह—**मते** इष्टे । के ? **द्वे नती** । कैः ? **कैश्चित्** स्वामिसमन्तभद्रादिभिः । कस्मात् ? **नमनात्** प्रणमनात् । किं कृत्वा ? **निविश्य** उपविश्य । कयोः ? **वन्दनाद्यन्तयो**र्वन्दनायाः प्रारम्भे समाप्तौ च । यथाहुस्तत्रभगवन्तः श्रीमत्प्रभेन्दुदेवपादा रत्नकरण्डकटीकायां चतुरावर्तत्रितय इत्यादिसूत्रे द्विनिषद्य इत्यस्य व्याख्याने "देववन्दनां कुर्वता हि प्रारम्भे समाप्तौ चोपविश्य प्रणामः कर्तव्यः' इति ।

प्रणामभेदनिर्णयार्थं श्लोकद्वयमाह—

**योगैः प्रणामस्त्रेधार्हज्ज्ञानादेः कीर्तनात्त्रिभिः ।**
**कं करौ ककरं जानुकरं ककरजानु च ॥ ९४ ॥**
**नम्रमेकद्वित्रिचतुःपञ्चाङ्गः कायिकः क्रमात् ।**
**प्रणामः पञ्चधावाचि यथास्थानं क्रियते सः ॥९५॥ युग्मम्**

भवति । कोसौ ? **प्रणामः** । कतिधा ? **त्रेधा** त्रिविधः । कैः ? **योगै**र्मनोवाक्कायव्यापारैः । कतिभिः ? **त्रिभिः** । कस्मात् ? **कीर्तनात्** संशब्दनमाश्रित्य । कस्य ? **अर्हज्ज्ञानादेः** अर्हतो जिनेन्द्रस्य ज्ञानमादिर्यस्य सिद्धज्ञानादेस्तदर्हज्ज्ञानादिस्तस्य । तत्र तावत् **कायिकः** शारीरः प्रणामोऽवाच्युक्तः । कतिधा ? **पञ्चधा** । कस्मात् ? **क्रमात्** । किं लक्षणम् ? **कं** मस्तकं **नम्रं** नमनशीलमेकाङ्गः प्रणामोवाचि । तथा

करौ हस्तौ नम्रौ द्व्यङ्गः प्रणामोऽवाचि । तथा ककरं मस्तकहस्तं नम्रं त्र्यङ्गः प्रणामोऽवाचि । कं च करौ च ककरमिति समाहारः । तथा जानुकरं नम्रं चतुरङ्गः प्रणामोवाचि । जानुनी च करौ च जानुकरम् । तथा ककरजानु च मस्तकहस्तजानु नम्रं पञ्चाङ्गः प्रणामोवाचि । कं च करौ च जानुनी चेति समाहारद्वन्द्वः । एकं च द्वे च त्रीणि च चत्वारि च पञ्च च एकद्वित्रिचतुःपञ्च । तान्यङ्गान्यवयवा यत्र प्रणामे सोयमेकद्वित्रिचतुःपञ्चाङ्गः । एकाङ्गो द्व्यङ्गस्त्र्यङ्गश्चतुरङ्गः पञ्चाङ्गः क्रमेणेत्यर्थः । तथा स कायिकः प्रणामः क्रियेत कृतिकर्मकारिभिः । कथम् ? यथास्थानं स्थानस्थानतिक्रमेण । उक्तं च—

मनसा वचसा तन्वा कुरुते कीर्तनं मुनिः ।
ज्ञानादीनां जिनेन्द्रस्य प्रणामस्त्रिविधो मतः ॥
एकाङ्गो नमने मूर्ध्नो द्व्यङ्गः स्यात् करयोरपि ।
त्र्यङ्गः करशिरोनामे प्रणामः कथितो जिनैः ॥
करजानुविनामेऽसौ चतुरङ्गो मनीषिभिः ।
करजानुशिरोनामे पञ्चाङ्गः परिकीर्तितः ॥
प्रणामः कायिको ज्ञात्वा पञ्चधेति मुमुक्षुभिः ।
विधातव्यो यथास्थानं जिनसिद्धादिवन्दने ॥

क्रियाप्रयोगविधिं नियमयन्नाह—

**कालुष्यं येन जातं तं क्षमयित्वैव सर्वतः ।**
**सङ्गाच्च चिन्तां व्यावर्त्य क्रिया कार्या फलार्थिना ॥९६॥**

कार्या कर्तव्या । कासौ ? क्रिया कृतिकर्म । केन ? फलार्थिना फलं

---

१ दूनितं यथाजातं द्वादशावर्तमेव च ।
चतुःशिरं त्रिशुद्धं च कृतिकर्म प्रयुज्यते ॥
त्रिविधं त्रिकरणशुद्धं मदरहितं द्विविधस्थानं पुनरुक्तम् ।
विनयेन कर्मविशुद्धं कृतिकर्म भवति कर्तव्यम् ॥
कृतिकर्मापि कुर्वन् न भवति कृतिकर्म निर्जराभागी ।
द्वात्रिंशदन्यतरं साधुस्थानं विराधमाणः ॥

कर्मनिर्जरणलक्षणं तीर्थकरत्वादिपुण्यार्जनं चेच्छता । किं कृत्वा ? **क्षमयित्वैव** नियमेन क्षमां कारयित्वा । कम् ? **तं** कालुष्यविषयम् । येन किम् । **येन जातं** सम्पन्नम् । किं तत् ? **कालुष्यं** क्रोधाद्यावेशाच्चित्तस्य क्षोभः । येनेति करणे सहार्थे वा तृतीया । उक्तं च—

**येन केनापि संपन्नं कालुष्यं दैवयोगतः ।**
**क्षमयित्वैव तं त्रेधा कर्तव्यावश्यकक्रिया ॥**

न केवलं, **व्यावर्त्य च** प्रच्याव्य । काम् ? **चिन्तामन्तःकरणप्रवृत्तिम्** । कस्मात् ? **सङ्गात्** परिग्रहात् । किंविशिष्टात् ? **सर्वतः** सर्वस्मात् । प्रकृतादन्यत्र चिन्तां निरुध्येत्यर्थः ।

अमलमिति विशेषणं व्याचष्टे—

**दोषैर्द्वात्रिंशता स्वस्य यद्व्युत्सर्गस्य चोज्झितम् ।**
**त्रियोगशुद्धं क्रमवन्निर्मलं चितिकर्म तत् ॥ ९७ ॥**

**तन्निर्मलं** निर्दोषं **चितिकर्म** भण्यते पूर्वसूरिभिः । चितेस्तीर्थकरत्वादिपुण्यार्जनस्य कर्म क्रिया जिनादिवन्दनेत्यर्थः । यत्किम् ? **यदुज्झितं** त्यक्तं भवति । कैः ? **दोषै**रनादृतादिभिः । कतिभिः ? **द्वात्रिंशता** द्वात्रिंशत्संख्यैः । कस्य ? **स्वस्य** चितिकर्मणः संबन्धिभिः । न केवलं, **व्युत्सर्गस्य च** कायोत्सर्गस्य दोषैर्घोटकादिभिरुज्झितम् । पुनः किंविशिष्टम् ? **त्रियोगशुद्धम्** । त्रयो योगा मनोवाक्कायव्यापाराः शुद्धाः कालुष्यरहिता यस्मिन् तत् । वाहिताग्न्यादित्वात्समासः । पुनरपि किंविशिष्टम् ? **क्रमवत्** प्रशस्तक्रमम् । क्रमविशुद्धमित्यर्थः । उक्तं च—

**दुओणदं जहाजादं बारसावत्तमेव य ।**
**चदुस्सिरं तिसुद्धं च किदियम्मं पउञ्जदे ॥**
**तिविहं तियरणसुद्धं मयरहियं दुविहठाणपुणरुत्तं ।**
**विणएण कमविसुद्धं किदियम्मं होइ कायव्वं ॥**
**किदियम्मं पि कुणंतो ण होदि किदियम्मि णिज्जराभागी ।**
**बत्तीसाणण्णदरंसाहुट्ठाणं विराहिंतो ॥**

अथ चतुर्दशभिः श्लोकैर्द्वात्रिंशद्वन्दनादोषाँल्लक्षयति—

**अनादृतमतात्पर्यं वन्दनायां मदोद्धृतिः ।**
**स्तब्धमत्यासन्नभावः प्रविष्टं परमेष्ठिनाम् ॥ ९८ ॥**

'इति दोषोज्झिता कार्या वन्दना निर्जरार्थिना' इति गत्वा संबन्धः कर्तव्यः । तानेव वन्दनादोषांल्लक्षणतोऽनादृतमित्यादिना लक्षयति । मल इति मध्यदीपकेन दोष इत्यन्तदीपकेन वा योज्यम् । (१) **अनादृतं** नाम **वन्दनायां** प्रथमो दोषः स्यात् । किं लक्षणम् ? **अतात्पर्यं** समस्तादरनिर्मुक्तत्वम् । सा वन्दना परा प्रधानं यस्यासौ तत्परः । तत्परस्य कर्म तात्पर्यम् । न तात्पर्यं ( मतात्पर्यम् ) (२) **स्तब्धं** नाम वन्दनायां द्वितीयो दोषः स्यात् । किमात्मकम् ? **मदोद्धति**र्मदाष्टकवशीकृतत्वम् । मदो जात्यादिकृतोहंकारः । मदैरष्टाभिरुद्धतिरात्मोत्कर्षसंभावना । (३) **प्रविष्टं** नाम वन्दनायां तृतीयो दोषः स्यात् । किं स्वभावः ? **अत्यासन्नभावः** । केषाम् ? **परमेष्ठिनाम**र्हदादीनामतिमात्रमासन्नो निकटोऽत्यासन्नः । तस्य भावः । अतिनिकटत्वमित्यर्थः ।

**हस्ताभ्यां जानुनोः स्वस्य संस्पर्शः परिपीडितम् ।**
**दोलायितं चलन् कायो दोलावत् प्रत्ययोथवा ॥ ९९ ॥**

(४) **परिपीडितं** नाम वन्दनायां चतुर्थो दोषः स्यात् । किंरूपः ? **संस्पर्शः** समन्तात् स्पर्शनम् । कयोः ? **जानुनो**रष्ठीवतोः । काभ्याम् ? **हस्ताभ्याम्** । कस्य ? **स्वस्या**त्मनः । एवमुत्तरत्रापि संबन्धः कर्तव्यः । (५) **दोलायितं** नाम दोषः स्यात् । किमात्मा ? **कायः** शरीरम् । किं कुर्वन् ? **चलन्** गतायातं कुर्वन् । किंवत् ? **दोलावद्** दोलायामिव दोलारूढस्येव वा । इममेव दोषं प्रकारान्तरेण व्याचष्टे । **अथवा** दोलायितं नाम दोषः स्यात् । किमात्मा ? **प्रत्ययः** । किं कुर्वन् ? चलन् । चलन्ती प्रतीतिः संशयः इत्यर्थः । स्तुत्ये स्तवने तत्फले वा संदेह इति यावत् ।

**भालेंकुशवदङ्गुष्ठविन्यासोऽङ्कुशितं मतम् ।**
**निषेदुषः कच्छपवद्रिङ्खा कच्छपरिङ्गितम् ॥ १०० ॥**

(६) **मतम्** । किं तत् ? **अङ्कुशितं** नाम दोषः । किंलक्षणः ? **अङ्गुष्ठविन्यासः** स्वाङ्गुष्ठस्थापनम् । क्व ? **भाले** ललाटे । किंवत् ? **अङ्कुशवत्** सृणिरूपेण । (७) कच्छपरिङ्गितं कूर्मवच्चेष्टितं नाम दोषः स्यात् । किंरूपम् ? **रिङ्खा** रिङ्खणम् । किंवत् ? **कच्छपवत्** कूर्मस्येव । कस्य ? वन्दारोः । किंविशिष्टस्य ? **निषेदुषो** निषण्णस्य । उपविष्टस्येत्यर्थः ॥

**मत्स्योद्वर्तं स्थितिर्मत्स्योद्वर्तवत् त्वेकपार्श्वतः ।**
**मनोदुष्टं खेदकृतिर्गुर्वाद्युपरि चेतसि ॥ १०१ ॥**

(८) **मत्स्योद्वर्तं** नाम दोषः स्यात् । **तु**र्विशेषे । या किम् ? या **स्थिति**रवस्थानम् । केन ? **एकपार्श्वत** एकपार्श्वेन । कटिभागोद्वर्तनेनावस्थानमित्यर्थः । किंवत् ? **मत्स्योद्वर्तवत्** मत्स्योच्छलनवत् । (९) **मनोदुष्टं** नाम दोषः स्यात् । किमात्मा ? **खेदकृति**राक्षेपकरणम् । क्व ? **चेतसि** । कथम् ? **गुर्वाद्युपरि** आचार्यादेरुपरिष्टात् ।

**वेदिबद्धं स्तनोत्पीडो दोर्भ्यां वा जानुबन्धनम् ।**
**भयं क्रिया सप्तभयाद्बिभ्यत्ता बिभ्यतो गुरोः ॥ १०२ ॥**

(१०) **वेदिबद्धं** वेदिकाबद्धं नाम दोषः स्यात् । किंरूपः ? **स्तनोत्पीडः** स्तनयोः प्रपीडनम् । तमेव प्रकारान्तरेणाह—**वा** अथवा वेदिकाबद्धं नाम दोषः स्यात् । किम् ? **जानुबन्धनम्** । काभ्याम् ? **दोर्भ्यां** बाहुभ्याम् । योगपट्टरूपेण भुजाभ्यां जानुबन्धनमित्यर्थः । (११) **भयं** नाम दोषः स्यात् । या किम् ? या **क्रिया** आवश्यककरणम् । कस्मात् ? **सप्तभयाद्** मरणादिभयसप्तकाद्धेतोः । (१२) **बिभ्यत्ता** नाम दोषः स्यात् । या किम् ? या क्रिया । कस्य ? **बिभ्यतः** पुंसः । कस्मात् ? **गुरो**राचार्यात् । बिभ्यतः कर्म बिभ्यत्ता । बिभ्यद्दोष इत्यर्थः ।

**भक्तो गणो मे भावीति वन्दारोर्ऋद्धिगौरवम् ।**
**गौरवं स्वस्य महिमन्याहारादावथ स्पृहा ॥ १०३ ॥**

---

१ 'अङ्कुशोऽस्त्री सृणिः स्त्रियाम्' इत्यमरः ।

(१३) ऋद्धिगौरवं नाम दोषः स्यात्। कस्य ? वन्दारोर्वन्दनां साधुत्वेन कुर्वतः। कथम् ? इति एवंप्रकारेण। भावी भविष्यति। कोसौ ? गणश्चातुर्वर्ण्यश्रमणसंघः। किंविशिष्टः ? भक्तो भक्तिकः। कस्य ? मे मम। (१४) गौरवं नाम दोषः स्यात्। किमात्मा ? स्पृहा वाञ्छा। क्व ? महिमनि माहात्म्ये। कस्य ? स्वस्यात्मनः। अथवा स्पृहा। क्व ? आहारादौ भोजनोपकरणादौ।

स्याद्वन्दने चोरिकया गुर्वादेः स्तेनितं मलः।
प्रतिनीतं गुरोराज्ञाखण्डनं प्रतिकूल्यतः॥ १०४॥

(१५) स्तेनितं नाम मलो दोषः स्यात्। क्व ? वन्दने वन्दनायां क्रियमाणायाम्। कया ? चोरिकया चौर्येण। कस्य ? गुर्वादेर्गुरुप्रवर्त्युपाध्यायादेः। (१६) प्रतिनीतं नाम दोषः स्यात्। यत्किम् ? यदाज्ञाखण्डनम्। कस्य ? गुरोः। कस्मात् ? प्रतिकूल्यतः प्रतिकूलतया।

प्रदुष्टं वन्दमानस्य द्विष्टेऽकृत्वा क्षमां त्रिधा।
तर्जितं तर्जनान्येषां स्वेन स्वस्याथ सूरिभिः॥ १०५॥

(१७) प्रदुष्टं नाम दोषः स्यात्। कस्य ? वन्दमानस्य वन्दनां कुर्वतः। किं कृत्वा ? अकृत्वा। काम् ? क्षमां स्वयं क्षन्तव्यमकृत्वा तमक्षमयित्वा वा। कृतापराधस्य मनसि क्षमामनुत्पाद्येत्यर्थः। क्व ? द्विष्टे कलहादिना द्वेषविषयीकृते। कथम् ? त्रिधा मनोवाक्कायैः। (१८) तर्जितं नाम दोषः स्यात्। या किम् ? या तर्जना प्रदेशिनीपरावर्तनेन भयोत्पादनम्। केन ? स्वेनात्मना। केषाम् ? अन्येषां शिक्षादीनाम्। अथ अथवा तर्जितं स्यात्। कोसौ ? तर्जना। कैः ? सूरिभिराचार्यादिभिः। कस्य ? स्वस्यात्मनः। सूरिभिरितिबहुवचनं गणस्य संसूचकम्।

शब्दो जल्पक्रियान्येषामुपहासादि हेलितम्।
त्रिवलितं कटिग्रीवा हृद्भङ्गो भ्रुकुटिर्नवा॥ १०६॥

(१९) शब्दो नाम दोषः स्यात्। या किम् ? या जल्पक्रिया

वार्तादिकथनम् । ( २० ) **हेलितं** नाम दोषः स्यात् । यत्किम् ? **यदुपहासादि** । उपहासो विप्लवकरणम् । आदिशब्देनोद्घट्टनादिग्रहणम् । केषाम् ? **अन्येषाम**परजनानाम् । ( २१ ) **त्रिवलितं** नाम दोषः स्यात् । यत्किम् ? यत् **कटिग्रीवाहृद्भङ्गः** कट्या ग्रीवाया हृदयस्य च मोटनम् । **नवा** अथवा त्रिवलितं स्यात् । कासौ ? **भ्रुकुटिर्भ्रू**कुटिः । ललाटे वलित्रयकरणम् ।

**करामर्शोऽथ जान्वन्तः क्षेपः शीर्षस्य कुञ्चितम् ।**
**दृष्टं पश्यन् दिशः स्तौति पश्यत्स्वन्येषु सुष्ठु वा ॥ १०७ ॥**

( २२ ) **कुञ्चितं** नाम दोषः स्यात् । किंरूपम् ? **करामर्शः** । कस्य ? **शीर्षस्य** शिरसः । **अथ** अथवा कुञ्चितं स्यात् । कोसौ ? **क्षेपः** प्रक्षेपः । क्व ? **जान्वन्तः** जानुनोर्मध्ये । कस्य ? शीर्षस्य । ( २३ ) **दृष्टं** नाम दोषः स्यात् । यत् किम् ? यत् **स्तौति** वन्दते पुरुषः । किं कुर्वन् ? **पश्यन्** आलोकमानः । काः ? **दिशः** ककुभः । **वा** अथवा दृष्टं स्यात् । यत्किम् ? यत् स्तौति । कथम् ? **सुष्ठु** सुतराम् । केषु सत्सु ? **अन्येषु** गुर्वादिषु । किं कुर्वत्सु ? **पश्यत्सु** आलोकमानेषु । परेषु पश्यत्सु सोत्साहं वन्दते इत्यर्थः । यदित्यध्याहार्यः ।

**अदृष्टं गुरुदृग्मार्गत्यागो वाऽप्रतिलेखनम् ।**
**विष्टिः संघस्येयमिति धीः संघकरमोचनम् ॥ १०८ ॥**

( २४ ) **अदृष्टं** नाम दोषः स्यात् । यः किम् ? यो **गुरुदृङ्मार्गत्यागो** गुरोर्दृष्टिपथवर्जनम् । **वा** अथवा अदृष्टं स्यात् । यत्किम् ? यद**प्रतिलेखनं** पिच्छादिना प्रतिलेखनाकरणम् । ( २५ ) **संघकरमोचनं** नाम दोषः स्यात् । या किम् ? या **धी**र्बुद्धिः । कथम् ? इति । किमिति ? **इयं विष्टि**र्हठात् कर्मविधापनम् । कस्य ? **संघस्य** ।

**उपध्याप्त्या क्रियालब्धमनालब्धं तदाशया ।**
**हीनं न्यूनाधिकं चूला चिरेणोत्तरचूलिका ॥ १०९ ॥**

( २६ ) आलब्धं नाम दोषः स्यात् । या किम् ? या क्रिया आवश्यककरणम् । कया ? उपध्याहृया उपकरणादिलाभेन । ( २७ ) अनालब्धं नाम दोषः स्यात् । या किम् ? या क्रिया । कया ? तदाशया उपकरणाद्याकाङ्क्षया । ( २८ ) हीनं नाम दोषः स्यात् । यत्किम् ? यन्न्यूनाधिकं मात्राहीनमित्यर्थः । ( २९ ) उत्तरचूलिका नाम दोषः स्यात् । या किम् ? या चूला । केन ? चिरेण । वन्दनां स्तोककालेन कृत्वा तच्चूलिकाभूतस्यालोचनादेर्महता कालेन करणमित्यर्थः ।

**मूको मुखान्तर्वन्दारोर्हुङ्काराद्यथ कुर्वतः ।**
**दुर्दरो ध्वनिनान्येषां स्वेन-च्छादयतो ध्वनीन् ॥ ११० ॥**

( ३० ) मूको नाम दोषः स्यात् । कस्य ? वन्दारोर्वन्दनशीलस्य । क्व ? मुखान्तर्मुखे वदने अन्तर्मध्ये । मुखमध्ये इत्यर्थः । अथ अथवा मूकः स्यात् । कस्य ? वन्दारोः । किं कुर्वतः ? कुर्वतः । किं तत् ? हुंकारादि हुंकारं च घुटिकादि । ( ३१ ) दुर्दरो नाम दोषः स्यात् । कस्य ? वन्दारोः । किं कुर्वतः ? छादयतः प्रतिबध्नतः । कान् ? ध्वनीन् शब्दान् । केषाम् ? अन्येषामपरवन्दारूणाम् । केन ? ध्वनिना शब्देन । किंविशिष्टेन ? स्वेनात्मीयेन ॥

**द्वात्रिंशो वन्दने गीत्या दोषः सुललिताह्वयः ।**
**इति दोषोज्झिता कार्या वन्दना निर्जरार्थिना ॥ १११ ॥**

( ३२ ) सुललिताह्वयः सुललितं नाम दोषः स्यात् । क्व ? वन्दने । कया ? गीत्या गानेन । पञ्चमस्वरेणेत्यर्थः । कतमोसावित्याह—द्वात्रिंशो द्वात्रिंशतः पूरणः । एतेन द्वात्रिंशतो देववन्दना दोषा इति स्मरयति । कार्या । कासौ ? वन्दना । केन ? निर्जरार्थिना । किंविशिष्टाः ? इति दोषोज्झिता एवंस्वरूपदोषैस्त्यक्ता । प्रकारार्थो वा इतिशब्दः । तेनैवंप्रकाराः क्रियाकाण्डाद्युक्ताः । शिरोनामोन्नाममूर्ध्वोपरिकरभ्रमणगुर्वादेरग्रतो भूत्वा पाठोच्चारणादयोपि वन्दनादोषास्त्याज्या इति बोधयति ।

अथैकादशभिः श्लोकैः कायोत्सर्गदोषान् द्वात्रिंशतं व्याचष्टे—

**कायोत्सर्गमलोस्त्येकमुत्क्षिप्याङ्घ्रिं वराश्ववत् ।**
**तिष्ठतोऽश्वो मरुद्धूतलतावच्चलतो लता ॥ ११२ ॥**

(१) कायोत्सर्गमलो दोषोऽश्वो घोटकाख्योऽस्ति । कस्य ? वन्दारोः । किंकुर्वतः ? **तिष्ठतः** स्थितिं कुर्वतः । किं कृत्वा ? **एकमङ्घ्रिं** पादमुत्क्षिप्य उदस्य । एकेन भूतलमस्पृष्ट्वेत्यर्थः । किंवत् ? **वराश्ववद्** वरतुरगस्येव । (२) **लता** नाम कायोत्सर्गमलोस्ति । किंकुर्वतः ? **चलतः** कम्पमानस्य वन्दारोः । किंवत् ? **मरुद्धूतलतावद्** वायुना कंपितायाः वल्या यथा । एवमुत्तरत्रापि संबन्धः कर्तव्यः ।

**स्तम्भः स्तम्भाद्यवष्टभ्य पट्टकः पट्टकादिकम् ।**
**आरुह्य मालो मालादि मूर्ध्नालम्ब्योपरि स्थितिः ॥११३॥**

(३) स्तम्भो नाम मलोस्ति । कासौ ? **स्थितिरवस्थानं** कायोत्सर्गिणः । किं कृत्वा ? **अवष्टभ्य** आलम्ब्य । किं तत् ? **स्तम्भादि** स्तम्भं कुड्यादि वा । (४) **पट्टको** नाम मलोस्ति । कासौ ? **स्थितिः** । किं कृत्वा ? **आरुह्य** । किं तत् । **पट्टकादिकं** पट्टं कटादिकं वा । (५) **मालो** नाम मलोस्ति । कासौ स्थितिः । किं कृत्वा ? **आलम्ब्य** अवष्टभ्य । किं तत् ? **मालादि** स्रजं रज्वादिकं वा । केन ? **मूर्ध्ना** शिरसा । क्व ? **उपरि** ऊर्ध्वदेशे ।

**शृङ्खलाबद्धवत् पादौ कृत्वा शृङ्खलितं स्थितिः ।**
**गुह्यं कराभ्यामावृत्य शवरीवच्छवर्यपि ॥ ११४ ॥**

(६) **शृङ्खलितं** नाम दोषोस्ति । कासौ ? **स्थितिः** कायोत्सर्गिणः । किं कृत्वा ? **कृत्वा** । कौ ? **पादौ** । किंवत् ? **शृङ्खलाबद्धवत्** शृङ्खलया यन्त्रितस्य यथा । (७) **शवरी** नाम दोषोस्ति । कासौ ? स्थितिः । किंकृत्वा ? **आवृत्य** आच्छाद्य । किं तत् ? **गुह्यम**वाच्यदेशम् । काभ्याम् ? **कराभ्यां** हस्ताभ्याम् । किंवत् ? **शवरीवत्** किरातयुवतेर्यथा । **अपि**श्चार्थे ।

**लम्बितं नमनं मूर्ध्नस्तस्योत्तरितमुन्नमः ।**
**उन्नमय्य स्थितिर्वक्षः स्तनदावत्स्तनोन्नतिः ॥ ११५ ॥**

( ८ ) **लम्बितं** नाम दोषोस्ति । किं तत् ? **नमनं** नतिः । कस्य ? **मूर्ध्नः** शिरसः । ( ९ ) **उत्तरितं** नाम दोषोस्ति । कोसौ ? **उन्नम** उन्नमनम् । कस्य ? **तस्य मूर्ध्नः** । उन्नम इतीन्नन्तादल् । ( १० ) **स्तनोन्नतिर्नाम** दोषः स्यात् । कासौ ? **स्थितिः** । किं कृत्वा ? **उन्नमय्य** उत्क्षिप्य । किं तत् ? **वक्ष** उरः । किंवत् ? **स्तनदावत्** शिशोः स्तनदायिन्याः स्त्रिया यथा ।

**वायसो वायसस्येव तिर्यगीक्षा खलीनितम् ।**
**खलीनार्ताश्ववद्दन्तघृष्ट्योर्ध्वाधश्चलच्छिरः ॥ ११६ ॥**

( ११ ) **वायसो** नाम कायोत्सर्गिणो दोषः स्यात् । कासौ ? **तिर्यगीक्षा** तिर्यक् प्रेक्षणम् । कस्येव ? **वायसस्येव** काकस्य यथा । ( १२ ) **खलीनितं** नाम दोषः स्यात् । किं तत् ? **शिरः** शीर्षम् । किं कुर्वत् ? **चलत्** । कथम् ? **ऊर्ध्वाध** ऊर्ध्वमधश्च । कया ? **दन्तघृष्ट्या** दन्तकटकटायनेन सह । किंवत् ? **खलीनार्ताश्ववत्** कविकाक्रान्तघोटकस्य यथा ।

**ग्रीवां प्रसार्यावस्थानं युगार्तगववद्युगः ।**
**मुष्टिं कपित्थवद्बद्ध्वा कपित्थः शीर्षकम्पनम् ॥ ११७ ॥**
**शिरःप्रकम्पितं संज्ञा मुखनासाविकारतः ।**
**मूकवन्मूकिताख्यः स्यादङ्गुलीगणनाङ्गुली॥११८॥(युग्मम्)**

( १३ ) **युगो** नाम दोषः स्यात् । किं तत् ? **अवस्थानं** स्थितिः कायोत्सर्गिणः । किं कृत्वा ? **प्रसार्य** आयम्य । काम् ? **ग्रीवां** शिरोधिम् । किंवत् ? **युगार्तगववत्** स्कंधारूढयुगस्य बलीवर्दस्य यथा । ( १४ ) **कपित्थो** नाम दोषः स्यात् । किं तत् ? अवस्थानं कायोत्सर्गिणः । किं कृत्वा ? **बद्ध्वा** । काम् ? **मुष्टिम्** । किंवत् ? **कपित्थवत्** कपित्थेन तुल्यम् । ( १५ ) **शीर्षकम्पनं** नाम दोषः स्यात् । किं तत् ? **शिरः प्रकम्पितम्** । ( १६ ) **मूकिताख्यो** मूकितं नाम दोषः स्यात् ।

किम् ? संज्ञा । केन ? **मुखनासाविकारतो** वक्त्रनासिकाविकृत्या । किंवत् ? **मूकवन्मूकस्य** यथा । ( १७ ) **अङ्गुली** नाम दोषः स्यात् । कासौ ? **अङ्गुलीगणना** अङ्गुलीभिः संख्यानम् ।

**भ्रूक्षेपो भ्रूविकारः स्याद् घूर्णनं मदिरार्तवत् ।**
**उन्मत्त ऊर्ध्वं नयनं शिरोधेर्बहुधाप्यधः ॥ ११९ ॥**

( १८ ) **भ्रूक्षेपो** नाम दोषः स्यात् । कोसौ ? **भ्रूविकारो** भ्रुवोर्विकारकरणम् । ( १९ ) **उन्मत्तो** नाम दोषः स्यात् । किं तत् ? **घूर्णनं** भ्रमणम् । किं वत् ? **मदिरार्तवद्** मद्याभिभूतस्य यथा । ( २० ) **ऊर्ध्व**मित्यादि । **शिरोधेर्ग्री**वाया **ऊर्ध्वं नयनम्** । कथम् ? **बहुधा** बहुभिः प्रकारैः । **अप्यधः** अधस्तादपि बहुधाग्रीवानयनम् । एतौ ग्रीवोर्ध्वनयनं ग्रीवाधोनयनं चेति द्वौ दोषौ विंशः ( २१ ) एकविंशश्च ।

**निष्ठीवनं वपुःस्पर्शो न्यूनत्वं दिगवेक्षणम् ।**
**मायाप्रायास्थितिश्चित्रा वयोपेक्षाविवर्जनम् ॥ १२० ॥**

निष्ठीवनमित्यादि । अत्र उत्तरत्र च संज्ञा एव लक्षणानि, स्पष्टत्वात् । ( २२ ) **निष्ठीवनं** श्लेष्मनिरसनम् । ( २३ ) **वपुःस्पर्शः** शरीरामर्शः । ( २४ ) **न्यूनत्वं** मात्राहीनत्वम् । ( २५ ) **दिगवेक्षणं** दिशामालोकनम् । ( २६ ) **मायाप्रायास्थितिश्चित्रा** मायाप्राया वञ्चनाबहुला चित्रा चाश्चर्यभूता स्थितिः कायोत्सर्गेणावस्थानम् ( २७ ) **वयोपेक्षाविवर्जनं** वार्धक्यमपेक्ष्य कायोत्सर्गस्य त्यजनम् ।

**व्याक्षेपासक्तचित्तत्वं कालापेक्षाव्यतिक्रमः ।**
**लोभाकुलत्वं मूढत्वं पापकर्मैकसर्गता ॥ १२१ ॥**

( २८ ) **व्याक्षेपासक्तचित्तत्व**मितस्ततश्च गतचित्तत्वम् । ( २९ ) **कालापेक्षाव्यतिक्रमः** कालापेक्षया कायोत्सर्गस्य विविधमंशभञ्जनम् । ( ३० ) **लोभाकुलत्वं** गार्ध्यवशाद्विक्षेपः । ( ३१ ) **मूढत्वं** कृत्याऽकृत्याविवेचकत्वम् । ( ३२ ) **पापकर्मैकसर्गता** पापकर्मसु हिंसादिषूत्कृष्टोत्साहता ।

**योज्येति यत्नाद् द्वात्रिंशद्दोषमुक्ता तनूत्सृतिः ।**
**सा हि मुक्त्यङ्गसद्ध्यानशुद्ध्यै शुद्धैव संमता ॥ १२२ ॥**

**योज्या** प्रयोक्तव्या मुमुक्षुणा । कासौ ? **तनूत्सृतिः** कायोत्सर्गः । किंविशिष्टा ? **द्वात्रिंशद्दोषमुक्ता** द्वात्रिंशताऽतीचारै रहिता । कस्मात् ? **यत्नात्** प्रयत्नमाश्रित्य । कथम् ? **इति** एवंप्रकारेण । **हि** यस्मात् **सा** तनूत्सृतिः **संमता** सम्यगिष्टा आचार्याणाम् । कीदृशी ? **शुद्धैव**, नाशुद्धा । कस्मै ? **मुक्त्यङ्गसद्ध्यानशुद्ध्यै** मुक्त्यङ्गस्य निःश्रेयसकारणस्य सद्ध्यानस्य धर्म्यशुक्ललक्षणस्य शुद्धिर्वैशद्यं मुक्त्यङ्गसद्ध्यानशुद्धिस्तस्यै । उक्तं च—

सदोषा न फलं दत्ते निर्दोषायास्तनूत्सृतेः ।
किं कूटं कुरुते कार्यं स्वर्णं सत्यस्य जातुचित् ॥

उत्थितोत्थितादिभेदभिन्नायाश्चतुर्विधायास्तनूत्सृतेरिष्टानिष्टफलत्वं लक्षयति—

**सा च द्वयीष्टा सद्ध्यानादुत्थितस्योत्थितोत्थिता ।**
**उपविष्टोत्थिता चोपविष्टस्यान्यान्यथा द्वयी ॥ १२३ ॥**

**सा च** तनूत्सृति**रिष्टा**ऽभिमता सूरिणाम् । किंविशिष्टा ? **द्वयी** द्व्यवयवा । कस्मात् ? सद्ध्यानाद् धर्म्यध्यानं शुक्लध्यानं चाश्रित्य । कीदृशी ? **उत्थितोत्थिता** उत्थितोत्थिताख्या । कस्य ? **उत्थितस्य** उर्द्धीभूतस्य । न केवलम्, **उपविष्टोत्थिता चोपविष्टो**त्थिताख्या । कस्य ? **उपविष्टस्य** निविष्टस्य पुंसः । **अन्या** अपरा **द्वयी** इष्टा । कथम् ? **अन्यथा** । उक्तविपर्ययेन्यथाशब्दः । तेनोपविष्टस्योत्थितस्य चार्तरौद्रचिन्तनलक्षणाद्दुर्ध्यानादुपविष्टोपविष्टा उत्थितोपविष्टा च द्वयी तनूत्सृतिरनिष्टाऽनिष्टफलत्वादित्यर्थः । उक्तं च—

त्यागो देहममत्वस्य तनूत्सृतिरुदाहृता ।
उपविष्टोपविष्टादिविभेदेन चतुर्विधा ॥
आर्तरौद्रद्वयं यस्यामुपविष्टेन चिन्त्यते ।
उपविष्टोपविष्टाख्या कथ्यते सा तनूत्सृतिः ॥

धर्म्यशुक्लद्वयं यस्यामुपविष्टेन चिन्त्यते।
उपविष्टोत्थितां सन्तस्तां वदन्ति तनूत्सृतिम्॥
आर्तरौद्रद्वयं यस्यामुत्थितेन विधीयते।
तामुत्थितोपविष्टाख्यां निगदन्ति महाधियः॥
धर्म्यशुक्लद्वयं यस्यामुत्थितेन विधीयते।
उत्थितोत्थितनामानं तां भाषन्ते विपश्चितः॥

कायममत्वापरित्यागिनोऽनशनव्रतस्यापि मुमुक्षोः स्वेष्टसिद्धिप्रतिबन्धं दर्शयति—

**जीवद्देहममत्वस्य जीवत्याशाप्यनाशुषः।**
**जीवदाशस्य सद्ध्यानवैधुर्यात्तत्पदं कुतः॥ १२४॥**

**जीवति** प्राणिति। कासौ ? **आशा**। कस्य? **जीवद्देहममत्वस्य** जीवत् प्राणद् देहममत्वं यस्यासौ जीवद्देहममत्वस्तस्य। किंविशिष्टस्यापि ? **अनाशुषो**ऽनशनव्रतस्यापि। **कुतः** कस्माद्दाचरणाद्भवति। किम् ? **तत्पदं** तत् प्रसिद्धं पदं स्थानम्। मोक्ष इत्यर्थः कस्य ? **जीवदाशस्य** जीवन्ती प्राणती आशा इहलोकाद्यभिलाषो यस्यासौ जीवदाशस्तस्य। कस्मात् ? **सद्ध्यानवैधुर्याद्** धर्म्यशुक्लसमाधिवैकल्यात्।

अतीचारविशुद्ध्यै क्रियाविशेषसिद्ध्यै वा यथोक्तकालं कायोत्सर्गं कृत्वा परतोपि शक्त्या तत्करणे न दोषः स्यात्। किं तर्हि ? गुण एव भवेदित्युपदेशार्थमाह—

**हृत्वापि दोषं कृत्वापि कृत्यं तिष्ठेत् तनूत्सृतौ।**
**कर्मनिर्जरणाद्यर्थं तपोवृद्ध्यै च शक्तितः॥ १२५॥**

**तिष्ठेत्** आसीत मुमुक्षुः। कस्याम् ? **तनूत्सृतौ**। कुतः ? **शक्तितो** वीर्यानिगूहनेन। किमर्थम् ? **कर्मनिर्जरणाद्यर्थं** कर्मनिर्जरासंवरणार्थम्। न केवलं, **तपोवृद्ध्यै च** तपसामुपचयार्थम्। किं कृत्वा ? **हृत्वापि** निरस्यापि। किम् ? **दोषम्**। न केवलं, **कृत्वापि**। किं तत् ? **कृत्यम**वश्यकार्यम्।

त्रियोगशुद्धे कृतिकर्मण्यधिकारिणं लक्षयति—

**यत्र स्वान्तमुपास्य रूपरसिकं पूतं च योग्यासना,—**
**द्यप्रत्युक्तगुरुक्रमं वपुरनुज्येष्ठोद्‌घपाठं वचः ।**
**तत् कर्तुं कृतिकर्म सज्जतु जिनोपास्त्योत्सुकस्तात्त्विकः**
**कर्मज्ञानसमुच्चयव्यवसितः सर्वसहो निस्पृहः ॥ १२६ ॥**

**सज्जतु** सज्जीभवतु । कोसौ ? जिनोपास्त्योत्सुक इत्यादिपञ्चविशेषणः विशिष्टः । किं कर्तुम् ? **कर्तुम्** । किं तत् ? **कृतिकर्म** । **उत्सुकः** सोत्कण्ठाभिलाषः । कया ? **जिनोपास्त्या** अर्हदुपासनया । 'प्रसितोत्सुकाभ्यां भा च' इति तृतीया । **तात्त्विकः** परमार्थिकः । **कर्मज्ञानसमुच्चयव्यवसितः** । कर्मणां सूत्रोक्तक्रियाणां ज्ञानस्य च स्वात्मावबोधस्य समुच्चयः संग्रहः तत्र व्यवसितः कृतोत्साहः **सर्वसहः** परीषहोपसर्गसहिष्णुः । **निस्पृहो** निरीहः । यत्र किम् ? यत्र कृतिकर्मण्यस्ति । किं तत् ? **स्वान्तं** मनः । किंविशिष्टम् ? **उपास्यरूपरसिकम्**उपास्यानामाराध्यानां सिद्धादीनां रूपं स्वरूपमुपास्यरूपम् । तत्र **रसिकं** सातिशयानुरागम् । न केवलं, **पूतं च** भावविशुद्धम् । एतेन त्रयमपि विशेष्यम् । तथा यत्र **वपुः** शरीरमस्ति । किंविशिष्टम् ? **योग्यासनाद्यप्रत्युक्तगुरुक्रमम्** । गुरुक्रमो दीक्षाज्येष्ठानां पुरःक्रियां कुर्वतामानुपूर्व्यम् । आसनमादिर्येषां स्थानादीनां तान्यासनादीनि । योग्यानि समुचितान्यासनादीनि योग्यासनादीनि । तैरप्रत्युक्तोऽनिराकृतो गुरुक्रमो येन तत् तथोक्तम् । न केवलं, **पूतं च** द्रव्यतः शुद्धम् । तथा यत्र **वचो** वचनमस्ति । किंविशिष्टम् ? **अनुज्येष्ठोद्‌घपाठं** ज्येष्ठानुक्रमेण प्रशस्तोच्चारणम् । न केवलं, **पूतं च** वर्णपदादिशुद्धम् । उक्तं च—

**स व्याधेरिव कल्पत्वे विदृष्टेरिव लोचने ।**
**जायते यस्य संतोषो जिनवक्त्रविलोकने ॥**
**परीषहसहः शान्तो जिनसूत्रविशारदः ।**
**सम्यग्दृष्टिरनाविष्टो गुरुभक्तः प्रियंवदः ॥**

आवश्यकमिदं धीरः सर्वकर्मनिषूदनम्।
सम्यक् कर्तुमसौ योग्यो नापरस्यास्ति योग्यता ॥

मन्दमतिसुखप्रतिपत्तये क्रमवदिति विशेषणं विवृण्वन्नाह—

प्रेप्सुः सिद्धिपथं समाधिमुपविश्यावेद्य पूज्यं क्रिया,—
मानम्यादिलयभ्रमत्रयशिरोनामं पठित्वा स्थितः।
साम्यं त्यक्ततनुर्जिनान् समदृशः स्मृत्त्वावनम्य स्तवं,
युक्त्वा साम्यवदुक्तभक्तिरुपविश्यालोचयेत् सर्वतः ॥१२७॥

**सिद्धिपथं** स्वात्मोपलब्ध्युपायभूतं **समाधिं** रत्नत्रयैकाग्रतां **प्रेप्सुः** प्राप्तुमिच्छुः संयतो देशसंयतो वा **आलोचयेत्** 'इच्छामि भत्ते चेइयभत्तिकाउस्सग्गो कओ तस्स आलोचेउं' इत्यादि प्रसिद्धनिगदमुच्चारयंस्तदर्थं मनसा विचिन्तयेत्। किं कृत्वा ? **उपविश्य** उपवेशनं कृत्वा। क ? **सर्वतः** सर्वासु विभक्तिषु। किं कृत्वा ? **उपविश्य** निविश्य **आवेद्य** च 'चैत्यभक्तिकायोत्सर्गं करोमि' इत्यादिरूपेण सप्रश्रयप्रणतिपूर्वकं विज्ञाप्य। कम् ? **पूज्यं** गुर्वादिकम्। काम् ? **क्रियां** कृतिकर्म। किंविशिष्टः ? **स्थितः**। किं कृत्वा ? **आनम्य** शरीरावनतिं कृत्वा। पुनरुद्धीभूतः सन्नित्यर्थः। किं कृत्वा ? **पठित्वा** निगद्य। किं तत् ? **साम्यं** सामायिकदण्डकम्। कथम् कृत्वा ? **आदिलयभ्रमत्रयशिरोनामम्**। आरम्भे समाप्तौ चावर्तत्रयानन्तरप्रयुक्तमेकं शिरोनमनं यत्रेत्यर्थः। आदिश्च लयश्चादिलयौ आरम्भसमाप्ती। भ्रमाणामावर्तानां त्रयं भ्रमत्रयम्। शिरसो नाम नमनं शिरोनामः। भ्रमत्रयादनन्तरं प्रयुक्तः शिरोनामो भ्रमत्रयशिरोनामः। 'मयूरव्यंसकादित्वात्। समासः। आदिलययोर्भ्रमत्रयशिरोनामो यत्र तदेवम्। क्रियाविशेषणमिदम्। पुनः किंविशिष्टः ? **त्यक्ततनुः** आलम्बितकायोत्सर्गः। त्यक्ता निर्ममतया प्रतिपन्ना तनुः शरीरं येनासौ त्यक्ततनुः। पुनरपि किंविशिष्टः ? **उक्तभक्तिः** पठितवन्दनाकल्पः। किं कृत्वा ? **युक्त्वा** प्रयुज्य। कम् ? **स्तवं** 'थोस्सामि' इत्यादिदण्डकम्। किंवत् ? **साम्यवत्** सामायिकदण्डकं यथा। आदिलयेत्यादिविधिनेत्यर्थः ! किं कृत्वा ? **अवनम्य** शरीरावनतिं कृत्वा।

किं कृत्वा ? **स्मृत्वा** चिन्तयित्वा । कान् ? **जिनान्** । किंविशिष्टान् ? **समदृशो** जीवितमरणादिषु तुल्यदर्शिनः "साकल्येनैकदेशेन कर्मारातिजितो जिनाः पञ्चार्हदादयोत्रेष्टाः" इति कृत्वा पञ्चपरमेष्ठिनः । कायोत्सर्गे यथोक्तानुच्छ्वासान् कृत्वेत्यर्थः ।

सम्यक् षडावश्यकानुष्ठातुश्चिह्ननिर्णयार्थमाह—

**शृण्वन् हृष्यति तत्कथां घनरवं केकीव मूकैडतां,**
**तद्गर्हेऽङ्गति तत्र यस्यति रसे वादीव नास्कन्दति ।**
**क्रोधादीन् जिनवन्न वैद्यपतिवद् व्यत्येति कालक्रमं,**
**नित्यं जातु कुलीनवन्न कुरुते कर्ता षडावश्यकम् ॥ १२८॥**

षण्णामावश्यकानां समाहारः **षडावश्यकं कर्ता** साधुत्वेन कुर्वाणः साधु**र्हृष्यति** प्रमोदते । किं कुर्वन् ? **शृण्वन्**नाकर्णयन् । काम् ? **तत्कथां** तस्य षडावश्यकस्य कथां वार्ताम् । क इव कमित्याह—**घनरवं केकीव** । यथा केकी मयूरो घनरवं जलदशब्दं शृण्वन्नाह्लादते तथा प्रकृतोपीत्यर्थः । तथा **अङ्गति** गच्छति । कोसौ ? षडावश्यकं कर्ता । काम् ? **मूकैडतां** मौनं बधिरत्वं च । क्व ? **तद्गर्हे** । स्वयं न गर्हते षडावश्यकं, नाप्यन्येन गर्ह्यमाणं शृणोतीत्यर्थः । मूकोऽवाक् । एडो बधिरः । मूकश्चैडश्च मूकैडौ । मूकैडयोर्भावो मूकैडता, ताम् । तथा षडावश्यकं कर्ता **तत्र** षडावश्यके **यस्यति** प्रयतते अवधानं करोति । क्व क इव ? **रसे वादीव** । यथा वादी धातुवादी रसे पारदे प्रयतते तथा प्रकृतोपीत्यर्थः । तथा **नास्कन्दति** नाविशति । कोसौ ? षडावश्यकं कर्ता । कान् ? **क्रोधादीन्** । किंवत् ? **जिनवद्** । यथा क्षीणकषायः क्रोधादीन्नावगाहते तथा प्रकृतोपीत्यर्थः । तथा षडावश्यकं कर्ता **न व्यत्येति** नातिक्रामति । कम् ? **कालक्रमम्** । किंवत् ? **वैद्यपतिवत्** । यथा भिषग्वरः स्वस्थातुरौ प्रति कालक्रमं न हापयति तथा साधुरावश्यककालक्रममित्यर्थः । कालश्च क्रमश्च कालक्रममिति समाहारः । तत्रावश्यकं प्रति योग्यकालासनेत्यादिना कालः, सामायिकं चतुर्विंशतिस्तव इत्यादिना क्रमश्च निर्दिष्टौ । वैद्यपतिं प्रति त्विमौ बोध्यौ—

प्रावृड्वर्षानभोतेषु शरदूर्जसहौ स्मृतौ ।
तपस्यो मधुमासश्च वसन्तः शोधनं प्रति ॥
स्वस्थवृत्त्यमभिप्रेत्य व्याधौ व्याधिवशेन तु ।
कृत्वा शीतोष्णवृष्टीनां प्रतीकारं यथायथम् ॥
प्रयोजयेत् क्रियां प्राप्तां क्रियाकालं न हापयेत् ।

इति कालः । क्रमस्त्वयम्,—

प्राक्पाचनं स्नेहविधिस्ततश्च,
स्वेदस्ततः स्याद्वमनं विरेकः ।
निरूहणं स्नेहनवस्तिकर्म,
नस्यं क्रमश्चेति भिषग्वराणाम् ॥ इति ।

तथा षडावश्यकं कर्ता न कुरुते न विधत्ते । किं तत् ? निन्द्यं लोककुलसमयविरुद्धमाचरणम् । किंवत् ? कुलीनवत् । यथा कुलीनो महावंश्यो निन्द्यं न कुरुते तथा साधुरपीत्यर्थः । जात्विति कदाचिदर्थम् सर्वैर्वाक्यैरन्तदीपकत्वाद्यथासंभवं संबन्धनीयम् । उक्तं च—

तत्कथाश्रवणानन्दो निन्दाश्रवणवर्जनम् ।
अलुब्धत्वमनालस्यं निन्द्यकर्मव्यपोहनम् ॥
कालक्रमाऽव्युदासित्वमुपशान्तत्वमार्जवम् ।
विज्ञेयानीति चिह्नानि षडावश्यककारिणः ॥

संपूर्णेतरषडावश्यकसम्यग्विधाने पुरुषस्य निःश्रेयसाभ्युदयप्राप्तिं फलतयोपदिशति—

**समाहितमना मौनी विधायावश्यकानि ना ।**
**संपूर्णानि शिवं याति सावशेषाणि वै दिवम् ॥ १२९ ॥**

वै नियमेन ना द्रव्यतः पुमानेव समाहितमना एकाग्रचित्तो मौनी प्रकृतादन्यत्र वाचंयमी संपूर्णानि सकलान्यावश्यकानि सामायिकादीनि विधाय कृत्वा शिवं मोक्षं याति प्राप्नोति । तथा यथोक्तः पुमान् सावशेषाणि कतिपयानि हीनानि वावश्यकानि नियमेन विधाय दिवं महर्धिककल्पवासित्वं याति । अशक्त्यपेक्षयैतत् । यद्वृद्धाः—

जं सक्कइ तं कीरइ जं च ण सक्केइ तं च सद्दहणं[1]।
सद्दहमाणो जीओ पावइ अजरामरं ठाणं ।

वै इति नियमार्थेनैतद्बोधयति—

सर्वैरावश्यकैर्युक्तः सिद्धो भवति निश्चितम् ।
सावशेषैस्तु संयुक्तो नियमात्स्वर्गगो भवेत् ॥

षडावश्यकक्रिया इव सामान्या अपि क्रिया नित्यं साधुना कार्या इत्युपदिशति—

**आवश्यकानि षट् पञ्च परमेष्ठिनमस्क्रियाः ।**
**निसही चाऽसही साधोः क्रियाः कृत्यास्त्रयोदश ॥१३०॥**

**साधोः** संयतस्य त्रयोदश **क्रियाः** कर्माणि **कृत्या** अवश्यकार्याः । ता एवाह—**षडावश्यकानि** साधुना कृत्यानि **परमेष्ठिनमस्क्रियाः** अर्हदादिनमस्काराः **पञ्च** साधुना कृत्याः । **निसही असही चेति** द्वे क्रिये साधुना कृत्ये । इति प्रत्येकवाक्यपरिसमाप्त्यां संबन्धनीयम् ।

भावतोर्हदादिनमस्कारपञ्चकस्य फलमाह—

**योर्हत्सिद्धाचार्याध्यापकसाधून् नमस्करोत्यर्थात् ।**
**प्रयतमतिः खलु सोखिलदुःखविमोक्षं प्रयात्यचिरात्॥१३१**

**स** भावतोर्हदादिनमस्कर्ता **प्रयाति** लभते । कम् ? **अखिलदुःखविमोक्षम**खिलेभ्यश्चतुर्गतिसंबन्धिभ्यो दुःखेभ्यः विमोक्षं विश्लेषम् । कस्मात् ? **अचिराद**ल्पेनैव कालेन । कथम् ? **खलु** निश्चयेन । यः किम् ? **यः प्रयतमतिः** प्रयत्नपरचित्तो **नमस्करोति** वन्दते । कान् ? **अर्हत्सिद्धाचार्याध्यापकसाधून्** जिनेन्द्रपरममुक्तसूर्युपाध्यायसर्वसाधून् । कस्मात् ? **अर्थात्** परमार्थतः ।

निसह्यसहीप्रयोगविधिमाह—

**वसत्यादौ विशेत् तत्स्थं भूतादिं निसहीगिरा ।**
**आपृच्छ्य तस्मान्निर्गच्छेत्तं चापृच्छ्याऽसहीगिरा ॥१३२॥**

---

१ यत् शक्नोति तत्करोति यच्च न शक्नोति तच्च श्रद्दधन् ।
श्रद्दधानो जीवः प्राप्नोति अजरामरं स्थानम् ॥

साधुर्विशेत् प्रविशेत्। क्व ? वसत्यादौ मठचैत्यालयादौ। किं कृत्वा ? आपृच्छ्य संवाद्य। कम् ? भूतादिं भूतयक्षनागादिकम्। किंविशिष्टम् ? तत्स्थं तत्र वसत्यादौ तिष्ठन्तम्। कया ? निसहीगिरा निसहीकेत्युच्चारणेन। तथा साधुर्निर्गच्छेन्निष्क्रामेत्। कस्मात् ? तस्माद् वसत्यादेः। किं कृत्वा ? आपृच्छ्य। कम् ? तं तत्स्थं भूतादिकम्। कया ? असहीगिरा असहीकेत्युच्चारणेन। चः समुच्चये। उक्तं च—

वसत्यादिस्थभूतादिमापृच्छ्य निसहीगिरा।
वसत्यादौ विशेत्तस्मान्निर्गच्छेत् सोऽसहीगिरा॥

परमार्थतो निसह्यसह्यौ लक्षयति—

आत्मन्यात्मासितो येन त्यक्त्वा वाऽऽशास्य भावतः।
निसह्यसह्यौ स्तोन्यस्य तदुच्चारणमात्रकम्॥ १३३॥

स्तो भवतः। के ? निसह्यसह्यौ। कस्मात् ? भावतो निश्चयनयात्। कस्य ? अस्य साधोः। येन किम् ? येनासितः स्थापितः सितो वा बद्धः। कोसौ ? आत्मा। कस्मिन् ? आत्मनि न केवलं, त्यक्ता च। कासौ ? आशा इहलोकाद्यभिलाषः। तथास्ति। किं तत् ? उच्चारणमात्रकं 'निसह्यसही' शब्दोच्चारणमात्रम्। कस्य ? अन्यस्य बहिरात्मन आशावतश्च। तथा च पूर्वभाषितानि—

स्वात्मन्यात्मासितो येन निषिद्धो वा कषायतः।
निसही भावतस्तस्य शब्दोन्यस्य हि केवलः॥
आशां यस्त्यक्तवान् साधुरसही तस्य भावतः।
त्यक्ताशा येन नो तस्य शब्दोच्चारो हि केवलः॥

अथवा—

निषिद्धचित्तो यस्तस्य भावतोस्ति निषिद्धिका।
अनिषिद्धस्य तु प्रायः शब्दतोस्ति निषिद्धिका॥
आशया विप्रमुक्तस्य भावतोस्त्यासिका मता।
आशया त्ववियुक्तस्य शब्द एवास्ति केवलम्॥

प्रकृतमुपसंहरन् नित्यनैमित्तिककृतिकर्मप्रयोगं नियमयन्नाह—

**इत्यावश्यकनिर्युक्तावुपयुक्तो यथाश्रुतम् ।**
**प्रयुञ्जीत नियोगेन नित्यनैमित्तिकक्रियाः ॥ १३४ ॥**

**प्रयुञ्जीत** विदधीत साधुः । काः ? **नित्यनैमित्तिकक्रियाः** नित्यक्रियाश्च नैमित्तिकक्रियाश्चेति विगृह्य प्रथमक्रियाशब्दस्य गतार्थत्वादप्रयोगः । अथवा नित्याश्च नैमित्तिकाश्च नित्यनैमित्तिकाः । ताश्च ताः क्रियाश्च नित्यनैमित्तिकक्रियाः । नित्या इत्यस्य 'पीतपद्मशुक्ललेश्या द्वित्रिशेषेषु' इत्यादिवत्पुंवद्भावः । केन प्रयुञ्जीत ? **नियोगेन** नियमेन । कथम् ? **यथाश्रुतं** कृतिकर्मशास्त्रस्य गुरुपर्वक्रमायातोपदेशस्य वानतिक्रमेण । किंविशिष्टः सन् ? **उपयुक्तः** प्रणिहितः । कस्याम् ? **आवश्यकनिर्युक्तौ** आवश्यकानां निरवशेषोपाये । कथम् ? **इति** एवमुक्तनीत्या । इति भद्रम् । ग्रन्थसंख्या १५४५

**यो धर्मामृतमुद्दधार सुमनस्तृप्त्यै जिनेन्द्रागम,—**
**क्षीरोदं शिवधीर्निमथ्य जयतात् स श्रीमदाशाधरः ।**
**भव्यात्मा हरदेव इत्यभिधया ख्यातश्च नन्द्यादिमं,**
**टीकाशुक्तिमचीकरत् सुखमिमां तस्योपयोगाय यः ॥**

इत्याशाधरविरचितायां स्वोपज्ञधर्मामृतानगारधर्मटीकायां
भव्यकुमुदचन्द्रिकासंज्ञायामावश्यकनिर्युक्त्याभिधानीयो
नामाष्टमोऽध्यायः ॥ ८ ॥



# अथ नवमोऽध्यायः ॥ ९॥

अथ चतुश्चत्वारिंशता पद्यैर्नित्यक्रियाप्रयोगविधौ मुनिमुद्यमयन्नाह–

**शुद्धस्वात्मोपलम्भाग्रसाधनाय समाधये।**
**परिकर्म मुनिः कुर्यात् स्वाध्यायादिकमन्वहम् ॥ १ ॥**

**मुनिः** संयमी **कुर्याद्** विदधीत। किं तत् ? **परिकर्म** योग्यतोत्पादनाय प्राग्विधेयमनुष्ठानम्। किंविशिष्टम्? **स्वाध्यायादिकं** वक्ष्यमाणम्। कथम्? **अन्वहम्**नुदिनम्। कस्मै? **समाधये** स्वस्वरूपे चित्तनिरोधलक्षणाय योगाय। किंविशिष्टाय? **शुद्धस्वात्मोपलम्भाग्रसाधनाय** निर्मलनिजचिद्रूपोपलब्धिप्रधानकारणाय। उक्तं च—

यदात्रिकं फलं किंचित् फलमामुत्रिकं च यत्।
एतस्य द्वितयस्यापि ध्यानमेवाग्रकारणम् ॥

स्वाध्यायप्रतिष्ठापननिष्ठापनयोर्विधिमुपदिशति—

**स्वाध्यायं लघुभक्त्यात्तं श्रुतसूर्योरहर्निशे।**
**पूर्वेऽपरेऽपि चाराध्य श्रुतस्यैव क्षमापयेत् ॥ २ ॥**

**क्षमापयेत्।** कोसौ? मुनिः। कम्? **स्वाध्यायम्।** कया? **लघुभक्त्या।** कस्य? **श्रुतस्यैव।** लघ्व्या श्रुतभक्त्या निष्ठापयेदित्यर्थः। किं कृत्वा? **आराध्य** विधिवद्विधाय। क्व? **अहर्निशे** दिने रात्रौ च। किंविशिष्टे? **पूर्वे,** न केवल**मऽपरेऽपि च** पूर्वाह्णेऽपराह्णे। पूर्वरात्रेऽपररात्रे चेत्यर्थः। एतेन गौसर्गिकापराह्णिकप्रादोषिकवैरात्रिकाश्चत्वारः स्वाध्याया विधातव्या इत्युक्तं भवति। यथाह—

एकः प्रादोषिको रात्रौ द्वौ च गौसर्गिकस्तथा।
स्वाध्यायाः साधुभिः सर्वे कर्तव्याः सन्त्यतन्द्रितैः ॥

प्रदोषः प्रत्यासन्नः कालः। अत्र प्रदोषोऽपराह्णः। तत्र भवः प्रादो-

षिकः । अपराह्णिक इत्यर्थः । एवं गोसर्गे पूर्वाह्णे भवो गौसर्गिकः । पौर्वाह्णिक इत्यर्थः ? किंविशिष्टं स्वाध्यायम् ? आत्तं गृहीतम् । प्रतिष्ठापितमित्यर्थः । कया ? लघुभक्त्या । कयोः ? श्रुतसूर्योः श्रुतस्याचार्यस्य च । लघ्वी अञ्जलिकामात्रपाठरूपा भक्तिर्वन्दना । सा च श्रुतस्य यथा "अर्हद्वक्त्रप्रसूतम्' इत्यादिका । एवमाचार्यादीनामपि यथाव्यवहारमसाववसेया । एवं स्वाध्याये द्वादशकायोत्सर्गा व्याख्याताः प्रतिपत्तव्याः । एवं वन्दनादिष्वपि षडादयः कायोत्सर्गा व्याख्यास्यमाना उन्नेयाः ।

स्वाध्यायानां ग्रहणक्षमापणकालेयत्तानिरूपणार्थमाह—

**ग्राह्यः प्रगे द्विघटिकादूर्ध्वं स प्राक्ततश्च मध्याह्ने ।**
**क्षम्योऽपराह्णपूर्वापररात्रेष्वपि दिगेषैव ॥ ३ ॥**

स स्वाध्यायो ग्राह्यः प्रतिष्ठाप्यः साधुभिः । क्व ? प्रगे प्रभाते । कथम् ? ऊर्ध्वं अनंतरम् । कस्मात् ? द्विघटिकाद् घटिकाद्वयात् । द्वयोर्घटिकयोः समाहारो द्विघटिकं, तस्माद् द्विघटिकात् । तृतीयायां घटिकायां प्रवर्तमानायामित्यर्थः । क्षम्यश्च निष्ठाप्यः । कोसौ ? स स्वाध्यायः । क्व ? मध्याह्ने । कथम् ? प्राक् पूर्वम् । कस्मात् ? ततो घटिकाद्वयात् । घटिकाद्वयोनमध्याह्ने संपन्ने सतीत्यर्थः । भवति च । कासौ ? दिग् उपदेशः । किंविशिष्टा ? एषैव अनन्तरोक्तैव । केषु ? अपराह्णपूर्वापररात्रेष्वपि । अपराह्णे घटिकाद्वयाधिकमध्याह्नादूर्ध्वं प्रतिष्ठाप्यो, घटिकाद्वयशेषे दिनान्ते निष्ठाप्यः । तथा घटिकाद्वयाधिके प्रदोषे ग्राह्यो, घटिकाद्वयहीनेऽर्धरात्रे निष्ठाप्यः । तथा घटिकाद्वयाधिकेऽर्धरात्रे ग्राह्यो, द्विघटिकावशेषे निशान्ते क्षम्य इत्यर्थः ।

स्वाध्यायं लक्षयित्वा विधिवत्तद्विधानस्य फलमाह—

**सूत्रं गणधराद्युक्तं श्रुतं तद्वाचनादयः ।**
**स्वाध्यायः स कृतः काले मुक्त्यै द्रव्यादिशुद्धितः ॥ ४ ॥**

भवति । किं तत् ? सूत्रम् । किम् ? श्रुतम् । कीदृशम् ? गणधराद्युक्तं गणधरादिभिः प्रणीतम् । उक्तं च—

सुत्तं गणहरकहिदं तहेव पत्तेयबुद्धकहियं च ।
सुदकेवलिणा कहिदं अभिण्णदसपुव्विकहियं च ॥
तं पढिदुमसज्झाए ण य कप्पदि विरदि इत्थिवग्गस्स ।
एत्तो अण्णो गंथो कप्पदि पढिदुं असज्झाए ॥
आराधणणिज्जुत्ती मरणविभत्ती असग्गहथुदीवो ।
पच्चक्खाणावासय धम्मकहाओ य एरिसओ ॥

भवति च । कोसौ ? स्वाध्यायः । किंलक्षणः ? तद्वाचनादयस्तस्य सूत्रस्य वाचनापृच्छनानुप्रेक्षाम्नायधर्मोपदेशाः । स च स्वाध्यायो भवति । कस्मै ? मुक्त्यै मोक्षाय । किंविशिष्टः सन् ? कृतो विहितः । कुतः ? द्रव्यादिशुद्धितः । द्रव्यादिशुद्ध्या ह्यधीतं शास्त्रं कर्मक्षयाय स्यादन्यथा कर्मबन्धायेति भावः । क ? काले । अत्रायमागमः—

दिसिदाहउक्कपडणं विज्जुवउक्काऽसणिंदधणुगं च ।
दुग्गंधसंझ-दुद्दिण-चंदगहा-सूरराहुजुद्धं च ॥
कलहादिधूमकेदू धरणीकंपं च अब्भगज्जं च ।
इच्चेवमाइबहुगा सज्झाए वज्जिदा दोसा ॥

'द्रव्ये' आत्मशरीरे परशरीरे च । 'सदृत्थपरिमाणे' चतसृषु दिक्षु हस्तशतचतुष्टयमात्रेण रुधिरादीनि वर्ज्यानीत्यर्थः ।

विनयाधीतस्य श्रुतस्य माहात्म्यमाह—

**श्रुतं विनयतोऽधीतं प्रमादादपि विस्मृतम् ।**
**प्रेत्योपतिष्ठतेऽनूनमावहत्यपि केवलम् ॥ ५ ॥**

---

१ सूत्रं गणधरकथितं तथैव प्रत्येकबुद्धकथितं च ।
श्रुतकेवलिना कथितमऽभिन्नदशपूर्वकथितं च ॥
तत् पठितुमस्वाध्याये न च कल्पते विरतस्त्रीवर्गस्य ।
एषोऽन्यो ग्रन्थः कल्पते पठितुं अस्वाध्याये ॥

२ दिशिदाह उल्कापतनं विद्युदुल्काशनिश्च धनुष्कं च ।
दुर्गन्धः सन्ध्या दुर्दिनं-चन्द्रग्रहः सूर्यराहुयुद्धश्च ॥
कलहादिधूमकेतुः धरणीकम्पश्च अम्भोगर्जनं ।
इत्येवमाद्यो बहुकाः स्वाध्याये वर्जिता दोषाः ॥

**उपतिष्ठते** आयाति । किं तत्? **श्रुतम्** । क? **प्रेत्य** भवान्तरे । कथं कृत्वा? **अनूनं** परिपूर्णम् । नूनं वा निश्चितम् । कथंभूतमपि? **विस्मृतमपि** । कस्मात्? **प्रमादात्** अनवधानात् । किंविशिष्टं सत्? **अधीतं** पठितम् । केन? **विनयतो** विनयेन । न केवलम् । **आवहत्यपि** करोति च श्रुतं विनयतोधीतं कर्तृ । किं तत्? **केवलमसहायज्ञानम्** । उक्तं च—

**विणएण सुदमधीदं जदि वि पमादेण होइ विस्सरिदं ।**
**तमुवट्ठादि परभवे केवलणाणं च आवहदि ॥**

तत्त्वविबोधादिसाधनं विज्ञानं जिनशासने एवास्तीत्युपदिशति—

**तत्त्वबोधमनोरोधश्रेयोरागात्मशुद्धयः ।**
**मैत्रीद्योतश्च येन स्युस्तज्ज्ञानं जिनशासने ॥ ६ ॥**

**तज्ज्ञानमस्ति** । जानाति, ज्ञायतेनेन, ज्ञातिमात्रं वा ज्ञानम् । क? **जिनशासने** सर्वमनेकान्तात्मकमते, न सर्वथैकान्तवादिमते । जिनानां वीतरागसर्वज्ञानां शासनं शिष्टिर्मतं जिनशासनं तस्मिन् । किं तदित्याह—**येन स्युर्भवेयुः** । के? **तत्त्वबोधादयः** पञ्च षड्वार्थाः । तत्त्वस्य हेयस्योपादेयस्योपेक्षणीयस्य च बोधो हेयस्य हेयत्वेनोपादेयस्योपादेयत्वेनोपेक्षणीयस्य चोपेक्षणीयत्वेन प्रतिपत्तिः । उक्तं च—

**इतीदं जीवतत्त्वं यः श्रद्धत्ते वेत्युपेक्षते ।**
**शेषतत्त्वैः समं षड्भिः स हि निर्वाणभाग् भवेत् ॥**

तथा मनसश्चित्तस्य रोधो निवारणम् "यद्यदैव मनसि स्थितं भवेत् तत्तदैव सहसा परित्यजेत् ।" इत्येवंलक्षणो निग्रहोपायो मनोरोधः । तथा श्रेयसि चारित्रे रागोनुरागो लयहेतुः श्रद्धानं श्रेयोरागः । तथात्मनो 'यत्राहमित्यनुपचरितः प्रत्ययः स आत्मेत्येवंलक्षणस्य' पुरुषस्य शुद्धी—रागाद्युच्छितिः

---

१–विनयेन श्रुतमधीतं यद्यपि प्रमादेन भवति विस्मृतम् ।
तदुपतिष्ठते परभवे केवलज्ञानं चावहति ॥

२–असमस्तं पदं न शोभते । ३–अमृतचन्द्रसूरिणोक्तं समयसारकलशेषु नाटकसमयसारनाम्नि ग्रन्थे ।

परिच्छित्तिश्चात्मशुद्धिः। तथा मित्रस्य भावो मैत्री दुःखानुत्पत्त्यभिलाषः। तस्य द्योतो द्योतनं बुधचेतसि माहात्म्यप्रकाशनं मैत्रीद्योतः। च समुच्चये। तथा च पूर्वभाषितम्—

जेण तच्चं विबुज्झेज्ज जेण चित्तं णिरुज्झदि।
जेण अत्ता विसुज्झेज्ज तं णाणं जिणसासणे॥
जेण रागा विरज्जेज जेण सेएसु रज्जदि।
जेण मित्तिं पभावेज्ज तं णाणं जिणसासणे॥

अत्र पूर्वसूत्रेण सम्यक्त्वसहचारि ज्ञानमुत्तरसूत्रेण च चारित्रसहचारि ज्ञानं सूत्रकारेणोपवर्णितमुन्नेयम्।

साधोरपररात्रे स्वाध्यायप्रतिष्ठापननिष्ठापने प्रतिक्रमणविधानं रात्रियोगनिष्ठापनं च यथाक्रममवश्यकर्तव्यतयोपदिशति—

**क्लमं नियम्य क्षणयोगनिद्रया लातं निशीथे घटिकाद्वयाधिके।**
**स्वाध्यायमत्यस्य निशाद्विनाडिकाशेषे प्रतिक्रम्य च योगमुत्सृजेत्**

उत्सृजेत् त्यजेत्। निष्ठापयेत्साधुरित्यर्थः। कम्? **योगं** रात्रौ गृहीतं शुद्धोपयोगम्। किं कृत्वा? **प्रतिक्रम्य** कृतदोषविशोधनां कृत्वा। **चः** समुच्चये। किं कृत्वा ? **अत्यस्य** निष्ठाप्य। कम्? **स्वाध्यायम्**। क्व? **निशाद्विनाडिकाशेषे**। निशाया रात्रेर्द्वे नाडिके घटिके निशाद्विनाडिके। तयोः शेष उद्धरितत्वं निशाद्विनाडिकाशेषस्तस्मिन्। रात्र्यवसानतृतीयघटिकायां प्रवर्तमानायामित्यर्थः। किंविशिष्टं स्वाध्यायम्? **लातं** गृहीतं प्रतिष्ठापितम्। क्व? **निशीथे**ऽर्धरात्रे। किंविशिष्टे? **घटिकाद्वयाधिके** नाडिकायुग्मातिरिक्ते। अर्धरात्रतृतीयघटिकायां प्रवर्तमानायामित्यर्थः। किं कृत्वा? **नियम्य** निवर्त्य। कम्? **क्लमं** शरीरग्लानिम्। कया? **क्षणयोगनिद्रया**। योगः शुद्धचिद्रूपे यथाशक्ति चिन्तानिरोधः। योगो निद्रेव, इन्द्रियात्ममनोमरुत्सूक्ष्मावस्थारूपत्वात्, "इन्द्रियात्ममनोमरुतां सूक्ष्मावस्था स्वापः" इत्यभिधानात्। योगश्चासौ निद्रा च योगनिद्रा। क्षणोत्र कालाल्पत्वम्। तच्चोत्कर्षतो घटिकाचतुष्टयमस्वाध्याययोग्यम्। क्षणभाविनी योगनिद्रा क्षणयोगनिद्रा तया। यदाहुः श्रीमद्गुणभद्रदेवपादाः—

यमनियमनितान्तः शान्तबाह्यान्तरात्मा,
परिणमितसमाधिः सर्वसत्त्वानुकम्पी ।
विहितहितमिताशी क्लेशजालं समूलं,
दहति निहतनिद्रो निश्चिताध्यात्मसारः ॥

तथा श्रीमद्रामसेनपूज्यैरप्यवाचि—

स्वाध्यायाद् ध्यानमध्यास्ते ध्यानात्स्वाध्यायमामनेत् ।
ध्यानस्वाध्यायसंपत्त्या परमात्मा प्रकाशते ॥

एतदेव च स्वयमप्यन्वाख्यं सिद्ध्यङ्कमहाकाव्ये, यथा—

परमसमयसाराभ्याससानन्दसर्प-
त्सहजमहसि सायं स्वे स्वयं स्वं विदित्वा ।
पुनरुदयदविद्यावैभवाः प्राणचार-
स्फुरदरुणविजृम्भा योगिनो यं स्तुवन्ति ॥

परमागमव्याख्यानाद्युपयोगस्य लोकोत्तरमाहात्म्यमुपवर्णयति—

खेदसंज्वरसंमोहविक्षेपाः केन चेतसः ।
क्षिप्येरन् मङ्क्षु जैनी चेन्नोपयुज्येत गीःसुधा ॥८॥

केन क्षिप्येरन् ? न केनापि निराक्रियेरन्नित्यर्थः । के ? खेदसंज्वरसंमोहविक्षेपाः । कस्य ? चेतसः । खेदो दैन्यम् । संज्वरः संतापः । संमोहोऽज्ञानम् । विक्षेपो व्याकुलत्वम् । खेदश्च संज्वरश्च संमोहश्च विक्षेपश्च खेदसंज्वरसंमोहविक्षेपाः । चेद्यदि नोपयुज्येत न भाव्येत । कासौ ? गीःसुधा वागमृतम् । किंविशिष्टा ? जैनी आर्हती । कथम् ? मङ्क्षु सद्यः खेदाद्यनन्तरमेव । बाह्या अप्याहुः—

क्लान्तमपोज्झति खेदं तप्तं निर्वाति बुध्यते मूढम् ।
स्थिरतामेति व्याकुलमुपयुक्तसुभाषितं चेतः ॥

प्रतिक्रमणमाहात्म्यमनुसंधत्ते—

दुर्निवारप्रमादारिप्रयुक्ता दोषवाहिनी ।
प्रतिक्रमणदिव्यास्त्रप्रयोगादाशु नश्यति ॥ ९ ॥

**नश्यति** प्रलीयते। कासौ ? **दोषवाहिनी** अतीचारचमूः। कीदृशी ? **दुर्निवारप्रमादारिप्रयुक्ता** । प्रमादाः कुशलेष्वनुत्साहाः । प्रमादा एवारयः शत्रवः स्वार्थभ्रंशहेतुत्वात् । दुर्निवारा निवारयितुमशक्याः प्रमादारयो दुर्निवारप्रमादारयः। तैः प्रयुक्ता प्रेरिता। कस्मात् ? **प्रतिक्रमणदिव्यास्त्रप्रयोगात्** । प्रतिक्रमणं कृतदोषनिराकरणम्। तदेव दिव्यास्त्रं देवोपनीतमायुधं प्रतिक्रमणदिव्यास्त्रम्। तस्य प्रयोगो विधिवद्विधानं तस्मात्। कथं नश्यति ? **आशु** शीघ्रम्। उक्तं च—

**जीवे प्रमादजनिताः प्रचुराः प्रदोषा,**
**यस्मात्प्रतिक्रमणतः प्रलयं प्रयान्ति।**
**तस्मात्तदर्थममलं मुनिबोधनार्थं,**
**वक्ष्ये विचित्रभवकर्मविशोधनार्थम् ॥**

प्रमादस्य महिमानमुदाहरणद्वारेण स्पष्टयति—

**त्र्यहादऽवैयाकरणः किलैकाहादकार्मुकी।**
**क्षणादयोगी भवति स्वभ्यासोपि प्रमादतः ॥ १० ॥**

**किल** लोके ह्येवं श्रूयते । **भवति** । कोसौ ? **अवैयाकरणः** । व्याकरणं वेत्त्यधीते वा वैयाकरणः न वैयाकरणोऽवैयाकरणः । कस्मात् ? **त्र्यहात्** त्र्यहमन्तरीकृत्य। दिनत्रयादूर्ध्वं चतुर्थेन्हीत्यर्थः। कस्मात् ? **प्रमादतो**ऽनवधानात्। किंविशिष्टोपि ? **स्वभ्यासोपि** सुष्ठ्वभ्यासो योग्या यस्यासौ स्वभ्यासः । किं पुनर्मन्दाभ्यास इत्यपि शब्दार्थः। तथा स्वभ्यासोपि प्रमादतो**ऽकार्मुकी** अधानुष्को भवति। कस्मात् ? **एकाहादे**काहमन्तरीकृत्य। एकदिनादूर्ध्वं द्वितीयेह्नीत्यर्थः। तथा स्वभ्यासोपि प्रमादतो**ऽयोगी** समाधिच्युतो भवति। कस्मात् ? **क्षणात्** क्षणमन्तरीकृत्य। क्षणमात्रादूर्ध्वं द्वितीये क्षणे इत्यर्थः।

प्रतिक्रमणाया रात्रियोगप्रतिष्ठापननिष्ठापनयोश्च प्रयोगविधिमभिधत्ते—

**भक्त्या सिद्धप्रतिक्रान्तिवीरद्विद्वादशार्हताम्।**
**प्रतिक्रामेन्मलं योगं योगिभक्त्या भजेत् त्यजेत् ॥ ११ ॥**

प्रतिक्रामेद्विशोधयेत् साधुः । कम् ? मलमतीचारम् । कया ? भक्त्या वन्दनया । केषाम् ? सिद्धप्रतिक्रान्तिवीरद्विद्वादशार्हताम् । द्वौ द्वादश द्विद्वादशाः । चतुर्विंशतिरित्यर्थः । 'संख्याबाहुलोऽबहुगणात्' इति साधुः । द्विद्वादशाश्च तेऽर्हन्तश्च द्विद्वादशार्हन्तः । सिद्धाश्च प्रतिक्रान्तिश्च वीरश्च द्विद्वादशार्हन्तश्चेति द्वन्द्वः । सिद्धभक्त्या प्रतिक्रमणभक्त्या वीरभक्त्या चतुर्विंशतितीर्थंकरभक्त्या चेत्यर्थः । तथा भजेत् सेवेत प्रतिष्ठापयेत्साधुः । कम् ? योगम् अद्य रात्रावत्र वसत्यां स्थातव्यमिति नियमविशेषम् । कया ? योगिभक्त्या त्यजेच्च निष्ठापयेत् । योगं योगिभक्त्यैव । उक्तं च—

सिद्धनिषेधिकावीरजिनभक्तिः प्रतिक्रमे ।
योगिभक्तिः पुनः कार्या योगग्रहणमोक्षयोः ॥

साधून् प्रभातिकदेववन्दनां प्रति प्रोत्साहयन्नाह—

**योगिध्यानैकगम्यः परमविशदहग्विश्वरूपः स तत्त्व,**
**स्वान्तस्थेम्नैव साध्यं तदमलमतयस्तत्पथध्यानबीजम् ।**
**चित्तस्थैर्यं विधातुं तदनवधिगुणग्रामगाढानुरागं,**
**तत्पूजाकर्म कर्मच्छिदुरमिति यथासूत्रमासूत्रयन्तु ॥ १२ ॥**

सः—

"केवलणाणदिवायरकिरणकलावप्पणासियण्णाणो ।
णवकेवललद्धुग्गमसुजणियपरमप्पववएसो ॥
असहायणाणदंसणसहिओ इदिकेवली हु जोगेण ।
जुत्तोत्ति सजोगिजिणो अणाइणिहणारिसे उत्तो ॥"

इत्येवंविधे परमागमे प्रसिद्धः परमविशदहग्विश्वरूपो भवति । कीदृशः ? योगिध्यानैकगम्यः । योगो यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिलक्षणाष्टाङ्गरूप एषामस्तीति योगिनः । तेषां ध्यानं, ज्ञानमेव स्थिरीभूतं ध्यानमित्युच्यते बुधैरित्येवंलक्षणं, योगिध्यानम् । योगिध्यानेनैकेनोत्कृष्टेन, ध्यानमेव स्थिरीभूतं समाधिरिति कथ्यते, इत्येवंलक्षणेन गम्यते उपलभ्यत इति योगिध्यानैकगम्यः । एकत्ववितर्कावीचारशुक्लध्यान-

संवेद्य इत्यर्थः। परमेत्यादि। परमा प्रकर्षप्राप्ता विशदा अव्यवधानेन विशेषवत्तया वा प्रतिभासमाना दृक् परमविशददृक् केवलज्ञानम्। तत्र विश्वस्य लोकालोकस्य रूपाण्याकारा यस्यासौ **परमविशददृग्विश्वरूपः**। तच्च तत्पुनर्योगिध्यानं भवति। कीदृशम्। **साध्यं** निर्वर्तयितुं शक्यम्। केन? **स्वांतस्थेम्नैव** मनःस्थैर्येणैव, न मनश्चपलत्वेन। स्थिरस्य भावः स्थेमा। स्वान्तस्य स्थेमा स्वान्तस्थेमा। तेन स्वान्तस्थेम्ना। यथाह—

**ध्यानस्य च पुनर्मुख्यो हेतुरेतच्चतुष्टयम्।**
**गुरूपदेशः श्रद्धानं सदाभ्यासः स्थिरं मनः॥**

अपि च—

**अविक्षिप्तं मनस्तत्त्वं विक्षिप्तं भ्रान्तिरात्मनः।**
**धारयेत्तदविक्षिप्तं विक्षिप्तं नाश्रयेत्पुनः॥**

यत एवं **तत्** तस्मात्कारणाद**ऽमलमतयो**ऽकलुषबुद्धयः साधव **आसूत्रयन्तु** रचयन्तु। किं तत्? **तत्पूजाकर्म** जिनेन्द्रवन्दनाम्। तस्य जिनेन्द्रस्य परमात्मापराभिधानस्य पूजाकर्म विनयक्रिया तत्पूजाकर्म। कथम्? **यथासूत्रं** परमागमानतिक्रमेण। कथं कृत्वा? **कर्मच्छिदुरमिति** कर्मणां ज्ञानावरणादीनां मनोवाक्कायक्रियाणां वा छिदुरं छेदनशीलमेकदेशेन तदपनेतृत्वादिति हेतोः। किंविशिष्टम्? **तदनवधिगुणग्रामगाढानुरागम्**। तस्य जिनेन्द्रस्यानवधयोऽनन्ता गुणा ज्ञानादयस्तदनवधिगुणाः। तेषां ग्रामः संघातः। तत्र गाढो दृढोनुरागो भक्तिः श्रद्धानं यत्र तत्पूजाकर्मणि तत्तथोक्तम्। एतेन भावपूजां लक्षयति। तथा चोक्तम्—

**व्यापकानां विशुद्धानां जैनानामनुरागतः।**
**गुणानां यदनुध्यानं भावपूजेयमुच्यते॥**

किं कर्तुम्? **विधातुं** विधास्यामीति कर्तुम्। किं तत्? **चित्तस्थैर्यम्**। कीदृशम्? **तत्पथध्यानबीजं** परमात्मप्राप्त्युपायभूतधर्म्यशुक्ललक्षणप्रणिधानकारणभूतम्। तस्य परमात्मनः पन्थाः प्राप्त्युपायस्तत्पथः। तत्पथश्च स ध्यानं च तत् तत्पथध्यानम्। तस्य बीजं कारणम्॥

त्रैकालिकदेववन्दनायाः प्रयोगविधिमाह—

त्रिसन्ध्यं वन्दने युंज्याच्चैत्यपञ्चगुरुस्तुती ।
प्रियभक्तिं बृहद्भक्तिष्वन्ते दोषविशुद्धये ॥ १३ ॥

युंज्याद् योजयेद्वन्दारुः । के ? चैत्यपञ्चगुरुस्तुती चैत्यवन्दनां पञ्चगुरुवन्दनां चेत्यर्थः । क्व ? वन्दने जिनदेववन्दनायाम् । कथम् ? त्रिसन्ध्यं सन्ध्यात्रयेपि । तथा युंज्यात् । काम् ? प्रियभक्तिं समाधिभक्तिम् । क्व ? अन्ते वन्दनापर्यन्ते । कासु ? बृहद्भक्तिषु । बृहत्यो भक्त्युच्छ्वासदण्डकपाठबहुत्वान्महत्यो भक्तयो बृहद्भक्तयस्तासु । कस्यै ? दोषविशुद्धये । दोषा वंदनातीचारा रागादयो वा । तेषां विशुद्धिर्व्यपोहो दोषविशुद्धिस्तस्यै । उक्तं च—

"ऊनाधिक्यविशुद्ध्यर्थं सर्वत्र प्रियभक्तिकाः ।"

यत्पुनर्वृद्धपरम्पराव्यवहारोपलम्भात् सिद्धचैत्यपञ्चगुरुशान्तिभक्तिभिर्यथावसरं भगवन्तं वन्दमानाः सुविहिताचारा अपि दृश्यन्ते तत्केवलं भक्तिपिशाचिदुर्ललितमिव मन्यामहे सूत्रातिवर्तनात् । सूत्रे हि पूजाभिषेकमङ्गल एव तच्चतुष्टयमिष्टम् । तथा चोक्तं—

चैत्यपञ्चगुरुस्तुत्या नित्या सन्ध्यासु वन्दना ।
सिद्धभक्त्यादिशान्त्यन्ता पूजाभिषवमङ्गले ॥

अपि च—

जिणदेववंदणाए[1] चेदियभत्तीय पंचगुरुभत्ती ।

तथा—

अहिसेयवंदणा[2]सिद्धचेदियपंचगुरुसंतिभत्तीहिं ॥

कृतिकर्मणः षड्विधत्वमन्वाचष्टे—

स्वाधीनता परीतिस्त्रयी निषद्या त्रिवारमावर्ताः ।
द्वादश चत्वारि शिरांस्येवं कृतिकर्म षोढेष्टम् ॥ १४ ॥

१—जिनदेववन्दनायां चैत्यभक्तिश्च पञ्चगुरुभक्तिः ।
२—अभिषेकवन्दना सिद्धचैत्यपञ्चगुरुशान्तिभक्तिभिः ॥

**दृष्टं** पूर्वाचार्यैः । किं तत्? **कृतिकर्म** । कतिधा? **षोढा** षट्प्रकारम् । कथम्? **एवम**ऽनेन स्वाधीनतादिप्रकारेण तावत्कृतिकर्मणः प्रकारः स्यात् । किमात्मकः? **स्वाधीनता** वन्दारोः स्वातन्त्र्यम् । तथा **परीतिः** प्रदक्षिणा कृतिकर्मप्रकारः स्यात् । किंविशिष्टा? **त्रयी** त्र्यवयवा । प्रदक्षिणास्तिस्र इत्यर्थः । तथा **निषद्या** कृतिकर्मप्रकारः स्यात् । किंविशिष्टा? **त्रयी** आवृत्त्या त्रीण्युपवेशनानि क्रियाविज्ञापनचैत्यभक्तिपञ्चगुरुभक्त्यनन्तरालोचनाविषयाणि । तथा **त्रिवारं** कृतिकर्मप्रकारः स्यात् चैत्यपञ्चगुरुसमाधिभक्तिषु त्रिः कायोत्सर्गविधानात् । तथाऽऽ**वर्ता द्वादश** कृतिकर्मप्रकारः स्यात् । तथा **चत्वारि शिरांसि** मूर्धावनतयो वन्दना प्रधानभूता वार्हत्सिद्धसाधुधर्माः कृतिकर्मप्रकारः स्यात् । उक्तं च सिद्धान्तसूत्रे—

"आदाहीणं पदाहीणं तिक्खुत्तं तिऊणदं ।
चदुस्सिरं वारसावत्तं चेदि" ।

जिनचैत्यवन्दनायाः प्रचुरपुण्यास्रवणपूर्वपुण्योदयस्फारीकरणप्राक्तनपापविपाकापकर्षणापूर्वपातकसंवरणलक्षणां फलचतुष्टयीं प्रतिपाद्य सर्वदा तत्र त्रिसन्ध्यं मुमुक्षुवर्गमुद्यमयन्नाह—

**दृष्ट्वार्हत्प्रतिमां तदाकृतिमरं स्मृत्वा स्मरंस्तद्गुणान्,**
**रागोच्छेदपुरःसरानतिरसात् पुण्यं चिनोत्युच्चकैः ।**
**तत्पाकं प्रथयत्यघं क्रशयते पाकाद्गुणद्ध्यास्रवत्,**
**तच्चैत्यान्यखिलानि कल्मषमुषां नित्यं त्रिशुद्ध्या स्तुयात् ॥**

**चिनोति** बध्नाति वन्दारुः । किं तत्? **पुण्यं** सद्वेद्यशुभायुर्नामगोत्रलक्षणं सुकृतम् । कथम्? **उच्चकै**रत्यर्थम् । किं कुर्वन्? **स्मरन्** स्मृतिगोचरीकुर्वन् । कान्? **तद्गुणान्** तस्यार्हद्भट्टारकस्य गुणान् । किंविशिष्टान्? **रागोच्छेदपुरस्सरान्** । रागोच्छेदो वीतरागत्वं पुरस्सरः प्रमुखो येषां सर्वज्ञत्वसर्वदर्शित्वादीनां ते रागोच्छेदपुरस्सरास्तान् । कस्मात्तान् स्मरन्? **अतिरसाद**ऽनुरागोद्रेकात् । उक्तं च—

"वपुरेव तवाचष्टे भगवन् वीतरागताम् ।
न हि कोटरसंस्थेऽग्नौ तरुर्भवति शाड्वलः ॥" इत्यादि ।

किं कृत्वा ? **स्मृत्वा** आध्याय । काम् ? **तदाकृतिमर्हन्मूर्तिम्** । तल्लक्षणं यथा तथा—

**शुद्धस्फटिकसंकाशं तेजोमूर्तिमयं वपुः ।**
**जायते क्षीणदोषस्य सप्तधातुविवर्जितम् ॥**

कथम् ? **अरं** झटिति । अर्हत्प्रतिमादर्शनानन्तरमेव स्मृत्वेत्यर्थः । किं कृत्वा ? **दृष्ट्वा** निरीक्ष्य । काम् ? **अर्हत्प्रतिमां** जिनेन्द्रचैत्यम् । तथा **प्रथयति** पृथूकरोति वन्दारुः । कम् ? **तत्पाकं** तस्य पुण्यस्योदयम् । तथा वन्दारुरघं पापं **क्रशयते** कृशीकरोति । कस्मात् ? **पाकात्** पाकमाश्रित्य । पापपाकमल्पीकरोतीत्यर्थः । 'नीतश्चाघनिदाघजः क्रमभरः शान्तिम्' इत्यभिधानात् । तथा वन्दारुरघं **रुणद्धि** निवारयति । किं कुर्वन् ? **अस्रवत्** पापं संवृणोतीत्यर्थः । यत एवं चत्वारि चैत्यवन्दनाफलानि प्रसिद्धानि **तत्** तस्मात्कारणात् **स्तुयाद्** वन्दतां मुमुक्षुः । कानि ? **चैत्यानि** किंविशिष्टानि ? **अखिलानि** कृत्रिमाकृत्रिमाणि । केषाम् ? **कल्मषमुषां** घातिचतुष्टयलक्षणं स्वपापभयहृतवतां वन्दारुभव्यजनानां वा दुष्कृतमपहरताम् । कल्मषं मुष्णन्तीति कल्मषमुषः । कथं स्तुयात् ? **नित्यं** त्रिसन्ध्यम् । कया ? **त्रिशुद्ध्या** मनोवाक्कायनिष्कलङ्कतया ।

स्वाधीनतेत्यस्यार्थं व्यतिरेकमुखेन समर्थयते—

**नित्यं नारकवद्दीनः पराधीनस्तदेष न ।**
**क्रमते लौकिकेऽप्यर्थे किमङ्गास्मिन्नलौकिके ॥ १६ ॥**

भवति । कोसौ ? **पराधीनः** परायत्तः पुमान् । किंविशिष्टः ? **दीनः** । कथम् ? **नित्यं** संततम् । दुस्थित इत्यर्थः । किंवत् ? **नारकवन्नैरयिको**-यथा । उक्तं च—'को नरकः परवशता' इति । यत एवं **तत्** तस्मादेष पराधीनः । पुमान् न **क्रमते** नाप्रतिहतं प्रवर्तते उत्सहते वा । क्व ? **अर्थे** प्रयोजने । किंविशिष्टे ? **लौकिकेऽपि** लोकविदिते स्नानभोजनादौ । यल्लोके-

**परार्थानुष्ठाने श्लथयति नृपं स्वार्थपरता,**
**परित्यक्तस्वार्थो नियतमयथार्थः क्षितिपतिः ।**

परार्थश्चेत्स्वार्थादभिमततरो हन्त परवान्,
परायत्तः प्रीतेः कथमिव रसं वेत्ति पुरुषः ॥

किमङ्ग किं पुनः क्रमते अप्रतिहतं प्रवर्तते उत्सहते वा। क्व ? अस्मिन् प्रकृते सर्वज्ञाराधने । किंविशिष्टे ? अलौकिके लोकानामविदिते ।

अथ चतुर्दशभिः पद्यैर्देववन्दनादिक्रियाणां प्रयोगानुपूर्वीमुपदेष्टुकामः प्रथमं तावद्व्युत्सर्गान्तक्रमप्रकाशनाय पञ्चश्लोकीमाचष्टे—

श्रुतदृष्ट्यात्मनि स्तुत्यं पश्यन् गत्वा जिनालयम् ।
कृतद्रव्यादिशुद्धिस्तं प्रविश्य निसही गिरा ॥ १७ ॥
चैत्यालोकोद्यदानन्दगलद्बाष्पस्त्रिरानतः ।
परीत्य दर्शनस्तोत्रं वन्दनामुद्रया पठन् ॥ १८ ॥
कृत्वेर्यापथसंशुद्धिमालोच्यानम्रकाङ्घ्रिदोः ।
नत्वाश्रित्य गुरोः कृत्यं पर्यङ्कस्थोग्रमङ्गलम् ॥ १९ ॥
उक्तात्तसाम्यो विज्ञाप्य क्रियामुत्थाय विग्रहम् ।
प्रह्वीकृत्य त्रिभ्रमैकशिरोविनतिपूर्वकम् ॥ २० ॥
मुक्ताशुक्त्यङ्कितकरः पठित्वा साम्यदण्डकम् ।
कृत्वावर्तत्रयशिरोनती भूयस्तनुं त्यजेत् ॥ २१ ॥ पञ्चकम् ।

त्यजेदुत्सृजेद् निर्ममतया प्रतिपद्येत् साधुः । काम् ? तनुं शरीरम् । किं कृत्वा ? कृत्वा । के ? आवर्तत्रयशिरोनती । आवर्तत्रयं च शिरोनतिश्च ते । कथम् ? भूयः पुनः । साम्यदण्डकपाठान्तेपीत्यर्थः । किं कृत्वा ? पठित्वा । किम् ? साम्यदण्डकं 'णमो अरहंताणं' इत्यादि सामायिकदण्डकम् । कथं कृत्वा ? त्रिभ्रमैकशिरोविनतिपूर्वकम् । त्रयो भ्रमाः समाहतास्त्रिभ्रममावर्तत्रयम् । एका चासौ शिरोविनतिश्चैकशिरोविनतिः । त्रिभ्रमं चैकशिरोविनतिश्च त्रिभ्रमैकशिरोविनती । ते पूर्वे पूर्वकालभाविन्यौ यत्र पठनकर्मणि तदेवम् । किंविशिष्टः सन् ? मुक्ताशुक्त्यङ्कितकरः । मुक्ताशुक्त्या प्रागुक्तलक्षणयाङ्कितौ चिन्हितौ करौ हस्तौ येन स एवम् । किं कृत्वा ? प्रह्वी-

कृत्य नम्रं विधाय । कम् ? **विग्रहं** शरीरम् । किं कृत्वा ? **उत्थाय** उद्भी-भूय । किं कृत्वा ? **विज्ञाप्य** । काम् ? **क्रियां** प्रकृताम् । वन्दनां ज्ञापयित्वेत्यर्थः । कथंभूतो भूत्वा ? **आत्तसाम्यः** "खमामि सव्वजीवाणं" इत्यादि-सूत्रोच्चारणेन प्रतिपन्नसामायिकः । किं कृत्वा ? **उक्त्वा** पठित्वा । किं तत् ? **अग्रमङ्गलं** मुख्यमङ्गलं जिनेन्द्रगुणस्तोत्रं "सिद्धं संपूर्णभव्यार्थम्" इत्यादि रूपम् । किंविशिष्टः सन् ? **पर्यङ्कस्थः** पर्यङ्कासनेन तिष्ठन् । किं कृत्वा ? **आश्रित्य** । किं तत् ? **कृत्यम्** । कस्याग्रे ? **गुरोर्धर्माचार्यस्य** । तद्दूरे देवस्याग्रे देववन्दनां प्रतिक्रमणादिकं वा कृत्यमाश्रित्य नमोस्तु देववन्दनां करिष्यामीत्यादिरूपेणाङ्गीकृत्य । किं कृत्वा ? **नत्वा** प्रणम्य गुरुम् । कथं कृत्वा ? **आनम्रकांघ्रिदोः** समन्तात्साधुत्वेन नमन्मस्तकपादहस्तम् । कं च मस्तकमङ्घ्री च पादौ दोषौ च हस्तौ कांघ्रिदोरिति समाहारद्वन्द्वः । आनम्रं कांघ्रिदोर्यत्र नमनकर्मणि तदानम्रकांघ्रिदोः । क्रियाविशेषणमेतत् । अथवा आनम्रं कांघ्रिदोर्यस्य स आनम्रकांघ्रिदोः क्रियाकारी । किं कृत्वा ? **आलोच्य** " इच्छामि " इत्यादिदण्डकेन निन्दागर्हारूपामालोचनां कृत्वा । किं कृत्वा? **कृत्वा** । काम् ? **ईर्यापथसंशुद्धिम्** ऐर्यापथिकदोषविशुद्धिम् । " पडिक्कमामि " इत्यादिदण्डकेन विधायेत्यर्थः । किं कुर्वन् ? **पठन्** । किं तत् ? **दर्शनस्तोत्रं** दर्शने भगवदवलोकनविषये दर्शनाय वा सम्यक्त्वाय दर्शनवद्वा सामान्यविषयत्वात् स्तोत्रं स्तवनं " दृष्टं जिनेन्द्रभवनम्" इत्यादि सामान्यस्तवनजातं दर्शनस्तोत्रम् । कया ? **वन्दनामुद्रया** प्रागुक्तलक्षणया । किं कृत्वा ? **परीत्य** प्रदक्षिणीकृत्य । कम् ? **जिनालयम्** । कथम् ? त्रिस्त्रीन् वारान् । किंविशिष्टः सन् ? **आनतश्चैत्याय** प्रणतः । कथम् ? त्रिः । पुनः किंविशिष्टः ? **चैत्यालोकोद्यदानन्दगलद्बाष्पः** । चैत्यस्यालोको दर्शनं चैत्यालोकः । तेनोद्यन्नुद्गच्छन्नानन्दः प्रमोदश्चैत्यालोकोद्यदानन्दः । तेन गलन्ति स्रवन्ति बाष्पाण्यश्रूणि यस्य स एवम् । किं कृत्वा ? **प्रविश्य** । कम् ? तं जिनालयम् । कया ? **निसहीगिरा** निसहीकेति शब्दोच्चारणेन । कथंभूतो भूत्वा ? **कृतद्रव्यादिशुद्धिः** । कृता द्रव्यक्षेत्रकालभावविशुद्धिर्येन स एवम् । किं कृत्वा ? **गत्वा** । कम् ? जिनालयम् । किं कुर्वन् ? **पश्यन्नवलोकयन्** । किं तत् ? **स्तुत्यं** भावरूप-

**मर्हदादिम्**। क ? **आत्मनि** विश्वरूपे स्वचिद्रूपे । कया ? **श्रुतदृष्ट्या** परमागमचक्षुषा ॥

श्लोकद्वयेन व्युत्सर्गे ध्यानविधिमुपदिशति—

**जिनेन्द्रमुद्रया गाथां ध्यायेत् प्रीतिविकस्वरे ।**
**हृत्पङ्कजे प्रवेश्यान्तर्निरुध्य मनसानिलम् ॥ २२ ॥**
**पृथग् द्विद्‍व्येकगाथांशचिन्तान्ते रेचयेच्छनैः ।**
**नवकृत्वः प्रयोक्तैवं दहत्यंहः सुधीर्महत् ॥ २३ ॥ युग्मम् ।**

कायोत्सर्गे **ध्यायेच्चिन्तयेत्साधुः** । काम् ? **गाथां** "णमो अरहंताणं" इत्यादिकाम् । कया ? **जिनेन्द्रमुद्रया** प्रागुक्तलक्षणया । किं कृत्वा ? **निरुध्य** संयम्य । कम् ? **अनिलं** प्राणवायुम् । कथम् ? सह । केन ? **मनसा** चित्तेन । करणे सहार्थे वा तृतीया । किं कृत्वा ? **प्रवेश्य** । कम् ? मनसा सहानिलम् । क ? **अन्तर्मध्ये** । कस्मिन् ? **हृत्पङ्कजे** हृदयारविन्दे । किंविशिष्टे ? **प्रीतिविकस्वरे** आनन्देन विकसनशीले । तथा **रेचयेद्बहिर्निः**सारयेदनिलं साधुः । कथम् ? **शनैर्मन्दं** मन्दम् । क ? **द्विद्‍व्येकगाथांशचिन्तान्ते** । कथम् ? **पृथक्** पृथक्त्वेन । गाथाया अंशा भागा गाथांशाः । द्वौ च द्वौ चैकश्च द्विद्‍व्येकाः । ते च ते गाथांशाश्च द्विद्‍व्येकगाथांशाः तेषां चिन्ता द्विद्‍व्येकगाथांशचिन्ता । तस्या अन्ते प्रान्ते द्विगाथांशचिन्तान्ते पुनर्द्विगाथांशचिन्तान्ते, एकगाथांशचिन्तान्ते चेत्यर्थः । तथा हि—गाथाया द्वावंशौ "णमो अरहंताणं णमो सिद्धाणं" इति । पुनर्द्वौ "णमो आइरियाणं णमो उवज्झायाणं" इति । एकस्त्वंशो "णमो लोए सव्वसाहूणं" इति । गाथा च मात्रावर्णविशिष्टं छन्दः, "शेषं गाथा त्रिभिः षड्भिश्चरणैश्चोपलक्षिता" इत्यभिधानात् । यथाह—

**शनैः शनैर्मनोऽजस्रं वितन्द्रः सह वायुना ।**
**प्रवेश्य हृदयाम्भोजकर्णिकायां नियन्त्रयेत् ॥**
**विकल्पा न प्रसूयन्ते विषयाशा निवर्तते ।**
**अन्तः स्फुरति विज्ञानं तत्र चित्ते स्थिरीकृते ॥**

**स्थिरीभवन्ति चेतांसि प्राणायामावलम्बिनाम् ।**
**जगद्वृत्तं च निःशेषं प्रत्यक्षमिव जायते ॥**
**स्मरगरलमनोविजयं समस्तरोगक्षयं वपुःस्थैर्यम् ।**
**पवनप्रचारचतुरः करोति योगी न संदेहः ॥**

अपि च—

**दोयक्खभुआ दिट्ठी अंतमुही सिवसरूवसंलीणा ।**
**मणपवणक्खविहूणा सहजावत्था स णायव्वा ॥**
**जत्थ गया सा दिट्ठी तत्थ मणं तत्थ संठियं पवणं ।**
**मणपवणलए सुण्णं तहिं च जं फुरइ तं ब्रह्म ॥**

एतत्फलमाह—नवेत्यादि । **सुधीरन्तर्निहितदृष्टिः संयमी दहति** भस्मीकरोति । किं तत् ? **अंहः** पापम् । कीदृशम् ? **महद्** बृहत् । चिरसंचितमित्यर्थः । किंविशिष्टः सन् ? **एवम**नेन प्रकारेण । **प्रयोक्ता** प्राणायामस्य-कर्ता । कथम् ? **नवकृत्वो** नववारान् ।

अशक्तान् प्रत्युपांशु वाचनिकं पञ्चनमस्कारजपमनुज्ञाय तस्य मानसिकस्य पुण्यप्रसूतावन्तरमभिधत्ते—

**वाचाप्युपांशु व्युत्सर्गे कार्यो जप्यः स वाचिकः ।**
**पुण्यं शतगुणं चैत्तः सहस्रगुणमावहेत् ॥ २४ ॥**

**कार्यः** कर्तव्यो यथोक्तप्राणायामासमर्थैः साधुभिः । कोसौ ? **जप्यः** सर्वैनसामपध्वंसी पञ्चनमस्कारजप इत्यर्थः । कया ? **वाचापि** । अपि शब्दोऽशक्तान् प्रत्यनुज्ञां द्योतयति । कथं कृत्वा ? **उपांशु** यथान्यो न शृणोति । स्वसमक्षमेवेत्यर्थः । क्व ? **व्युत्सर्गे** कायोत्सर्गे । चैत्तवाचिकयोर्जपयोः फलविशेषमाह—स इत्यादि । **आवहेत्** कुर्यात् । कोसौ ? **स वाचिको** जप्यः । किं तत् ? **पुण्यम्** । किंविशिष्टम् । **शतगुणं** दण्डकोच्चारणादेः सकाशाच्छतेन गुणितम् । तथा **चैत्तश्च** मानसो जप्य आवहेत्पुण्यम् । किंविशिष्टम् ? **सहस्रगुणम्** । यथाह—

**वचसा वा मनसा वा कार्यो जप्यः समाहितस्वान्तैः ।**
**शतगुणमाद्ये पुण्यं सहस्रगुणितं द्वितीये तु ॥**

मनुरप्याह—

विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः ।
उपांशु स्याच्छतगुणैः साहस्रो मानसः स्मृतः ॥

पञ्चनमस्कारमाहात्म्यं श्रद्धानोद्दीपनार्थमनुवदति—

**अपराजितमन्त्रो वै सर्वविघ्नविनाशनः ।**
**मङ्गलेषु च सर्वेषु प्रथमं मङ्गलं मतः ॥ २५ ॥**

**वै** स्फुटम**पराजितमन्त्रो मत** इष्टः शिष्टैः । किंविशिष्टः ? **सर्वविघ्नविनाशनः** सर्वेषां प्रत्यूहानां प्रध्वंसकः । न केवलं, **प्रथमं** मुख्यं **मङ्गलं च मतः**। केषु मध्ये ? **मङ्गलेषु** मलगालनोपायेषु पुण्यदानोपायेषु च । किंविशिष्टेषु ? **सर्वेषु** । उक्तं च—

एसो पंच[1]णमोकारो सव्वपावप्पणासणो ।
मंगलाणं च सव्वेसिं पढमं होइ मङ्गलं ॥

एकैकस्यापि परमेष्ठिनो विनयकर्मणि लोकोत्तरं महिमानमावेदयति—

**नेष्टं विहन्तुं शुभभावभग्नरसप्रकर्षः प्रभुरन्तरायः ।**
**तत्कामचारेण गुणानुरागान्नुत्यादिरिष्टार्थकृदर्हदादेः॥२६॥**

**प्रभुः** समर्थो **न** भवति । कोऽसौ ? **अन्तरायो**ऽन्तरायाख्यकर्म । किं कर्तुम् ? **विहन्तुं** विघ्नयितुम् । किं तत् ? **इष्टं** वाञ्छितं वस्तु । किंविशिष्टः सन् ? **शुभभावभग्नरसप्रकर्षः** रसस्य विपाकस्य प्रकर्ष इष्टघातनसामर्थ्यं रसप्रकर्षः । शुभभावेन प्रशस्तपरिणामेन चित्तप्रसत्तिलक्षणेन भग्नः प्रध्वंसितो रसप्रकर्षो यस्य स तथोक्तः । **तत्** तस्माद्भवति । कासौ ? **नुत्यादिः** प्रणामस्तवनाशीर्जयवादादिलक्षणा वन्दना । किंविशिष्टा ? **इष्टार्थकृत्** समीहितप्रयोजनसाधनी । कस्य ? **अर्हदादेर्जि**नेन्द्रसिद्धप्रभृतेः । केन ? **कामचा-**

1 एष पञ्चनमस्कारः सर्वपापप्रणाशनः ।
मङ्गलानां च सर्वेषां प्रथमं मङ्गलं मतः ॥

रेण कर्तुमिच्छया । कस्मात्क्रियमाणा ? **गुणानुरागाद्** भावविशुद्धिमाश्रित्य ॥

कायोत्सर्गानन्तरकृत्यं श्लोकद्वयेनाह—

**प्रोच्य प्राग्वत्ततः साम्यस्वामिनां स्तोत्रदण्डकम् ।**
**वन्दनामुद्रया स्तुत्वा चैत्यानि त्रिप्रदक्षिणम् ॥ २७ ॥**
**आलोच्य पूर्ववत्पञ्चगुरून् नुत्वा स्थितस्तथा ।**
**समाधिभक्त्याऽस्तमलः स्वस्य ध्यायेद्यथाबलम् ॥२८॥ (युग्मम्)**

**ध्यायेत्**साधुः । कस्य ? **स्वस्य** आत्मनः । आत्मध्यानं विदध्यादित्यर्थः । कथम् ? **यथाबलं** यथाशक्ति । कथंभूतो भूत्वा ? **समाधिभक्त्यास्तमलः** समाधिभक्त्या अस्ता निराकृता मला वन्दनातिचारा येन स एवम् । किं कृत्वा ? **नुत्वा** । कान् ? **पञ्चगुरून**र्हदादीन् । वन्दनामुद्रयेत्यत्रापि योज्यम् । कथम् ? **तथा** तेन "विज्ञाप्य क्रियाम्" इत्यादिप्रबन्धोक्तेन प्रकारेण । कथं भूतो भूत्वा ? **स्थितः** उद्भश्चैत्यभक्तिवदत्र प्रदक्षिणानभ्युपगमात् । किं कृत्वा ? **आलोच्य** "इच्छामि भत्ते चेइयभत्ति काउस्सग्गो कओ" इत्यादिना । किंवत् ? **पूर्ववत्** आनम्रकांऽघ्रिदोरित्यर्थः । पञ्चगुरून्नत्वा स्थितस्तथेत्यत्रापि आलोच्य पूर्ववदित्येतत्संबन्धनीयम् । तत्र "[1]इच्छामि भत्ते पंचगुरुभत्ति काउस्सग्गो कओ तस्स आलोचेउ । अट्ठमहापाडिहेरसंजुत्ताणं अरहंताणं" इत्यादिकामालोचनां कुर्यादित्यर्थः । किं कृत्वा ? **स्तुत्वा** वन्दित्वा । कानि ? **चैत्यानि** । कया ? **वन्दनामुद्रया** प्रागुक्तलक्षणया । कथं कृत्वा ? **त्रिप्रदक्षिणम्** । तिस्रः प्रदक्षिणा यत्र चैत्यस्तवनकर्मणि तदेवम् । किं कृत्वा ? **प्रोच्य** प्रकर्षेण भक्तिभरनिर्भरत्वलक्षणेनोक्त्वा । किं तत् ? **स्तोत्रदण्डकं** "थोसामि" इत्यादिकम् । केषाम् ? **साम्यस्वामिनाम्** सामायिकप्रयोक्तॄणां चतुर्विंशतितीर्थकराणाम् । किंवत् ? **प्राग्वत्** पूर्ववद् " विग्रहं प्रह्वीकृत्य " इत्यादिविधिना । कथम् ? **ततश्चैत्यभक्तिकायोत्सर्गकरणानन्तरम्** ।

---

१ इच्छामि भक्तौ पंचगुरुभक्तिः कायोत्सर्गः कृतः । तस्यालोचये अष्टमहाप्रातिहार्यसंयुक्तानामर्हताम् ।

आत्मध्यानमन्तरेण केनचिन्मोक्षो न स्यादित्युपदिशति—

**नात्मध्यानाद्विना किंचिन्मुमुक्षोः कर्महीष्टकृत् ।**
**किंत्वस्त्रपरिकर्मेव स्यात् कुण्ठस्याततायिनि ॥ २९ ॥**

हि यस्मान्न **किंचित्कर्म** क्रिया च भवति । किंविशिष्टम् ? इष्टकृन्मोक्षसाधकम् । कस्य ? **मुमुक्षोर्मो**क्तुमिच्छोः साधोः । कथम् ? **विना** । कस्मात् ? **आत्मध्यानात्** । आत्मध्यानमेव मुमुक्षोर्मोक्षसाधकं भवेदित्यर्थः । तर्हि कर्मान्तरं किं कुर्यादित्याह—**किं तु स्यात्** । किं तत् ? आत्मध्यानवर्जं मुमुक्षोः कर्म । किमिव ? **अस्त्रपरिकर्मेव** शस्त्राभ्यासो यथा । कस्य ? **कुण्ठस्य** क्रियामन्दस्य । क्व विषये ? **आततायिनि** हन्तुमुद्यते शत्रौ । उक्तं च—

मग्नाः कर्मनयावलम्बनपरा ज्ञानं न जानन्ति यद्
मग्ना ज्ञाननयैषिणोऽपि यदतिस्वच्छन्दमन्दोद्यमाः ।
विश्वस्योपरि ते तरन्ति सततं ज्ञानं भजन्तः स्वयं,
ये कुर्वन्ति न कर्म जातु न वशं यान्ति प्रमादस्य च ॥

समाधिमहिम्नोऽशक्यस्तवनत्वमभिधत्ते—

**यः सूते परमानन्दं भूर्भुवःस्वर्भुजामपि ।**
**काम्यं समाधिः कस्तस्य क्षमो माहात्म्यवर्णने ॥ ३० ॥**

कः क्षमो भवति, न कोपि । क्व ? **माहात्म्यवर्णने** महिमस्तवने । कस्य ? **तस्य** समाधेः । यः किम् ? यः समाधिः **सूते** जनयति । कम् ? **परमानन्दं** परमप्रसत्तिलक्षणं प्रमोदम् । किंविशिष्टम् ? **काम्यं** स्पृहणीयम् । केषाम् ? **भूर्भुवःस्वर्भुजामपि** अधोमध्योर्द्ध्वलोकपतीनाम् । किं पुनरितरजनानामित्यपिशब्दार्थः । भूरधोलोकः । भुवर्मध्यलोकः । स्वरूर्ध्वलोकः । भूश्च भुवश्च स्वश्च भूर्भुवःस्वः पातालमर्त्यलोकस्वर्गलोकम् । तद्भुञ्जन्ति पालयन्ति भुञ्जते वा तत्फलमनुभवन्ति भूर्भुवःस्वर्भुजस्तेषाम् । उक्तं च—

**अनाधिव्याधिसंबाधममन्दानन्दकारणम् ।**
**न किंचिदन्यदस्तीह समाधेः सदृशं सखे ॥**

प्राभातिकदेववन्दनानन्तरकरणीयामाचार्यादिवन्दनामुपदिशति—

**लघ्व्या सिद्धगणिस्तुत्या गणी वन्द्यो गवासनात् ।**
**सैद्धान्तोन्तःश्रुतस्तुत्या तथान्यस्तन्नुतिं विना ॥ ३१ ॥**

**वन्द्यो गणी** आचार्यः साधुभिः । कया ? **सिद्धगणिस्तुत्या** सिद्धभक्त्याचार्यभक्त्या चेत्यर्थः । किंविशिष्टया ? **लघ्व्या** । कस्मात् ? **गवासनात्** गवासने उपविश्य । तथा **सैद्धान्तः** सिद्धान्तविद्गणी साधुभिर्वन्द्यः । कया ? लघ्व्या सिद्धगणिस्तुत्या । किंविशिष्टया ? **अन्तःश्रुतस्तुत्या** अन्तर्मध्ये कृता श्रुतस्तुतिर्यस्याः सिद्धगणिस्तुतेः सा अन्तःश्रुतस्तुतिस्तया । लघ्वीभिः सिद्धश्रुताचार्यभक्तिभिस्तिसृभिरित्यर्थः । **तथान्य** आचार्यादपरो यतिः साधुभिर्गवासनाद्वन्द्यः । कथम् ? **विना** । काम् ? **तन्नुति**माचार्यभक्तिम् । लघुसिद्धभक्त्या वन्द्य इत्यर्थः । स एव च सैद्धान्तो लघुसिद्धश्रुतभक्तिभ्यां वन्द्य इत्यर्थः । उक्तं च—

**सिद्धभक्त्या बृहत्साधुर्वन्द्यते लघुसाधुना ।**
**लघ्व्या सिद्धश्रुतस्तुत्या सैद्धान्तः प्रप्रणम्यते ॥**
**सिद्धाचार्यलघुस्तुत्या वन्द्यते साधुभिर्गणी ।**
**सिद्धश्रुतगणिस्तुत्या लघ्व्या सिद्धान्तविद्गणी ॥**

धर्माचार्यपर्युपास्तिमाहात्म्यं स्तुवन्नाह—

**यत्पादच्छायमुच्छिद्य सद्यो जन्मपथक्लमम् ।**
**वर्वर्ष्टि निर्वृतिसुधां सूरिः सेव्यो न केन सः ॥ ३२ ॥**

**स सूरि**राचार्यः **केन** मुमुक्षुणा **न सेव्यः** । सर्वेणापि भक्तव्य इत्यर्थः । **यत्पादच्छायं** यस्य सूरेः पादच्छाया पादानामाश्रयणम् । 'छाया बहूनामिति समासः । **वर्वर्ष्टि** भृशं पुनः पुनर्वा वर्षति । काम् ? **निर्वृतिसुधाम्** । निर्वृतिः कृतकृत्यतासंतोषः सैव सुधा अमृतम् । किं कृत्वा ? **उच्छिद्य** उन्मूल्य । कम् ? **जन्मपथक्लमं** संसारमार्गग्लानिम् । कथम् ? **सद्य** आश्रयणान्तरमेव ।

ज्येष्ठयतिवन्दनानुभावं भावयति—

**येऽनन्यसामान्यगुणाः प्रीणन्ति जगदञ्जसा ।**
**तान्महन्महतः साधूनिहामुत्र महीयते ॥ ३३ ॥**

**महीयते** पूज्यो भवति । कोसौ ? साधुः । क ? **इह**ास्मिञ्जन्मनि । न केवलम्, **अमुत्र** च परजन्मनि । किं कुर्वन् ? **महन्** पूजयन् । कान् ? **तान्** । किंविशिष्टान् ? **महतो** दीक्षाज्येष्ठानिन्द्रादिपूज्यान्वा । ये किम् ? **येऽनन्यसामान्यगुणाः** पराऽसाधारणगुणाः साधवः **प्रीणन्ति** तर्पयन्ति । किं तत् ? **जगत्** विश्वम् । कथम् ? **अञ्जसा** परमार्थेन ।

प्राभातिककृत्योत्तरकरणीयमाह—

**प्रवृत्त्यैवं दिनादौ द्वे नाड्यौ यावद्यथाबलम् ।**
**नाडीद्वयोनमध्याह्नं यावत्स्वाध्यायमावहेत् ॥ ३४ ॥**

**आवहेत्** कुर्यात्साधुः । कम् ? **स्वाध्यायम्** । कथम् ? **नाडीद्वयोनमध्याह्नं यावद्** घटिकायुग्मन्यूनमध्यन्दिनावधि । कथम् ? **यथाबलम्** । किं कृत्वा ? **प्रवृत्त्य** देववन्दनादिकं कृत्वा । कथम् ? **एवम्**उक्तनीत्या । क ? **दिनादौ** प्रभाते । कथम् ? **द्वे नाड्यौ यावद्** घटिकाद्वयावधि ॥

निष्ठापितस्वाध्यायस्य मुनेः प्रतिपन्नोपवासस्यास्वाध्यायकाले करणीयमुपदिशति—

**ततो देवगुरू स्तुत्वा ध्यानं वाराधनादि वा ।**
**शास्त्रं जपं वाऽस्वाध्यायकालेऽभ्यसेदुपोषितः ॥ ३५ ॥**

**ततः** पौर्वाह्णिकस्वाध्यायनिष्ठापनानन्तरम्**उपोषितः** प्रतिपन्नोपवासः साधुरस्वाध्यायकाले**ऽभ्यसेद्** भावयेत् । किं तत् ? **ध्यानं वाराधनादि शास्त्रं वा जपं वा** पञ्चनमस्कारादिजप्यम् । किं कृत्वा ? **स्तुत्वा** वन्दित्वा । कौ ? **देवगुरू** देवमर्हद्भट्टारकं गुरुं च धर्माचार्यम् ॥

अप्रतिपन्नोपवासस्य भिक्षोर्मध्याह्नकृत्यमाह—

**प्राणयात्राचिकीर्षायां प्रत्याख्यानमुपोषितम् ।**
**न वा निष्ठाप्य विधिवद्भुक्त्वा भूयः प्रतिष्ठयेत् ॥ ३६ ॥**

**प्रतिष्ठयेत्** प्रत्याख्यानमुपोषितं वा यथासामर्थ्यमात्मनि स्थापयेत्साधुः। कथम् ? **भूयः** पुनः । किं कृत्वा ? **भुक्त्वा** भोजनं कृत्वा । किंवत् ? **विधिवत्** शास्त्रोक्तविधानेन । किं कृत्वा ? **निष्ठाप्य** पूर्वदिने प्रतिपन्नं क्षमयित्वा विधिवदेव । किं तत् ? **प्रत्याख्यानम्** । न केवलम्, **उपोषितं नवा** उपवासं वा । कस्यां सत्याम् ? **प्राणयात्राचिकीर्षायां** भोजनकरणेच्छायां जातायाम् ॥

प्रत्याख्यानादिनिष्ठापनप्रतिष्ठापनयोस्तत्प्रतिष्ठापनानन्तरमाचार्यवन्दनायाश्च प्रयोगविधिमाह—

**हेयं लघ्व्या सिद्धभक्त्याशनादौ,**
**प्रत्याख्यानाद्याशु चादेयमन्ते ।**
**सूरौ तादृग्योगिभक्त्यग्रया तद्,**
**ग्राह्यं वन्द्यः सूरिभक्त्या स लघ्व्या ॥ ३७ ॥**

**हेयं** त्याज्यं साधुना । निष्ठाप्यमित्यर्थः । किं तत् ? **प्रत्याख्यानादि** प्रत्याख्यानमुपोषितं वा । क्व ? **अशनादौ** भोजनारम्भे । कया ? **सिद्धभक्त्या** । किंविशिष्टया ? **लघ्व्या** । न केवलम्, **आदेयं च** लघ्व्या सिद्धभक्त्या प्रतिष्ठाप्यं साधुना । किं तत् ? प्रत्याख्यानादि । क्व ? **अन्ते** प्रक्रमाद्भोजनस्यैव प्रान्ते । कथम् ? **आशु** शीघ्रं भोजनानन्तरमेव । आचार्यासन्निधावेतद्विधेयं **सूरौ** आचार्यसमीपे पुनर्ग्राह्यं प्रतिष्ठाप्यं साधुना । किं तत् ? **तत्** प्रत्याख्यानादि । कया ? लघ्व्या सिद्धभक्त्या । किंविशिष्टया ? **तादृग्योगिभक्त्यग्रया** लघुयोगिभक्त्यधिकया । तादृग्लघ्वी योगिभक्तिस्तादृग्योगिभक्तिः । तयाग्रा अधिका तादृग्योगिभक्त्यग्रा, तया । तथा **वन्द्यः** साधुना । कोऽसौ ? **स सूरिः** । कया ? **सूरिभक्त्या** । किंविशिष्टया ? **लघ्व्या** । उक्तं च—

सिद्धभक्त्योपवासश्च प्रत्याख्यानं च मुच्यते।
लघ्व्यैव भोजनस्यादौ भोजनान्ते च गृह्यते॥
सिद्धयोगिलघुभक्त्या प्रत्याख्यानादि गृह्यते।
लघ्व्या तु सूरिभक्त्यैव सूरिर्वन्द्योथ साधुना॥

सद्यः प्रत्याख्यानाग्रहणे दोषमल्पकालमपि तद्ग्रहणे च गुणं दर्शयति—

**प्रत्याख्यानं विना दैवात् क्षीणायुः स्याद्विराधकः।**
**तदल्पकालमप्यल्पमप्यर्थपृथु चण्डवत्॥ ३८॥**

**स्यात्**साधुः। किं विशिष्टः? **विराधको** रत्नत्रयाराधको न भवेदित्यर्थः। किंविशिष्टः सन्? **क्षीणायु**स्त्रुटितजीवितः। कस्मात्? **दैवात्** प्राग्बद्धायुःकर्मवशात्। कथम्? **विना**। किं तत्? **प्रत्याख्यानम्**। **तत्**प्रत्याख्यानं पुन**रर्थपृथु** फलेन बहु स्यात्। किंविशिष्टमपि? **अल्पकालमपि**। अल्पः कालो यस्य तत्। तथा**ऽल्पमपि** स्तोकमपि। किं पुनश्चिरकालं प्रभूतं चेत्यपिशब्दार्थः। किंवत्? **चण्डवत्**। चण्डनाम्नो मातङ्गस्य चर्मवरत्रानिर्मातुः क्षणं मांसमात्रनिवृत्तस्य यथा। उक्तं च—

चण्डोऽवन्तिषु मातङ्गः किल मांसनिवृत्तितः।
अप्यल्पकालभाविन्याः प्रपेदे यक्षमुख्यताम्॥

प्रत्याख्यानादिग्रहणानन्तरकरणीयं गोचारप्रतिक्रमणादिविधिमाह—

**प्रतिक्रम्याथ गोचारदोषं नाडीद्वयाधिके।**
**मध्यान्हे प्राह्नवद्वृत्ते स्वाध्यायं विधिवद्भजेत्॥ ३९॥**

**अथ** प्रत्याख्यानादिग्रहणानन्तरं साधुः **प्रतिक्रम्य** विशोध्य। कम्? **गोचारदोषं** गोवद्भोजनस्यातिचारं **स्वाध्यायं विधिवद्भजेत्**। क्व सति? **मध्यान्हे**। किंविशिष्टे **नाडीद्वयाधिके**। पुनः किंविशिष्टे? **वृत्ते**ऽतिक्रान्ते सति। किंवत्? **प्राह्नवत्** पूर्वाह्णे यथा।

स्वाध्यायनिष्ठापनानन्तरकरणीयं दैवसिकप्रतिक्रमणादिविधिमाह—

**नाडीद्वयावशेषेऽह्नि तं निष्ठाप्य प्रतिक्रमम्।**
**कृत्वाह्निकं गृहीत्वा च योगं वन्द्यो यतैर्गणी॥ ४०॥**

यतैः संयतैर्गणी सूरिर्वन्द्यः । किं कृत्वा ? गृहीत्वा । कम् ? योगं रात्रियोगम् । किं कृत्वा ? कृत्वा । कम् ? प्रतिक्रमम् । किंविशिष्टम् ? आह्निकम् । किं कृत्वा ? निष्ठाप्य । कम् ? तं स्वाध्यायम् । क्व ? अह्नि दिने । किंविशिष्टे ? नाडीद्वयावशेषे दिनान्ततृतीयघटिकायां प्रवर्तमानायामित्यर्थः । चः समुच्चये ।

आचार्यवन्दनानन्तरविधेयं देववन्दनादिविधिमाह—

**स्तुत्वा देवमथारभ्य प्रदोषे सद्विनाडिके ।**
**मुञ्चेन्निशीथे स्वाध्यायं प्रागेव घटिकाद्वयात् ॥ ४१ ॥**

अथ अनन्तरं साधुर्देवं स्तुत्वा प्रदोषे रजनीमुखे सद्विनाडिके घटिकाद्वयाधिके प्रवृत्ते सति स्वाध्यायमारभ्य प्रतिष्ठाप्य मुञ्चेन्निष्ठापयेत् स्वाध्यायम् । क्व ? निशीथेऽर्धरात्रे । कथम् ? प्रागेव पूर्वमेव । कस्मात् ? घटिकाद्वयात् ॥

रात्रौ निष्ठापितस्वाध्यायस्य निद्राजयोपायमाह—

**ज्ञानाद्याराधनानन्दसान्द्रः संसारभीरुकः ।**
**शोचमानोऽर्जितं चैनो जयेन्निद्रां जिताशनः ॥ ४२ ॥**

जयेन्निगृह्णीयात्साधुः । काम् ? निद्राम् । किंविशिष्टः सन् ? जिताशन आहारेणाग्लापितः । दन्त्यसकारे वा पाठः । तत्र पर्यङ्काद्यासनेनासंजातखेद इत्यर्थः । कथंभूतो भूत्वा ? ज्ञानाद्याराधनानन्दसान्द्रः ज्ञानादीनां ज्ञानश्रद्धानचारित्रतपसामाराधनाज्जात आनन्दः प्रमोदः सान्द्रो घनो निरन्तरप्रवृत्तो यस्य स एवम् । तथा संसारभीरुकः । संविग्न इत्यर्थः । तथा शोचमानस्ताच्छील्येन शोचन् । किं तत् ? एनः पापम् । किंविशिष्टम् ? अर्जितं पुराकृतम् । च समुच्चये । उक्तं च—

ज्ञानाद्याराधने प्रीतिं भयं संसारदुःखतः ।
पापे पूर्वार्जिते शोकं निद्रां जेतुं सदा कुरु ॥

स्वाध्यायकरणेऽशक्तस्य च देववन्दनाकरणे विधानमाह—

**सप्रतिलेखनमुकुलितवत्सोत्सङ्गितकरः सपर्यङ्कः ।**
**कुर्यादेकाग्रमनाः स्वाध्यायं वन्दनां पुनरशक्त्या ॥ ४३ ॥**

कुर्यात्साधुः । कम् ? **स्वाध्यायम्** । कीदृशः ? **सप्रतिलेखनमुकुलितवत्सोत्सङ्गितकरः** सप्रतिलेखनौ प्रतिलेखनयुक्तौ मुकुलितावञ्जली कुड्मलितौ वत्सोत्सङ्गितौ वक्षोमध्यस्थापितौ करौ हस्तौ येन स एवम् । पुनः कीदृशः ? **सपर्यङ्कः** । सह पर्यङ्केन पर्यङ्कासनेन वर्तते इति सपर्यङ्कः । उपलक्षणाद्वीरासनादियुक्तोपि । पुनरपि कीदृशः ? **एकाग्रमना** अनन्यपरान्तःकरणः । उक्तं च—

**पलियंकणिसेज्जगदो पडिलेहिय अञ्जलीकदपणामो ।**
**सुत्तत्थजोगजुत्तो पढिदव्वो आदसत्तीए ॥**[1]

अपि च—

**मनो बोधाधीनं विनयविनियुक्तं निजवपु,—**
**र्वचः पाठायत्तं करणगणमाधाय नियतम् ।**
**दधानः स्वाध्यायं कृतपरिणतिर्जैनवचने,**
**करोत्यात्मा कर्मक्षयमिति समाध्यन्तरमिदम् ॥**

साधुः **पुनर्वन्दनां** यथोक्तविशेषणविशिष्टः कुर्यात् । कया ? **अशक्त्या** । उद्धो यदि वन्दितुं न शक्नुयादित्यर्थः । प्रतिक्रमेण योगग्रहणे तन्मोक्षणे च कालविशेषो व्यवहारानुसारादेव पूर्वोक्तः प्रतिपत्तव्यः ॥

धर्मकार्यादिव्यासङ्गेन ततोन्यदापि तद्विधाने दोषाभावादित्युपदेशार्थमाह—

**योगप्रतिक्रमविधिः प्रागुक्तो व्यावहारिकः ।**
**कालक्रमनियामोत्र न स्वाध्यायादिवद्यतः ॥ ४४ ॥**

**उक्तः** । कोसौ ? **योगप्रतिक्रमविधिः**, रात्रियोगस्य प्रतिक्रमणस्य च विधानम् । किंविशिष्टः ? **व्यावहारिको** व्यवहाररूपः । कथम् ? **प्राक्** पूर्वम् । **यतो** यस्मान्नास्ति । कोसौ ? **कालक्रमनियामः** समयानुपूर्वीनियमः । क्व ? **अत्र** योगप्रतिक्रमविधौ । किंवत् ? **स्वाध्यायादिवत्**

---

१ पल्यङ्कनिषद्यागतः प्रतिलेख्याञ्जलीकृतप्रणामः ।
सूत्रार्थयोगयुक्तः पठितव्य आत्मशक्त्या ॥

स्वाध्याये देववन्दनायां भक्तप्रत्याख्याने च यथा कालक्रमनियमोस्ति । न तथात्रेत्यर्थः ॥ इति नित्यक्रियाप्रयोगविधानम् ।

अथोत्तरप्रबन्धेन नैमित्तिकक्रियां व्याकर्तुकामः प्रथमं तावच्चतुर्दशीक्रियाप्रयोगविधिं मतद्वयेनाह—

**त्रिसमयवन्दने भक्तिद्वयमध्ये श्रुतनुतिं चतुर्दश्याम् ।**
**प्राहुस्तद्भक्तित्रयमुखान्तयोः केपि सिद्धशान्तिनुती ॥४५॥**

प्राहुः प्राकृतक्रियाकाण्डचारित्रसारमतानुसारिणः सूरयः प्रणिगदन्ति । काम् ? श्रुतनुतिं श्रुतभक्तिम् । कस्याम् ? चतुर्दश्याम् । क ? त्रिसमयवन्दने भक्तिद्वयमध्ये त्रैकालिकनित्यदेववन्दनाभक्तिद्वयस्य चैत्यभक्तिपञ्चगुरुभक्तियुगलस्यान्तः । एतेन नित्यत्रिकालदेववन्दनायुक्तैव चतुर्दशीक्रिया कर्तव्येति लक्षयति । यथाह क्रियाकाण्डे—

जिणदेववन्दणाए चेदियभत्तीय पंचगुरुभत्ती ।
चउदसियं तं मज्झे सुदभत्ती होइ कायव्वा ॥

चारित्रसारेप्याह—"देवतास्तवनक्रियायां चैत्यभक्तिं कुर्यात् । चतुर्दशीदिने तयोर्मध्ये श्रुतभक्तिर्भवति" इति । केपि केचित्पुनः संस्कृतक्रियाकाण्डमतानुसारिणः सूरयः प्राहुः । के ? **सिद्धशान्तिनुती** । कयोः ? **तद्भक्तित्रयमुखान्तयोः** । मुखमारम्भः । अन्तः पर्यन्तः । मुखं चान्तश्च मुखान्तौ तद्भक्तित्रयस्य चैत्यश्रुतपञ्चगुरुभक्तीनां त्रितयस्य मुखान्तौ तद्भक्तित्रयमुखान्तौ, तयोः । तद्भक्तित्रयस्यारम्भे सिद्धभक्तिपर्यन्ते शान्तिभक्तिं चतुर्दश्यां प्राहुरित्यर्थः । संस्कृतक्रियाकाण्डपाठो यथा—

सिद्धे चैत्ये श्रुते भक्तिस्तथा पञ्चगुरुस्तुतिः ।
शान्तिभक्तिस्तथा कार्या चतुर्दश्यामिति क्रिया ॥

कार्यवशाच्चतुर्दशीक्रियाव्यतिक्रमप्रतिविधानमाह—

**चतुर्दशीक्रिया धर्मव्यासङ्गादिवशान्न चेत् ।**
**कर्तुं पार्येत पक्षान्ते तर्हि कार्याष्टमीक्रिया ॥ ४६ ॥**

**न चेत्पार्येत** यदि न शक्येत साधुना **चतुर्दशीक्रिया** । किं कर्तुम् ? **कर्तुम्** । कस्मात् ? **धर्मव्यासङ्गादिवशात्** । आदिशब्देन क्षपकनिर्यापणादिग्रहणम् । तर्हि तस्मिन् व्यतिक्रमे कार्या । कासौ । **अष्टमीक्रिया** । क्व ? **पक्षान्ते** अमावास्यापौर्णमास्योः । उक्तं च चारित्रसारे—

"चतुर्दशीदिने धर्मव्यासङ्गादिना क्रिया
कर्तुं न लभ्येत चेत् पाक्षिकेऽष्टम्यां क्रिया कर्तव्या ।" इति ॥

क्रियाकाण्डेपि—

**जदि पुण धम्मव्वासंगा ण कया होज्ज चउद्दसीकिरिया ॥**
**तो पुण्णिमाइदिवसे कायव्वा पक्खिया किरिया ॥**

अष्टम्याः पक्षान्तस्य च क्रियाविधिं चारित्रभक्त्यनन्तरभाविनं सर्वत्रालोचनाविधिं चोपदिशति—

**स्यात् सिद्धश्रुतचारित्रशान्तिभक्त्याष्टमीक्रिया ।**
**पक्षान्ते साऽश्रुता वृत्तं स्तुत्वालोच्यं यथायथम् ॥ ४७ ॥**

**स्यात्** । कासौ ? **अष्टमीक्रिया** । कया ? **सिद्धश्रुतचारित्रशान्तिभक्त्या** । तथा **पक्षान्ते** स्यात् । कासौ ? **सा** सिद्धश्रुतचारित्रशान्तिभक्तिः । किंविशिष्टा ? **अश्रुता** श्रुतभक्तिवर्ज्या । तथा **वृत्तं** चारित्रं **स्तुत्वा आलोच्यं** साधुभिः । कथम् ? **यथायथं** यथास्वम् । उक्तं च चारित्रसारे—"अष्टम्यां सिद्धश्रुतचारित्रशान्तिभक्तयः, पाक्षिके सिद्धचारित्रशान्तिभक्तयः ।" इति । यत्पुनः संस्कृतक्रियाकाण्डे—

**सिद्धश्रुतसुचारित्रचैत्यपञ्चगुरुस्तुतिः ।**
**शान्तिभक्तिश्च षष्ठीयं क्रिया स्यादष्टमीतिथौ ॥**
**सिद्धचारित्रचैत्येषु भक्तिः पञ्चगुरुष्वपि ॥**
**शान्तिभक्तिश्च पक्षान्ते जिने तीर्थे च जन्मनि ॥** इति

१—यदि पुनर्धर्मव्यासंगान्न कृता भवेत् चतुर्दशीक्रिया ।
तर्हि पूर्णमासीदिवसे कर्तव्या पाक्षिकी क्रिया ॥

श्रूयते तन्नित्यदेववन्दनायुक्तयोरेतयोर्विधानमुक्तमिति वृद्धसंप्रदायः ।

सिद्धप्रतिमायां तीर्थकरजन्मन्यपूर्वजिनचैत्ये च क्रियोपदेशार्थमाह—

**सिद्धभक्त्यैकया सिद्धप्रतिमायां क्रिया मता ।**
**तीर्थकृज्जन्मनि जिनप्रतिमायां च पाक्षिकी ॥ ४८ ॥**

**मता** । कासौ ? **क्रिया** । कस्याम् ? **सिद्धप्रतिमायाम्** । कया ? **सिद्धभक्त्या** । किंविशिष्टया ? **एकया** । तथा **पाक्षिकी** क्रिया मता । क्व ? **तीर्थकृज्जन्मनि** । न केवलं, **जिनप्रतिमायां च** । पूर्वजिनचैत्ये ॥ अपूर्वचैत्यवन्दनानित्यदेववन्दनाभ्यामष्टम्यादिक्रियासु योगे चिकीर्षिते चैत्य-पञ्चगुरुभक्त्योः प्रयोगस्थानमाह—

**दर्शनपूजात्रिसमयवन्दनयोगोऽष्टमीक्रियादिषु चेत् ।**
**प्राक् तर्हि शान्तिभक्तेः प्रयोजयेच्चैत्यपञ्चगुरुभक्ती ॥४९॥**

**दर्शनपूजा** अपूर्वचैत्यवन्दना । **त्रिसमयवन्दनं** त्रैकालिकनित्यवन्दना । दर्शनपूजा च त्रिसमयवन्दनं च दर्शनपूजात्रिसमयवन्दने । ताभ्यां **योगो** योजना **चेद्**भवति । कासु ? **अष्टमीक्रियादिषु** अष्टम्यादिक्रियासु । **तर्हि प्रयोजयेत्**साधुः । के ? **चैत्यपञ्चगुरुभक्ती** । कथम् ? **प्राक्** पूर्वम् । कस्याः ? **शान्तिभक्तेः** । उक्तं च चारित्रसारे—

"अष्टम्यादिक्रियासु दर्शनपूजात्रिकालदेववन्दनायोगे ।
शान्तिभक्तितः प्राक्चैत्यभक्तिं पञ्चगुरुभक्तिं च कुर्यात्" इति ।

एकत्र स्थानेऽनेकापूर्वचैत्यदर्शने क्रियाप्रयोगविषयं पुनस्तद्दर्शने तदपूर्वत्व-कालेयत्तां चोपदिशति—

**दृष्ट्वा सर्वाण्यपूर्वाणि चैत्यान्येकत्र कल्पयेत् ।**
**क्रियां तेषां तु षष्ठेनुश्रूयते मास्यऽपूर्वता ॥ ५० ॥**

२—अष्टमीचतुर्दश्योः ।

कल्पयेत् प्रयुञ्जीत साधुः । काम् ? **क्रियाम्** । क ? **एकत्र** एकस्मिन्नभिरुचिते जिनचैत्यविषये । किं कृत्वा ? **दृष्ट्वा** । कानि ? **चैत्यानि** । किंविशिष्टानि ? **अपूर्वाणि** । कियन्ति ? **सर्वाणि** निःशेषाणि । **तेषां तु** चैत्यानाम**नुश्रूयते** व्यवहर्तृजनपारम्पर्येणाकर्ण्यते । कासौ ? **अपूर्वता** अपूर्वत्वम् । क ? **मासि** । किंविशिष्टे ? **षष्ठे** ।

क्रियाविषयतिथिनिर्णयार्थमाह—

**त्रिमुहूर्तेपि यत्रार्क उदेत्यस्तमयत्यथ ।**
**स तिथिः सकलो ज्ञेयः प्रायो धर्म्येषु कर्मसु ॥ ५१ ॥**

**ज्ञेयः** । कोसौ ? **स तिथिः** । किंविशिष्टः ? **सकलः** संपूर्णः । केषु ? **कर्मसु** क्रियासु । किंविशिष्टेषु ? **धर्म्येषु** धर्मादनपेतेषु । यत्र किम् ? **यत्र त्रिमुहूर्तेपि** मुहूर्तत्रयवर्तिन्यपि । किं पुनरधिके इत्यपिशब्दार्थः । **उदेति** उद्गच्छत्य**र्क** आदित्यः । **अथ** अथवा **अस्तमयति** अस्तं गच्छति । **प्राय** इति देशकालादिवशादन्यथापि । बहुधा व्यवहर्तॄणां प्रयोगदर्शनादेतदुच्यते ॥

प्रतिक्रमणे प्रयोगविधिं श्लोकपञ्चकेनाचष्टे—

**पाक्षिक्यादिप्रतिक्रान्तौ वन्देरन्विधिवद्गुरुम् ।**
**सिद्धवृत्तस्तुती कुर्याद्गुर्वीं चालोचनां गणी ॥ ५२ ॥**
**देवस्याग्रे परे सूरेः सिद्धयोगिस्तुती लघू ।**
**सवृत्तालोचने कृत्वा प्रायश्चित्तमुपेत्य च ॥ ५३ ॥**
**वन्दित्वाचार्यमाचार्यभक्त्या लघ्व्या ससूरयः ।**
**प्रतिक्रान्तिस्तुतिं कुर्युः प्रतिक्रामेत्ततो गणी ॥ ५४ ॥**
**अथ वीरस्तुतिं शान्तिचतुर्विंशतिकीर्तनाम् ।**
**सवृत्तालोचनां गुर्वीं सगुर्वालोचनां यताः ॥ ५५ ॥**
**मध्यां सूरिनुतिं तां च लघ्वीं कुर्युः परे पुनः ।**
**प्रतिक्रमा बृहन्मध्यसूरिभक्तिद्वयोज्झिताः ॥५६॥ पञ्चकम् ।**

**वन्देरन्** । के ? शिष्यसधर्माणः । कम् ? **गुरुमाचार्यम्** । कथम् ? **विधिवद्** लघ्व्या सिद्धगणिस्तुत्या 'गणी वन्द्यो गवासनात् सैद्धान्तोन्तः श्रुतस्तुत्या' इति पूर्वोक्तविधिना, 'लघ्वीभिः सिद्धश्रुताचार्यभक्तिभिः' इत्यनेन विधानेन वा, व्यवहारानुरोधात् । कस्याम् ? **पाक्षिक्यादिप्रतिक्रान्तौ** विषये पाक्षिक्यां चातुर्मासिक्यां सांवत्सरिक्यां वा प्रतिक्रमणायां कर्तुमिष्टायाम् । अत्र 'नमोस्तु प्रतिष्ठापनसिद्धभक्तिकायोत्सर्गं करोम्यहमिति, नमोस्तु प्रतिष्ठापनश्रुतभक्तिकायोत्सर्गं करोम्यहमिति, नमोस्तु प्रतिष्ठापनाचार्यभक्तिकायोत्सर्गं करोम्यहमिति चोच्चारणत्रयं बोध्यम् । सिद्धेत्यादि । तत इष्टदेवतानमस्कारपूर्वकं 'समता सर्वभूतेषु' इत्यादि पठित्वा **कुर्यात्** । कोसौ ? **गणी** शिष्यसधर्मगणयुक्त आचार्यः । गुरुमिति विभक्तिपरिणामेन संबन्धनीयम् । तेन, गुरुराचार्य इत्यर्थः । के ? **सिद्धवृत्तस्तुती** । गुर्वीमिति सिद्धवृत्तस्तुती गुर्व्याविति वचनपरिणामेन संबन्धः । तेन 'सिद्धानुद्धूतकर्मे'त्यादिकां सिद्धभक्तिं, 'साञ्चलिकां येनेन्द्रान्' इत्यादिकां च चारित्रभक्तिम् । न केवलाम्, **आलोचनां च** । किंविशिष्टाम् ? **गुर्वीं** बृहतीम् । 'इच्छामि भन्ते पक्खियंमि आलोचेउं' इत्यादिकां 'जिणगुणसंपत्ति होउ मज्झं' इत्यन्ताम् । क ? **अग्रे** । कस्य ? **देवस्य** अर्हद्भट्टारकस्य सैषा सूरेः शिष्यसधर्मणां च साधारणीं क्रियाम् । अत्र च सर्वातीचारविशुद्ध्यर्थं पाक्षिकप्रतिक्रमणक्रियायां पूर्वाचार्यानुक्रमेण सकलकर्मक्षयार्थं भावपूजावन्दनास्तवसमेतं सिद्धभक्तिकायोत्सर्गं करोम्यहमिति, सर्वातीचारविशुद्ध्यर्थं आलोचनाचारित्रभक्तिकायोत्सर्गं करोम्यहमिति चोच्चारणद्वयं बोध्यम् । केवलमाचार्यो 'णमो अरहंताणं' इत्यादि पञ्चपदान्युच्चार्य कायोत्सर्गं कृत्वा 'थोसामि' इत्यादि भणित्वा 'तव सिद्ध' इत्यादिगाथां साञ्चलिकां पठित्वा पुनः प्रागुक्तविधिं कृत्वा 'प्रावृट्काले सविद्युत्' इत्यादिकां योगिभक्तिं साञ्चलिकां पठित्वा 'इच्छामि भन्ते चरित्ताचारो तेरसविहो' इत्यादिदण्डकपञ्चकमधीत्य तथा 'वदसमिदिंदिय' इत्यादिकं 'छेदोवट्ठावणं होदु मज्झं' इत्यन्तं त्रिः पठित्वा स्वदोषान् देवस्याग्रे आलोचयेत् । दोषानुसारेण प्रायश्चित्तं च गृहीत्वा पञ्चमहाव्रतम् इत्यादिपाठं त्रिर्भणित्वा योग्यशिष्यादेः प्रायश्चित्तं निवेद्य देवाय गुरुभक्तिं दद्यात् । अत्रापि नमोस्तु सर्वातीचारविशुद्ध्यर्थं सिद्धभक्तिकायोत्सर्गं करोम्यहमिति, नमोस्तु सर्वातीचारविशु-

र्थ्यर्थं आलोचनायोगिभक्तिकायोत्सर्गं करोम्यहमिति च, नमोस्तु निष्ठापनाचार्यभक्तिकायोत्सर्गं करोम्यहमिति चोच्चारणत्रयं क्रमेण बोध्यम् ॥ पर इत्यादि । ततः परे पुनः शिष्यसधर्माणः ससूरयः आचार्ययुक्ताः कुर्युः । काम् ? प्रतिक्रान्तिस्तुतिं प्रतिक्रमणभक्तिं सर्वातीचारविशुद्ध्यर्थं पाक्षिकप्रतिक्रमणक्रियायां पूर्वाचार्यानुक्रमेण सकलकर्मक्षयार्थं भावपूजावन्दनास्तवसमेतं प्रतिक्रमणभक्तिकायोत्सर्गं करोम्यहमित्युच्चार्य 'णमो अरहंताणं' इत्यादिदण्डकं पठित्वा कायोत्सर्गं विदध्युः । किं कृत्वा ? वन्दित्वा । कम् ? आचार्यम् । कया ? आचार्यभक्त्या । किंविशिष्टया ? लघ्व्या 'श्रुतजलधि' इत्यादिकया । किं कृत्वा ? उपेत्य स्वीकृत्य । किं तत् ? प्रायश्चित्तं प्रत्येकमालोचनं कृत्वा यथादोषं विशुद्धिम् । किं कृत्वा ? कृत्वा । के ? सिद्धयोगिस्तुती । किंविशिष्टे ? लघू । पुनः किंविशिष्टे ? सद्वृत्तालोचने । कस्याग्रे ? सूरेः स्वीकृतप्रायश्चित्तस्याचार्यस्य । लघुसिद्धभक्त्यादिकं तु साधूनामप्याचार्येण समानं बोध्यम् । चशब्दो भिन्नप्रक्रमो वन्दित्वेत्यतोनन्तरं योज्यः । ततो यथोक्तपरिकर्मानन्तरं गणी आचार्यः 'थोसामि' इत्यादिदण्डकं गणधरवलयं च पठित्वा प्रतिक्रामेत् प्रतिक्रमणदण्डकान् पठेत् । शिष्यसधर्माणस्तु तावत्कालं कायोत्सर्गेण तिष्ठन्तः प्रतिक्रमणदण्डकान् शृणुयुः । अथ अनन्तरं यताः संयताः साधवः ' थोसामि ' इत्यादिदण्डकं पठित्वा सूरिणा सहिता "वदसमिदिंदियरोधो" इत्यादिकं चाधीत्य वीरस्तुतिं कुर्युः सर्वातीचारविशुद्ध्यर्थं पाक्षिकप्रतिक्रमणक्रियायां पूर्वाचार्यानुक्रमेण सकलकर्मक्षयार्थं भावपूजावन्दनस्तवसमेतं निष्ठितकरणवीरभक्तिकायोत्सर्गं करोम्यहमित्युच्चार्य 'णमो अरहंताणं' इत्यादिदण्डकं पठित्वा कायोत्सर्गं यथोक्तानुच्छ्वासान् कृत्वा "थोसामि" इत्यादिदण्डकं पठित्वा "चन्द्रप्रभं चन्द्रमरीचिगौरम्" इत्यादिस्वयंभुवं "यः सर्वाणि चराचराणि" इत्यादिवीरभक्तिं साञ्चलिकां पठित्वा "वदसमिदिंदियरोधो" इत्यादिकं पठेयुरित्यर्थः । तथा यताः ससूरयः कुर्युः । काम् ? शान्तिचतुर्विंशतिकीर्तनाम् सर्वातीचारविशुद्ध्यर्थं शान्तिचतुर्विंशतितीर्थकरभक्तिकायोत्सर्गं करोम्यहमित्युच्चार्य "णमो अरहंताणं" इत्यादिदण्डकं पठित्वा कायमुत्सृज्य "थोसामि" इत्यादिदण्डकमधीत्य शान्तिकीर्तनां विधाय "रक्षाम्"

इत्यादिकां चतुर्विंशतिकीर्तनां च "चउवीसं तित्थयरे" इत्यादिकां साञ्जलिकां "वदसमिदिंदियरोधो" इत्यादिकं च पठेयुः। तथा सर्वातीचारविशुद्ध्यर्थं चारित्रालोचनाचार्यभक्तिकायोत्सर्गं करोम्यहमित्युच्चार्य यताः ससूरयः कुर्युः। काम्? सूरिनुतिं चारित्रालोचनाचार्यभक्तिम्। किंविशिष्टाम्? गुर्वीं सिद्धगुणस्तुतीत्यादिकाम्। चारित्रालोचनासहितबृहदाचार्यभक्तिमित्यर्थः। किंविशिष्टाम्? सवृत्तालोचनां लघ्व्या चारित्रालोचनया सहिताम्। "इच्छामि भत्ते चारित्ताचारो तेरसविहो परिहारविदो" इत्यादि दण्डकसाध्यया लघ्व्या चारित्रालोचनया युक्तामित्यर्थः। ततो "वदसमिदिंदियरोधो" इत्यादिकमुक्त्वा सर्वातीचारविशुद्ध्यर्थं बृहदालोचनाचार्यभक्तिकायोत्सर्गं करोम्यहमित्युच्चार्य "णमो अरहंताणं" इत्यादि दण्डकादिकं कृत्वा यताः ससूरयः कुर्युः। काम्? सूरिनुतिं बृहदालोचनाचार्यभक्तिम्। किंविशिष्टाम्? मध्यां "देसकुलजाइसुद्धा" इत्यादिकाम्। पुनः किंविशिष्टाम्? सगुर्वालोचनां बृहदालोचनासहिताम्। मध्याचार्यभक्तिमित्यर्थः "इच्छामि भत्ते पक्खियम्हि आलोचेउं पण्णारसण्णं दिवसाणं" इत्यादिकया बृहत्यालोचनया सहितामिति भावः। ततो "वदसमिदिंदियरोधो" इत्यादिकमुक्त्वा सर्वातीचारविशुद्ध्यर्थं क्षुल्लकालोचनाचार्यभक्तिकायोत्सर्गं करोम्यहमित्युच्चार्य पूर्ववद्दण्डकादिकं विधाय यताः ससूरयः कुर्युः। काम्? तां च सूरिनुतिम्। किंविशिष्टाम्? लघ्वीं क्षुल्लकाचार्यभक्तिं "प्राज्ञः प्राप्तसमस्तशास्त्रहृदय" इत्यादिकां श्रुतजलधीत्यादिमोक्षमार्गोपदेशका इत्येवमन्तकाम्। ततः सर्वातीचारविशुद्ध्यर्थं सिद्धचारित्रप्रतिक्रमणनिष्ठितकरणवीरशान्तिचतुर्विंशतितीर्थकरचारित्रालोचनाचार्यबृहदालोचनाचार्यक्षुल्लकालोचनाचार्यभक्तीः कृत्वा तद्धीनाधिकत्वादिदोषविशुद्ध्यर्थं समाधिभक्तिकायोत्सर्गं करोम्यहमित्युच्चार्य पूर्ववद्दण्डकादिकं कृत्वा "शास्त्राभ्यासो जिनपति" इत्यादीष्टप्रार्थनां यताः ससूरयः पठेयुः। ततः सिद्धश्रुताचार्यभक्तिभिराचार्यं साधवो वन्देरन्। इति दिङ्मात्रमेतदुपदिष्टम्। प्रौढाचार्यसमीपे यथावत्सविस्तरं दृष्ट्वाऽस्माभिरनुष्ठेयम्। उक्तं च—

सिद्धचारित्रभक्तिः स्याद्बृहदालोचना ततः।
देवस्य गणिनो वाग्रे सिद्धयोगिस्तुती लघू॥

चारित्रालोचना कार्या प्रायश्चित्तं ततस्तथा ।
सूरिभक्त्या ततो लघ्व्या गणिनं वन्दते यतिः ॥
स्यात्प्रतिक्रमणाभक्तिः प्रतिक्रामेत्ततो गणी ।
वीरस्तुतिर्जिनस्तुत्या सहशान्तिनुतिर्मता ॥
वृत्तालोचनया सार्द्धं गुर्वी सूरिनुतिस्ततः ।
गुर्वालोचनया सार्धं मध्याचार्यानुतिस्तथा ॥
लघ्वी सूरिनुतिश्चेति पाक्षिकादौ प्रतिक्रमे ।
ऊनाधिक्यविशुद्ध्यर्थं सर्वत्र प्रियभक्तिका ॥

चारित्रसारेप्युक्तम्—"पाक्षिकचातुर्मासिकसांवत्सरिकप्रतिक्रमणे सिद्धचारित्रप्रतिक्रमणनिष्ठितकरणचतुर्विंशतितीर्थंकरभक्तिचारित्रालोचनागुरुभक्तयो बृहदालोचनागुरुभक्तिर्लघीयस्याचार्यभक्तिश्च करणीयाः" इति ।

परे पुनर्व्रतारोपणादिविषयाश्चत्वारः प्रतिक्रमाः स्युः । किंविशिष्टाः ? बृहन्मध्यसूरिभक्तिद्वयोज्झिताः । उक्तं च—

वृत्तालोचनया सार्धं गुर्व्यालोचनया क्रमात् ।
सूरिद्वयस्तुतिं मुक्त्वा शेषाः प्रतिक्रमाः क्रमात् ॥

यतीनां श्रावकाणां च श्रुतपञ्चमीक्रियाप्रयोगविधिं श्लोकद्वयेनाह—

बृहत्या श्रुतपञ्चम्यां भक्त्या सिद्धश्रुतार्थया ।
श्रुतस्कन्धं प्रतिष्ठाप्य गृहीत्वा वाचनां बृहन् ॥ ५७ ॥
क्षम्यो गृहीत्वा स्वाध्यायः कृत्या शान्तिनुतिस्ततः ।
यमिनां गृहिणां सिद्धश्रुतशान्तिस्तवाः पुनः ५८ (युग्मम्)

यमिनां साधूनां क्षम्यो बृहच्छ्रुतभक्त्या निष्ठाप्य इत्यर्थः । कोसौ ? स्वाध्यायः । किंविशिष्टः ? बृहन् । किं कृत्वा ? गृहीत्वा बृहच्छ्रुताचार्यभक्तिभ्यां प्रतिष्ठाप्येत्यर्थः । एतच्च बृहन्निति विशेषणाल्लभ्यते । किं कृत्वा ? गृहीत्वा स्वीकृत्य । काम् ? वाचनां श्रुतावतारोपदेशम् । किं कृत्वा ? प्रतिष्ठाप्य । कम् ? श्रुतस्कन्धम् । कया ? भक्त्या । किंविशिष्टया ? सिद्धश्रुतार्थया सिद्धाः श्रुतं चार्थोऽभिधेयं निमित्तं वा यस्याः सा

सिद्धश्रुतार्थां, तया । पुनः किंविशिष्टया ? बृहत्या बृहत्सिद्धभक्त्या सिद्धानुद्धूतकर्मेत्यादिकया बृहच्छ्रुतभक्त्या च "स्तोष्ये संज्ञानानि" इत्यादिकयेत्यर्थः । कस्याम् ? **श्रुतपञ्चम्यां** ज्येष्ठशुक्लपञ्चम्याम् । ततो यथोक्तक्रियानन्तरं **कृत्या** करणीया यमिनाम् । कासौ ? **शान्तिनुतिः** शान्तिभक्तिः । उक्तं च चारित्रसारे "श्रुतपञ्चम्यां सिद्धश्रुतभक्तिपूर्विकां वाचनां गृहीत्वा तदनु स्वाध्यायं गृह्णतः श्रुतभक्तिमाचार्यभक्तिं च कृत्वा गृहीतस्वाध्यायाः कृतश्रुतभक्तयः स्वाध्यायं निष्ठाप्य समाप्तौ शान्तिभक्तिं कुर्युः" इति ॥ गृहिणां स्वाध्यायाग्राहिणां श्रावकाणां **पुनः** कृत्याः करणीयाः । के ? **सिद्धश्रुतशान्तिस्तवाः** सिद्धभक्तिः श्रुतभक्तिः शान्तिभक्तिश्चेत्यर्थः ।

सिद्धान्तादिवाचनाक्रियातिदेशार्थं तदर्थाधिकारविषयकायोत्सर्गोपदेशार्थं श्लोकद्वयमाह—

**कल्प्यः क्रमोयं सिद्धान्ताचारवाचनयोरपि ।**
**एकैकार्थाधिकारान्ते व्युत्सर्गास्तन्मुखान्तयोः ॥ ५९ ॥**
**सिद्धश्रुतगणिस्तोत्रं व्युत्सर्गाश्चातिभक्तये ।**
**द्वितीयादिदिने षट् षट् प्रदेया वाचनावनौ ॥६०॥युग्मम् ।**

**अयमनन्तरोक्तः क्रमो** विधिः **कल्प्यो** रचनीयः । कयोः ? **सिद्धान्ताचारवाचनयोरपि** सिद्धान्तवाचनायामाचारवाचनायां च । न केवलं श्रुतपञ्चम्यामित्यपि शब्दार्थः । सिद्धान्तवाचनां वृद्धव्यवहारादाचारवाचनां वा सिद्धश्रुतभक्तिभ्यां प्रतिष्ठाप्य बृहत्स्वाध्यायं च श्रुताचार्यभक्तिभ्यां प्रतिपद्य तद्वाचना दीयते । ततश्च स्वाध्यायं श्रुतभक्त्या निष्ठाप्य शान्तिभक्त्या क्रियां निष्ठापयेदिति भावः । तथा **व्युत्सर्गः** कायोत्सर्गः, कार्य इत्युपस्कारः । क्व ? **एकैकार्थाधिकारान्ते** सिद्धान्तस्यैकस्यार्थाधिकारस्यान्ते पर्यन्ते । उक्तं च चारित्रसारे—

"सिद्धान्तस्यार्थाधिकाराणां समाप्तौ एकैकं कायोत्सर्गं कुर्याद्" इति ।

तथा कार्यम् । किं तत् ? **सिद्धश्रुतगणिस्तोत्रम्** । कयोः ? **तन्मुखा-**

**न्तयोः** तस्यैकैकार्थाधिकारस्यारम्भे समाप्तौ च निमित्तभूते सिद्धभक्तिः श्रुतभक्तिराचार्यभक्तिश्च करणीया इत्यर्थः। तथा **व्युत्सर्गाः** कार्योत्सर्गाः **षट् षट्** प्रदेया दातव्याः। क? **वाचनावनौ** वाचनाभूमौ। क? **द्वितीयादिदिने**। द्वितीयतृतीयादिदिवसे यथाशक्तिकायोत्सर्गा दातव्या इत्यर्थः। वाचनादिने तु तत्क्रियैव कार्येति भावः। कस्यै? **अतिभक्तये**ऽतिमात्रभक्त्यर्थम्। सिद्धान्ताद्यर्थाधिकाराणां सुबहुमान्यत्वादेतदुक्तम्।

संन्यासक्रियाप्रयोगविधिं श्लोकद्वयेनाह—

**संन्यासस्य क्रियादौ सा शान्तिभक्त्या विना सह।**
**अन्तेऽन्यदा बृहद्भक्त्या स्वाध्यायस्थापनोज्झने॥ ६१॥**
**योगेपि शेयं तत्रात्तस्वाध्यायैः प्रतिचारकैः।**
**स्वाध्यायाग्राहिणां प्राग्वत् तदाद्यन्तदिने क्रिया॥ ६२॥**

**सा** श्रुतपञ्चम्युक्ता **क्रिया**, कार्येत्युपस्कारः। क? **आदौ** आरम्भे। कस्य? **संन्यासस्य**। कथम्? **विना**। कया? **शान्तिभक्त्या** केवलमत्र सिद्धश्रुतभक्तिभ्याम्। श्रुतस्कन्धवत् संन्यासः प्रतिष्ठाप्य इत्यर्थः। तथा कार्या। कासौ? सैव क्रिया। कथम्? **सह**। कया? **शान्तिभक्त्या**। क? **अन्ते**। कस्य? संन्यासस्य। क्षपकेतीते संन्यासोनिष्ठाप्य इति भावः। तथा कार्ये। के? **स्वाध्यायस्थापनोज्झने** स्वाध्यायस्य प्रतिष्ठापनं निष्ठापनं चेत्यर्थः। कया? **बृहद्भक्त्या** बृहच्छ्रुतभक्त्या बृहदाचार्यभक्त्या च स्वाध्यायः प्रतिष्ठाप्यो बृहच्छ्रुतभक्त्या च निष्ठाप्य इत्यर्थः। क? **अन्यदा** आद्यन्तदिनाभ्यामन्येषु दिनेषु। तथा **शेयं** शेतव्यम्। कैः? **प्रतिचारकैः** क्षपकशुश्रूषकैः क? **तत्र** संन्यासवसतौ। किंविशिष्टैः? **आत्तस्वाध्यायैः** प्रथमदिने तत्र प्रतिष्ठापितस्वाध्यायैः। क? **योगेपि** रात्रियोगे वर्षायोगेपि वा, अन्यत्र गृहीतेपि सति। तथा कार्या। कासौ? **क्रिया**। केषाम्? **स्वाध्यायाग्राहिणाम्**। क? **तदाद्यन्तदिने**। किंवत्? **प्राग्वत्** श्रुतपञ्चमीवत्। संन्यासस्यारम्भदिने समाप्तिदिने च सिद्धश्रुतशान्तिभक्तिभिर्गृहस्थैः क्रिया कार्येति भावः॥

अष्टान्हिकक्रियानिर्णयार्थमाह—

**कुर्वन्तु सिद्धनन्दीश्वरगुरुशान्तिस्तवैः क्रियामष्टौ ।**
**शुच्यूर्जतपस्यसिताष्टम्यादिदिनानि मध्याह्ने ॥ ६३ ॥**

कुर्वन्तु इत्यत्र बहुत्वनिर्देशः संभूय संघेनैषा क्रिया कार्येति ज्ञापनार्थः । **कुर्वन्तु** मिलित्वाचार्यादयो विदधतु । काम् ? **क्रियाम्** । कैः ? **सिद्धनन्दीश्वरगुरुशान्तिस्तवैः** सिद्धभक्त्या नन्दीश्वरचैत्यभक्त्या पञ्चगुरुभक्त्या शान्तिभक्त्या चेत्यर्थः । कानि ? **शुच्यूर्जतपस्यसिताष्टम्यादिदिनानि** । कति ? **अष्टौ** । क्व ? **मध्याह्ने** पौर्वाह्णिकस्वाध्यायग्रहणानन्तरम् । अष्टमी आदिर्येषां नवम्यादितिथीनां तान्यष्टम्यादीनि । तानि च तानि दिनानि चाष्टम्यादिदिनानि । शुचिराषाढः । ऊर्जः कार्तिकः । तपस्यः फाल्गुनः । शुचिश्चोर्जश्च तपस्यश्च शुच्यूर्जतपस्याः । तेषां सिताः शुक्लपक्षाः शुच्यूर्जतपस्यसिताः तेषामष्टम्यादिदिनानि शुच्यूर्जतपस्यसिताष्टम्यादिदिनानि । आषाढस्याष्टौ दिनानि सितपक्षेऽष्टम्या आरभ्य पौर्णमासी यावत् क्रियां कुर्वन्तु । एवं कार्तिकफाल्गुनयोरपि योज्यम् ।

अभिषेकवन्दनाक्रियां मङ्गलगोचरक्रियां च लक्षयति—

**सा नन्दीश्वरपदकृतचैत्या त्वभिषेकवन्दनास्ति तथा ।**
**मङ्गलगोचरमध्याह्नवन्दना योगयोजनोज्झनयोः ॥ ६४ ॥**

**सा तु** सैव नन्दीश्वरक्रिया **अभिषेकवन्दनास्ति** जिनमहास्नपनदिवसे वन्दना भवति । कीदृशी ? **नन्दीश्वरपदकृतचैत्या** नन्दीश्वरस्थानपठितचैत्या । **तथा** सैवाभिषेकवन्दना भवति । कासौ ? **मङ्गलगोचरमध्याह्नवन्दना** । कयोः ? **योगयोजनोज्झनयोर्वर्षायोगग्रहणविसर्जनयोः** । मङ्गलगोचरे मङ्गलार्थगोचारे मध्याह्नवन्दना मङ्गलगोचरमध्याह्नवन्दना । उक्तं च—

**अहिसेयं वंदणासिद्धचेदिपंचगुरुसंतिभत्तीहिं ।**
**कीरइ मंगलगोयर मज्झंण्हियवंदणा होइ ॥**

---

१ अभिषेकवन्दनासिद्धचैत्यपञ्चगुरुशान्तिभक्तिभिः ।
क्रियते मङ्गलगोचरमध्याह्निकवन्दना भवति ॥

मङ्गलगोचरबृहत्प्रत्याख्यानविधिमाह—

**लात्वा बृहत्सिद्धयोगिस्तुत्या मङ्गलगोचरे ।**
**प्रत्याख्यानं बृहत्सूरिशान्तिभक्ती प्रयुञ्जताम् ॥ ६५ ॥**

**प्रयुञ्जतां** प्रयोजयन्तु आचार्यादयः । के ? **बृहत्सूरिशान्तिभक्ती** बृहतीमाचार्यभक्तिं बृहतीं च शान्तिभक्तिम् । किं कृत्वा ? **लात्वा** गृहीत्वा । किं तत् ? **प्रत्याख्यानं** भक्तप्रत्याख्यानम् । क्व ? **मङ्गलगोचरे** । कया ? **बृहत्सिद्धयोगिस्तुत्या** बृहत्या सिद्धभक्त्या बृहत्या च योगिभक्त्या । प्रयुञ्जतामित्यत्र बहुत्वनिर्देशः सर्वैर्मिलित्वा कार्योयं विधिरिति बोधयति ॥

वर्षायोगग्रहणमोक्षविध्युपदेशार्थं श्लोकद्वयमाह—

**ततश्चतुर्दशीपूर्वरात्रे सिद्धमुनिस्तुती ।**
**चतुर्दिक्षु परीत्याल्पाश्चैत्यभक्तीर्गुरुस्तुतिम् ॥ ६६ ॥**
**शान्तिभक्तिं च कुर्वाणैर्वर्षायोगस्तु गृह्यताम् ।**
**ऊर्जकृष्णचतुर्दश्यां पश्चाद्रात्रौ च मुच्यताम् ॥६७॥ युग्मम् ।**

**ततः** प्रत्याख्यानप्रयोगविध्यनन्तरं **गृह्यतां** प्रतिष्ठाप्यताम् । कोसौ ? **वर्षायोगः** । कैः ? आचार्यादिश्रमणैः । किं कुर्वाणैः ? **कुर्वाणैः** साधुत्वेन कुर्वद्भिः । के ? **सिद्धमुनिस्तुती** सिद्धभक्तिं योगिभक्तिं च । क्व ? **चतुर्दशीपूर्वरात्रे** आषाढशुक्लचतुर्दश्या रात्रेः प्रथमप्रहरोद्देशे न केवलं, **चैत्यभक्तीश्च** कुर्वाणैः । किंविशिष्टाः ? **अल्पा** लघ्वीः । अर्थाच्चतस्रः । कया ? **परीत्या** प्रदक्षिणया । कासु ? **चतुर्दिक्षु** चतसृषु पूर्वादिककुप्सु । तद्यथा । "यावन्ति जिनचैत्यानि" इत्यादिश्लोकं पठित्वा वृषभाजितस्वयंभूस्तवद्वयमुच्चार्य चैत्यभक्तिं साञ्चलिकां पठेत् । इति पूर्वदिक्चैत्यालयवन्दना । एवं दक्षिणादिदिक्त्रयेपि नवरमुत्तरोत्तरौ द्वौ द्वौ स्वयंभूस्तवौ प्रयोक्तव्यौ । **चतुर्दिक्षु** भावेनैव प्रदक्षिणा कार्या स्थानस्थैरेव च योगतण्डुलाः प्रक्षेप्तव्या इति वृद्धव्यवहारः । न केवलं, **गुरुस्तुतिं** च पञ्चगुरुभक्तिं, न केवलं, **शान्तिभक्तिं** च कुर्वाणैः । **तु**र्विशेषे । तथा **मुच्यतां** च निष्ठाप्यतां **वर्षायोगः** श्रमणैस्तेनैव विधानेन । क्व ?

पश्चाद्रात्रौ पश्चिमयामोद्देशे । कस्याम् ? ऊर्जकृष्णचतुर्दश्यां कार्तिकस्य कृष्णचतुर्दशीतिथौ ।

तच्छेषविधिं श्लोकद्वयेनाह—

**मासं वासोन्यदैकत्र योगक्षेत्रं शुचौ व्रजेत् ।**
**मार्गेतीते त्यजेच्चार्थवशादपि न लङ्घयेत् ॥ ६८ ॥**
**नभश्चतुर्थीं तद्याने कृष्णां शुक्लोर्जपञ्चमीम् ।**
**यावन्न गच्छेत्तच्छेदे कथंचिच्छेदमाचरेत् ॥ ६९ ॥(युग्मम्)**

**वासो** निवासः श्रमणैः कर्तव्य इति शेषः । कियन्तं कालम् ? मासम् । क्व ? **अन्यदा** हेमन्तादिऋतुषु । क्व ? **एकत्रै**कस्मिन्स्थाने नगरादौ ? तथा **व्रजेद्** गच्छेत् श्रमणसंघः । कम् ? **योगक्षेत्रं** वर्षायोगस्थानम् । क्व ? **शुचौ** आषाढे । **त्यजेच्च** श्रमणगणः । किं तत् ? योगक्षेत्रम् । क्व ? **मार्गे** मार्गशीर्षे मासि । किंविशिष्टे ? **अतीते**ऽतिक्रान्ते । तथा **न लङ्घयेन्ना**तिक्रामेत् । काम् ? **नभश्चतुर्थीं** श्रावणस्य चतुर्थतिथिम् ? किंविशिष्टाम् ? **कृष्णा**मसिताम् । क्व ? **तद्याने** योगक्षेत्रगमने । कस्मात् ? **अर्थवशादपि** प्रयोजनवशेनापि । तथा साधुसंघो **न गच्छेत्** स्थानान्तरे न विहरेदर्थवशादपि । कथम् ? **शुक्लोर्जपञ्चमीं यावत्** सितां कार्तिकपञ्चमीतिथिमवधीकृत्य । तथा साधुसंघः **छेदं** प्रायश्चित्त**माचरे**दनुतिष्ठेत् । क्व सति । **तच्छेदे** यथोक्तयोगप्रयोगातिक्रमे । कथंचिद्दुर्निवारोपसर्गादिना ।

वीरनिर्वाणक्रियानिर्णयार्थमाह—

**योगान्तेऽर्कोदये सिद्धनिर्वाणगुरुशान्तयः ।**
**प्रणुत्या वीरनिर्वाणे कृत्यातो नित्यवन्दना ॥ ७० ॥**

**प्रणुत्याः** स्तोतव्याः । के ? **सिद्धनिर्वाणगुरुशान्तयः** । क्व ? **वीरनिर्वाणे** श्रीवर्धमाननिर्वाणक्रियायाम् । क्व ? **अर्कोदये** आदित्यस्योद्गमे । क्व सति ? **योगान्ते** वर्षायोगनिष्ठापने कृते सति । सिद्धभक्त्या निर्वाण-

१ 'कार्तिकासितचतुर्दशीतिथौ' इति पाठः श्रेयान् ।

भक्त्या पञ्चगुरुभक्त्या शान्तिभक्त्या च योगान्तेऽर्कोदये वीरनिर्वाणक्रिया कर्तव्येत्यर्थः। अत एतत्क्रियानन्तरं कृत्या कर्तव्या। कासौ? नित्यवन्दना श्रमणैः श्रावकैश्च।

कल्याणपञ्चकक्रियानिश्चयार्थमाह—

**साद्यन्तसिद्धशान्तिस्तुति जिनगर्भजनुषोः स्तुयाद्वृत्तम्।**
**निष्क्रमणे योग्यन्तं विदि श्रुताद्यपि शिवे शिवान्तमपि ॥७१॥**

**स्तुयाद्** वंदताम्। कोसौ? श्रमणः श्रावको वा। कथं कृत्वा? **साद्यन्तसिद्धशान्तिस्तुति**। आदिश्चान्तश्चाद्यन्तौ। आद्यन्तयोः सिद्धशान्तिस्तुती आदौ सिद्धभक्तिरन्ते शान्तिभक्तिश्च आद्यन्तसिद्धशान्तिस्तुती। सह ताभ्यां वर्तते यद्वृत्तस्तवनं तत् साद्यन्तसिद्धशान्तिस्तुति। क्रियाविशेषणमिदम्। कयोः? **जिनगर्भजनुषो**स्तीर्थकृतां गर्भावतरणे जन्मनि च। गर्भश्च जनुश्च गर्भजनुषी। जिनानां गर्भजनुषी जिनगर्भजनुषी, तयोः। तीर्थकराणां गर्भावतरणकल्याणे जन्मकल्याणे च सिद्धचारित्रशान्तिभक्तिभिः क्रिया कार्येत्यर्थः। पुनर्जन्मकल्याणे क्रियाप्रतिपादने पञ्चानामप्येकत्र संप्रत्ययार्थम्। तथा साद्यन्तसिद्धशान्तिस्तुति **वृत्तं योग्यन्तं निष्क्रमणे** निष्क्रमणकल्याणे भाक्तिकः स्तुयात्। सिद्धचारित्रयोगिशान्तिभक्तयः कार्या इत्यर्थः। योगिनोऽन्ते समीपे यस्य वृत्तस्य तद्योग्यन्तम्। तथा **विदि** ज्ञानकल्याणे साद्यन्तसिद्धशान्तिस्तुति वृत्तं **श्रुतादि** श्रुतपूर्वम्। **अपि**शब्दाद्योग्यन्तं च स्तुयात्। सिद्धश्रुतचारित्रयोगिशान्तिभक्तयः कार्या इत्यर्थः। तथा **शिवे** निर्वाणक्षेत्रेऽन्यत्र वा साद्यन्तसिद्धशान्तिस्तुति वृत्तं **शिवान्तं** निर्वाणपर्यन्तम्, अपिशब्दाच्छ्रुतादियोग्यन्तं च स्तुयात्। सिद्धश्रुतचारित्रयोगिनिर्वाणशान्तिभक्तयः कार्या इत्यर्थः।

पञ्चत्वप्राप्तर्ष्यादीनां काये निषेधिकायां च क्रियाविशेषनिर्णयमार्यायुग्मेन विधत्ते—

**वपुषि ऋषेः स्तौतु ऋषीन् निषेधिकायां च सिद्धशान्त्यन्तः**
**सिद्धान्तिनः श्रुतादीन् वृत्तादीनुत्तरव्रतिनः ॥ ७२ ॥**

**द्वियुजः श्रुतवृत्तादीन् गणिनोऽन्तगुरून् श्रुतादिकानपि तान् ।**
**समयविदोपि यमादींस्तनुक्लिशो द्वयमुखानपि द्वियुजः ॥७३॥**

**[ युग्मम् ).**

स्तौतु वन्दतां भाक्तिकलोकः । कान् ? **ऋषीन्** योगिनः । क ? **सिद्धशान्त्यन्तः** सिद्धानां शान्तेश्च मध्ये । सिद्धभक्तिशान्तिभक्त्योर्मध्ये योगिभक्तिं कुर्यादित्यर्थः । क ? **वपुषि** शरीरे न केवलं, **निषेधिकायां** च निषद्याभूमौ । कस्य ? **ऋषेः** सामान्यसाधोः अर्थान्मृतस्य । अत्रोत्तरत्र वपुषीत्याद्यनुवर्तनीयम् । ततोयमर्थः संपद्यते—स्तौतु भाक्तिको लोकः । कान् ? ऋषीन् । क ? **सिद्धशान्त्यन्तः** । किंविशिष्टान् ? **श्रुतादीन्** । श्रुतमादिः प्रथमं येषामृषीणां ते श्रुतादयस्तान् । क ? वपुषि । न केवलं, निषेधिकायां च । कस्य ? ऋषेः सामान्यसाधोः । किंविशिष्टस्य ? **सिद्धान्तिनः** सैद्धान्तस्य । सिद्धान्तविदः साधोः काये निषेधिकायां च सिद्धश्रुतयोगिशान्तिभक्तीः कुर्यादित्यर्थः । तथा स्तौतु भाक्तिकजनः । कान् ? ऋषीन् । क ? सिद्धशान्त्यन्तः । किंविशिष्टान् ? **वृत्तादीन्** वृत्तं चारित्रमादिः प्रथमं येषामृषीणां ते वृत्तादयस्तान् । क ? वपुषि । न केवलं, निषेधिकायां च । कस्य ? ऋषेः । किंविशिष्टस्य ? **उत्तरव्रतिनः** । साधोः काये निषेधिकायां च सिद्धचारित्रयोगिशान्तिभक्तीर्विदध्यादित्यर्थः । तथा स्तौतु स्तोता । कान् ? ऋषीन् । क सिद्धशान्त्यन्तः । किंविशिष्टान् ? **श्रुतवृत्तादीन्** श्रुतं वृत्तं चादि प्रथमभूतं येषामृषीणां ते श्रुतवृत्तादयस्तान् । क ? वपुषि, न केवलं, निषेधिकायां च । कस्य ? ऋषेः । किंविशिष्टस्य ? **द्वियुजः** द्वे सिद्धान्तोत्तरव्रते युनक्ति द्वियुक्, तस्य सिद्धान्तोत्तरव्रतभाज इत्यर्थः । सिद्धान्तोत्तरव्रतयुक्तस्य साधोः काये निषेधिकायां च सिद्धश्रुतचारित्रयोगिशान्तिभक्तीः प्रयुञ्जीतेत्यर्थः । तथा स्तौतु वन्दारुजनः । कान् ? ऋषीन् । क ? सिद्धशान्त्यन्तः । किंविशिष्टान् ? **अन्तगुरून्** अन्ते समीपे गुरुराचार्यस्तुत्यतया येषामृषीणां तेऽन्तगुरवस्तान् । क ? वपुषि । न केवलं, निषेधिकायां च । कस्य ? ऋषेः । किंविशिष्टस्य ? **गणिनः** आचार्यस्यर्षेः शरीरे निषेधिकायां च सिद्धयोग्याचार्यशान्तिभक्तिभिः क्रियां कुर्यादित्यर्थः ।

तथा स्तौतु स्तावकलोकः। कान्? तानृषीन्। क्व? सिद्धशान्त्यन्तः। किंविशिष्टान्? **श्रुतादिकान्**। श्रुतमादिः प्रथमं येषामृषीणां ते श्रुतादिकास्तान्। न केवलं, **तानपि** अन्तगुरून्। अन्ते समीपे गुरुराचार्यो येषां तान्। क्व? वपुषि न केवलं, निषेधिकायां च। कस्य? ऋषेः। किंविशिष्टस्य? गणिनः। पुनः किंविशिष्टस्य? **समयविदः** सिद्धान्तज्ञस्याचार्यस्य सैद्धान्तस्य चर्षेः शरीरे निषेधिकायां च सिद्धश्रुतयोग्याचार्यशान्तिभक्तीः कुर्यादित्यर्थः। तथा स्तौतु स्तोतृजनः। कान्? ऋषीन्। क्व? सिद्धशान्त्यन्तः। किंविशिष्टान्? **यमादीन्** यमश्चारित्रमादिः प्रथमं येषामृषीणां ते यमादयस्तान्। न केवलं अपिशब्दादंतगुरूंश्च। क्व? वपुषि। न केवलं, निषेधिकायां च। कस्य? ऋषेः। किंविशिष्टस्य? गणिनः। पुनः किंविशिष्टस्य? **तनुक्लिशः** कायक्लेशिनश्चर्षेः। काये निषेधिकायां च सिद्धचारित्रयोग्याचार्यशान्तिभक्ती रचयेदित्यर्थः। तथा स्तौतु वन्दकजनः। कान्? ऋषीन्। क्व? सिद्धशान्त्यन्तः। किंविशिष्टान्? **द्वयमुखान्** द्वयं श्रुतचारित्रद्वितयं मुखे आरम्भे येषामृषीणां ते द्वयमुखास्तान्। अपिशब्दादन्तगुरूंश्च। क्व? वपुषि। न केवलं, निषेधिकायां च। कस्य? ऋषेः। किंविशिष्टस्य? गणिनः। पुनः किंविशिष्टस्य? **द्वियुजः** द्वौ सिद्धान्तकायक्लेशौ युनक्तीति द्वियुक्, तस्य। सैद्धान्तस्य कायक्लेशिनश्चेत्यर्थः। सैद्धान्तस्य कायक्लेशिनः आचार्यस्य चर्षेः काये निषेधिकायां च सिद्धश्रुतचारित्रयोग्याचार्यशान्तिभक्ती रचयेदित्यर्थः। उक्तं च—

> **काये निषेधिकायां च मुनेः सिद्धर्षिशान्तिभिः।**
> **उत्तरव्रतिनः सिद्धवृत्तर्षिशान्तिभिः क्रियाः॥**
> **सैद्धान्तस्य मुनेः सिद्धश्रुतर्षिशान्तिभक्तिभिः।**
> **उत्तरव्रतिनः सिद्धश्रुतवृत्तर्षिशान्तिभिः॥**
> **सूरेर्निषेधिकाकाये सिद्धर्षिसूरिशान्तिभिः।**
> **शरीरक्लेशिनः सिद्धवृत्तर्षिगणिशान्तिभिः॥**
> **सैद्धान्ताचार्यस्य सिद्धश्रुतर्षिसूरिशान्तयः।**
> **अस्य योगे सिद्धश्रुतवृत्तर्षिगणिशान्तयः॥**

स्थिरचलजिनबिम्बप्रतिष्ठायाः विधिं तच्चतुर्थस्नपनक्रियाविशेषं चोपदिशति—

**स्यात्सिद्धशान्तिभक्तिः स्थिरचलजिनबिम्बयोः प्रतिष्ठायाम्।**
**अभिषेकवन्दना चलतुर्यस्नानेस्तु पाक्षिकी त्वपरे ॥ ७४ ॥**

**स्यात्** । कोसौ ? **सिद्धशान्तिभक्तिः** सिद्धभक्तिः शान्तिभक्तिश्चेत्यर्थः । कस्याम् ? **प्रतिष्ठायाम्** । कयोः ? **स्थिरचलजिनबिम्बयोः** स्थिरजिनबिम्बस्य चलजिनबिम्बस्य चेत्यर्थः । तथाऽ**स्तु** भवतु । कासौ ? **अभिषेकवन्दना** सिद्धचैत्यपञ्चगुरुशान्तिभक्तिलक्षणा । क ? **चलतुर्यस्थाने** चलजिनबिम्बचतुर्थदिनस्नपने । तथास्तु । कासौ ? **पाक्षिकी** क्रिया सिद्धचारित्रभक्तिर्बृहदालोचना शान्तिभक्तिश्चेत्येषा । स्वाध्यायाग्राहिणां पुनर्गृहिणां सैवालोचनारहिता । क ? **अपरे**ऽन्यस्मिन् स्थिरजिनप्रतिमाप्रतिष्ठाचतुर्थस्नाने इत्यर्थः । उक्तं च—

**चलाचलप्रतिष्ठायां सिद्धशान्तिस्तुतिर्भवेत् ।**
**वन्दना चाभिषेकस्य तुर्यस्नाने मता पुनः ॥**
**सिद्धवृत्तनुतिं कुर्याद्बृहदालोचनां तथा ।**
**शान्तिभक्तिं जिनेन्द्रस्य प्रतिष्ठायां स्थिरस्य तु ॥**

आचार्यपदप्रतिष्ठापनक्रियाविधिमाह—

**सिद्धाचार्यस्तुती कृत्वा सुलग्ने गुर्वनुज्ञया ।**
**लात्वाचार्यपदं शान्तिं स्तुयात्साधुः स्फुरद्गुणः ॥ ७५ ॥**

**स्तुयाद्** वन्दतां **साधुः** श्रमणः । किंविशिष्टः ? **स्फुरद्गुणः** । स्फुरन्तः संवचेतसि चमत्कुर्वन्तो गुणा वक्ष्यमाणाः षट्त्रिंशद्यस्य सोयं स्फुरद्गुणः । कं स्तुयात् ? **शान्तिम्** । किं कृत्वा ? **लात्वा** गृहीत्वा । किं तत् ? **आचार्यपदम्** अद्य प्रभृति भवता रहस्यशास्त्राध्ययनदीक्षादानादिकमाचार्यकार्यमाचर्यमिति गणसमक्षं भाषमाणेन गुरुणा समर्प्यमाणपिच्छग्रहणलक्षणम् । किं कृत्वा ? **कृत्वा** । के ? **सिद्धाचार्यस्तुती** सिद्धभक्तिमाचार्यभक्तिं च । कया ? **गुर्वनुज्ञया** गुरूणामनुमत्या । क ? **सुलग्ने** । उक्तं च चारित्रसारे—"गुरूणामनुज्ञायां विज्ञानवैराग्यसंपन्नो विनीतो

धर्मशीलः स्थिरश्च भूत्वाचार्यपदव्या योग्यः साधुर्गुरुसमक्षे सिद्धाचार्यभक्तिं कृत्वाचार्यपदवीं गृहीत्वा शान्तिभक्तिं कुर्यात्" इति ।

आचार्यस्य षट्त्रिंशतं गुणान् दिशति—

**अष्टावाचारवत्त्वाद्यास्तपांसि द्वादश स्थितेः ।**
**कल्पा दशाऽऽवश्यकानि षट् षट्त्रिंशद्गुणा गणेः ॥ ७६ ॥**

भवन्ति । के ? **गुणाः** । कति ? **षट्त्रिंशत्** । कस्य ? **गणेः** । "अनूचानः प्रवचने साङ्गेऽधीती गणिश्च स" इति वचनाद्गणिरिव गणिराचार्यः, साङ्गप्रवचनाधीतित्वात् । गुरोरिति वा पाठः । के के भवन्ति तावद्गुणाः ? किंविशिष्टाः ? **आचारवत्त्वाद्याः** । कति ? **अष्टौ** । आचारा अस्य सन्तीत्याचारवान् । तस्य भाव आचारवत्त्वम् । तदाद्यं येषामाधारवत्त्वादीनां त एवम् । तथा भवन्ति गुणाः । कानि ? **तपांसि** । कति ? **द्वादश** । तथा भवन्ति गुणाः । के ? **कल्पा** विशेषाः । कस्याः ? **स्थिते**-र्निष्ठासौष्ठवस्य । कति ? **दश** । तथा भवन्ति । के ? गुणाः । कानि ? **आवश्यकानि** । कति ? **षट्** । एवं समुदिताः षट्त्रिंशद्भवन्ति ।

आचारवत्त्वादिस्वरूपोद्देशार्थमाह—

**आचारी सूरिराधारी व्यवहारी प्रकारकः ।**
**आयापायदिगुत्पीडोऽपरिस्रावी सुखावहः ॥ ७७ ॥**

सूरिराचार्यो भवति । किंविशिष्टः ? **आचारी** तथाऽऽ**धारी** तथा **व्यवहारी** तथा **प्रकारकः** तथा ऽऽ**यापायदिक्** आयापायदर्शी तथो-**त्पीडः** । उत्कृष्टं पीडयति क्षपकमित्युत्पीडः । उत्पीडक इत्यर्थः । तथा **सुखकारी** सुखं निर्वृतिं करोति तच्छीलः । तथा**ऽपरिस्रावी** नास्ति परिस्रवो यस्मादसावऽपरिस्रवोऽपरिस्रावी । आलोचितदोषप्रकाशक इत्यर्थः ।

आचारपदादिलक्षणनिर्णयार्थं श्लोकद्वयमाह—

**पञ्चाचारकृदाचारी स्यादाधारी श्रुतोद्धुरः ।**
**व्यवहारपटुस्तद्वान् परिचारी प्रकारकः ॥ ७८ ॥**

गुणदोषप्रवक्ताऽऽयापायदिग् दोषवामकः।
उत्पीलको रहोऽभेत्ताऽस्रावी निर्वापकोष्टमः ॥७९॥ युग्मम्।

आचारी आचारवानाचार्यः स्यात् । कीदृशः ? पञ्चाचारकृत्। पञ्चानां ज्ञानाद्याचाराणामाचरिताऽऽचरयिता उपदेष्टा च। उक्तं च—

आचारं पञ्चविधं चरति च चारयति यो निरतिचारम्।
उपदिशति सदाचारं भवति स आचारवान् सूरिः॥

आधारी सूरिः स्यात्। कीदृशः ? श्रुतोद्धुरोऽनन्यसामान्यश्रुतज्ञानसंपन्नः। उक्तं च—

नवदशचतुर्दशानां पूर्वाणां वेदिता मतिसमुद्रः।
कल्पव्यवहारधरः स भवत्याधारवान् नाम॥

तथा तद्वान् व्यवहारवान् गणी स्यात् । कीदृशः ? व्यवहारपटुः प्रायश्चित्तस्य ज्ञाता बहुशो दीयमानस्य द्रष्टा तत्प्रयोक्ता च। उक्तं च—

पञ्चविधं व्यवहारं यो मनुते वस्तुतः सविस्तारम्।
कृतकारितोपलब्धप्रायश्चित्तस्तृतीयस्तु॥

पञ्चविधमिति विशेषणं व्याचष्टे—

आगमश्च श्रुतं चाज्ञाधारणाजीत एव च।
व्यवहारा भवन्त्येते निर्णयस्तत्र सूत्रतः॥

आगम एकादशाङ्गोक्तं प्रायश्चित्तम् । तदेव चतुर्दशपूर्वोक्तं श्रुतम्। उत्तमार्थोद्यत् आचार्यो जङ्घाबलपरिहीनः स्थानान्तरस्थितः सुस्थिताचार्यसमीपे स्वतुल्यं ज्येष्ठशिष्यं प्रेष्यं तन्मुखेन तस्याग्रे स्वदोषानालोच्य तन्निर्दिष्टं प्रायश्चित्तं यच्चरति तदाज्ञेति व्यपदिश्यते। स एवासहायः सन् संजातदोषस्तत्रैव स्थितः पूर्वावधारितप्रायश्चित्तं यत्करोति सा धारणा नाम। द्वासप्ततिपुरुषजातस्वरूपमपेक्ष्य यदुक्तं प्रायश्चित्तं तज्जीत इत्युच्यते।

---

१—'अपरिस्रावो नास्ति परिस्रवो यस्मादसावपरिस्रवोऽपरिस्रावी' इति पुस्तकद्वयेपि पाठ उपलभ्यते। न च स शोभनः।

संप्रत्याचार्या येन व्यवहरन्ति स **प्रकारः** । सूरिः स्यात् । कीदृशः ? **परिचारी** क्षपकशुश्रूषाकारी । तद्वैयावृत्त्यकर इत्यर्थः । तथा **आयापायदिगाचार्यः** स्यात् । कीदृशः ? **गुणदोषप्रवक्ता** क्षपकस्यालोचनोद्यतस्य गुणानां दोषाणां च प्रकाशको वक्रतयालोचयतो दोषप्रकाशकश्च । उक्तं च–

**गुणदोषाणां प्रथकः क्षपकस्य विशेषमालुलोचयिषोः ।**
**अनृजोरालोचयतो दोषविशेषं प्रकाशयति ॥**

**उत्पीलको** गणधरः स्यात् । कीदृशः ? **दोषवामकः** व्रताद्यतीचारस्यान्तर्गूढस्य बहिर्निष्कासकः । उक्तं च—

**ओजस्वी तेजस्वी वाग्मी च प्रथितकीर्तिराचार्यः ।**
**हरिरिव विक्रमसारो भवति समुत्पीलको नाम ॥**

**सूरिरस्रावी** अपरिस्रावी स्यात् । कीदृशः ? **रहोऽभेत्ता** गोप्यदोषस्य रहस्यालोचितस्याप्रकाशकः । उक्तं च—

**आलोचिताः कलङ्का यस्या यः पीततोयसस्थायाः ।**
**न परिस्रवन्ति कथमपि स भवत्यपरिस्रवः सूरिः ॥**

तथाऽष्टमः सुखावहः सूरिः स्यात् । कीदृशः ? **निर्वापकः** क्षुदादिदुःखोपशमकः । यथाह—

**गम्भीरस्निग्धमधुरामतिहृद्यां श्रवःसुखाम् ।**
**निर्वापकः कथां कुर्यात् स्मृत्यानयनकारणम् ॥**

स्थितिकल्पदशकं गीतिद्वयेन निर्दिशति—

**आचेलक्यौद्देशिकशय्याधरराजकीयपिण्डोज्झाः ।**
**कृतिकर्म व्रतरोपणयोग्यत्वं ज्येष्ठता प्रतिक्रमणम् ॥ ८० ॥**
**मासैकवासिता स्थितिकल्पो योगश्च वार्षिको दशमः ।**
**तन्निष्ठः पृथुकीर्तिः क्षपकं निर्यापको विशोधयति ॥८१॥युग्मम्**

**आचेलक्यं** वस्त्रादिपरिग्रहाभावो नग्नत्वमात्रं वा । तच्च संयमशुद्धीन्द्रियजयकषायाभावध्यानस्वाध्यायनिर्विघ्नतानिर्ग्रन्थत्ववीतरागद्वेषताशरीरा-

नादरस्ववशत्वचेतोविशुद्धिप्राकट्यनिर्भयत्वसर्वत्रविश्रब्धत्वप्रक्षालनोद्वेष्टनादिपरिकर्मवर्जनविभूषामूर्छालाघवतीर्थकराचरितत्वानिगूढबलवीर्यताद्यपरिमितगुणग्रामोपलम्भात् स्थितिकल्पकल्पत्वेनोपदिष्टम् । एतच्च श्रीविजयाचार्यविरचितसंस्कृतमूलाराधनाटीकायां सुस्थितसूत्रे विस्तरतः समर्थितं द्रष्टव्यम् । इह न प्रपंच्यते, ग्रन्थगौरवभयात् । अत एव श्रीपद्मनन्दिपादैरपि सचेलतादूषणं दिङ्मात्रमिदमधिजगे—

म्लाने क्षालनतः कुतः कृतजलाद्यारम्भतः संयमो,
नष्टे व्याकुलचित्तताथ महतामप्यन्यतः प्रार्थनम् ।
कौपीनेपि हृते परैश्च झगिति क्रोधः समुत्पद्यते,
तन्नित्यं शुचिरागहृच्छमवतां वस्त्रं ककुम्मण्डलम् ॥

तथैव श्रीसोमदेवपण्डितैरप्यवादि—

विकारे विदुषां दोषो नाविकारानुवर्तने ।
तन्नग्नत्वे निसर्गोत्थे को नाम द्वेषकल्मषः ॥
नैष्किंचन्यमहिंसा च कुतः संयमिनां भवेत् ।
ते सङ्गाय यदीहन्ते वल्कलाजिनवाससाम् ॥

औद्देशिकपिण्डोज्झा श्रमणानुद्दिश्य कृतस्य भक्तादेर्वर्जनम् । शय्याधरपिण्डोज्झा वसतेः कारकः संस्कारकोऽत्रास्वेति संपादकश्चेति त्रयः शय्याधरशब्देनोच्यन्ते । तेषामयं तत आगतो वा शय्याधरः पिण्ड उपलक्षणाद्भक्तोपकरणाद्युपयोगिद्रव्यम् तद्वर्जनम् । सति शय्याधरपिण्डग्रहणे प्रच्छन्नमयं योजयेदाहारादिकं धर्मफललोभात् । यो वाहारं दातुमक्षमो दरिद्रो लुब्धो वा न चासौ वसतिं प्रयच्छेत् । सति वसतिदाने आहारादाने च लोका मां निन्दन्ति । स्थिता वसतावस्य यतयः । न चानेन मन्दभाग्येन तेषामाहारो दत्तः । इति आहारं वसतिं च प्रयच्छति । तस्मिन् बहूपकारितया यते स्नेहश्च स्यात् । इति दोषाः स्युः । अन्ये पुनः शय्यागृहपिण्डत्याग इति पठित्वा एवं व्याचक्षते ।—"मार्गं व्रजता यत्र गृहे रात्रौ सुप्यते तत्रैवान्यदिने भोजनपरिहारो वसतिसंबन्धिद्रव्यनिमित्तपिण्डस्य वा त्याग" इति । राजकीयपिण्डोज्झा । अत्र राजशब्देनेक्ष्वाकुप्रभृतिकुले जातो राजते प्रकृतिं रञ्जयतीति वा राजा राज्ञा सदृशो महर्द्धिको वा भण्यते । तत्स्वामिकभक्तादिकवर्जनम् । तद्गृहप्र-

वेशे हि यतेः स्वच्छन्दचित्रककुकुराद्युपघातः। तद्रूपावलोकनाद्वरतुरगादीनां त्रासः तं प्रति गर्वितदासाद्युपहासः। अवरुद्धाभिः स्त्रीभिर्मैथुनसंज्ञया बाध्यमानाभिः पुत्रार्थिनीभिर्वा बलात्तस्य स्वगृहे प्रवेशनमुपभोगार्थम्। विप्रकीर्णरत्नसुवर्णादिकस्यान्यैः स्वयं चोरितस्य संयत आयात इति तत्र तच्चोरिकाध्यारोपणम्। राजाऽस्य विश्वस्तो राज्यं नाशयिष्यतीति क्रुद्धैरमात्यादिभिर्वधबन्धादिकं च स्यात्। तथाऽऽहाराविशुद्धिः क्षीरादिविकृतिसेवाऽनर्घ्यरत्नादेर्लोभाच्चोरणं परस्त्रीदर्शनाद्रागोद्रेको लोकोत्तरविभूतिदर्शनाच्च तन्निदानकरणं संभवेत्। एतद्दोषाभावेऽन्यत्र भोजनासंभवे च श्रुतविच्छेदपरिहारार्थं राजपिण्डोपि न प्रतिषिध्यते। **कृतिकर्म** षडावश्यकानुष्ठानं गुरूणां विनयकरणं वा। **व्रतरोपणयोग्यत्वम**चेलतायां स्थित औद्देशिकादिपिण्डत्यागोद्यतो गुरुभक्तिमान् विनीतश्च व्रतारोपणयोग्यः स्यात्। उक्तं च—

**आचेलक्के य ठिदो उद्देसादीय परिहरदि दोसे।**
**गुरुभत्तिमं विणीदो होदि वदाणं स अरिहो दु॥**

**ज्येष्ठता** मातापितृगृहस्थोपाध्यायार्यिकादिभ्यो महत्त्वमनुष्ठानेन वा श्रेष्ठत्वम्। **प्रतिक्रमणं** प्रागुक्तलक्षणम्। **मासैकवासिता** त्रिंशदहोरात्रमेकत्र ग्रामादौ वसति तद्वतः तद्भावः। एकत्र हि चिरावस्थाने उद्गमादिदोषपरिहाराक्षमत्वं क्षेत्रप्रतिबद्धता शातगुरुतालसता सौकुमार्यभावनाज्ञातभिक्षाग्राहिता च दोषाः स्युरिति मूलाराधनाटीकायाम्। तट्टिप्पणके तु योगग्रहणादौ योगावसाने च तस्मिन् स्थाने मासमात्रं तिष्ठति इति मासं नाम नवमः **स्थितिकल्पो** व्याख्यातः। उक्तं च—

**पडिबंधो लहुयत्तं ण जणुवयारो ण देसविण्णाणं।**
**णाणादीण अवुद्धी दोसा अविहारपरिकम्हि॥**

**योगश्चेत्यादि**। वर्षाकालस्य चतुर्षु मासेष्वेकत्रैवावस्थानम्। स्थावरजङ्गमजीवाकुला हि तदा क्षितिः इति। तदा भ्रमणे हि महानऽसंयमः। वृष्ट्या शीतवातपातेन चात्मविराधना। पतेद्वा वाप्यादिषु स्थाणुकण्टकादि-

---

१—आचेलक्ये च स्थित उद्देशादिं च परिहरति दोषम्।
गुरुभक्तिमान् विनीतो भवति व्रतानां सोऽर्हस्तु॥

भिर्वा प्रच्छन्नैर्जलेन कर्दमेन वा बाध्यते । इति विंशत्यधिकं दिवसशतमेकत्रावस्थानम् इत्ययमुत्सर्गः । कारणपेक्षया तु हीनमधिकं वावस्थानम् । संयतानामाषाढशुक्लदशम्याः प्रभृति स्थितानामुपरिष्टाच्च कार्तिकपौर्णमास्यास्त्रिंशद्दिवसावस्थानम् । वृष्टिबहुलतां श्रुतग्रहणं शक्त्यभावं वैयावृत्त्यकरणं प्रयोजनमुद्दिश्यावस्थानमेकत्र । इत्युत्कृष्टः कालः । मार्यां दुर्भिक्षे ग्रामजनपदचलने वा गच्छन्निमित्ते समुपस्थिते देशान्तरं याति । अवस्थाने सति रत्नत्रयविराधना भविष्यति । इति पौर्णमास्यामाषाढ्यामतिक्रान्तायां प्रतिपदादिषु दिनेषु याति यावच्चत्वारो दिवसाः । एतदपेक्ष्य हीनता कालस्य । एष दशमः स्थितिकल्पः । इत्याराधनाटीकायाम् । तट्टिपणके तु द्वाभ्यां द्वाभ्यां मासाभ्यां निषिद्धिका द्रष्टव्येति पाद्यो नाम दशमः स्थितिकल्पो व्याख्यातः । उक्तं च—

आचेलक्यौद्देशिकशय्यागृहराजपिण्डकृतिकर्म ।
ज्येष्ठव्रतप्रतिक्रममासं पाद्यः श्रमणकल्पः ॥

एतेषु दशसु नित्यं समाहितो नित्यवाच्यताभीरुः ।
क्षपकस्य विशुद्धिमसौ यथोक्तचर्यां समुद्दिशति ॥

**विशोधयति** विशुद्धिं नयति । कोसौ ? **निर्यापकः** संसारान्निर्यान्तं प्रयोजयिता । कम् ? **क्षपकं** कर्मक्षपणोद्यतम् । किं विशिष्टः ? **पृथुकीर्तिः** पृथ्वी विपुला कीर्तिरासमुद्रं क्षपकोद्धरणाजातं यशो यस्य स एवम् । पुनः किंविशिष्टः ? **तन्निष्ठः** तेषु आचेलक्यादिषु दशसु स्थितिकल्पेषु निष्ठा तत्परता यस्यासौ तन्निष्ठः । तानेवाह—भवन्ति । काः ? **आचेलक्यौद्देशिकशय्याधरराजकीयपिण्डोज्झाः** । औद्देशिकश्च शय्याधरश्च राजकीयश्चौद्देशिकशय्याधरराजकीयाः । ते च ते पिण्डाश्च 'उपलक्षणाद्भक्तपानभेषजादयः' औद्देशिकशय्याधरराजकीयपिण्डाः । तेषामुज्झा वर्जनादि । आचेलक्यं चौद्देशिकादिपिण्डोज्झाश्च चतस्रः । तथा **कृतिकर्म** तथा व्रतरोपणयोग्यत्वं तथा ज्येष्ठता तथा प्रतिक्रमणं तथा मासैकवासिता तथा योगश्च । किंविशिष्टः ? **वार्षिकः** । पुनः किंविशिष्टः ? **दशमः स्थितिकल्पः** ।

प्रतिमायोगस्थितस्य मुनेः क्रियाविधिमाह—

लघीयसोपि प्रतिमायोगिनो योगिनः क्रियाम् ।
कुर्युः सर्वेपि सिद्धर्षिशान्तिभक्तिभिरादरात् ॥ ८२ ॥

कुर्युर्विदध्युः । के ? सर्वेपि श्रमणाः । काम् ? क्रियाम् । काभिः ? सिद्धर्षिशान्तिभक्तिभिः । कस्मात् ? आदरात् । कस्य ? योगिनो यतेः । किं विशिष्टस्य ? प्रतिमायोगिनो दिनं यावदभिसूर्यं कायोत्सर्गावस्थायिनः । किंविशिष्टस्यापि ? लघीयसोपि दीक्षया लघुतरस्यापि । उक्तं च—

प्रतिमायोगिनः साधोः सिद्धानागारशान्तिभिः ।
विधीयते क्रियाकाण्डं सर्वसंघैः सुभक्तितः ॥

दीक्षाग्रहणलुञ्चनक्रियाविधिमाह—

सिद्धयोगिबृहद्भक्तिपूर्वकं लिङ्गमर्प्यताम् ।
लुञ्चाख्यानाग्न्यपिच्छात्म क्षम्यतां सिद्धभक्तितः ॥ ८३ ॥

अर्प्यतामारोप्यतां पुंसः । किं तत् ? लिङ्गम् । किंलक्षणम् ? लुञ्चाख्यानाग्न्यपिच्छात्म । लुञ्चो लोचः । आख्या नामकरणम् । नाग्न्यं दिगम्बरत्वम् । पिच्छं बर्हम् । लुञ्चश्चाख्या च नाग्न्यं च पिच्छं च लुञ्चाख्यानाग्न्यपिच्छम् । तदेवात्मा स्वरूपं यस्य तदेवम् । किंविशिष्टम् ? सिद्धयोगिबृहद्भक्तिपूर्वकम् । सिद्धबृहद्भक्तिर्योगिबृहद्भक्तिश्च पूर्वे पूर्वकालभाविन्यौ यत्र तदेवम् । तथा क्षम्यतां लिङ्गार्पणविधानं समाप्यताम् । कया ? सिद्धभक्तितः सिद्धभक्त्या ।

दीक्षादानोत्तरकर्तव्यं पद्ययुगलेनाह—

व्रतसमितीन्द्रियरोधाः पञ्च पृथक् क्षितिशयो रदाघर्षः ।
स्थितिसकृदशने लुञ्चावश्यकषट्के विचेलताऽस्नानम् ॥ ८४ ॥
इत्यष्टाविंशतिं मूलगुणान् निक्षिप्य दीक्षिते ।
संक्षेपेण सशीलादीन् गणी कुर्यात्प्रतिक्रमम् ॥ ८५ ॥ युग्मम् ।

**कुर्यात्** । कोसौ ? **गणी** । कम् ? **प्रतिक्रमं** व्रतारोपणप्रतिक्रमणं तस्मिन्नेव दिने सूरिः कुर्यात् । सुलग्नाद्यभावे कतिपयदिवसे व्यवधानेपी-त्यर्थः । किं कृत्वा ? **निक्षिप्य** स्थापयित्वा । कान् ? **मूलगुणान्** । क्व ? **दीक्षिते** संजातदीक्षे पुंसि । किंविशिष्टान् ? **सशीलादीन्** चतुरशीतिलक्ष-गुणाष्टादशशीलसहस्रसहितान् । केन ? **संक्षेपेण** । कति ? **अष्टाविंश-तिम्** । कथम् ? **इति** एवंस्वरूपान् । तमेव व्रतादीत्यादिना प्रकाशयति । भवन्ति । के ? **मूलगुणाः** । किं रूपाः ? **व्रतसमितीन्द्रियरोधाः** । कति ? **पञ्च** । कथम् ? **पृथक्** प्रत्येकम् । पञ्चपञ्चेत्यर्थः । व्रतानि च समितयश्चेन्द्रियरोधाश्च स्पर्शनादीन्द्रियपञ्चकनिवारणानि व्रतसमितीन्द्रिय-रोधाः पञ्चदश । तथा **क्षितिशयो** भूमिशयनं मूलगुणः स्यात् । तथा **रदाऽघर्षो** रदानां दन्तानामघर्षणमदन्तधावनं मूलगुणः स्यात् । तथा **स्थितिसकृदशने** उद्भभोजित्वमेकभक्तं च मूलगुणौ स्तः । स्थितिरू-र्ध्वीभावः । सकृदेकवारम् । स्थितिश्च सकृच्च स्थितिसकृत् । ताभ्यामशने भोजने स्थितिसकृदशने । तथा **लुञ्चावश्यकषट्के** लुञ्चश्चावश्यकषट्कं च ते । लोच एको मूलगुणः स्यात् । आवश्यकानि षट् च मूलगुणाः स्युः । तथा **विचेलता** आचेलक्यं मूलगुणः स्यात् । तथा**ऽस्नानं** जलावगाहनो-द्वर्तनाद्यभावोऽष्टाविंशो मूलगुणः स्यात् ।

अन्यदातनलोचकालक्रियानुष्ठाननिर्णयार्थमाह—

**लोचो द्वित्रिचतुर्मासैर्वरो मध्योऽधमः क्रमात् ।**
**लघुप्राग्भक्तिभिः कार्यः सोपवासप्रतिक्रमः ॥ ८६ ॥**

**कार्यो**ऽवश्यकर्तव्यः । कोसौ ? **लोचः** । काभिः ? **लघुप्राग्भक्ति-भिर्**लघुसिद्धयोगिभक्तिभ्यां प्रतिष्ठाप्यः लघुसिद्धभक्त्या निष्ठाप्य इत्यर्थः । प्राग्भक्तयः सिद्धयोगिसिद्धस्तुतयः । लघवश्च ताः प्राग्भक्तयश्च ताभिः । किंविशिष्टः ? **वरो मध्योऽधमश्च** । कस्मात् ? **क्रमात्** । कैः ? **द्वित्रिच-तुर्मासैः** । द्वाभ्यां मासाभ्यामुत्कृष्टो लोचः स्यात् त्रिभिर्मध्यमश्चतुर्भिश्चा-धमः स्यादित्यर्थः । पुनः किंविशिष्टः ? **सोपवासप्रतिक्रम** उपवासप्रति-क्रमणयुक्तः । उक्तं च—

लोचो द्वित्रिचतुर्मासैः सोपवासप्रतिक्रमः ।
लघुसिद्धर्षिभक्त्यान्यः क्षम्यते सिद्धभक्तितः ॥

आदिमान्तिमतीर्थकरावेव व्रतादिभेदेन सामायिकमुपदिशतः स्म नाजितादयो द्वाविंशतिरिति सहेतुकं व्याचष्टे—

**दुःशोधमृजुजडैरिति पुरुरिव वीरोऽदिशद्व्रतादिभिदा ।**
**दुष्पालं वक्रजडैरिति साम्यं नापरे सुपटुशिष्याः ॥ ८७ ॥**

**आदिशदु**पदिष्टवान् । कोसौ ? **वीरो**न्तिमतीर्थकरः । किं तत् ? **साम्यं** सामायिकाख्यं चारित्रम् । कया ? **व्रतादिभिदा** व्रतसमितिगुप्तिभेदेन । कुतो हेतोः ? **इति** । किमिति ? भवति । किं तत् ? साम्यम् । कीदृशम् ? **दुष्पालं** पालयितुमशक्यम् । कैः ? **वक्रजडैर**नार्जवजाड्योपेतैः शिष्यैर्ममेति । क इव ? **पुरुरिव** । इवशब्दो यथार्थः । यथा पुरुरादिनाथः साम्यं व्रतादिभिदाऽदिशत् । कुतो हेतोः ? इति । किमिति ? भवति । किं तत् ? साम्यम् । कीदृशम् ? **दुःशोधं** शोधयितुमशक्यम् । कैः ? **ऋजुजडै**रार्जवजाड्योपेतैः शिष्यैर्ममेति । तथा **ऽपरे**ऽजितादयो द्वाविंशतिस्तीर्थकरा व्रतादिभिदा साम्यं **नादिशन्** । साम्यमेव व्रतमिति कथयन्ति स्म स्वशिष्याणामग्रे । कीदृशास्ते ? **सुपटुशिष्या** यतः ऋजुवक्रजडत्वभावात् सुष्टु पटवो व्युत्पन्नतमाः शिष्या येषां त एवम् ।

जिनमुद्रास्थापनयोग्यतामुपदिशति—

**सुदेशकुलजात्यङ्गे ब्राह्मणे क्षत्रिये विशि ।**
**निष्कलङ्के क्षमे स्थाप्या जिनमुद्रार्चिता सताम् ॥ ८८ ॥**

**स्थाप्या** आरोप्या । कासौ ? **जिनमुद्रा** धर्माचार्यैरिति शेषः । किंविशिष्टा ? **अर्चिता** पूज्या । केषाम् ? **सता**मिन्द्रादीनाम् । क्व ? पुंसि । कीदृशे ? **ब्राह्मणे** । न केवलं, **क्षत्रिये** । न केवलं **विशि** वैश्ये । पुनः कीदृशे ? **सुदेशकुलजात्यङ्गे** प्रशस्तदेशवंशमातृपक्षशरीरे । देशश्च कुलं च जातिश्चाङ्गं च देशकुलजात्यङ्गानि । शोभनानि देशकुलजात्यङ्गानि यस्य स एवम् । पुनः कीदृशे ? **निष्कलङ्के** ब्राह्मणहत्याद्यपराधरहिते । पुनरपि कीदृशे ? **क्षमे** बालत्ववृद्धत्वादिरहिते । उक्तं च—

ब्राह्मणे क्षत्रिये वैश्ये सुदेशकुलजातिजे ।
अर्हतः स्थाप्यते लिङ्गं न निन्द्यबालकादिषु ॥
पतितादेर्न सा देया जैनी मुद्रा बुधार्चिता ।
रत्नमाला सतां योग्या मण्डले न विधीयते ॥
न कोमलाय बालाय दीयते व्रतमर्चितम् ।
न हि योग्ये महोक्षस्य भारे वत्सो नियोज्यते ॥

न च मुमुक्षूणां दीक्षादानादिकं विरुध्यते सरागचरितानां तद्विधानात् । यदाह—

दंसण[1]णाणुवदेसो सिस्सग्गहणं च पोसणं तेसिं ।
चरिया हि सरायाणं जिणिंदपूजोवएसो य ॥

महाव्रतविहीनस्य केवलेनैव लिङ्गेन दोषविशुद्धिर्न स्यादिति दृष्टान्तेन स्पष्टयति—

महाव्रतादृते दोषो न जीवस्य विशोध्यते ।
लिङ्गेन तोयादूषेण वसनस्य यथा मलः ॥ ८९ ॥

न विशोध्यते न निराक्रियते । कोसौ ? दोषो रागादिः । केन ? लिङ्गेन चिह्नमात्रेण । कस्य ? जीवस्य । कथम् ? ऋते विना । कस्मात् ? महाव्रतात् । अत्र दृष्टान्तमाह—यथा न विशोध्यते । कोसौ ? मलः । कस्य ? वसनस्य वस्त्रस्य । केन ? ऊषेण क्षारमृत्तिकया । कथम् ? ऋते । कस्मात् ? तोयान्नीरात् ।

लिङ्गयुक्तस्य व्रतं कषायविशुद्धये स्यादिति निदर्शनेन द्रढयति—

मृद्यन्त्रकेण तुष इव दलिते लिङ्गग्रहेण गार्हस्थ्ये ।
मुशलेन कणे कुण्डक इव नरि शोध्यो व्रतेन हि कषायः॥९०॥

शोध्यः शोधयितुं शक्यः । कोसौ ? कषायः क्रोधादिः । क ? नरि

१—दर्शनज्ञानोपदेशः शिष्यग्रहणं च पोषणं तेषाम् ।
चर्या हि सरागाणां जिनेन्द्रपूजोपदेशश्च ॥

पुरुषे । केन ? व्रतेन । कथम् ? हि स्फुटम् । क इव केन क ? मुशलेन कणे कुण्डक इव । यथा शोध्यः । कोसौ ? कुण्डकोऽन्तर्वेष्टनमलः । केन ? मुशलेनायोग्रेण । क ? कणे कलमादिधान्यांशे । क सति ? गार्हस्थ्ये गृहस्थभावे । कीदृशे ? दलिते अपनीते । केन ? लिङ्गग्रहेण व्रताविष्करणचिह्नादानेन । केन कस्मिन्निव ? मृद्यन्त्रकेण तुष इव मृण्मययन्त्रविशेषेण धान्यत्वचि यथा ।

भूमिशयनविधानमाह—

**अनुत्तानोऽनवाङ् स्वप्याद्भूदेशेऽसंस्तृते स्वयम् ।**
**स्वमात्रे संस्तृतेऽल्पं वा तृणादिशयनेपि वा ॥ ९१ ॥**

**स्वप्याद्** यतिर्दण्डवद्धनुर्वद्वा । एकपार्श्वेन शयीतेत्यर्थः । क ? **भूदेशे** भूमिप्रदेशे । किंविशिष्टे ? **असंस्तृते** तृणाद्यनाच्छादिते । कथंभूतः ? **अनुत्तानः** । पुनः कथंभूतः ? **अनवाङ्** अनधोमुख, अन्यथा स्वप्नदर्शनरेतश्च्यवनादिदोषाम्नायात् । **वा** अथवा अनुत्तानोऽनवाङ् भूदेशे स्वप्यात् । किंविशिष्टे ? **संस्तृते** । केन **स्वयमात्मना** । कियत् ? **अल्पमीषत्** । गृहस्थादियोग्यप्रच्छादनरहिते इत्यर्थः । पुनः किंविशिष्टे ? **स्वमात्रे** आत्मपरिमाणे । अथवाऽनुत्तानोऽनवाङ् स्वप्यात् । क ? **तृणादिशयने** आदिशब्देन काष्ठशिलादिशयने । अत्रापि भूमिप्रदेशवदसंस्तृतेऽल्पसंस्तृते वा । उक्तं च—

**पांसुअभूमिपएसे अप्पमसंथारिदम्हि पच्छण्णे ।**
**दंडद्धणुव्व सेज्जं खिदिसयणं एयपासेण ॥**

स्थितिभोजनविधिकालावाह—

**तिस्रोऽपास्याद्यन्तनाडीर्मध्येऽन्ह्यद्यात् स्थितः सकृत् ।**
**मुहूर्तमेकं द्वौ त्रीन्वा स्वहस्तेनानपाश्रयः ॥ ९२ ॥**

---

१—प्रासुकभूमिप्रदेशे अल्पमसंस्तारिते प्रच्छन्ने ।
दण्डवद्धनुर्वत् शेयं क्षितिशयनमेकपार्श्वेन ॥

अद्याद् भुञ्जीतानगारः । किंविशिष्ट सन् ? स्थित ऊर्द्धः । पुनः किंविशिष्टः ? अनपाश्रयो भित्तिस्तम्भाद्यवष्टम्भरहितः । केन ? स्वहस्तेन । कथम् ? सकृदेकवारम् । क्व ? अह्नि दिने । किंविशिष्टे ? मध्ये । किं कृत्वा ? अपास्य मुक्त्वा । काः ? आद्यन्तनाडीराद्यन्तयोर्घटिकाः । कति ? तिस्रः । कियन्तं कालम् ? एकं मुहूर्तं द्वे घटिके, द्वौ वा मुहूर्तौ, त्रीन्वा मुहूर्तान् । उक्तं च—

उदयत्थमणे काले णालीतियवज्जियम्हि मज्झम्हि ।
एकम्हि दुय तिए वा मुहुत्तकालेयभत्तं तु ॥
अंजलिपुडेण ठिच्चा कुण्डादिविवज्जणेण समपायं ।
पडिसुद्धे भूमितिये असणं ठिदिभोयणं णाम ॥

अत्रेयमाचारटीकोक्ता विशेषव्याख्या लिख्यते—

"समपादाञ्जलिपुटाभ्यां न सर्व एकभक्तकालस्त्रिमुहूर्तमात्रोपि विशिष्यते किंतु भोजनं मुनेर्विशिष्यते । तेन त्रिमुहूर्तकालमध्ये यदा यदा भुङ्क्ते तदा तदा समपादं कृत्वाञ्जलिपुटेन भुञ्जीत । यदि पुनर्भोजनक्रियायां प्रारब्धायां समपादौ न विशिष्येते अञ्जलिपुटं च न विशिष्यते हस्तप्रक्षालने कृतेपि तदानीं जानूपरिव्यतिक्रमो योयमन्तरायः पठितः स न स्यात् । नाभेरधोनिर्गमनं योंतरायः सोपि स्यात् । अतो ज्ञायते त्रिमुहूर्तमध्ये एकत्र भोजनक्रियां प्रारभ्य केनचित्कारणान्तरेण हस्तौ प्रक्षाल्य मौनेनान्यत्र गच्छेद्भोजनाय । यदि पुनः सोन्तरायो भुञ्जानस्यैकत्र भवतीति मन्यते जानूपरिव्यतिक्रमविशेषणमनर्थकं स्यात् । एवं विशेषणमुपादीयेत । समपादयोर्मनागपि चलितयोरन्तरायः स्यात् । नाभेरधोनिर्गमनं दूरत एव न संभवतीति अन्तरायपरिहारार्थमनर्थकं ग्रहणं स्यात् । तथा पादेन किंचिद्ग्रहणमित्येवमादीन्यन्तरायख्यापकानि सूत्राण्यनर्थकानि स्युः । तथाञ्जलिपुटं यदि न भिद्यते करेण किंचिद्ग्रहणमन्तरायस्य विशेषणमनर्थकं स्यात् । गृह्णातु वा मा वा अञ्जलिपुटभेदेनान्तरायः स्यादित्येवमुच्यते । तथा जान्वधःपरामर्शः सोप्यन्तरायस्य विशेषणं न स्यात् । एवमन्येप्यन्तराया न स्युः इति ।

किमर्थं स्थितिभोजनमनुष्ठीयते इत्याह—

**यावत्करौ पुटीकृत्य भोक्तुमुद्भः क्षमेऽद्म्यहम् ।**
**तावन्नैवान्यथेत्यागूसंयमार्थं स्थिताशनम् ॥ ९३ ॥**

**यावत्क्षमे** शक्नोम्यहम् । किं कर्तुम् ? **भोक्तुं** भोजनं कर्तुम् । किंविशिष्टः सन् ? **उद्भः** । किं कृत्वा ? **पुटीकृत्य** भाजनीकृत्य संयोज्य वा । कौ ? **करौ** हस्तौ । **तावदद्मि** भुञ्जेहम् । **नैवाद्म्यहम्** । कथम् ? **अन्यथा**ऽन्येन प्रकारेण । **इत्यागूसंयमार्थ**मेवंविधप्रतिज्ञार्थमिन्द्रियप्राणसंयमार्थं च स्यात् । किं तत् ? **स्थिताशनं** स्थितिभोजनं मुनेः । उक्तं चाचारटीकायाम्—

"यावद्धस्तपादौ मम संवहतस्तावदाहारग्रहणं योग्यं नान्यथेति ज्ञापनार्थं स्थितस्य हस्ताभ्यां भोजनम्, उपविष्टः सन् भाजनेनान्यहस्तेन वा न भुञ्जेहमिति प्रतिज्ञार्थं च । अन्यच्च स्वकरतलं शुद्धं भवति । अन्तराये सति बहोर्विसर्जनं च न भवति । अन्यथा पात्रीं सर्वाहारपूर्णां त्यजेत् । तत्र च दोषः स्यात् । इन्द्रियसंयमप्राणिसंयमप्रतिपालनार्थं च स्थितस्य भोजनमुक्तमिति"। एतदेव चान्यैरप्यन्वाख्यायि—

यावन्मे स्थितिभोजनेस्ति दृढता पाण्योश्च संयोजने,
भुञ्जे तावदहं रहाम्यथ विधावेषा प्रतिज्ञा यतेः ।
कायेप्यस्पृहचेतसोन्त्यविधिषु प्रोल्लासिनः सन्मते-
र्न ह्येतेन दिवि स्थितिर्न नरके संपद्यते तद्विना ॥

स्थितिभोजनविधिविशेषमाह—

**प्रक्षाल्य करौ मौनेनान्यत्रार्थाद् व्रजेद्यदैवाद्यात् ।**
**चतुरङ्गुलान्तरसमक्रमः सहाञ्जलिपुटस्तदैव भवेत् ॥ ९४ ॥**

**व्रजेद्** गच्छेदनगारः । क्व ? **अन्यत्र** स्थानान्तरे । केन ? **मौनेन** । कस्मात् ? **अर्थात्** कीटिकाविसर्पणादिनिमित्तमाश्रित्य । किं कृत्वा? **प्रक्षाल्य** धौत्वा । कौ ? **करौ** हस्तौ । तथा **यदैव** यस्मिन्नेव काले **अद्यात्** भुंजीत यतिस्तदैव तस्मिन्नेव काले **भवेत्** । किंविशिष्टः ? **चतुरङ्गुलान्तरसम**-

क्रमः। पुनः किंविशिष्टः? सहाञ्जलिपुटः। चतुरङ्गुलान्तरौ समौ अविमौष क्रमौ पादौ यस्य स एवम्। तथा सहाञ्जलिपुटेन अञ्जलीसंश्लेषणेन वर्तमानः॥

एकभक्तैकस्थानयोर्भेदनिर्णयार्थमाह—

**शुद्धे पादोत्सृष्टपातपरिवेषकभूत्रये।**
**भोक्तुः परेप्येकभक्तं स्यात् त्वेकस्थानमेकतः॥ ९५॥**

**एकभक्तं** मुनेः स्यात्। किंविशिष्टस्य? **भोक्तु**र्भुञ्जानस्य। क्व? **पादोत्सृष्टपातपरिवेषकभूत्रये**। किंविशिष्टे? **परेपि** यत्रादौ भोजनक्रिया प्रारब्धा ततोन्यत्रापि न परं तत्रैवेत्यपिशब्दार्थः। कीदृशे? **शुद्धे** जीववधादिविरहिते। पादौ चोत्सृष्टपातश्च परिवेशकश्च पादोत्सृष्टपातपरिवेषकाः। तेषां भूत्रयं भूमित्रयं, तत्र। स्यात्पुनर्मुनेरेकस्थानम्। क्व? शुद्धे पादोत्सृष्टपातपरिवेषकभूत्रये। किंविशिष्टे? **एकत** एकत्र। स्थानान्तरसंचाररहिते इत्यर्थः।

एकभक्तान्मूलगुणादेकस्थानस्योत्तरगुणत्वेनाप्यन्तरमाह—

**अकृत्वा पादविक्षेपं भुञ्जानस्योत्तरो गुणः।**
**एकस्थानं मुनेरेकभक्तं त्वनियतास्पदम्॥ ९६॥**

**एकस्थानं** मुनेरुत्तरो गुणः स्यात्। किं कुर्वाणस्य? **भुञ्जानस्य**। किं कृत्वा? **अकृत्वा**। कम्? **पादविक्षेपं** पादयोरन्यत्र संचारम्। **एकभक्तं** तु मुनेर्मूलगुणः स्यात्। कीदृशम्? **अनियतास्पद**मनवस्थितभोजनस्थानम्।

लुञ्चस्य लक्षणं फलं चोपदिशति—

**नैःसङ्ग्याऽयाचनाऽहिंसादुःखाभ्यासाय नाग्न्यवत्।**
**हस्तेनोत्पाटनं श्मश्रुमूर्धजानां यतेर्मतम्॥ ९७॥**

**मत**मिष्टं सूत्रे। किं तत्? **हस्तेनोत्पाटनं** स्वकरेणापनयनम्। केषाम्? **श्मश्रुमूर्धजानां** कूर्चकेशानां शिरःकेशानां च। कस्य? **यतेः** संयतस्य।

कस्मै ? नैस्सङ्ग्यायाचनाहिंसादुःखाभ्यासाय नैर्ग्रन्थ्याप्रार्थनाऽजीववधदुःखभावनार्थम् । किंवत् ? नाग्न्यवन्नग्नत्वं यथा । उक्तं च—

काकण्या अपि संग्रहो न विहितः क्षौरं यया कार्यते,
चित्तक्षेपकृदस्त्रमात्रमपि वा तत्सिद्धये नाश्रितम् ।
हिंसाहेतुरहो जटाद्यपि तथा यूकाभिरप्रार्थनै,-
वैराग्यादिविवर्धनाय यतिभिः केशेषु लोचः कृतः ॥

अस्नानसमर्थनार्थमाह—

न ब्रह्मचारिणामर्थो विशेषादात्मदर्शिनाम् ।
जलशुद्ध्याथवा यावद्दोषं सापि मतार्हतैः ॥ ९८ ॥

नार्थः न प्रयोजनं स्यात् । कया ? जलशुद्ध्या स्नानेन । केषाम् ? ब्रह्मचारिणां विशेषादतिशयेनात्मदर्शिनामात्मस्वरूपदर्शनशीलानाम् । अथवा सापि जलशुद्धिरपि मता । कैः ? आर्हतैर्जैनैः । कथम् ? यावद्दोषम् । उक्तं च श्रीसोमदेवपण्डितैः—

ब्रह्मचर्योपपन्नानामध्यात्माचारचेतसाम् ।
मुनीनां स्नानमप्राप्तं दोषे त्वस्य विधिर्मतः ॥
सङ्गे कापालिकात्रेयीचण्डालशबरादिभिः ।
आप्लुत्य दण्डवत्स्नायाज्जपेन्मन्त्रानुपोषितः ॥
एकान्तरं त्रिरात्रं वा कृत्वा स्नात्वा चतुर्थके ।
दिने शुद्ध्यन्त्यसंदेहमृतौ व्रतगताः स्त्रियः ॥

अपि च—

रागद्वेषमदोन्मत्ताः स्त्रीणां ये वशवर्तिनः ।
न ते कालेन शुद्ध्यन्ति स्नातास्तीर्थशतैरपि ॥

उक्तक्रियाणां यथावदनुष्ठाने फलमाह—

नित्या नैमित्तिकीश्चेत्यवितथकृतिकर्माङ्गबाह्यश्रुतोक्ता,-
भक्त्या युङ्क्ते क्रिया यो यतिरथ परमः श्रावकोन्योथ शक्त्या ।
स श्रेयःपक्तिमाग्रत्रिदशनरसुखः साधुयोगोज्झिताङ्गो,
भव्यः प्रक्षीणकर्मा व्रजति कतिपयैर्जन्मभिर्जन्मपारम् ॥ ९९ ॥

स भव्यः प्रक्षीणकर्मा प्रकर्षेण विश्लिष्टज्ञानावरणादिकर्माष्टको व्रजति गच्छति । किं तत् ? जन्मपारं संसारान्तम् । कैः ? जन्मभिर्भवैः । किंविशिष्टैः ? कतिपयैर्द्वित्रैः सप्ताष्टैर्वा । उक्तं च—

आराहिऊण केई चउव्विहाराहणाए जं सारं,
उव्वरियसेसपुण्णा सव्वत्थणिवासिणो हुंति ॥
जेसिं होज्ज जहण्णा चउव्विहाराहणा हु खवयाणं ।
सत्तट्ठभवे गंतुं तेविय पावंति णिव्वाणं ॥

कथंभूतो भूत्वा ? साधुयोगोज्झिताङ्गः सम्यक्समाधित्यक्तशरीरः । पुनः कथंभूतो भूत्वा ? श्रेयःपक्त्रिमाग्रत्रिदशनरसुखः । अग्राणां प्रधानभूतानां त्रिदशानां देवानां नराणां च मनुष्याणां सुखानि अग्रत्रिदशनरसुखानि । श्रेयःपक्त्रिमाणि पुण्यपाकेन निर्वृत्तानि अग्रत्रिदशनरसुखानि यस्य स एवम् । यः किम् ? यो युङ्क्ते प्रयोजयति । कोसौ ? यतिरनगारः । अथ अथवा परम उत्कृष्टः श्रावकः । अथ अथवाऽन्यः श्रावको मध्यमो जघन्यो वा शक्त्या युङ्क्ते । काः ? क्रियाः । किंविशिष्टाः ? नित्या नैमित्तिकीश्च । पुनः किंविशिष्टाः ? अवितथकृतिकर्माङ्गबाह्यश्रुतोक्ताः सत्यकृतिकर्माख्ये अङ्गबाह्ये श्रुते शास्त्रे उक्ताः प्रतिपादिताः । कथम् ? इति एवंप्रकाराः । अङ्गबाह्यं च तच्छ्रुतं चाङ्गबाह्यश्रुतं कृतिकर्माख्यं च तदङ्गबाह्यश्रुतं च कृतिकर्माङ्गबाह्यश्रुतम् । अवितथं च तत् कृतिकर्माङ्गबाह्यश्रुतं च तत्रोक्ताः ॥

उक्तलक्षणस्य यतिधर्मस्य जिनागमोद्धृतत्वेनाविसंवादित्वाच्छ्रद्धानगोचरीकृतस्य शश्वदनुष्ठानेऽभ्युदयनिःश्रेयफलसंपादकत्वमाह—

इदं सुरुचयो जिनप्रवचनाम्बुधेरुद्धृतं,
सदा य उपयुञ्जते श्रमणधर्मसारामृतम् ।
शिवास्पदमुपासितक्रमयमाः शिवाशाधरैः,
समाधिविधुतांहसः कतिपयैर्भवैर्यान्ति ते ॥ १०० ॥

ते भव्यात्मानः शिवास्पदं निर्वाणपदं यान्ति गच्छन्ति । कैः ?

भवैः । किंविशिष्टैः ? **कतिपयैर्द्वित्रैः** सप्ताष्टैर्वा । किंविशिष्टाः सन्तः ? **समाधिविधुतांहसः** समाधिना धर्म्यशुक्लक्षणेन विधुतं विश्लेषितमंहः शुभाशुभरूपं कर्म यैस्ते तथोक्ताः । पुनः किंविशिष्टाः ? **उपासितक्रमयमा** आराधितचरणयुगलाः । अथवोपासितः सेवितः क्रम आनुपूर्वी यमश्च संयमो येषां ते एवम् । कैः ? **शिवाशाधरैः** शिवस्य मोक्षस्याशामाकाङ्क्षां बिभ्राणैः श्रमणगणैरिन्द्रादिभिश्च । ये किम् ? ये **सुरुचयो** निर्मलसम्यक्त्वाः **सदा** सर्वदा इदमुक्तलक्षणं **श्रमणधर्मसारामृतं** यतिधर्मान्तस्तत्त्वपीयूषमुपयुञ्जते सेवन्ते । किंविशिष्टम् ? **उद्धृतं** भेदेन प्रतिपादितम् । कस्मात् ? **जिनप्रवचनाम्बुधेर्**जिनागमसमुद्रात् ॥ इति भद्रम् । ( ग्रन्थसंख्या १०७५ )

**यो धर्मामृतमुद्धार सुमनस्तृप्त्यै जिनेन्द्रागम,-**<br>**क्षीरोदं शिवधीर्निमथ्य जयतात्स श्रीमदाशाधरः ।**<br>**भव्यात्मा हरदेव इत्यभिधया ख्यातश्च नन्द्यादिमं,**<br>**टीकाशुक्तिमचीकरत्सुखमिमां तस्योपयोगाय यः ॥**

इत्याशाधरविरचितायां स्वोपज्ञधर्मामृतानगारधर्मटीकायां भव्यकुमुदचन्द्रिकासंज्ञायां नित्यनैमित्तिकक्रियाभिधानीयो नाम नवमोऽध्यायः ॥ ९ ॥

इत्याशाधरदृब्धा स्वोपज्ञधर्मामृतानगारधर्मटीका भव्यकुमुदचंद्रिकापराभिधाना समाप्ता । स्वस्ति स्यात्कारककेतनाय श्रीमदनेकान्तशासनाय ॥



# अथ प्रशस्तिः ।



श्रीमानस्ति सपादलक्षविषयः शाकम्भरीभूषण,-
स्तत्र श्रीरतिधाममण्डलकरं नामास्ति दुर्गं महत् ।
श्रीरत्न्यामुदपादि तत्र विमलव्याघ्रेरवालान्वया-,
च्छ्रीसल्लक्षणतो जिनेन्द्रसमयश्रद्धालुराशाधरः ॥ १ ॥

श्रीमान् त्रिवर्गसंपत्तियुक्तः । शाकम्भरी लवणाकरविशेषः । श्रीरतिधाम लक्ष्मीक्रीडागृहम् । श्रीरत्न्याम्, रत्नीति कविमातुः संज्ञा । उदपादि उत्पन्नः॥

सरस्वत्यामिवात्मानं सरस्वत्यामजीजनत् ।
यः पुत्रं छाहडं गुण्यं रञ्जितार्जुनभूपतिम् ॥ २ ॥

सरस्वत्यां वाग्देवतायाम् । सरस्वत्यां सरस्वतीसंज्ञितायां स्वभार्यायां गुण्यं गुणातिशययुक्तम् । अर्जुनभूपतिरर्जुनदेवो नाम मालवाधिपतिः ।

व्याघ्रेरवालवरवंशसरोजहंसः काव्यामृतौघरसपानसुतृप्तगात्रः ।
सल्लक्षणस्य तनयो नयविश्वचक्षुराशाधरो विजयतां कलिकालिदासः ॥ ३ ॥

स्पष्टम् ।

इत्युदयसेनमुनिना कविसुहृदा योऽभिनन्दितः प्रीत्या ।
प्रज्ञापुञ्जोसीति च योभिहितो मदनकीर्तियतिपतिना ॥ ४ ॥

स्पष्टम् ।

म्लेच्छेशेन सपादलक्षविषये व्याप्ते सुवृत्तक्षति,-
त्रासाद्विन्ध्यनरेन्द्रदोःपरिमलस्फूर्जत्त्रिवर्गौजसि ।
प्राप्तो मालवमण्डले बहुपरीवारः पुरीमावसन् ।
यो धारामपठज्जिनप्रमितिवाक्शास्त्रे महावीरतः ॥ ५ ॥

म्लेच्छेशेन साहिवुद्दीनतुरुष्कराजेन । सुवृत्तक्षतिः सदाचारनाशः । दो-

---

१ साहवुद्दीननाम्ना तुर्क इति ख्यातदेशनिवासिना ।

परिमलः परिमलो लक्षणावृत्त्या बलम् । बाहुबलातिशय इत्यर्थः । ओज उत्साहोन्तःसारो वा । जिनप्रमितिवाक्शास्त्रे जैनेन्द्रं प्रमाणशास्त्रं जैनेन्द्रव्याकरणं च । महावीरतो वादिराजपण्डितश्रीमद्धरसेनशिष्यात्पण्डितमहावीरात् ।

आशाधरत्वं मयि विद्धि सिद्धं निसर्गसौंदर्यमजर्यमार्य ।
सरस्वतीपुत्रतया यदेतदर्थे परं वाच्यमयं प्रपञ्चः ॥ ६ ॥

अजर्यं मैत्रीम् । सरस्वतीपुत्रतया निसर्गसौदर्यं प्रकृत्या सहोदरत्वम् ।

इत्युपश्लोकितो विद्वद्बिल्हणेन कवीशिना ।
श्रीविन्ध्यभूपतिमहासान्धिविग्रहिकेण यः ॥ ७ ॥

उपश्लोकितः श्लोकेनोपस्तुतः । विन्ध्यभूपतिर्विजयवर्मनाममालवाधिपतिः ।

श्रीमदर्जुनभूपालराज्ये श्रावकसंकुले ।
जिनधर्मोदयार्थं यो नलकच्छपुरेऽवसत् ॥ ८ ॥
यो द्राग्व्याकरणाब्धिपारमनयच्छुश्रूषमाणान्न कान्,
षट्तर्कीपरमास्त्रमाप्य नयतः प्रत्यर्थिनः केऽक्षिपन् ।
चेरुः केऽस्खलितं न येन जिनवाग्दीपं पथि ग्राहिताः,
पीत्वा काव्यसुधां यतश्च रसिकेष्वापुः प्रतिष्ठां न के ॥ ९ ॥

कान् ? पंडितदेवचन्द्रादीन् । प्रत्यर्थिनः प्रतिवादिनः । के वादीन्द्रविशालकीर्त्यादयः । अक्षिपन् जयन्ति स्म । चेरुः प्रवृत्ताः । के भट्टारकदेवविनयचन्द्रादयः । अस्खलितं निरतीचारम् । जिनवाग् अर्हत्प्रवचनम् । पथि मोक्षमार्गे । ग्राहिताः स्वीकारिताः । रसिकेषु सहृदयविदग्धेषु मध्ये । आपुः प्राप्ताः । के बालसरस्वतीमहाकविमदनादयः ।

स्याद्वादविद्याविशदप्रसादः प्रमेयरत्नाकरनामधेयः ।
तर्कप्रबन्धो निरवद्यपद्यपीयूषपूरो वहति स्म यस्मात् ॥१०॥

स्पष्टम् ।

सिद्ध्यङ्कं भरतेश्वराभ्युदयसत्काव्यं निबन्धोज्ज्वलं,
यस्त्रैविद्यकवीन्द्रमोदनसहं स्वश्रेयसेऽरीरचत् ।

योऽर्हद्वाक्यरसं निबन्धरुचिरं शास्त्रं च धर्मामृतं,
निर्माय न्यदधान्मुमुक्षुविदुषामानन्दसान्द्रे हृदि ॥ ११ ॥

सिद्ध्यङ्कं सिद्धिः सिद्धिशब्दोऽङ्कश्चिह्नं सर्गप्रान्तवृत्तेषु यस्य तत्। निबन्धोज्ज्वलं स्वयंकृतनिबन्धनेन स्फुटप्रतिभासम् । अरीरचद् रचयति स्म । अर्हद्वाक्यरसं जिनागमनिर्यासभूतं निबन्धरुचिरं स्वयंकृतज्ञानदीपिकाख्यपञ्जिकया रमणीयम् । धर्मामृतं धर्मामृताख्यम् । न्यदधात् स्थापयतिस्म ।

राजीमतीविप्रलम्भं नाम नेमीश्वरानुगम् ।
व्यधत्त खण्डकाव्यं यः स्वयंकृतनिबन्धनम् ॥ १२ ॥

आदेशात्पितुरध्यात्मरहस्यं नाम यो व्यधात् ।
शास्त्रं प्रसन्नगम्भीरं प्रियमारब्धयोगिनाम् ॥ १३ ॥

प्रसन्नगम्भीरं प्रसन्नं झगित्यर्थप्रतिपादनसमर्थम् । गम्भीरं शास्त्रान्तरसव्यपेक्षार्थम् । प्रसन्नं च तद्गम्भीरं च तत् प्रसन्नगम्भीरम् । आरब्धयोगिनां आरब्धो योगो येषामस्तीति त एवम् ।

यो मूलाराधनेष्टोपदेशादिषु निबन्धनम् ।
व्यधत्तामरकोषे च क्रियाकलापमुज्जगौ ॥ १४ ॥

आदिराराधनासारभूपालचतुर्विंशतिस्तवनाद्यर्थः । उज्जगौ उत्कृष्टं कृत्वा गीतवान् ।

रौद्रटस्य व्यधात्काव्यालंकारस्य निबन्धनम् ।
सहस्रनामस्तवनं सनिबन्धं च योऽर्हताम् ॥ १५ ॥

रौद्रटस्य रुद्रटाचार्यकृतस्य । अर्हतामऽनन्तजिनानाम् ।

सनिबन्धं यश्च जिनयज्ञकल्पमरीरचत् ।
त्रिषष्टिस्मृतिशास्त्रं यो निबन्धालङ्कृतं व्यधात् ॥ १६ ॥

सनिबन्धं स्वयंकृतेन जिनयज्ञकल्पदीपकाख्येन निबन्धेन सहितम् । जिनयज्ञकल्पं जिनयज्ञकल्पाख्यं जिनप्रतिष्ठाशास्त्रमरीरचन्निर्मितवान् । त्रिषष्टिशलाकापुरुषप्रवृत्तगोचरं त्रिषष्टिस्मृतिसंज्ञं संक्षिप्तशास्त्रम् । निबन्धालंकृतं स्वयंकृतनिबन्धनेन भूषितम् ।

योऽर्हन्महाभिषेकार्चाविधिं मोहतमोरविम् ।
चक्रे नित्यमहोद्द्योतं स्नानशास्त्रं जिनेशिनाम् ॥ १७ ॥

नित्यमहोद्द्योतं नित्यमहोद्द्योताख्यम् ।

रत्नत्रयविधानस्य पूजामाहात्म्यवर्णकम् ।
रत्नत्रयविधानाख्यं शास्त्रं वितनुते स्म यः ॥ १८ ॥
आयुर्वेदविदामिष्टं व्यक्तुं वाग्भटसंहिताम् ।
अष्टाङ्गहृदयोद्द्योतं निबन्धमसृजच्च यः ॥ १९ ॥ (स्पष्टम्)

सोहमाशाधरोऽकार्षं टीकामेतां मुनिप्रियाम् ।
स्वोपज्ञधर्मामृतोक्तयतिधर्मप्रकाशिनीम् ॥ २० ॥

अकार्षं कृतवानहम् । स्वोपज्ञमात्मना प्रथममुपदिष्टम् ।

शब्दे चार्थे च यत्किंचिदत्रास्ति स्खलितं मम ।
छद्मस्थभावात् संशोध्य सूरयस्तत् पठन्त्विमाम् ॥ २१ ॥

स्खलितं दोषः । छद्मस्थभावात् आवृतज्ञानत्वात् । सूरयो धर्माचार्या विद्वांसो वा ।

नलकच्छपुरे पौरपौरस्त्यः परमार्हतः ।
जिनयज्ञगुणौचित्यकृपादानपरायणः ॥ २२ ॥

पौरपौरस्त्यः सागाराणामग्रणीः ।

खंडिल्यान्वयकल्याणमाणिक्यं विनयादिमान् ।
साधुः पापाभिधः श्रीमानासीत् पापपराङ्मुखः ॥ २३ ॥

कल्याणं सुवर्णम् । माणिक्यं पद्मरागमणिः । विनयादिमान् प्रश्रयदाक्षिण्यपरोपकारकरणादिगुणयुक्तः ।

तत्पुत्रो बहुदेवोऽभूदाद्यः पितृभरक्षमः ।
द्वितीयः पद्मसिंहश्च पद्मालिंगितविग्रहः ॥ २४ ॥

पद्मा लक्ष्मीः ।

बहुदेवात्मजाश्चासन् हरदेवः स्फुरद्गुणः ।
उदयी स्तम्भदेवश्च त्रयस्त्रैवर्गिकादृताः ॥ २५ ॥

(स्पष्टम्)

मुग्धबुद्धिप्रबोधार्थं महीचन्द्रेण साधुना ।
धर्मामृतस्य सागारधर्मटीकास्ति कारिता ॥ २६ ॥ (स्पष्टम्)

तस्यैव यतिधर्मस्य कुशाग्रीयधियामपि।
सुदुर्बोधस्य टीकायै प्रसादः क्रियतामिति॥ २७॥

तस्यैव धर्मामृतस्यैव। कुशाग्रीयधियां कुशाग्रमिव दर्भसूचीव तीक्ष्ण धीर्येषां त एवम् निपुणबुद्धीनामित्यर्थः। प्रसादो युष्माभिरिति शेषः।

हरदेवेन विज्ञप्तो धणचन्द्रोपरोधतः।
पंडिताशाधरश्चक्रे टीकां क्षोदक्षमामिमाम्॥ २८॥

क्षोदक्षमां विचारसहाम्। इमां धर्मामृतयतिधर्मगोचराम्।

विद्वद्भिर्भव्यकुमुदचन्द्रिकेत्याख्ययोदिता।
द्विष्टाप्याकल्पमेषास्तां चिन्त्यमाना मुमुक्षुभिः॥ २९॥

भव्यकुमुदचन्द्रिका भव्यकुमुदानामासन्नभव्यकैरवाणां चन्द्रिकेव आह्लादहेतुत्वात्। उदिता उक्ता। द्विष्टापि द्वयोरनगारसागारधर्मयोस्तिष्ठन्ती। आकल्पं कल्पावधि। आस्तां तिष्ठतु।

प्रमारवंशवार्धीन्दुदेवपालनृपात्मजे।
श्रीमज्जैतुगिदेवेसिस्थाम्नाऽवन्तीनऽवत्यलम्॥ ३०॥

वार्धिः समुद्रः। असिस्थाम्ना खड्गबलेन। अवन्तीन् मालवान्। अवति पालयति सति। अलं पर्याप्तम्।

नलकच्छपुरे श्रीमन्नेमिचैत्यालयेऽसिधत्।
विक्रमाब्दशतेष्वेषा त्रयोदशसु कार्तिके॥ ३१॥

असिधद् निष्पन्ना। त्रयोदशसु विक्रमादित्यस्य वर्षशतेषु त्रयोदशसु वर्तमानेष्वित्यर्थः। संवत्सर १३०० वर्षे कार्तिकसुदिपञ्चम्यां सोमदिने शुभलग्ने।

अनुष्टुप्छन्दसामस्याः प्रमाणं द्विशताधिकैः।
सहस्रैर्द्वादशमितैर्विज्ञेयमनुमानतः॥ ३२॥

तद्यथा। प्रथमाध्याये १६००। द्वितीये १४२७। तृतीये २१८ चतुर्थे २६१५। पञ्चमे ६०९। षष्ठे १७५५। सप्तमे १२५६। अष्टमे १५४५। नवमे १०७५। एवमनुष्टुप्छन्दसामस्याष्टीकायाः परिमाणं १२२०० अलमतिप्रसङ्गेन।

शांतिः शं तनुतां समस्तजगतः संगच्छतां धार्मिकैः,
श्रेयःश्रीः परिवर्धतां नयधुरा धुर्यो धरित्रीपतिः।
सद्विद्यारसमुद्गिरन्तु कवयो नामाप्यघस्यास्तु मा,
प्रार्थ्यं वा कियदेक एव शिवकृद्धर्मो जयत्वर्हताम् ॥ ३३ ॥

शान्तिः षोडशोऽर्हन् शं शर्म तनुतां स्फीतीकरोतु। अथवा,—

"सुखतद्धेतुसंप्राप्तिर्दुःखतद्धेतुवारणम्।
तद्धेतुहेतवश्चान्यदपीदृक् शान्तिरिष्यते ॥"

इत्येवं लक्षणा शान्तिः संतनुतां समन्तात् स्फीतीभवतु। संगच्छतां संयुज्यताम्। धार्मिकैः धर्मं चरद्भिः प्राणिभिः सह श्रेयःश्रीरऽभ्युदयनिःश्रेयससंपत्। नयः षाड्गुण्यप्रयोगः। उद्गिरन्तु उदीरयन्तु। नामापि पापादिसंज्ञापि, किं पुनः पापादिस्वरूपम्। पापादिकं समूलं प्रलीयतामित्यर्थः। अघस्य पापस्य दुःखस्य च। जयतु सर्वोत्कर्षेण वर्तताम्। इति भद्रम्।

इत्याशाधरविरचिता भव्यात्माहरदेवानुमता धर्मामृतयतिधर्मटीका परिसमाप्ता ॥

